फलम् । भगवन्मन्दिर जीर्णोद्धार फलम् । उपकरण द्रव्यदान फलम् । [10 - 68] प्रदक्षिण नमस्कारदि उपचाराणां फलम् । दत्तापहारादीनां फलम् । [69 - 93]

**सप्तदशोऽध्यायः** **जीर्णोद्धार संप्रोक्षण विधिः** Page 217 - 223

जीर्णोद्धारविधिः । स्वयं व्यक्त्यादिषु अङ्गवैकल्ये समाधानम् । हीनाङ्गेषु पुनर्बिम्बसृष्टिः । समाधि योग्यस्य बिम्बस्य न त्यागः । समाध्यभावे बिम्बस्य नवीकरणम् । देवीनां अविकलानां प्राचीनानामेव योगः । प्राचीन देवीयोगे पुनः नोद्वाहः । शक्तिमुद्रास्य प्रभा पद्मासनादीनां समीकरणम् । त्यक्तस्य बिम्बस्य, जले अवटे वा निक्षेपः । प्रासाद नवीकरणे भगवतः बालालये स्थापनम् । अजीर्णे-ध्रुवबेरे अन्यत्र नोद्वासः । तथाकरणे दोषः । प्रमादकल्पितस्य प्रासादादेः परिष्कृत्य सृष्टौ दोषाभावः । बहुबेरैकबेरेषु जीर्णोद्धारे यथापूर्वं कल्पनम् । देवी विरहितस्य बिम्बस्य पुनः सृष्टौ देवीयोगे वैकल्पिकः । अमानुष बिम्बादीनां पुनः परिष्कारे पूर्ववदेव न्यासः । तादृशेषु शयन बेरेषु पूर्ववत् एव विधिः । मानुषे तु विकल्पः । [1-22½] दिव्ये विमानादौ आकार प्रमाणादिवत् उपादान द्रव्यमपि सजातीयमेव । आर्षमानुषयोः विमानयोः उपादान द्रव्यविकल्पः । उपपीठादिषु परिवारेषु च कामचारः । चलित साल गोपुरादीनां वृद्धिह्रासावैच्छिकौ । नद्यादि वेगेन नष्टानां प्रासादादीनां स्थलान्तरे कल्पनानुज्ञा । प्रथमकल्पनवदेव द्वीतीय-कल्पनेऽपि मन्त्रः । अपूर्वकल्पने जीर्णोद्धारे च तुल्यफलता । तन्त्राधिकारिमूर्तीनां व्यत्यासे दोषः । जीर्णोद्धारे नयनोन्मीलनादि निषेधः । उद्वासितस्य शक्तेः पुनः आराधनम् । सम्प्रोक्षणनिमित्तानि । निमित्तंव्यसंप्रोक्षणे अनिष्टनिर्देशः । संप्रोक्षण-विधिः । [23 - 58½]

**अष्टादशोऽध्यायः** **नित्याराधन प्रायश्चित्त विधिः** Page 224 - 239

नित्यनैमित्तिकादि कर्म वैकल्य प्रायश्चित्तविधिः । तत्र प्रायश्चित्त निर्वचनम् । तत्प्रकारप्रश्नः । भगवता तन्निरूपणम् । अस्नात तिलकानुपवीतार्चने प्रायश्चित्तम् । अस्थिलोमादिस्पर्शे । नील वस्त्रादि धारणे । स्त्री सेविनो अनाप्लुतस्य स्पर्शे । विण्मूत्रादि स्पर्शे । रजस्वला वस्त्र स्पर्शने । श्वा, रजस्वला, यूप, चण्डाल चिति चैत्यमूमिष्ट वृक्ष स्पर्शने । काकखर पाषाण्ड पतितादि सम्पर्के । केशादि दूषित



पुष्पार्चने । पुरीषादि स्पृष्ट्वा अनाप्लुत्य अर्चने । स्त्रिया, अनुपनीतेन वा बिम्बस्पर्शे । आराधनमध्ये निष्ठीवादिकसम्भवे । मन्त्रन्यासमकृत्वा च पूजने । चण्डालादि संस्पृष्टहवि निवेदने । सृगालादि दूषित वस्तु प्रापणे । अयाज्ञिक धान्य हविस्समर्पणे । अत्युष्ण अतिशीत हविर्निवेदने । शवादि दूषित गेहे पक्वस्य हविषः निवेदने । मुख वायु हताघ्रात रजस्तुष कणान्वितहविर्निवेदने । निवेदितस्य भूयः निवेदने । निर्माल्योच्छिष्टसमर्पणे । गुर्वाद्यन्य वन्दनावसरे हस्तधृत कुसुमहविरादुप-योजने भगवत्प्रणामकाले हस्तधृतानां पुष्पाणां विष्वक्सेने विनियोगः । तादृशपुष्पैः अर्चने । मण्डूक, मूषिक, सर्प, विडालाद्युपहत निवेदने । मक्षिकाद्यैः संस्पृष्टस्य विशेषः । भुक्तशेषनिवेदने । पर्युषिताम्बूपहारे । अपर्युषित तीर्थ सलिलानि । समुद्र तोयस्य अपर्युषितत्व अवधिः । तिर्यग्योन्यादि लङ्घित वारिणः निषेधः । अज अश्वादि मुख संस्पर्शस्य कामचारः । अशुचिद्रव्य संस्पृष्ट जलस्य निषेधः । शिवनिर्माल्य दुष्टेन तोय प्रभृति वस्तुना पूजने प्रायश्चित्तम् । शवादि दूषित कूपादि जलाशयसंस्कारः । उक्तसंस्कारस्य दिवारात्र भेदेन भेदः । पूजाकाले दीपस्य निर्वाणे द्विगुणार्चनम् । आकस्मिक निर्वाणे दोषाभावः । अनिर्वाणदीपनिर्वाणे प्रायश्चित्तम् । दीपयोग्य तैलम् । निषिद्धतैलनिरूपणम् । तादृश तैलयोगे प्रायश्चित्तम् । निषिद्ध दधिक्षीरादि । वस्त्रोपकरण न्यूनीभावे विधिः । मन्त्रक्रियादि हानौ विधिः । वाद्यनृत्तादि हानौ शान्तिः । सन्ध्याकालातिक्रमे । अधिककाल पूजाहानौ । वर्षाधिक काल पूजालोपे पुनः प्रतिष्ठा । [1-69½] मुगुप्त गृहा-र्चाविधिः । देवस्थापितेषु पूजालोपे विधिः । सालिग्राम पूजालोपे शान्त्यभावः । अनेक काल पूजालोपे विधिः । [70 87½] अग्निकुण्डस्य अशुचि सम्पर्के शान्तिः । पाकस्थान अशुचित्व शान्तिः । परिवारार्चना लोपे । बल्यर्थ हविषः दोषे । तण्डुलादि दूषणे बलिद्रव्यादि पाते, बलिबेरस्य पतने । [88-101] रजस्वलादि दूषित भूसंस्कारः । कवाट दोषे शुद्धिः । चोरस्पर्शे । अज्ञातजातिजनस्पर्शे । अन्यशास्त्र दीक्षित स्पर्शे । महापातकि संस्पर्शे । [102-130] शिला बिम्बस्य चालन निषेधः । मागधश्वापदादि स्पर्शे शान्तिः । खद्योत संस्पर्शे । पूजाकाले कवाट बन्धने । तत्रापवादः । बिम्बवदेव प्रभापीठादिषु दोषः । अनधिकारिप्रसङ्गे शान्तिः । प्राकारादीनां अग्निदाहे । सुदर्शनादीनामग्निदाहे च शान्तिः । प्रासादा-दीनां वृद्धिः स्थापनादि निर्देशः । निषिद्ध दिशि वृद्धौ शान्तिः । उपपीठस्य कामचारः । नवीकरणे पूर्ववदेव चिह्नानि । [131-152]

**एकोनविंशोऽध्यायः उत्सवप्रायश्चितं नारायणबलिः** Page 239 - 256

उत्सवप्रायश्चित्तविधिः । नित्यनैमित्तिक सम्पाते कर्तव्यक्रमः । गृहार्चास्नपने निमित्तानुसारेण स्थलम् । आलय बिम्बस्य बहिस्स्नपन निषेधः । तीर्थावभृथादौ अनुज्ञा । स्नपनाङ्गवैकल्ये प्रायच्छित्तम् । स्नपनकाल विपर्यये । स्नपन कलशानां विकारे । अक्रम कलशाभिषेके । देवता मन्त्रादि व्यत्यये । आराधानाङ्गवैकल्ये । [1-24½] फलार्थिभेदेन स्नपन कालभेदः । स्नपनद्वयसम्पाते प्रतिसरादि निषेधः । मण्डूकादिभिः कलश दूषणे । अशौचिभिः कलश स्पर्शने । बद्धे प्रतिसरे आशौचाभावः । विमान स्थापनाहीनस्थले उत्सवकरणे । नित्योत्सवरहितस्थले उत्सवकरणे । ध्वजदोष सम्पाते । अङ्कुरविकारे, वल्मीकप्ररोहादौ च विधिः । [25-54] नित्यमध्ये नैमित्तिकान्तरापाते प्रत्येकं अङ्कुरार्पणम् । अर्पितेषु अङ्कुरेषु दैवात् मानुषाद्वा उपघाते शान्तिः । कर्ममध्ये कर्मान्तरापाते पुनः कौतुकबन्धः । अन्तरापतितं स्नानं समाप्य, पूर्वारब्धं समापयेत् । शून्यग्रामे बलिदान निषेधः । महावाताद्यभिघाते पुनरुत्सवः । मुहूर्तातिक्रमे । परिजनानां अभिघाते अन्यान् कल्पयेत् । अतिक्रान्त बलिविधानम् । उद्यानमृगयादि क्रियालोपे । अवभृथस्नान-लोपे पुनरुत्सवः । उक्तमासातिक्रमे अनन्तरमासे अनुज्ञ विधिः । पूर्वोत्सवलोपे शान्तिः । बलि वस्तूनां व्यत्यासे । उत्पातसंस्पर्शे । अग्निदाहे । यागमण्डपे शृगा-लादि प्रवेशे । उत्सवाग्नेः स्वयं शमने । विषुवे अयने रात्रावपि तीर्थोत्सवानुज्ञा । अन्यत्र अहन्येव तीर्थयात्रा । होमविच्छेदे शान्तिः । महोत्सव मध्ये बिम्बनाशे । यानादि भ्रंशे । यानानां अस्पृश्यस्पर्शने । पुष्पयागाभावे । ध्वजारोहणकालाति-क्रमे । पवित्रारोपण विपर्यासप्रायश्चित्तम् । [55-95½] अस्थान शूलस्थापने । नयन मोक्षण अकरणे । तोयाधिवास अकरणे । अनाचार्यप्रतिष्ठायाम् । बालमन्दिरस्थिति काल अतिक्रमे । गोपुरे वालये शिथिली सरघा वल्मीकादि समुद्भवे । [96-107] सिद्धान्त साङ्कर्ये । सिद्धान्तस्वरूप प्रश्नः । सिद्धान्त निर्वचनम् । मन्त्रसिद्धान्तादि भेद कथनम् । मन्त्र सिद्धान्तः । आगमसिद्धान्तः । तन्त्र सिद्धान्तः । तन्त्रान्तर सिद्धान्तः । आरम्भावसानयोः एक एव सिद्धान्तः । अनुक्तस्य तन्त्रान्तरात् ग्रहणम् । तन्त्र साङ्कर्यनिषेधः । पञ्चरात्र प्रतिष्ठितस्य तेनैव निर्वाहः । एकत्र दीक्षितस्य अन्यत्र दीक्षा निषेधः । [108-132] विषशस्त्रादि हतानां नारायण-बलिः । [133 - 169]



**विंशोऽध्यायः हिरण्यगर्भादिविधिः** Page 267 - 276

पापिनां कर्माधिकारार्थं प्रायश्चित्तम् । हिरण्य गर्भ तुलाभार निर्देशः । हिरण्यगर्भविधिः । [1 - 43] तुलाभारविधिः । [44 - 61] पुष्पाभिषेकविधिः । [62 - 104]

**एकविंशोऽध्यायः**

**सिद्धान्तभेद पञ्चरात्राधिकारि व्यवस्था विधिः** Page 267 - 276

अधिकारि व्यवस्था प्रश्न प्रतिवचने । औपगायनादीनां निर्देशः । ब्रह्मणा पञ्चरात्र दीक्षादानम् । भागवत तत्व निष्पत्तिः । आत्मार्थ यजनस्य मुख्यता । परार्थ यजन प्रदेशाः । अभागवतवंश्यानां परार्थयजननिषेधः । दीक्षया कुलीनत्वं । [1 - 24] ध्येयवस्तुनिर्देशः मूर्तिलक्षणं च । आगमसिद्धान्तध्यान प्रकारः । बल्यादिदानरहित पूजा । कर्मसन्यासिनां स्वरूपम् । वर्णचतुष्टय संज्ञा । कर्षणादिषु अनधिकारः । मौद्गलादीनां एकायनानां च दाहनिषेधः । मूर्त्यन्तरार्चननिषेधः । [25 - 53½] तन्त्रसिद्धान्तमार्ग निरूपणम् । तन्त्रान्तरसिद्धान्तमार्ग निरूपणम् । तन्त्रान्तरसिद्धान्ताचार व्यवस्था । क्षिद्धान्तसाङ्कर्य निषेधः । [54-83]

**द्वाविंशोऽध्यायः मुद्राविधिः** Page 276 - 284

मुद्रा विधिः । मुद्रा निरुक्तिः । मुद्रा पूर्वविधिः । 1. हृदय मुद्रा 2. शीर्ष मुद्रा 3. शिखा मुद्रा 4. कवच मुद्रा 5. अस्त्र मुद्रा 6. नेत्र मुद्रा 7. शिवा मुद्रा 8. अग्निराकार मुद्रा 9. योग मुद्रा 10 योगसम्पुट मुद्रा उक्तयोः मुद्रयोः विनियोगः । 11. कुम्भ मुद्रा 12. संहार मुद्रा । एतस्य विनियोग । 13. सृष्टि मुद्रा—एतस्या विनियोगः 14. तत्व मुद्रा 15. सैव ज्ञान मुद्रा 16 न्यास मुद्रा 17. जय मुद्रा 18. ब्रह्म मुद्रा 19. विष्णु मुद्रा 20. रुद्र मुद्रा 21. अभिवादन मुद्रा 22. विघ्नराज मुद्रा 23. भागवत मुद्रा 24. वराह मुद्रा 25. दहन मुद्रा 26. आप्यायन मुद्रा 27. सुरभि मुद्रा 28. आवाहन मुद्रा 29. प्रणाम मुद्रा । तस्याः विनियोगः । 30. पद्म मुद्रा 31. कमल मुद्रा 32. शङ्ख मुद्रा 33. चक्र मुद्रा 34. गदा मुद्रा 35. चाप मुद्रा 36. मुसल मुद्रा 37. खड्ग मुद्रा 38. वनमाला मुद्रा 39. अञ्जलि मुद्रा 40. गरुड मुद्रा 41. विष्वक्सेन मुद्रा 42. अनन्त मुद्रा

43. बलि मुद्रा 44 वस्त्र मुद्रा 45. मुष्टि मुद्रा 46. स्नान मुद्रा 47. गन्ध मुद्रा 48. पुष्प मुद्रा 49. यज्ञोपवीत मुद्रा 50. आकल्प मुद्रा 51. धूप मुद्रा 52. दीप मुद्रा 53. प्रतिमा मुद्रा 54. स्वागत मुद्रा 55. प्रार्थना मुद्रा 56. यान मुद्रा 57. ग्रास मुद्रा 58. होम मुद्रा (1-74)

**त्रयोविंशोऽध्यायः मातृकाद्यर्थत्रय वर्णनम्** Page 284 - 303

मन्त्रोद्धारविधिः । वर्णानां संज्ञान्तरम् । [1-37½] वर्णानां देवता निर्देशः । तत्र अचां देवताः । हलां देवताः । वर्णानां नाम देवता ज्ञाने मन्त्रिणः फलम् । वर्णानां नक्षत्राणि । वर्णानां राशयः । [38-66] साधकस्य योग परीक्षा । सिद्धारि चक्र न्यासः । मूलमन्त्र चतुष्टयस्य नानुगुण्य परीक्षा मूलमन्त्र निरूपणम् । माला बीजमन्त्र लक्षणम् । [67-74½] मन्त्राणां वयो जात्यादि निर्देशः । मन्त्र जात्यनुरोधेन कर्मसु विनियोगः । अविधिना मन्त्रग्रहणे दोषः । सिद्धैकमन्त्रस्य मन्त्रान्तर सौलभ्यम् । मन्त्रजपे दिगादि नियमः । जपयोग्य प्रदेशः । जापकस्य आहार नियमः । सिद्धियोग्य तिथ्यादयः । युग भेदेन जपावृत्ति भेदः । [75-95] मन्त्रशब्दनिर्वचनम् । फलदर्शनादेव मन्त्र दृष्टत्वम् । मन्त्राणां श्वेतादि वर्णभेदः । मन्त्रिणो वर्ज्याः वस्तु निर्देशः । वर्ज्यानि पुष्पाणि । मन्त्रिणो वर्ज्यानि शाकादीनि । वर्ज्यानि भोजन पात्राणि । मन्त्रिणा धारणीयानि चिह्नानि । सुवर्ण चक्र धारणम् । देहे धारणीय लाञ्छनम् । चक्रादि लाञ्छितस्य महात्म्यम् । सिद्धिप्रतिबन्धकानि वेषचेष्टादीनि । [96-123½] मन्त्रसिद्ध्यर्थं शाला निर्माणादि । कुण्डाकृति मानादि । प्रसङ्गात् संख्या स्थान निर्देशः । अग्नेः श्रोत्रादि निरूपणम् । होमस्थानादि फलम् । कुण्डमध्ये योगासनम् । प्रत्यहं होमः । सिद्धेः निमित्तानि । तत्र सुनिमित्तानि । दुर्निमित्तानि । [124-167] सिद्धिप्रकारः । गुरुं विना अन्यत्र सिद्धिलिङ्गानां प्रकाशनिषेधश्च । यावत् मन्त्रसिद्धिः तावत् भगवदाराधनम् । [168-174½] प्रणव पुरश्चरणविधिः । [175-192½]

**चतुर्विंशोऽध्यायः द्वादशाक्षर मन्त्रकल्पः** Page 304 - 321

मन्त्रसमुद्धार प्रकारः । बीजाक्षराणि । बीजन्यासस्थान भेदः । ऋषिर्देवता च । [1-18] तत्त्वानि । क्षेत्राणि । [19-25½] द्वादशाक्षर माप्यम् । द्वादशाक्षर चिन्तकानां माहात्म्यम् । [26-41] शरीरशुद्धये पुरश्चरण नियमः । पुरश्चरण



सम्पत्तये शुद्धिः । [42-53½] मन्त्रसाधन योग्यकालः । साधनकाल नियमाः । ध्यान प्रकारः । मन्त्रजप कालावधिः । स्नानादि । जपतर्पण होम संख्या । [54-75½] मन्त्रसिद्धि फलम् । [76-90] क्षेत्रसीमा निर्णयः । सिद्धार्थालयेषु कामनानुगुण जपसंख्या । योगध्यान तेन देहत्याग प्रकारः । [91-104] ब्रह्मप्राप्ति प्रकारः । अपुनावृत्ति निरूपणम् । [105-109] ब्रह्मणा देहपातक्रम प्रश्नः । भगवता तन्निरूपणम् । [110-130] परकाय प्रवेशप्रकारः । [131-143½] मन्त्रमाहात्म्य निगमनम् । अस्यैव मन्त्रस्य षोडशाक्षरत्वविधिः । तदुद्धार प्रकारः । तत् ऋषिच्छन्दो निर्देशः । मन्त्रवर्णन्यास स्थानानि । आराधनक्रमः । [144-164½] ग्रीष्मादिषु जपस्थिति प्रकारः । जापिनः देवताभिः छलनम् । स्थिरमतेः जापकस्य उत्तमं फलम् । [165-172½]

**पञ्चविंशोऽध्यायः अष्टाक्षरमन्त्रवैभवः** Page 321 - 349

अष्टाक्षर मन्त्रकल्पः । वर्णोद्धारमन्त्रः । बीजच्छन्दो निर्देशः । [1-17½] प्रणव निरुक्तिः । नमः पद निरुक्तिः । नारायण पदनिर्वचनम् । [18-27½] साधक नियमाः । मन्त्र जपकालः । देवता ध्यानम् । मन्त्रजप होमादि संख्या । सिद्धे मन्त्रे धर्मसाधनप्रकारः । [28-46½] कल्याणविधिः [47-60½] फलातिशयप्रतिपादनम् । सङ्क्रांति पूजाविधिः । उत्तरायण पूजा । अर्थसाधनम् । [61-97½] स्त्री भोगः । वशीकारः । आकर्षणम् । [98-135½] यक्षसाधनम् । विद्याधर साधनम् । पाताल साधनम् । [136 156] खड्ग साधनम् । सिद्धकन्यासकाशात् सिद्धवस्तुलाभः । [157-178] शत्रुमारणम् । इन्द्रजालम् । गुलिका विधिः । वेताल साधनम् । [179-195½] आमयशान्तिः । [196-214] पुष्टि विधिः । आयुष्काम विधिः । आरोग्य कामविधिः । अपमृत्यु निवारणम् । [215-226] वाक् सिद्धिः । प्रतिवादि वाग्बन्धनम् । तत्रदोषाभावः । [227-236½] ब्रह्मवर्चसकामकल्पः । गोभूराष्ट्रादि कामकल्पः । मन्त्रदेवता प्रभावः । विषापहरणम् । [237-256½] धनादि सिद्धयः । मन्त्रदेवता साक्षात्कारः । मन्त्रमाहात्म्यम् । [257-275]

**षड्विंशोऽध्यायः विष्णुगायत्र्यादि मन्त्रोद्धारः** Page 349 - 358

विष्णु गायत्रीकल्पः । गायत्र्यक्षरन्यास वर्ण देवतादि । सन्ध्यात्रये ध्येयस्वरूपम् । सिद्धये जपसंख्या । अष्टाक्षरवदनुष्ठानम् । एतज्जपेन मन्त्र चतुष्टय

प्राप्तिः । [1-29] श्रीकराष्टाक्षर मन्त्रः । तद्बीजादि निर्देशः । ध्येयदेवता स्वरूपम् । तपो नियम तत् फलं च । [8)-40$\frac{1}{2}$] लक्ष्मीनारायण कल्पः । सङ्कर्षण मन्त्रः । [.0 69] प्रद्युम्न न्त्रः । [70-74] अनिरुद्धमन्त्रः । [75-78$\frac{1}{2}$] चतुर्विंशति मूर्तिमन्त्रनिर्देशः । [79-84$\frac{1}{2}$]

सप्तविंशोऽध्यायः मत्स्यादि मूर्तिदशकमन्त्रनिर्देशः Page 358 - 406

मत्स्यमूर्तिमन्त्रः । कूर्ममूर्तिमन्त्रः । वराहमूर्तिमन्त्रः । तस्यैव मन्त्रान्तरम् । वराह माला मन्त्र प्रकारः । [1-28] नृसिंहस्य मन्त्रः । अस्य मालामन्त्रः । रक्षा मन्त्रः । [29-211$\frac{1}{2}$] बीजशक्त्यादि द्वादशाङ्गप्रश्नः । तन्निरूपणं च । [212-22 $\frac{1}{2}$] वामनमन्त्रः । त्रिविक्रममन्त्रः । जामदग्न्यमन्त्रः । [224-242] दाशरथि मन्त्रः । माला मन्त्रः । भरतादीनां मन्त्र निर्देशः । बलराम मन्त्रः । [243-330] कृष्णस्य मन्त्रः । गोवर्धन मन्त्रः । मन्त्रान्तरम् । मालामन्त्रः । [331-420$\frac{1}{2}$]

अष्टाविंशोऽध्यायः यज्ञमूर्त्यादि मन्त्रोद्धारः Page 401 - 420

यज्ञादि मूर्तिमन्त्रः । अन्नाधिपतिमन्त्रः । (1-2.) शचीशमन्त्रः । कालनेमि मन्त्रः त्रैलोक्य मोहनमन्त्रः । तस्यैव मन्त्रान्तरम् (25-48$\frac{1}{2}$) काम कामेश्वरीमन्त्रः । त्रैलोक्य मोहन मालामन्त्रः । (49-82$\frac{1}{2}$) यज्ञवराह मन्त्रः । (83-103) दरोदर नृसिंह मन्त्रः । (104 117) हयग्रीव मन्त्रः । हयग्रीव मालामन्त्रः । (118-15_$\frac{1}{2}$) मुकुन्दादि मन्त्र निर्देशः । बभ्रुमन्त्रः । वृषाकपि मन्त्रः । (153-160) शौरि मन्त्रः । वैकुण्ठ मन्त्रः । (161-164$\frac{1}{2}$) अपराजित मन्त्रः । सङ्कर्षणादि मन्त्र निर्देशः । (165-194)

एकोनत्रिंशोऽध्यायः श्रियादि परिवार मन्त्र वणनम् Page 420 - 442

श्रियादीनां मन्त्रः । श्रीमन्त्रः । (1 - 21) मण्डलध्यान प्रकारः । (22-27$\frac{1}{2}$) धनदादीनां मन्त्रः । चिन्तामणि प्रभृतीनां मन्त्रः । (28-46) श्रियः मालामन्त्रः । (47-64) वसुधा मन्त्रः । जप प्रकारः । (65 81$\frac{1}{2}$) धरण्या मन्त्रः । (82-94$\frac{1}{2}$) सरस्वत्याः मन्त्रः । (95-130$\frac{1}{2}$) आधारशक्त्यादि मन्त्रः । (131-141$\frac{1}{2}$) अनन्तमन्त्रः । (142 - 149) भूमन्त्रः । पीठकल्पनविधिः । तन्मन्त्रश्च (150-169$\frac{1}{2}$) ब्रह्मसनकादि परिवार कल्पनम् । प्रथमावरणे व्यष्टव्याः अष्टौ व्याघ्रयादिका



शक्तयः । द्वितीयावरणे चण्डप्रचण्डयोः मन्त्रः । उदुम्बरस्य मन्त्रः । क्षेत्रेश मन्त्रः । दिङ्मूर्ति निर्देशः । द्वितीयावरणे यष्टव्याः इन्द्रादयः । बहिरावरणे व्यष्टव्याः । (170-209$\frac{1}{2}$) बलिपीठे बलिदानक्रमः । क्षेत्रेशार्चनं विना बलिदानस्य निष्फलत्वम् । (210 - 219)

त्रिंशोऽध्यायः तिथि देवतामन्त्रोद्धारः Page 443 - 463

काम्यकर्मणः कालः । तिथिदेवताः । अग्नेः मन्त्रः । ब्रह्मणोमन्त्रः (1-11$\frac{1}{2}$) कुबेर मन्त्रः (12-26$\frac{1}{2}$) जृम्भल मन्त्रः । (27-30$\frac{1}{2}$) विघ्नेश मन्त्रः । (31-46) षण्मुख मन्त्रः । (47 - 51$\frac{1}{2}$) भानु मन्त्रः । (52-66$\frac{1}{2}$) ईशान मन्त्रः । (67 - 93$\frac{1}{2}$) दुर्गा मन्त्रः । दुर्गायाः मन्त्रान्तरम् । (94 - 154$\frac{1}{2}$) यमस्य मन्त्रः (155-159) इन्द्रस्य मन्त्रः । (160-162) विष्णोः मन्त्रः । (163) कामस्य मन्त्रः । (164 - 190) अश्विनो मन्त्रः । (191-195$\frac{1}{2}$) सोमस्य मन्त्रः । (196-203)

एकत्रिंशोऽध्यायः किरीटादि मन्त्रोद्धारणम् Page 463 - 508

विघ्नगजोत्पत्तिः । (1-9$\frac{1}{2}$) आकल्पमनुनिर्देशः । (10-24) श्रीवत्स मन्त्रः । (25 34) कौस्तुभ मन्त्रः । (35 42) वनमाला मन्त्रः । (43-64) प्रभा मन्त्रः । (65-74) अक्षमाला मन्त्रः । (75-78) धूप मन्त्रः । घण्टा मन्त्रः । दीप मन्त्रः । (79-84) सुदर्शन मन्त्रः । सुदर्शनस्य मन्त्रान्तरम् । (85-109) सुदर्शन महामन्त्रः (109 - 156) बीजाङ्गदेवता निर्देशः । जपकालदेशादि निर्देशः । (157 - 160) अपर सुदर्शन महामन्त्रः । (161 - 248) बीजाङ्गादि निर्देशः । (249 - 250) सुदर्शन नृसिंह मन्त्रः । (251 - 256) सुदर्शन नृसिंह ध्यानम् । (257 - 262) पाञ्चजन्य मन्त्रः । पाञ्चजन्य मन्त्रान्तरम् । (263 - 278$\frac{1}{2}$) कौमोदकी मन्त्रः । (279 - 283) पद्म मन्त्रः । (284 - 289) मुसल मन्त्रः । (290 - 293) खड्ग मन्त्रः । (294-299) शार्ङ्ग मन्त्रः । (300-310) पाश मन्त्रः । अङ्कुशमन्त्रः । (311-315$\frac{1}{2}$) गरुडमहामन्त्रः । (316 - 365$\frac{1}{2}$) गरुडध्यानप्रकारः । (366 - 375$\frac{1}{2}$) विष्वक्सेन मन्त्रः । मन्त्रान्तरम् । (376 - 425) विष्वक्सेनाराधन प्रकारः । (426 - 451)

द्वात्रिंशोऽध्यायः सुदर्शन महामन्त्र वैभवः Page 509 - 537

सुदर्शन मन्त्र कल्पः । (1-19$\frac{1}{2}$) चक्रपङ्कजध्यान प्रकारः । (20-30$\frac{1}{2}$) मन्त्रसाधन नियमः । शान्तिकपौष्टिकादि कर्मसु मन्त्र विनियोगविधिः । (30-61)

प्रासादादिषु ब्रह्मरक्षस्समुच्चाटन विधिः । (62-67½) मूषिकादि दुर्निमित्त निवारण विधिः । पुष्टि विधिः । (68-71½) कर्मभेदेन कुण्डभेदविधिः । (72-97½) पुररक्षा विधिः । (98-108½) पन्नगनिवारणम् । (109-121) अतिवृष्टि प्रशमनम् । (122-125) राष्ट्रादीनां क्षोभशान्तिः । राष्ट्रादि लम्भनम् । (126-134) पभ्रष्ट-राज्यप्रतिविधिः । (136-148) सङ्ग्राम विजयविधिः । (149-165½) अपमृत्यु-निवारणम् । (166 - 177) मारणविधिः । (178-215½) उच्चाटनम् । (216 - 222½) विद्वेषणम् । (223 - 230) स्तम्भनम् । (231-240) वशीकारः । (241-248) पातालसाधनम् । (249 - 254½) खड्गसिद्धिः । (255 - 258) परकाय-प्रवेशः । (259-265½) रससिद्धिः । पादुकासिद्धिः । (266-272½) यक्षि-साधनम् । ( 273 - 281 )

**त्रयस्त्रिंशोऽध्यायः समाराधनाङ्ग मन्त्रोद्धार** Page 537 - 560

जौवारिक मन्त्रकल्पः । (1 - 11) पञ्चोपनिषन्मन्त्रः । (12 - 15½) पुरुष मन्त्रः । विश्व मन्त्रः । निवृत्ति मन्त्रः । (16-25½) सर्व मन्त्रः । (26-32) शान्ति-मन्त्र चतुष्टयम् । (26 - 50½) पञ्चविंशति तत्वमन्त्रः । (51 - 57) दीप मन्त्रः । (58-59) अक्षसूत्र मन्त्रः । (60-61) अर्घ्य मन्त्रः । (62-63½) पाद्य मन्त्रः । (64 - 67) आचमन मन्त्रः । (68 - 70) भोगनिवेदन मन्त्रः । (71 - 72½) पुष्पाञ्जलि मन्त्रः । (73-75) वस्त्र मन्त्रः । (76-77) ऐहिकसुख साधनमन्त्रः । (78 - 90) अल्पायास साध्य मन्त्रः । (91 - 107) जलस्तम्भन मन्त्रः । नदी वेगस्तम्भन मन्त्रः । [108-113½] अग्निस्तम्भनमन्त्रः । [114-117½] गोमहिषादि वश्यमन्त्रः । [118-120] व्यालादि दमन मन्त्रः । रिपुनाशक पिशाच वशमन्त्रः । [121-123½] गन्धर्वसाधन मन्त्रः । [124-135] इन्द्रजाल मन्त्रः । [136-156] सप्तयक्षिणी मन्त्रः । सुन्दरी मन्त्रः । मनोहरा मन्त्रः । कनकवती मन्त्रः । कामेश्वरी मन्त्रः । रतिप्रिया मन्त्रः । पद्मिनी मन्त्रः । यामिनी मन्त्रः । [157 - 171] पिशाचमन्त्राः । [172-189] संहितोपसंहारः । [190 191] शास्त्रोपदेश आगम-प्रकारः । [192 - 196½] संवर्तस्य पातालात् जम्बुद्वीपागमनम् । [197 - 201] शास्त्रगोपनम् । [ 202 - 203½ ] तन्त्रेषु पञ्चरत्नानि । [ 204 - 206 ] शास्त्र श्रवण फलम् । [207 - 209]

—: * :—



## Grammatical lapses found in the Caryā Pāda of Pādma Samhita

| | | अ | श्लोकः |
|---|---|---|---|
| 1. | तिलानि | 3 | 94 |
| 2. | अपनीते यावनिके | 3 | 168 |
| 3. | गायत्रिया (Often) | 3 | 151-158 |
| 4. | यवैर्वेन्द्रियकामस्त (Sandhi) | 4 | 54 |
| 5. | मज्जन्ति | 4 | 62 |
| 6. | वेदाग्रेनासनं | 6 | 11 |
| 7. | ताम्बूली | 6 | 56 |
| 8. | वेदिदक्षिणतो | 8 | 26 |
| 9. | स्नायाद्देवं | 8 | 170 |
| 10. | शिल्पिनीप्सितैः | 10 | 73 |
| 11. | चत्वाराणि (gender) | 11 | 3 |
| 12. | स्थाप्यागमनवीथयः (sandhi) | 11 | 4 |
| 13. | भैषज्यैर्भिषजेत् | 11 | 10 |
| 14. | उत्सवं (gender) | 11 | 164 |
| 15. | वर्तन्ति | 11 | 284 |
| 16. | पादोर्द | 12 | 91 |
| 17. | देववदाखित्वा | 16 | 42 |
| 18. | व्रजन्ते | 16 | 85 |
| 19. | कल्पनानां | 17 | 34 |

| | अ | श्लोकः |
|---|---|---|
| 20. शतवारः (अत्पव्यः) | 18 | 51 |
| 21. कार्येत् | 20 | 19 |
| 22. अनुष्टध्वं | 21 | 10 |
| 23. किंशुकं (gender) पारिभद्रकं | 23 | 106 |
| 24. शायीत | 24 | 135 |
| 25. सर्वमन्त्राणि (gender) | 25 | 28 |
| 26. बहुजसया | 25 | 257 |
| 27. कमलोऽग्नि | 27 | 416 |
| 28. भिन्देति | 28 | 63 |
| 29. आमिष्वोडशभिः | 32 | 245 |

# मन्त्रसूची

## पाद्मसंहितायां दृष्टाः वैदिकमन्त्राः अन्येमन्त्राः स्मार्तमन्त्राश्च:

### अ

अग्न आयाहि — R.V. 6-16-10, S.V. 1-1, 2 - 10, V.S. 11 - 46 ; प. अ. 20 ; श्लो. 96

अग्नि मन्त्रः — जया. प. 15 श्लो 67, श्रीप्रश्न. अ. 16 ; प. अ. 30 ; श्लो. 4

अग्निमीळे — R.V. 1 - 1 - 1a, T.S. 4 - 3 - 13 - 3a, M.S. 4 - 10 - 5 ; प. अ. 20 ; श्लो. 97

अग्निर्मूर्धा — R. V. 8-44-16a, S. V. 1-27a, T. V. 1-5-5-3 Mund Upd 2-1-4, T.S. 4-1-1-1 ; प. अ. 3 ; श्लो. 158

अग्निस्तम्मन मन्त्रः — प. अ. 33 ; श्लो. 114

अघमर्षणमन्त्रः — R.V. 10-190 ; प. अ. 13 ; श्लो. 41

अर्घ्यमन्त्रः — जया. प. 7. श्लो 101-103 ; प. अ. 33 ; श्लो. 62

अङ्कुशमन्त्रः — जया. प. 6. श्लो 181-183 ; प. अ. 31 ; श्लो. 313

अर्चतप्रार्चत — R.V. 8. 69-8a, S.V. 1. 362a, A.U. 20. 92-5a ; प. अ 3 ; श्लो. 132

अर्चयामि (साम) — S.V. 4-2-3 ; प. अ. 3 ; श्लो. 132

अणोरणीयान् — T.A. 1 -10-1a, K.V. 2-20a ; प. अ. 9 ; श्लो. 117 ;

अतो देवा अवन्तु नो — R.V 1-22-16, S.V. 10-24a, A.C. 1-5-38 ; प. अ. 3, 9 ; श्लो. 153, 108

अनन्तमन्त्रः — जया. सं. प. 7 श्लो 7 ; प. अ. 29 ; श्लो. 143

अन्नाधिपति मन्त्रः — प. अ. 28 ; श्लो. 7

अनिरुद्धाख्य मन्त्रः — जया. प. 6 श्लो. 191 ; प. अ. 7, 26 ; श्लो. 109, 75

अपराजित नामासि — Mai sam 2-8-14-117-9 ; प. अ. 9, 11, 28 ; श्लो. 123, 38, 165

अब्लिङ्गमन्त्र — प. अ. 3, 6, 10, 11 ; श्लो. 11, 13, 111, 192

अल्पायास साध्यमन्त्राः — प. अ. 33, 91

अष्टाक्षरी — प. अ. 2, 3, 6, 8, 9, 14, 19 ; श्लो. 15, 62, 51, 19, 81, 84, 170, 34, 124, 151, 159

अस्त्रमन्त्रः — जया. प. 6. श्लो 129 ; प. अ. 21, 3, 11, 12, 13, 18, 19 ; श्लो. 24, 22, 105-174, 89-140, 69, 36, 6, 39, 94

अहार्षम् — Ap. Gr. 7. 19 4 ; प. अ 20 ; श्लो. 98

अष्टमूर्तिमन्त्रः — प. अ. 26 ; श्लो. 82

अक्षसूत्रमन्त्र — जया. प. 14 श्लो 32 ; प. अ. 31, 33 ; श्लो. 75, 60

अश्विनो मन्त्रः — प. अ. 30 ; श्लो. 191

## आ

आकल्पमन्त्रः — प. अ. 31 ; श्लोकः 10

आग्नेयमन्त्रः — जया. प. 7-70-71 ; प. अ. 15 ; श्लो. 16

आचमनमन्त्रः — प. अ. 33 ; श्लो. 68

आधारशक्त्यादिमन्त्रः — जया. प. 7-2-3 ; प. अ. 29 ; श्लो. 132

आपः पुनन्तु — T.A. 10 23 ; प. अ. 3 ; श्लो. 150

आपो वहति — प. अ. 9 ; श्लो. 116

आपो हिष्टा मयोभुवः — R.V. 10-9-1a, S.V. 2-1187a, V.S. 11-50a, 36, 14a ; प. अ. 3, 20 ; श्लो. 153, 101

आप्यायस्व — R.V. 1-91-117, V.S. 12-114a, T.S. 1-4-32-1a ; प. अ. 8, 9 ; श्लो. 124, 120

आयाहि — R.V. 8-62-4a ; प. अ. 20 ; श्लो. 96

आत्वा वहन्तु हरयः — R.V. 1-16-1a, A.B. 4-3-1, 6-9-1 ; प. अ. 9 ; श्लो. 115

आह्वानमन्त्रः — प. अ. 8 ; श्लो. 44

## इ

इदं विष्णुः विचक्रमे: — R.V. 1-22-17a, S.V. 1 222a, A.V. 7-26-4a ; प. अ. 3, 6, 8, 9, 11, 20 ; श्लो. 147, 162, 15, 80, 103, 47, 88, 98

इमम्इन्द्रनरवा — R.V. 6-4-7, V.S. 33-13 ; प. अ. 8 ; श्लो. 88 ;

इन्द्रस्यमन्त्रः — जया. प. 7 श्लो 67 ; प. अ. 30 ; श्लो. 160

इन्द्रा विष्णू — R.V. 6-69-1a ; प. अ. 9 ; श्लो. 107





इमं मे वरुण — R.V. 1-25-19a, S.V. 2-935a, V. S. 21-1a, T.S. 2-1-11-6a ; प. अ. 9 ; श्लो. 112

इरावती धेनुमती — R.V. 7-99-3a, V.S. 5-16a, T.S. 1-2-13-29 प. अ. 3,-9 श्लो. 163,-102

इषेत्वोर्जेति — V.S. 1-1-22, 7-30, 14-22, T.S. 1-1-1-1;-3-7-1 ; प. अ. 9,-20 ; श्लो. 108,-96

ईशान मन्त्रः — जया. प. 7 श्लो 75 ; प. अ. 30 ; श्लो. 67

## उ

उत्तिष्टब्रह्मणस्पते — R.V. 1-40-1a, A.V. 19-63-1a, V.S. 34-56a ; प. अ. 3-11-15 ; श्लो. 148,-46,-4

उदित्यं जातवेदसं — R.V. 1-50-1a, A.V. 13-2-16a, 20-17-13a, S.V. 1-31a ; प. अ. 15 ; श्लो. 4

उद्दीप्यस्व जातवेदो — T.A. 10-1-4a ; प. अ. 3,-6 ; श्लो. 165,-16

उदुम्बरस्य मन्त्रः — प. अ. 29 ; श्लो. 179

एष ते च — प. अ. 9 ; श्लो. 112

ऐहिकसाधन मन्त्रः — प. अ. 33 ; श्लो. 78

ओषध्यः — M.G. 2-14-26, T.S. 4-2-6-5 ; प. अ. 8 ; श्लो. 75, 168

## क

कर्माणि पश्यतः — R.V. 1-22-19a ; प. अ. 9 ; श्लो. 103

कनकवती मन्त्रः — प. अ. 33 ; श्लो. 159

कयानश्चित्र आ भुवत् — R.V. 4-31-1a, A.V. 20-76-4b, T.S. 4-2-11 ; प. अ. 3 ; श्लो. 156

कामेश्वरी मन्त्रः — प. आ. 33 ; श्लो. 160

कामकामेश्वरी मन्त्रः — प. अ. 28 ; श्लो. 49

कामस्य मन्त्रः — प. अ. 30 ; श्लो. 164

कालनेमि मन्त्रः — प. अ. 28 ; श्लो. 31

किरीट मन्त्रः — प. अ. 31 ; श्लो. 10

कुबेरस्य मन्त्रः — प. अ. 30 ; श्लो. 12

कूर्ममूर्ति मन्त्रः — जया. प. 7 श्लो 4 ; प. अ. 27 ; श्लो. 9

कृष्ण मन्त्रः — प. अ. 27 ; श्लो. 331

कौमोदकी मन्त्रः — जया. प. 6 श्लो 172 प. अ. 31 ; श्लो. 279

कौस्तुभ मन्त्रः — जया. प. 6, 154-7 ; प. अ. 31 ; श्लो. 85

## ख

खगेश माला मन्त्रः — प. अ. 10 ; श्लो. 119

खड्ग मन्त्रः — जया. प. 7 श्लो 81 ; प. अ. 31 ; श्लो. 294

## ग

गन्धद्वारां (श्री सूक्तं) — R. V. Kh. 5-8-7-9a, T.A. 10-1-10, M.G. 2-13-6a ; प. अ. 8,-9 ; श्लो. 78, 124-119

गन्धर्वसाधन मन्त्रः — प. अ. 33 ; श्लो. 124

गरुड मन्त्रः — जया. प. 6. 174-178 ; प. अ. 10,-31 ; श्लो. 95,-124,-316

गायत्री (सावित्री) — T.A. 10-26-1a, T.S. 1-5-6-4 ; प. अ. 8,-9,-10-13,-20 ; श्लो. 50,-119,-77,-23,-99

गुण मन्त्रः — श्रीप्रश्न. अ. 23 ; प. अ. 5 ; श्लो. 75

गोपाल मन्त्रः — प. अ. 27 ; श्लो. 340

गोमहिषादि वश्य मन्त्रः — प. अ. 33 ; श्लो. 118

गोवर्धन मन्त्रः — प. अ. 27 ; श्लो. 336

## घ

घृत स्नाता — प. अ. 8,-9 ; श्लो. 79,-121

घृतं शुक्रमसि — प. अ. 8 ; श्लो. 125

घण्टा मन्त्रः — जया. प. 13. श्लो 210-214 ; प. अ. 31 ; श्लो. 81

## च

चक्र मन्त्रः — जया. प. 6 श्लो 167 ; प. अ. 3 - 8 - 11 - 12 ; श्लो. 23-59 - 225 - 32

चण्डप्रचण्डयोः मन्त्रः — जया. प. 7 ; प. अ. 29 ; श्लो. 165

चत्वारि शृङ्गे — R.V. 4-58-3a ; प. अ. 20 ; श्लो. 99

चिन्तामणि प्रभृतीनां मन्त्रः — प. अ. 29 ; श्लो. 39





## ज

जलस्तम्भन मन्त्रः — प. अ. 33 ; श्लो. 108

जामदग्न्य मन्त्रः — प. अ. 27 ; श्लो. 236

जितन्ता मन्त्रः — Jitante stotra. 1-1, श्रीप्रश्न. अ. 23 ; प. अ. 3-6-8-9-18 श्लो. 162, 164-14-149-116-43

जृम्भल मन्त्रः — प. अ. 30 ; श्लो. 27

## त

तत्व मन्त्रः (पञ्चविंशति) — प. अ. 33 ; श्लो. 51

तरत् समन्दी धावति — R.V. 9-58-1a, S.V. 1-500a ; प. अ. 20 ; श्लो. 101

तररित्वं — प. अ. 9 ; श्लो. 108

तवामी — प. अ. 9 ; श्लो. 100

तद्विप्रासः — R.V. 1-22-21a, S.V. 2-1023a, V.S. 34-44a ; प. अ. 3-9 श्लो. 151-104

तद्विष्णोः परमं पदं — R.V. 1-22-20, A.V. 7-26-7a, S.V. 2-1022a ; प. अ. 3-5-8-9 ; श्लो. 150, 163-15-72,76-99, 104

तावती — A.V. 8-7-25 ; प. अ. 9 ; श्लो. 116

तिस्रो वाचा — R.V. 7-101-1a ; प. अ. 9 ; श्लो. 107

तेजो मन्त्रः — श्रीप्रश्न. अ. 24 ; प. अ. 3 ; श्लो. 23

त्रातारमिन्द्रं (साम) — V.S. 8-46a, R.V. 6-47-11a ; प. अ. 8-9 श्लो. 77-115

त्रिविक्रम मन्त्रः — प. अ. 27 ; श्लो. 230

त्रिसुपर्णं — तै. सं. 4-2-9

त्रीणि पदा विचक्रमे — R.V. 1-22-18a-8-12-27a, A.V. 7-26-5a प. अ. 3-5-9 ; श्लो. 149-12-103

त्रैलोक्यमोहन मन्त्रः — प. अ. 28 ; श्लो. 37

त्वन्नो अग्ने — R.V. 4-1-4, T.S. 2-5-12 ; प. अ. 9 ; श्लो. 117

## द

दधिक्राविष्णो — R.V. 4-39-6a, S.V. 1-358a, A.V. 20-137-3a ; प. अ. 8-9 ; श्लो. 74, 124-119

दरोदर नृसिंह मन्त्रः — प. अ. 28 ; श्लो. 104

दाशरथि मन्त्रः — प. अ. 27 ; श्लो. 243

दिङ्मूर्ति मन्त्रः — प. अ. 29 ; श्लो. 189

दीप मन्त्रः — प. अ. 31-33 ; श्लो. 83-58

दुर्गा मन्त्रः — प. अ. 30 ; श्लो. 94

देवः पुनातु — प. अ. 3 ; श्लो. 155

देवः सवित. प्रसुव — V.S. 9-1,-11-7,30-1 T.S. 2-6-4-1, T.A. 3-10, T.B. 3-2-8-1 ; प. अ. 3-6-9 ; श्लो 177-16-100

देवव्रत साम (अधिपते स्तोम) — S.A. 4½ gāṇa 6 - 8 ; प. अ. 3 - 9 ; श्लो. 16 - 122

देवा अवन्तु ऋभवः — R.V. 5 - 51 - 13c, M.G. 2-15-6c ; प. अ. 3 ; श्लो. 153

द्वादशाक्षर — प. अ. 2-3-4-6-7-8-9-11-14-18-19-21-23 ; श्लो. 62-51; 57-36-18-105-50, 81, 86-124-235-137-81-159-37-8

द्रुपदादिव — A.V. 6-115-3a, V.S. 20-20a, Tai.S. 4-4-52 ; प. अ. 9 , श्लो. 124


## ध


धनदादीनां लन्त्रः — प. अ. 29 ; श्लो. 28

धरण्याः मन्त्रः — जया. प. 7 श्लो 9 ; प. अ. 29; श्लो. 82

धूप मन्त्रः — प. अ. 31; श्लो. 79

ध्रुवः पातु — प. अ. 9 ; श्लो. 100


## न


न ते विष्णुः — R.V. 7-99-2a ; प. अ. 3-8-9 ; श्लो. 153-73-101

नदीवेग स्तम्भन मन्त्रः — प. अ. 33 ; श्लो. 111

नारसिंह मन्त्रः — Mahā Nārāyaṇa upd. 3 - 17 ; प. अ. 2 - 27 ; श्लो. 27 - 24

नारायण विद्या — प. अ. 7 ; श्लो. 110

नारायणानुवाकं ( नारायणोपनिषद् ) — T.A. 10 - 11 ; प. अ. 8-9-11-16 ; श्लो. 169-109-241-18





निवृत्ति मन्त्रः — प. अ. 8-33 ; श्लो. 44,126-23

नृसूक्तं — R.V. 10-90 ; प. अ. 2-4-6-8 ; श्लो. 18-48-18-67


## प


पञ्चवारुण मन्त्रः — R.V. 1-15-19, T.B. 1-4-8-1 ; प. अ. 18 ; श्लो. 13

पञ्चोपनिषद् मन्त्रः — श्रीप्रश्न. अ. 4, 5 ; प. अ. 4,-8,-9,-11,-12,-17,-18,-33 ; श्लो. 64-125-34, 96-242-32, 33-56-5, 11, 78, 85-12

पर्जन्याय — R.V. 7-102-1 ; प. अ. 9-19-33 ; श्लो. 108-15-12

पद्ममन्त्रः — जया. प. 6 श्लो 16a, प. 7. श्लो 15-18 ; प. अ. 31 ; श्लो. 284

पद्मिनी मन्त्रः — प. अ. 33 ; श्लो, 165

पयोव्रत — साम. पूर्व. 6-2-7 ; प. अ. 8-9 ; श्लो, 74-119

परमेष्ठि — T.V. 4-4-6-1 ; प. अ. 8 ; श्लो. 43, 126

परोमात्र — R.V. 7 - 99 - 1

पवमान सूक्तं — R.V. 9-1-1 ; प. अ. 3-8 ; श्लो. 156-26

पवित्रं ते विततं — R.V. 9-83-1a, S.V. 1-565a, 2-225a ; प. अ. 9 श्लो. 122

पञ्चविंशति तत्त्व मन्त्राः — प. अ. 33 ; श्लो. 51

पाञ्चजन्य मन्त्रः — जया. प. 6 श्लो 164 ; प. अ. 31 ; श्लो. 263, 270

पाद्य मन्त्रः — जया. प. 7 ; प. अ. 33 ; श्लो. 64

पावक अचिन्तयन्त्या — T.S. 4-6-1-2a ; प. अ. 3 ; श्लो. 155

प्राश मन्त्रः — जया. प. 6 श्लो 179-180 ; प. अ. 31 ; श्लो. 311

पिशाचमन्त्रः — प. अ. 33 ; श्लो. 172

पुण्डरीकाक्ष विद्या — श्रीप्रश्न. अ. 16 ; प. अ. 2-3 ; श्लो. 21-16, 124

पुरुष चतुष्टय मन्त्रः — प. अ. 28 ; श्लो. 113

पुरुष मन्त्रः — प. अ. 8 - 33 ; श्लो. 126, 16

पुरुषसूक्तं — R.V. 10 - 90 ; प. अ. 3-7-8-9-10-11-14-16-18-19-20 ; श्लो. 157, 186-104-80, 219-130, 133-77-81, 240-125, 153-18-27, 71, 73-145-32

षोडशऋक् — (पुरुषसूक्तं) देवता:

1. रत्नोदकं — चन्द्रमामनसो ... वायुरजायत। पुरुष:
2. लोहतोयं — नाभ्यासीत् ... अकल्पयन्। सत्य:
3. गन्धोदकं — सप्तास्यासन् ... पुरुषं पशुम्। अच्युत:
4. आज्यं — यज्ञेनयज्ञं ... सन्ति देवा:। अनन्त:
5. पाद्यं — सहस्रशीर्षा ... दशाङ्गुलम्। केशव:
6. अर्घ्यं — पुरुष एवेदं ... अतिरोहति। नारायण:
7. आचमनं — एतावानस्य ... अमृतं दिवि। माधव:
8. पञ्चगव्यं — त्रिपादूर्ध्वं ... अशने अभि। गोविन्द:
9. अमृतोदकं — तस्माद्विराडजायत ... अथोपुर:। विष्णु:
10. मार्जनोदकं — यत् पुरुषेण हविषा ... शरद्धवि:। मधुसूदन:
11. कषायाम्बु — तं यज्ञं बर्हिषि ... ऋषयश्च ये। त्रिविक्रम:
12. कुशोदकम् — तस्माद्यज्ञात् सर्वहुत: ... ग्राम्याश्चये। वामन:
13. दधि — तस्माद्यज्ञात् ... अजायत। श्रीधर:
14. क्षीरं — तस्मादश्वा अजायन्त ... अजावय:। हृषीकेश:
15. मधु — यत्पुरुषं व्यदधु: ... पादावुच्येते। पद्मनाभ:
16. यवोदकं — ब्राह्मणोऽस्य मुख ... शूद्रो अजायत। दामोदर:

पुष्पाञ्जलि मन्त्र: — प. अ. 33 ; श्लो. 73

प्रतद्विष्णु — R.V. 1-154-2a, T.B. 2-43-4a, A.V. 7-26-2a; प. अ. 9,- श्लो. 99

प्रणवं — प. अ. 3 ; श्लो. 159, 174

प्रद्युम्नमन्त्र: — जया. प. 6 श्लो 197 ; प. अ. 7,-26 ; श्लो. 108,-70

प्रभा मन्त्र: — प. अ. 31 ; श्लो. 65

(या)फलिनी — T. 7-5-18-1, R.V. 10-97-3 ; प. अ. 8 ; श्लो. 76

ब

बभ्रु मन्त्र: — प. अ. 28 ; श्लो. 155

बलराम मन्त्र: — प. अ. 27 ; श्लो. 326

ब्रह्मजिज्ञानं — T.S. 4-2-8, A.V. 4-1-1a, 5.6-1a, S.V. 1-321a ; प. अ. 3 ; श्लो. 156

ब्रह्मणो मन्त्र: — प. अ. 30 ; श्लो. 8



भ

भरतादीनां मन्त्र: — प. अ. 27 ; श्लो. 323

भद्रं कर्णेभि: शृणुयाम — R.V. 1-89-8a, S.V. 2-1224a, V.S. 25-21a ; प.अ. 3-9-11 ; श्लो. 149-101-103

भानु मन्त्र: — प. अ. 30 ; श्लो. 52

भू मन्त्र: — प. अ. 29 ; श्लो. 150

भूसूक्तं (भूमिर्भूम्ना) — T.S. 1-5-3-1 ; प. अ. 17-29 ; श्लो. 18-150

भू र्भुवस्व: — प. अ. 20 ; श्लो 90

भोगनिवेदन मन्त्र — प. अ. 33 ; श्लो. 71

म

मधुनक्तं — R.V. 1-90-7a, V.S. 13-28a, T.S. 4-2-9-3a ; प. अ. 8-9 ; श्लो. 147-126

मधुमान्नो वनस्पति: — R.V. 1 90-8a, V.S. 13 - 29a, T.S. 4-2-9-3a ; प. अ. 8-9 ; श्लो. 148-126

मधुवाता ऋतायते — R.V. 1 - 90 - 6a, V.S. 13 - 27, T.S. 4 - 2 - 9 - 3a ; प. अ. 8-9 ; श्लो. 75,147-127

महाव्याहृति: — T. upd. 4-27 ; प. अ. 2-8-9 ; श्लो. 52-78-117

मत्स्यमूर्ति — प. अ. 27 ; श्लो. 3

मनोहरा मन्त्र: — प. अ. 33 ; श्लो. 158

मानस्तोक — R.V. 1-114-8a, V.S. 16-16a ; प. अ. 20 ; श्लो. 97

मुकुन्दादि मन्त्र: — प. अ. 28 ; श्लो. 153

मुसल मन्त्र: — प. अ. 31 ; श्लो. 290

मूर्ति मन्त्र: — प. अ. 2-4 ; श्लो. 63-48

मूर्धानंदिव — R.V. 6-7-1a, S.V. 1 - 67a, V.S. 7 - 24a, T.S. 1 - 4 - 13 ; प. अ. 3-9 ; श्लो. 161-120

मूल मन्त्र: — जया. प. 9 श्लो 25 ; प. अ. 2 - 4 - 8- 9 ; श्लो. 13, 34, 54 - 64-66-95, 123

मूलविद्या — प. अ. 2-4-9-11 ; श्लो. 13, 54-64-130, 133-213

## य


यजु मन्त्रः — प. अ. 7 ; श्लो. 106

यज्ञवराह मन्त्रः — प. अ 28 ; श्लो. 83

यज्ञादि मूर्तिमन्त्रः — प. अ. 28 ; श्लो. 1

यज्ञायज्ञीयं — S.V. 1-4-1, A.V. 7-97-5, V.S. 8-22 ; प. अ. 9 ; श्लो. 106

यमस्य मन्त्रः — जया. प. 7 श्लो 71 ; प. अ. 30 ; श्लो. 155

यस्मिन् विश्वानि भुवनानि — R. V. 7-104-4a, 10-82-6a ; प. अ. 9 श्लो. 108

या आपोदिव्या — A.V. 4-8-5a, K.S. 37-9a ; प. अ. 9 ; श्लो. 112

या ओषधीः — R.V. 10-97-18, V.S. 12-75a ; प. अ. 8 ; श्लो. 169

यासां देवदिवि — A.V. 1-33-3, T.S. 5-6-1-1, M.S. 2-13-1a , प. अ. 9 श्लो. 113

यासां राजा वरुणो — R. V. 7-49-3, A. V. 1-33-2a, T. S. 5-6-1-1a ; प. अ. 9 ; श्लो. 113

युवासुवास — R.V. 3-8-4, M.S. 4-13-1a, T.B. 3-6-1 ; प. अ. 8 ; श्लो. 59


## र


रतिप्रिया मन्त्रः — प. अ. 33 ; श्लो. 163

रथन्तर साम — S.V. 3-1-1 ; प. अ. 8.11-14 ; श्लो. 62-100-153

रक्षा मन्त्रः — प. अ. 27 ; श्लो. 191

रक्षोहण (रक्षोघ्नम्) — R.V. 1-174-3, R.V. 10-87 ; प. अ. 9 ; श्लो. 122

रिपुनाशक मन्त्रः — प. अ. 33 ; श्लो. 122


## ल


लक्ष्मीनारायणाह्वान मन्त्रः — प. अ. 26 ; श्लो. 50


## व


वनमाला मन्त्रः — जया. प. 6 श्लो 158 ; प. अ. 31 ; श्लो. 43

वर्म मन्त्रः — जया. प. 6 श्लो 121 ; प. अ. 3 ; श्लो. 174

वराहमूर्ति मन्त्रः — जया. प. 6 श्लो 150 - 2 ; प. अ. 27 ; श्लो. 12

वरुणसूक्तं — R.V. 1-15-19 ; प. अ. 7,-9,-11 ; श्लो. 108-114-193





वसुधा मन्त्रः — प. अ. 29 ; श्लो. 65

वसोपवित्रमसि — V.S. 1-3, K.S. 1-3 ; 31.2 ; प. अ. 20 ; श्लो. 95

वस्त्र मन्त्रः — प. अ. 33 ; श्लो. 76

वषट् ते विष्णुः — R.V. 7-99-7a-100-7a, S.V. 2-977a ; प. अ. 9 ; श्लो. 107

वामदेवी — S.V. 2-6-5, M.S. 4-9-11-132.10 ; प. अ. 3 ; श्लो. 152

वामन मन्त्रः — प. अ. 27. श्लो. 224

वायुमन्त्रः — जया. प. 7 श्लो 72 ; प. अ. 3 ; श्लो. 15

विघ्नेशमन्त्रः — जया. प. 7 ; प. अ. 30 ; श्लो. 31

विश्व मन्त्रः — A.V. 7-16-1a, 35-1a, T.S. 1-4-7-4a ; प. अ. 8,-18,-33, श्लो. 44, 126,-50,-20

विश्वविद्या — R. V. 10-81-3 ; प. अ. 5 ; श्लो. 73

विष्णुगायत्री — M.S. 2-9-1, T.A. 10-1-6a Mahā Nārāya upd 3-16, जया. प. 8 ; प. अ. 3,-4,-6,-8,-12,-14 ; श्लो. 87, 101, 151,-159, 164,-17, 12,-37, 47, 49,-72, 81, 86,-124, 125,-31, 72,-136

विष्णुगायत्रीकल्प — प. अ. 26

विष्वक्सेन मन्त्रः — जया. प. 7 श्लो 87 ; प. अ. 31 ; श्लो. 376

विष्णुसूक्तं — R.V. 1-154 ; प. अ. 7,-10,-11 ; श्लो. 106,-112,-241

विष्णोः कर्माणि — R.V. 1-22-19, A.V. 7-26-6a, S.V. 2-10, 21a, V.S. 6-4 ; प. अ. 8 ; श्लो. 73

विष्णोर्नुकं — R.V. 1-154-1a, A.V. 7-26-1a, T.S. 1-2-13-3, V.S. 5-18 ; प. अ. 3,-8,-9,-17,-19 ; श्लो. 152,-168,-98,-48,-147

विष्णोः मन्त्रः — प. अ. 30 ; श्लो. 163

विष्णोरराटमसि — V.S. 5-21, T.S. 1-2-13-3 ; प. अ. 9 ; श्लो. 120

वृषाकपि मन्त्रः — प. अ. 28 ; श्लो. 158

वेदाहं एतं पुरुषं महान्तं — V.S. 31-18a, T.A. 3-12-13 ; प. अ. 8,-9 ; श्लो. 148,-125

वैकुण्ठ मन्त्रः — प. अ. 28 ; श्लो. 162

वैरूपाय साम (वैराजसाम) — S.V. 4.5-8, 5-5-13 ; प. अ. 9 ; श्लो. 128

व्यालादि दमन मन्त्रः — प. अ. 33 ; श्लो. 121

व्याहृतिः — प. अ. 3,-4 ; श्लो. 164,-30


### श


शक्तीश मन्त्रः — जया. प. 7 ; प. अ. 28 ; श्लो. 25

शतधारा — T.A. 1-1-3 ; प. अ. 8 ; श्लो. 79

शतमनु — प. अ. 20 ; श्लो. 100

शङ्ख मन्त्रः — जया. प. 6, 6-164

शं नो देवी — R.V. 10-9-4, R.V. Kh. 10-127-13b ; प. अ. 8,-9,-20 ; श्लो. 77,-113, 125,-96

शाकुनिकं सूक्तं — R.V. 2-42-43 ; प. अ. 11 ; श्लो. 46

शार्ङ्गमन्त्रः — प. अ. 31 ; श्लो. 300

शान्ति मन्त्रः चतुष्टयम् — प. अ. 33 ; श्लो. 33

शुक्रमसि — V.S. 1-31, 4-18 ; प. अ. 8 ; श्लो. 125

शौरि मन्त्रः — प. अ. 28 ; श्लो. 161

श्रीमन्त्रः — प. अ. 29 ; श्लो. 2

श्रीकराष्टर मन्त्रः — प. अ. 26 ; श्लो. 50

श्रियः एकाक्षरो मन्त्र — प. अ. 29 ; श्लो. 3

श्रीवत्स मन्त्रः — प. अ. 31 ; श्लो. 25

श्री सूक्तं — R.V. Kh. प. अ. 8,-9,-11,-16 ; श्लो. 89,-126,-212,-217,-18


### ष


षण्मुख मन्त्रः — प. अ. 30 ; श्लो. 47


### स


सत्पयक्षिणी मन्त्रः — प. अ. 33 ; श्लो. 157

समुद्रज्योति — 7-49-1 ; प. अ. 9 ; श्लो. 113

स त्वं नो अग्ने — R.V. 4-1-5 ; प. अ. 9 ; श्लो. 116

सरस्वती मन्त्रः — प. अ. 29 ; श्लो. 95





सर्वे मन्त्रः — प. अ. 33 ; श्लो. 26

सर्वराजानं — प. अ. 20 ; श्लो. 100

सङ्कर्षण मन्त्रः — जया प. 6 श्लो 196 ; प. अ. 7-26 ; श्लो. 107-6

सामवेद मन्त्रः — प. अ. 7 ; श्लो. 107

सावित्री — R.V. 3-62-10a, S.V. 2-812a ; प. अ. 3 ; श्लो. 149

सिन्धुद्वीपेति — प. अ. 9, श्लो. 112

सुन्दरी मन्त्र — प. अ. 33 ; श्लो. 151

सुदर्शन मन्त्रः — प. अ. 31 ; श्लो. 85, 93, 110

सुदर्शन नृसिंहमन्त्रः — प. अ. 31 ; श्लो. 251

सुपर्णोऽसि — T.S. 4-1-10-5, V.S. 12-4, M.S. 2-7-8 ; प. अ. 10 ; श्लो. 117

सोम मन्त्रः — प. अ. 30 ; श्लो. 196

स्वस्ति नः — T.B. 3-3-11-4 ; प. अ. 20 ; श्लो. 53

स्वस्तिसूक्तं — प. अ. 11 ; श्लो. 99

स्वप्नाधिपति मन्त्रः — R.V. Kh. 7-55-1, जया. प. 7 श्लो 199 ; प. अ. 2 ; श्लो. 35

स्वस्त्ययनं — प. अ. 5 ; श्लो. 15


### ह


हयग्रीव मन्त्रः — प. अ. 28 ; श्लो. 118

हिरण्यगर्भ मन्त्रः — R.V. 10-121, T.S. 4-1-8 ; प. अ. 9 ; श्लो. 120

हिरण्यपाणिः — R.V. 1-35-9a, T.S. 1-4-25 ; प. अ. 9 ; श्लो. 125

हिरण्यवर्णाशुचयः — A.V. 1-33-1a, T.S. 5-6-1-1a, M.S. 1-2-1a ; प. अ. 3 ; श्लो. 155

हिरण्यवर्णां हरिणीं (श्रीसूक्तं) — R.V. Kh. 5-87-1a; प. अ. 3 ; श्लो. 154


### क्ष


क्षेत्रेश मन्त्रः — जया. प. 7 श्लो 27 ; प. अ. 29 ; श्लो. 184

पाद्मे — चर्यापादे
अ. 26. श्लोकाः 30-49 } श्रीकराष्टाक्षर मन्त्र विवरणम् ।

श्लो = श्रीकरं मंत्रमपरं वक्ष्ये सर्वार्थसाधनम् ।
अष्टाक्षरं चतुर्वक्त्र रहस्यं परमं शृणु ॥

आदौ समुद्धरेत्तारमुदयं तदनन्तरम् ।
द्विरेकनेत्र मायांतं क्रोधनं कौस्तुभाक्षरम् ॥

विष्णुशीर्षं ततो लक्ष्मीमनलं तदनन्तरम् ।
अग्निमादिं चतुर्वक्त्र ठठेति श्रीकरद्वयम् ॥

विवरणं - यथा—

तारं — ओउम्

उदयं — उ

एकनेत्र (द्वि) — त + त
मायां — इ } त्ति

क्रोधनं — ष
कौस्तुभं — ठ } ष्ठ

लक्ष्मीं — श
अनलं — र
महामायां — ई } श्री

पद्मं — क

अग्निं — र

ठठ — स्वाहा

1 2 3 4 5 6 7 8
ओउम्, उच्छिष्टश्रीकरस्वाहा



श्लोः — दीप्तिमाननलः पंचबिन्दुरर्धेन्दुनिष्ठिता ।

विवरणं - यथा—

दीप्तिमान् — ह
अनलं — र
पंचबिन्दुं — ई
अर्धेन्दुं — ० } ह + र + ई + ० = ह्रीं = इति बीजः

ह्रां, ह्रीं, ह्रूं, ह्रैं, ह्रौं, ह्रः—

बीजमंगानि षट् चापि [1]क्रुद्धोल्कादीनि पूर्ववत् ।
छन्दश्च देवी गायत्री – ऋषिरस्य प्रजापतिः ।
देवता देवदेवेशः प्रत्यर्णं पूर्ववत् स्मृतम् ।
ऋषि छन्दो दैवतं च ध्यानं संप्रति कथ्यते ।

(1) ओउम् क्रुद्धोल्कायस्वाहा — इति हृदये,
ओउम् महोल्कायस्वाहा — इति शिरसि,
ओउम् वीरोल्कायस्वाहा — इति शिखायां,
ओउम् द्युल्कायस्वाहा — इति बाह्वोः
ओउम् सहस्रोल्कायस्वाहा — इति नेत्रयोः
ओउम् तेजोल्कायस्वाहा — इत्यस्त्राय फट्

देवीगायत्री — छन्दः
प्रजापतिः — ऋषिः
देवदेवेशः — देवता
ध्यानम्ः —

The Vivarana is contributed by Sri Dittakavi Sreenivasacharyalu of Chirala.

## ABBREVIATIONS EXPLAINED

1. A. B. Aitareya Brāhmaṇa
2. A. V. Atharva Veda
3. K. U. Kaushītaki Upaniṣad
4. Mai. S. Maitrāyaṇee Samhitā
5. Maha-U. Mahā Nārāyaṇa Upaniṣad
6. R. V. Rig Veda
7. S. V. Sāma Veda
8. T. A. Taittareeya Āraṇyaka
9. T. S. Taittareeya Samhita
10. T. U. Taittareeya Upaniṣad
11. V. S. Vajasaneya Samhita.

जया. प. Jayākhya-Patalā.

प. Pādma Samhita.

# पाद्मसंहिता

## श्री पाञ्चरात्रे पादसंहितायां चतुर्थः

## चर्यापादः

### प्रथमोऽध्यायः ॥

श्रीब्रह्मोवाच :—

कर्षणादिप्रतिष्ठान्तं कर्म यस्य प्रसिद्ध्यते[1] ।
तं समाराधनविधिं श्रोतुमिच्छामि साम्प्रतम् ॥ १ ॥
आराधनविधिः कीदृगधि[2]कारश्च कीदृशः ।
भगवंस्तमशेषेण ब्रूहि मे भक्तवत्सल ॥ २ ॥

श्रीभगवान् :—

श्रूयतामभिधास्यामि पृष्टं निरवशेषतः[3] ।
[4]आद्यमेकायनं वेदं सब्रह्मप्रतिपादकम् ॥ ३ ॥
तेनैव संस्कृता विप्रा मुख्यकल्पाधिकारिणः ।
अन्येषां ब्राह्मणादीनां वर्णानां दीक्षया क्रमात्[5] ॥ ४ ॥
अधिकारोऽनुलोमानामपि नान्यस्य कस्यचित् ।
पूजाविधौ [6]भगवतः परस्य परमात्मनः ॥ ५ ॥

---

1. प्रसिद्ध्ये $M_1$  2. ०कारी च T  3. चतुर्णां ब्राह्मणादीनां वर्णानां दीक्षया क्रमात्-इत्यर्धश्लोकः T, $P_1$ कोशग्रन्थयोः, तृतीयश्लोकस्य उत्तरार्धरूपेण अधिकतया दृश्यते । 4. आद्यमेकायनं इत्यारभ्य दीक्षया क्रमात् इत्येतत्पर्यन्तं T, P, A कोशग्रन्थेषु, "प्रतिलोमभुवां·········तत्र शस्यते" इत्यनन्तरं दृश्यते । 5. कमलासन M, $P_2$  6. भगवतस्तेऽनुकल्पाधिकारिणः $M_1$

प्रतिलोमभुवां सूतः प्रथमस्तत्र शस्यते ।
त्रयाणां क्षत्रियादीनामनुलोमभुवामपि ॥ ६ ॥

सूतस्य च विशेषेण दीक्षा चात्मपराऽनिशम् ।
परार्थयजनं कुर्युर्विप्रा मुख्यानुकल्पयोः ॥ ७ ॥

नैवाधिकारिणस्ते च गौणाः संस्कारवर्जिताः ।
यथैव दीक्षणीयेभ्यो जायन्ते ब्राह्मणादयः ॥ ८ ॥

तथैव दीक्षाविधिना जायमाना[1] यथोदिताः ।
पूजाविधौ भगवतः प्रकल्प्यन्तेऽधिकारिणः ॥ ९ ॥

**ब्रह्मा :—**

भगवन् ब्राह्मणादीनां जन्म कर्म च भाविकम् ।
विना तं च विवाहं च यच्च यावच्च यादृशम् ॥ १० ॥

मह्यं जिज्ञासमानाय भक्ताय परमेश्वर ।
तदशेषं यथातत्त्वमुपदेष्टुं [2]त्वमर्हसि ॥ ११ ॥

**श्रीभगवान् :—**

सत्त्वं रजस्तमश्चेति त्रैगुण्यं कमलासन ।
तन्मयीं तनुमास्थाय ससर्जाहं पुरा प्रजाः ॥ १२ ॥

सत्त्वेऽधिके [3]मुखाद् विप्रानसृजं मिथुनात्मकान् ।
रजोगुणेऽतिशयिते बाहुभ्यां क्षत्रियांस्तथा[4] ॥ १३ ॥

ऊरुभ्यां गुण[5]साम्येनासृजं मिथुनं विशाम् ।
आधिक्ये तमसः पद्भ्यां शूद्रान् मिथुनरूपिणः ॥ १४ ॥

---

1. यजमानाः $M_1$ 2. इहार्हसि $M_1$ 3. मुखे T, $P_1$, $P_2$
4. ततः $M_1$ 5. साम्येत्वसृजं $P_2$ ; "गुणसाम्येन त्वसृजं" इति पाठे च्छन्दोभङ्गः निवार्येत।



एते च वर्णाः श्रेयांसः पूर्वे पूर्वे यथोदिताः ।
हेतुभ्यां जन्मकर्मभ्यां श्रैष्ठ्यमेषु प्रकल्प्यते[1] ॥ १५ ॥

त्रयस्तेषु द्विजाः पूर्वे मौञ्जीबन्धनकर्मणा ।
चत्वारश्चाश्रमा ब्रह्मन् सर्व एव द्विजन्मनः[2] ॥ १६ ॥

उपनीय गुरोः पार्श्वे व्रतानुष्ठानपूर्वकम् ।
वेदाध्ययनमादौ यत् स श्रेयान् प्रथमाश्रमः ॥ १७ ॥

भार्यासङ्ग्रहणं स्नात्वा प्रजायै तदनन्तरम् ।
तथा च [3]धर्माचरणं द्वितीयश्चाश्रमस्तथा ॥ १८ ॥

गत्वा सभार्यो विपिनं यथोक्तेनैव वर्त्मना ।
वने वन्यफलाहारो विहितेन्द्रियनिग्रहः ॥ १९ ॥

वने तृतीयो विज्ञेयश्चाश्रमः कमलासन ।
[4]पुत्रे दारान् विनिक्षिप्य शिखी [5]मुण्डस्त्रिदण्डवान् ॥ २० ॥

यद्वैकदण्डनिरतो ब्रह्मध्यानपरायणः ।
निवृत्तसर्वकामस्तु वसेत् तुर्याश्रमे द्विजः ॥ २१ ॥

क्षत्रियस्याश्रमाः पूर्वे संन्यासाश्रमवर्जिताः ।
विहिता विश एकस्य द्वौ प्राञ्चौ[6] न तु पश्चिमौ ॥ २२ ॥

एक एव [7]च शूद्रस्य दारसङ्ग्रहणात्मकः ।
षट्कर्मा ब्राह्मणो ज्ञेयः कर्मणाऽध्यापनादिना ॥ २३ ॥

अध्यापनं चाध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चेति षट्कर्माण्यग्रजन्मनः ॥ २४ ॥

---

1. प्रकल्पते T, $P_1$, $P_2$ 2. द्विजन्मनाम् T, $P_1$, $P_2$ 3. धर्मचरणं $P_2$
4. पुत्र $P_2$ 5. मुण्डी $P_2$ 6. द्वावन्यौ $P_2$ 7. चतुर्थस्य T.

दानमध्ययनं यज्ञो वृत्तिस्त्रय्येव भूभुजः[1] ।
विशां च सैव शूद्रस्य [2]शुश्रूषैवैकवर्तनम् ॥ २५ ॥

आस्तिक्यमार्जवं शौचं तपो दान्तिः शमः क्षमा ।
ज्ञानं विज्ञानमित्येते विप्रस्य सहजा गुणाः ॥ २६ ॥

शौर्यं तेजो धृतिर्धार्ष्ट्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ २७ ॥

कर्षणं चैव वाणिज्यं गवां रक्षणमेव च ।
स्वाभाविकं विशां कर्म शुश्रूषा पादजन्मनः ॥ २८ ॥

शूद्रस्य भार्या दासी च स्वा च ते च विशः स्मृताः[3] ।
ते च स्वा च क्षितीशस्य ताश्च स्वाश्चा[4]ग्रजन्मनः ॥ २९ ॥

स्वासु प्रजाः स्वजातीयाश्चातुर्वर्ण्यमिति [5]स्मृतम् ।
अपरे जारजाती च कुण्डगोलकसंज्ञिते[6] ॥ ३० ॥

जारैरुत्पादिता वर्णाः [7]स्ववर्णास्वेव भीरुषु ।
[8]सभर्तृकासुतः कुण्डो गोलको विधवासुतः ॥ ३१ ॥

न तयोर्विप्रयोग्येषु[9] त्रयमध्यापनादिकम् ।
सवर्णा क्षत्रियायुक्ते विप्रेणोढः चिकित्सकः ॥ ३२ ॥

आयुर्वेदमधीयीत मन्त्रवच्चोपनीय सः ।
तत्र चौर्येण सम्भूतो ज्योतिर्वेदाभिजीवकः ॥ ३३ ॥

ज्योतिर्विद्यां[10] समभ्यस्योपनीय समन्त्रकम् ।
ब्राह्मणाध्यूढवैश्यायामम्बष्ठश्शल्यकृन्तकः ॥ ३४ ॥

---

1. भूभुजाम् $P_2$ 2. शुश्रूषैव वर्तना $P_2$ 3. शूद्रा शूद्रस्य भार्यैका सा च स्वे च विशः स्मृताः $P_2$ 4. स्वा च $P_2$ 5. ईरितम् $P_2$ 6. संज्ञिके $P_2$ 7. सवर्णास्वेव T, $P_1$, $P_2$ 8. सभर्तृकासु कुण्डोऽसौ $P_2$ 9. तयोर्विप्रजयोर्नेष्टं $P_2$ 10. समभ्यस्येत् $P_2$.



[1]नाभेरूर्ध्वं तु वपनं वृत्तिरस्य विधीयते ।
चौर्यात् कुलालः कुम्भादिनिर्माणं चास्य जीविका ॥ ३५ ॥

मृन्मयी प्रतिमा चापि कार्या शास्त्रोक्तवर्त्मना[2] ।
ब्राह्मणादूढशूद्रायां जातः पारशवः स्मृतः ॥ ३६ ॥

अर्चनं सप्तमातॄणां [3]वाद्यवादनमेव च ।
तस्य वृत्तिर्निषादस्तु चौर्यात्स्यान्मृगघातकः[4] ॥ ३७ ॥

पट्टबन्धोचितौ चोभौ नृपजौ कुण्डगोलकौ ।
क्षत्रियाद्विन्नवैश्यायां गोष्ठीपण्योपजीवनः[5] ॥ ३८ ॥

चौर्येण जातो माहिष्यस्तुरङ्गमवणिग् भवेत् ।
शूद्रायां क्षत्रियादुग्रो विन्नायां करिबन्धकः ॥ ३९ ॥

चौर्येण शूलिको ज्ञेयः शूलारोपणवृत्तिकः[6] ।
मणिकारश्शंखकारो वणिजौ कुण्डगोलकौ ॥ ४० ॥

करिणो विन्नशूद्रायां वैश्याद्द्यूतादिजीवनः ।
चौर्या[7]त्कटकरस्तत्र वृत्तिस्तस्य कटक्रिया ॥ ४१ ॥

मालवश्चाश्वपालश्च शूद्रजावश्वपौ सदा ।
गवादिपालकोऽम्बष्ठ्यामाभीरो ब्राह्मणाद्भवेत् ॥ ४२ ॥

विलोको [8]रथकृत् क्षत्ता विप्रात् पारशवस्त्रियाम् ।
माहिष्येण करिण्यां तु रथकारो रथादिकृत् ॥ ४३ ॥

---

1. नाभेः......विधीयते इत्येषः T, $P_1$, A कोशग्रन्थेषु "मृन्मयी......... वर्त्मना" इत्यस्य अनन्तरं दृश्यते । 2. अयमर्धः $P_2$ कोशे न दृश्यते 3. वाद्या $P_2$ 4. °घातुकः $P_1$ 5. °जीविक. T, $P_1$, A 6. °जीवनः A 7. कटङ्कर T, $P_1$ 8. वधकृत् T.

शिल्पवित् सर्व[1]शिल्पानामाचार्यः स च उच्यते ।
व्रात्यानां ब्राह्मणादीनां त्रयाणां वृत्तिरुच्यते ॥ ४४ ॥

मारणं मण्डनं क्षेमं समुद्रतरणं तथा ।
ब्राह्मण्यां क्षत्रियात् सूतो विवाहात् प्रतिलोमजः ॥ ४५ ॥

सारथ्यं वृत्तिरेतस्य धर्माणां [2]चावबोधनम् ।
उपवीतोपनयने प्राप्नोत्येव समन्त्रकम् ॥ ४६ ॥

चौर्यात्तत्रैव सूतोऽन्यस्सोऽन्य[3]संस्कारकारकः ।
तस्यां वैदेहको वैश्याद्विवाहाद्वस्त्रशुद्धिकृत् ॥ ४७ ॥

मागधस्तत्र चौर्येण जङ्घाकारकवृत्तिकः ।
शूद्राद्ब्राह्मणयोषायां विवाहाच्चौर्यतोऽपि वा ॥ ४८ ॥

चण्डालो झल्लरीकाक्षो मलनिर्हरणादिकृत् ।
आयोगवस्तन्तुवायो वैश्यादूढनृपस्त्रियाम् ॥ ४९ ॥

तत्रैव चौर्यादारण्यः पुलिन्दो मृगघातुकः ।
शूद्रान्नृपायां विन्नायां [4]पुल्कसो [5]वार्क्षमधुकृत् ॥ ५० ॥

वैश्येन तत्र चौर्येण जृम्भनृत्तादिवर्तनः ।
वैश्यायां शूद्रविन्नायां तक्षा स्यात्तक्षणादिकृत् ॥ ५१ ॥

सोऽयं कांस्यस्वर्णकृत् स्यात्त्वष्टा च श्रमजीवनः ।
नैल्यकृच्च स विज्ञेयो नीलवस्त्रादिचित्रकृत् ॥ ५२ ॥

1. ॰शिल्पिनां $P_2$ 2. चैव $P_2$ 3. अन्यस्संस्कार॰ $P_2$ 4. पुष्कलो A
5. लाक्ष॰ $P_1$, T.



[1]स एव जातिपालः स्याच्चौर्याच्चक्री तु तैलिकः ।
शूद्रात् करिण्यां[2] वै जातः कूटकृच्छववदाहकः ॥ ५३ ॥

ब्राह्मणान्नापितोऽम्बष्ठ्यामघोवपनवृत्तिकः ।
प्रतिलोमानुलोमाभ्यां प्रातिलोम्यानुलोमतः ॥ ५४ ॥

बहवः सङ्करा जाताः यथाऽऽभीरादिजातयः ।
[3]प्रकृतानुपयोगात्ते वर्ण्यन्ते न स्वरूपतः ॥ ५५ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
जातिनिर्णयो नाम प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥

### दीक्षाविधिः

ब्रह्मा :—

ये दीक्षाया[4]मधिकृता ये च तत्र बहिष्कृताः ।
ते यथावदशेषेण कथिताः पुरुषोत्तम ॥ १ ॥

दीक्षास्वरूपविषये बुभुत्सा मम सम्प्रति ।
विजृम्भते तत्स्वरूपमुपदेष्टुं त्वमर्हसि ॥ २ ॥

श्रीभगवान् :—

प्रतिष्ठाविधिवत्सर्वं दीक्षामण्डपमादितः ।
कारयित्वा शुचौ देशे तद्वदेव चतुर्मुख ॥ ३ ॥

1. एवं च $P_2$, T 2. करण्यां $M_1$, $P_2$ 3. अत्यन्तं M.
4. अधिकृत्य P, T

देशे च पश्चिमे वेद्याः कुण्डं तालत्रयाद्बहिः ।
कारयित्वा द्विजेन्द्रादिवर्णानामानुपूर्वशः ॥ ४ ॥

अनुकूलं चतुष्कोणं तालद्वयमितान्तरम् ।
वृत्तं गोकर्णयुग्मेन विस्तीर्णं तदनन्तरम् ॥ ५ ॥

चापाकारं वितस्तिभ्यां विस्तारायामसंमितम् ।
त्रिकोणमितरत् कुण्डं प्रादेशद्वय[1]विस्तृतम् ॥ ६ ॥

आयामस्स्रुक्स्रुवादीनामीदृशो ब्राह्मणादिषु ।
दशम्यां यागसम्भाराः [2]सम्भार्यास्समिदादयः ॥ ७ ॥

एकादश्यां तु सायाह्ने तिथौ स्यादधिवासनम् ।
मण्डपे च यजने स्थाप्यं[3] द्वारकुम्भादिपूर्वकम्[4] ॥ ८ ॥

धारणाशोधिततनुश्चक्राब्जं वर्तयेद् गुरुः ।
कुम्भं च हेमादिमयं करकं चापि तादृशम् ॥ ९ ॥

[5]आहितोदकसम्पूर्णं न्यस्तरत्नसुवर्णकम् ।
सूत्रवेष्टितसर्वाङ्गं स्रक्चन्दनपरिष्कृतम् ॥ १० ॥

अहताभ्यां च वासोभ्यां छादितं दोषवर्जितम् ।
अस्त्रेण शतवारं तु करकं चाभिमन्त्रयेत् ॥ ११ ॥

अच्छिन्नधारया सिञ्चेद्वेदिकां परितो गुरुः ।
प्रादक्षिण्येन करकं[6] नीत्वा कुम्भं च पृष्ठतः ॥ १२ ॥

ऐशान्ये चक्रपद्मस्य भागे धान्ये[7] निवेशयेत् ।
दक्षिणे कलशं वामे करकं मूलविद्यया ॥ १३ ॥

1. °विस्तरम् A 2. संहार्य $P_1$, T 3. स्थाप्य $P_2$ 4. पूर्ववत् $P_2$
5. आढकोदक $M_1$ 6. करकान्नीत्वान्ये $P_2$ 7. याम्ये $M_1$



कुम्भे च हरिमावाह्य पूजयेच्छास्त्रवर्त्मना ।
यजेत देवं चक्राब्जमण्डले कमलासन ॥ १४ ॥

साङ्गं सपरिवारं च यथाविधि यथाक्रमम् ।
मथित्वाऽष्टाक्षरेणाग्निं कुण्डे तं विनिवेशयेत् ॥ १५ ॥

तत्र सिद्धं चरुं कृत्वा चतुर्धैकन्निवेशयेत्[1] ।
मण्डलस्थाय हरये कुम्भे भागमथेतरम् ॥ १६ ॥

अग्नौ चैकं स्वयं चैकमुपयुञ्जीत देशिकः ।
समिधश्शतमष्टौ च जुहुयाद्देशिकोत्तमः ॥ १७ ॥

आज्यहोमोऽपि तद्वत् स्यान्मूलमन्त्रेण मन्त्रवित् ।
चरुं नृसूक्तेन तथा पूर्णाहुत्यन्तमन्वितम्[2] ॥ १८ ॥

शिष्यं [3]शान्तं जितक्रोधं मदाद्यैर्वर्जितं शुचिम् ।
अहतक्षौमवसनं सोत्तरीयमलङ्कृतम् ॥ १९ ॥

आहूय वाससा बध्वा गुरुर्नेत्रे[4] स्वविद्यया ।
आत्मनो दक्षिणे पार्श्वे निवेश्य प्राङ्मुखं यथा ॥ २० ॥

तेन [5]दर्भैश्च संस्पृष्टः पुण्डरीकाक्षविद्यया ।
द्वादशाहुतिमाज्येन जुहुयाच्चरुणा तथा ॥ २१ ॥

समित्पुष्पतिलैश्चापि ततः प्रसृतिमुद्रया ।
त्रिर्मूर्ध्नि शिष्यमालभ्य प्रादक्षिण्येन देशिकः ॥ २२ ॥

अष्टाक्षरेण मन्त्रेण ततो भस्मसमुद्भवम् ।
पाण्डरं मूर्ध्नि शिष्यस्य[6] विनिवेश्योर्ध्वपुण्ड्रकम् ॥ २३ ॥

1. चतुर्धैतन्निवेदयेत् $M_1$ 2. अन्वितः T, $P_1$; अन्यतः $P_2$; 3. स्नातं T, $P_1$, $P_2$ 4. नेत्रं $P_2$ 5. दर्भेण $M_1$ 6. मण्डनं शिष्ये $M_1$

अस्त्रमन्त्रेण बध्नीयात् सूत्रं प्रतिसरं करे ।
पीत्वा शिष्यः पञ्चगव्यं प्रणवेन चरुं ततः ॥ २४ ॥

भुञ्जीत कायशुद्ध्यर्थं दन्तान् काष्ठेन धावयेत् ।
दन्तकाष्ठं च भूभागे निपात्याग्रं विलोकयेत् ॥ २५ ॥

नैरृते मारुते याम्ये यद्यग्रमशुभं भवेत् ।
शुभमन्यत्र दिग्भागे काष्ठाग्रे पतिते भवेत् ॥ २६ ॥

अशुभं शान्तिहोमेन शाम्येच्छुभकरश्च सः ।
नारसिंहेन मन्त्रेण तिलैरष्टोत्तरं शतम् ॥ २७ ॥

होमः कार्यस्ततश्शिष्यमाचान्तं देवसन्निधौ ।
करे गृहीत्वा देवेशं प्रणम्य गुरुरात्मवान् ॥ २८ ॥

विज्ञापयेदिमां गाथामुच्चार्य कमलासन ।
"संसारपाशबद्धानां पशूनां पाशमोक्षणे ॥ २९ ॥

त्वमेव शरणं देव गतिरन्या न विद्यते ।
पाशमोक्षणहेतुर्यस्त्वत्समाराधनात्मकः ॥ ३० ॥

तेनेमान् जन्मपाशेन पाशितान् पशुजन्मनः ।
विपाशयामि देवेश तदनुज्ञातुमर्हसि" ॥ ३१ ॥

इति विज्ञाप्य शिष्यं तं मायासूत्रेण वेष्टयेत् ।
शुक्लं रक्तं च कृष्णं च त्रिवर्णं त्रिगुणीकृतम् ॥ ३२ ॥

सूत्रं पुनश्च त्रिगुणं कृत्वा सूत्रेण तादृशम् ।
शिखां प्रक्रम्य पादान्तं पञ्चविंशतिसंख्यया ॥ ३३ ॥

वेष्टयेन्मूलमन्त्रेण कायं शिष्यस्य सर्वतः ।
जुहुयात्तेन मन्त्रेण शिष्यं संस्पृश्य देशिकः ॥ ३४ ॥



सर्पिषाऽष्टोत्तरशतं वारान् पूर्णाहुतिं ततः ।
स्वप्नाधिपतिमन्त्रेण सर्पिषाऽष्टोत्तरं शतम् ॥ ३५ ॥

स्वप्नदर्शनसिद्ध्यर्थं जुहुयाद्देशिकोत्तमः ।
माषौदनेन भूतेभ्यो बलिं दद्यात् समाहितः ॥ ३६ ॥

विमुक्तनेत्रबन्धस्य शिष्यस्य तनुबन्धनम् ।
मायासूत्रं समादाय शरावेऽन्यस्य निक्षिपेत् ॥ ३७ ॥

कुम्भपार्श्वे शरावेण पिधायान्येन देशिकः ।
दर्भानास्तीर्य तत्तल्पे शिष्यस्स्वापं समाचरेत् ॥ ३८ ॥

मण्डलस्थं च कुम्भस्थं देवं नोद्वासयेत्तदा ।
ततः प्रभाते शिष्यस्य शुभं चेत् स्वप्नदर्शनम् ॥ ३९ ॥

दीक्षेत नो चेदशुभं शान्तिहोमं समाचरेत् ।
स्नात्वा शिष्येण सहितः प्रविशेद्यागमण्डपम् ॥ ४० ॥

ध्वजतोरणकुम्भादिपूजा पूर्ववदिष्यते ।
चतुर्विधं निवेद्यान्नं नमस्कृत्य प्रदक्षिणम् ॥ ४१ ॥

[1]शिष्यस्य पूर्ववन्नेत्रे बद्ध्वा नूतनवाससा ।
निवेश्य पूर्ववत् पार्श्वे जुहुयात् समिदादिभिः ॥ ४२ ॥

प्रत्येकमष्टोत्तरशतं मूलमन्त्रेण देशिकः ।
मायासूत्रं ततश्छित्त्वा संहारक्रममास्थितः ॥ ४३ ॥

तत्त्वान्युद्दिश्य जुहुयात् [2]प्रत्येकं तानि देशिकः ।
प्रत्येकमष्टोतरशतमष्टकृत्वोऽथवा गुरुः ॥ ४४ ॥

1. शिष्यं तु $P_2$ 2. प्रकृत्यन्तानि T, $P_1$, $P_2$

स्वहृत्पद्मे परं ज्योतिर्ध्यात्वा परमपूरुषम् ।
तस्मिन् जीवं च शिष्यस्य संहरेत् मन्त्रवित्तमः ॥ ४५ ॥

शोषणादीनि देहस्य शिष्यसम्बन्धिनस्तथा ।
कृत्वा तत्र स्मरेदण्डं ततः स्वहृदयाम्बुजात् ॥ ४६ ॥

सङ्क्रमय्य पुनर्जीवं प्रकृत्यादिक्रमात् सृजेत् ।
सर्गकाले च जुहुयात् तत्त्वानि क्रम[1]माश्रितः ॥ ४७ ॥

सृष्ट्वा स्थूलशरीरान्तमण्डभेदं च[2] चिन्तयेत् ।
तन्मध्ये पुरुष ध्यात्वा जातमात्मानमात्मना ॥ ४८ ॥

प्रोक्षयेन्मूलमन्त्रेण नेत्रबन्धं च मोचयेत् ।
शिष्यस्तु परिधायान्यद्वासः पादौ प्रक्षाल्य च ॥ ४९ ॥

आचम्य वाससाऽन्येन बद्धनेत्रो निजे गुरौ ।
आसीत प्राङ्मुखस्तस्मिन् शोधयेच्च षडध्वना । ५० ॥

[3]कालाध्वा भुवनाध्वा च पदतत्त्वाध्वनौ ततः ।
मन्त्राध्वा चाथ वर्णाध्वा षडध्वानः प्रकीर्तिताः ॥ ५१ ॥

पूर्वमाज्याहुतिं हुत्वा महाव्याहृतिविद्यया ।
हुतशेषेण शिष्यस्य पादौ स्पृष्ट्वा ततस्तिलैः ॥ ५२ ।

हुत्वा नाभिं समालभ्य ततो हुत्वा कुशेशयैः ।
स्पृष्ट्वा च हृदयं हुत्वा चरुणा मूर्ध्नि संस्पृशेत्[4] ॥ ५३ ॥

अष्टोत्तरशतं होमः प्रत्येकं मूलविद्यया ।
होमान्ते च ततश्शिष्यं गृहीत्वा दक्षिणे करे ॥ ५४ ॥

1. °आश्रित A 2. विचिन्तयेत् T, $P_1$, $P_2$ 3. $P_2$ कोशग्रन्थे "कालाध्वा च पदाध्वा च भुवनाध्वा तथैव च" इति पाठो दृश्यते । 4. मूर्धनि स्पृशेत् $P_2$



नीत्वा प्रदक्षिणं कुम्भं मण्डलं च यथोदितम् ।
[1]द्वारि तिष्ठंश्चतुर्णां तु द्वाराणां [2]क्रमलामन ॥ ५५ ॥

मणिमुक्ताप्रवालैर्वा पुष्पैर्वा केवलैर्गुरुः ।
अञ्जलिं पूरयेदन्ते ततस्तस्य विकस्वरैः ॥ ५६ ॥

पुष्पाणि विकिरेत्तस्मिन्मण्डले [3]गुरुचोदितः ।
यस्मिन् पतति भूभागे पुष्पाणामुत्करस्स्वयम् ॥ ५७ ॥

तद्भागाधिपमूर्तीनां नामान्यस्य विनिर्दिशेत् ।
शिष्यस्य केशवादीनि पदं भागवतेति च ॥ ५८ ॥

नाम्नामन्ते प्रयोक्तव्यं यद्वा भट्टारकेति च ।
ब्राह्मणश्चेत् क्षत्रियस्य देवान्तं नाम निर्दिशेत् ॥ ५९ ॥

वैश्यस्य [4]पालशब्दान्तं दासान्तं पादजन्मनः ।
ततो विमुच्य दृग्बन्धं दर्शयेच्चक्रमण्डलम् ॥ ६० ॥

शिष्येण सहितो वेद्यां ध्यायेन्नारायणं गुरुः ।
ध्यात्वा च दक्षिणे कर्णे शिष्यस्य प्रणवान्वितम् ॥ ६१ ॥

मन्त्रं दद्यादृषिच्छन्दोदैवतं चाङ्गमेव च ।
द्वादशाक्षरमादौ तु पश्चादष्टाक्षरात्मकम् ॥ ६२ ॥

मूर्तिमन्त्रं च तदनु समध्याप्य यथाविधि ।
केवलं वैष्णवं नाम नमःप्रणववर्जितम ॥ ६३ ॥

[5]हुम्फडादिवषट्स्वाहावर्जितं केशवादिकम् ।
अध्याप्यं स्त्रीषु शूद्रेषु तद्वदेवानुलोमजे ॥ ६४ ॥

1. द्वारे $P_2$ 2. यथाक्रमम् $P_1$ 3. गुरुबोधतः $M_1$ 4. बाल° $P_2$
5. हुम्फट्स्वाहावषड्वर्ज्यं केवलं केशवादिकम् A

सावित्रीं येऽनुतिष्ठन्ति तेषां विप्रव[1]दीरितम् ।
कुम्भस्थं मण्डलस्थं च हरिं शिष्यः समर्चयेत् ॥ ६५ ॥

आराध्य हरिमुत्थाय तस्थुषः प्राञ्जलिस्सदा ।
मूर्ध्नि शिष्यस्य स गुरुस्ततो ध्यात्वा च[2] मण्डलम् ॥ ६६ ॥

हस्तं न्यसेद्विष्णुहस्ते ततश्शिष्यस्य देशिकः ।
आचार[3]नियमान् सर्वान् बोधयेदग्निसन्निधौ ॥ ६७ ॥

मन्त्रः परस्य नाख्येयो नाक्षसूत्रं प्रदर्शयेत् ।
न च मुद्रां नापि सिद्धिं[4] मन्त्रं न कथयेत् स्वयम् ॥ ६८ ॥

आचार्यनाम न वदेन्नियोगं नास्य[5] लङ्घयेत् ।
शयनादींश्च न गुरोराक्रमेन्न च लङ्घयेत् ॥ ६९ ॥

न गुरुं दूषयेद्वाचा नाचरेत्तस्य विप्रियम् ।
गुरुवद् गुरुदारेषु वर्तितव्यमसन्निधौ ॥ ७० ॥

आचार्यमच्युतं शास्त्रं त्रयं संमानयेत्सदा ।
नास्तिकान् भिन्नमर्यादान् देव[6]ब्राह्मणदूषकान् ॥ ७१ ॥

न स्पृशेन्ना[7]थ तैस्सार्धं [8]संवदेद्दुर्दशास्वपि ।
प्रसारयेन्नैव पादौ गुरुदेवाग्निसन्निधौ ॥ ७२ ॥

वेदितव्यं जगत्सर्वं वासुदेवमयं सदा ।
अनर्चयित्वा देवेशं नात्मपोषणमाचरेत् ॥ ७३ ॥

जयस्तोत्रप्रणामादीन् सन्ध्याकाले समाचरेत् ।
भगवद्ध्यानतत्कर्म[9]कर्तव्येषु सदा रमेत् ॥ ७४ ॥

---

1. इष्यते T, $P_1$, $P_2$ 2. अब्जमण्डलम् $P_2$ 3. आचारं $P_2$ 4. मन्त्रस्य कथयेत T, $P_1$ 5. नियमान्नास्य $P_2$ 6. वेदब्राह्मणनिन्दकान् A 7. नैव $P_2$ 8. संवसेद् $A_1$, $P_1$, $P_2$ 9. कीर्तनेषु T, $P_1$



वैष्णवं च यतिं [1]दृष्ट्वा प्रणमेद्दण्डवत् क्षितौ ।
पुत्रदारगृहक्षेत्रपश्वादिधनमात्मनः ॥ ७५ ॥

व्यपदेश्यमशेषेण नाम्ना भगवतो भवेत् ।
समः सर्वेषु भूतेषु कामक्रोधौ विवर्जयेत् ॥ ७६ ॥

शनैश्शनैरिन्द्रियाणि विषयेभ्यो निवारयेत् ।
संसारविमुखैस्सार्धं शास्त्राभ्यासं समाचरेत् ॥ ७७ ॥

श्रौतस्मार्तानि कर्माणि सदा सेवेत नेतरत् ।
[2]स्वसूत्रोक्तेन विधिना निषेकादिक्रिया भवेत् ॥ ७८ ॥

कुर्यात्सर्वाणि कर्माणि भगवद्ध्यानतत्परः ।
गुह्यं नाम च गोत्रं च [3]प्राकृतान्नान्यदिष्यते ॥ ७९ ॥

आसीनो वा शयानो वा गच्छन् भुञ्जान एव च ।
सङ्कीर्तयेत् स्मरे[4]च्चापि वासुदेवं सनातनम् ॥ ८० ॥

एवं सम्बोध्य नियमान् शान्तिहोमं समाचरेत् ।
पूर्णाहुत्यन्तमखिलं हुत्वा चाग्निं विसर्जयेत ॥ ८१ ॥

मण्डलस्थं च कुम्भस्थं देवमुद्वास्य देशिकः ।
वर्धयेदाशिषा शिष्यं शिष्यश्च गुरवे तथा[5] ॥ ८२ ।

गां च भूमिं हिरण्यं च भूषणं यानमेव च ।
दासीदासादि वितरेदात्मवित्तानुसारतः ॥ ८३ ॥

ब्राह्मणान् भोजयेद्दत्वा वित्तं वित्तेषु निःस्पृहः ।
तदहश्शेषमासीत तत्रैव हुतशेषभुक् । ८४ ॥

---

1. यतिं चैव दृष्ट्वा तं प्रणमेत क्षितौ $P_2$ 2. स्वसूत्रोक्तविधानेन A, $P_1$ 3. प्राकृतं नान्यद् A, $P_2$ 4. ॰चापि T, $P_2$ 5. तदा $P_2$

अस्तं गते दिनकरे सर्वालङ्कारसंयुतम्[1] ।
गुरुणानुमतो गेहं प्रविशेद्बन्धुभिस्सह ॥ ८५ ॥

अनेन विधिना यस्तु दीक्षितश्चक्रमण्डले ।
ब्राह्मणो वेदविद्विद्वान् स सर्वाश्रमिणां वरः ॥ ८६ ॥

उच्यते नामभिश्चैतैर्नाख्येयः प्राकृतो यथा ।
सूरिः सुहृद्भागवतः सात्त्वतः पञ्चकालवित् ॥ ८७ ॥

ऐकान्तिकस्तन्मयश्च पाञ्चरात्रिक इत्यपि ।
एवमादिभिराख्याभिराख्येयः कमलासन ॥ ८८ ॥

समयोऽग्रे सदाचारस्स्वाध्यायो द्रव्यसङ्ग्रहः ।
शुद्धिर्याग[2]स्तुतिर्ध्यानमित्येवं विधिरष्टधा ॥ ८९ ॥

विधिनानेन यस्तिष्ठेत् स भागवत उच्यते ।
एवं न कुरुते यस्तु सर्वभूतेषु पापकृत् ॥ ९० ॥

कर्मणा मनसा वाचा न स भागवतः स्मृतः ।
ज्ञानादिगुण[3]संघातो भर्गो यत्र स उच्यते ।
भगवद्भक्तिरस्येति स भागवत उच्यते ॥ ९१ ॥

इति श्रीपाञ्चरात्रमहोपनिषदि पाद्मे तन्त्रे
चर्यापादे दीक्षाविधिर्नाम द्वितीयोऽध्यायः ॥

1. ०संयुतः T, $P_1$, $P_2$ 2. ०स्मृतिः M 3. ०संभूतो T



## तृतीयोऽध्यायः ॥

### नित्ययागविधिः ॥

भगवान् :—

श्रूयतामभिधास्यामि ब्रह्मन्नाराधनं हरेः ।
येन विष्णोः पदं मर्त्यः[1] प्राप्नोतीतरदुर्लभम्[2] ॥ १ ॥

स्नानमूलाः क्रियाः सर्वाः स्नानं च बहुधा स्मृतम्[3] ।
वारुणं दिव्यमाग्नेयं वायव्यं पार्थिवं तथा ॥ २ ॥

मान्त्रं मानसमित्येवं स्नानं सप्तविधं [4]भवेत् ।
निरीक्ष्य चात्मनश्शक्तिं समयं देशमेव च ॥ ३ ॥

एतेष्वेकतमं कुर्यात् समाराधनतत्परः ।
अवगाहनमप्स्वन्तर्वारुणं स्नानमुच्यते ॥ ४ ॥

सहातपेन वर्षेण स्नानं दिव्यमनन्तरम् ।
समिधां दीपितानां च गोमयस्य हुतस्य च ॥ ५ ॥

सितेन भस्मनाङ्गेषु ललाटादिषु च क्रमात् ।
यदूर्ध्वपुण्ड्रकरणं मन्त्रोच्चारणपूर्वकम् ॥ ६ ॥

तदाग्नेयं भवेत्स्नानं शोधनं परमं स्मृतम् ।
गच्छत्सु गोषु पादोत्थै[5] रजोभिर्भुवि[6] सम्भवैः ॥ ७ ॥

[7]स्पर्शनं वपुषस्स्नानं वायव्यं तदुदाहृतम् ।
प्रशस्ते पर्वताग्रादौ जातया श्वेतमृत्स्नया ॥ ८ ॥

1. सद्यः $M_1$ 2. प्राप्नोत्यमरदुर्लभम् T, $P_1$, $P_2$ 3. श्रुतम् T, $P_1$, $P_2$
4. स्मृतम् $P_2$ 5. वातोत्थैः T, $P_1$, $P_2$ 6. भूमि० $M_1$ 7. प्रशस्तं T, $P_1$

उच्चार्य केशवादीनि नामान्यङ्गे यथाक्रमम् ।
ललाटादौ यद्विधानमूर्ध्वपुण्ड्रस्य तद्भवेत् ॥ ९ ॥

ऊर्ध्वपुण्ड्रं मृदा धार्यं सान्तरालं त्रिय[द्व्य]ङ्गुलम् ।
[1]लक्ष्म्या सार्धं सुखासीनो रमते तत्र निर्वृतः ॥ १० ॥

पार्थिवं स्नानमब्लिङ्गैर्मन्त्रैर्विप्रवरेरितैः ।
अम्भोभिः प्रोक्षणं ब्रह्मन् तन्मन्त्रस्नानमिष्यते ॥ ११ ॥

[2]द्विराचम्याहतं वासः परिधाय सुखासनः ।
प्राणानायम्य मां ध्यायेत् हृदयाम्भोरुहे स्थितम् ॥ १२ ॥

ध्यानेनानेन निर्धूतकल्मषो जायते पुमान् ।
स्नानं मानसमेतत्स्यात् स्नातश्च हरिमर्चयेत् ॥ १३ ॥

आजानु पादौ प्रक्षाल्य हस्तौ चामणिबन्धनात् ।
आचम्य च द्वारपार्श्वं गत्वाऽङ्गन्यासपूर्वकम् ॥ १४ ॥

[3]तालत्रयं च हस्ताभ्यां कृत्वाभिवलजं स्थितः ।
कवाटमुद्घाट्य ततो वायुमन्त्रेण पद्मज[4] ॥ १५ ॥

साङ्गा देवव्रतेनान्तः प्रविशेद्दक्षिणाङ्घ्रिणा ।
प्रणमेच्छिरसा देवं पुण्डरीकाक्षविग्रहम् ॥ १६ ॥

आरोपितेषु दीपेषु माल्ये चापि निरासिते ।
वेद्यां पात्रेषु बिम्बेषु शोधितेषु यथातथम् ॥ १७ ॥

द्वारपूजां मुखे सर्वपरिवारसमर्चने ।
कृते शिष्येण वान्येन परिचारकरेण वा ॥ १८ ॥

---

1. एषोऽर्धश्लोकः $M_1$, T कोशयोरेव दृश्यते । 2. त्रिराचम्य $M_2$, $P_1$, $P_2$ 3. “घण्टायाश्चालनं कुर्यात् कवाटोद्घटनादिषु ।” इत्यर्धश्लोकः $M_2$, $P_2$ कोशयोरेवोपलभ्यते । 4. मन्त्रवित् $P_2$



पूजकोऽलङ्कृतः स्रग्वी शुक्लाम्बरधरश्शुचिः ।
[1]धृतोपवीतोत्तरीयश्चन्दनाद्यनुलेपनः ॥ १९ ॥

[2]चन्दनश्वेतमृत्स्नाम्बुकल्पिताग्र्योर्ध्वपुण्ड्रकः ।
[3]देवस्य पार्श्वमासाद्य पार्श्वे [4]सव्येतरे स्वयम् ॥ २० ॥

आसीनो विष्टरे शुद्धे वृस्यादौ स्वस्तिकासने ।
बद्ध्वा पद्मासनं वापि तूर्यघोषे प्रवर्तिते ॥ २१ ॥

तिरस्करिण्या [5]चत्वारि निश्छिद्रं छादिते ततः ।
अस्त्रमन्त्रेण ककुभो बद्ध्वा [6]धूम्रध्वजं बहिः ॥ २२ ॥

प्राकारावस्थितं ध्यायेत्तेजोमन्त्रेण मन्त्रवित् ।
चक्रमुद्रां च [7]खे न्यस्य चक्रमन्त्रेण साधकः ॥ २३ ॥

गोपयन्नित्थमात्मानं प्राणायामैस्त्रिभिः क्रमात् ।
युक्तः कृत्वा योगमुद्रां नाभिकन्दे[8] स्थितं पुनः ॥ २४ ॥

वेद्याकारं वायुबीजं ध्यात्वा तज्जेन वायुना ।
धूम्रेण देहपाप्मानं शोषयित्वा निरन्वयम् ॥ २५ ॥

त्रिकोणमग्निबीजं च रक्तवर्णं हृदम्बुजे ।
ध्यात्वा तदुत्थसप्तार्चिश्शिखाभिः कल्मषं दहेत् ॥ २६ ॥

माहेन्द्रबीजं विन्यस्य पीताभं चतुरश्रकम् ।
कण्ठे[9] सह स्पर्शनेन स्तम्भयेदग्निमुत्थितम् ॥ २७ ॥

वायुना कुम्भकेनैव वृत्तं स्फटिकसन्निभम् ।
विन्यस्य वारुणं बीजं मूर्ध्नि तज्जामृताम्भसा ॥ २८ ॥

---

1. शुक्लोप० T, $P_1$, $P_2$ 2. श्वेतमृत्स्नाम्बुकल्केन धारयेदूर्ध्वपुण्ड्रकम् T, $P_1$, $M_1$ 8. देवपार्श्वं समासाद्य T, $P_1$, $P_2$ 4. सव्योत्तरे A 5. च द्वारि T, $P_1$; च द्वारे A 6. वायुध्वजं $M_1$ 7. विन्यस्य $M_1$ 8. कुम्भे $M_1$; देशे A 9. कर्णे $M_1$

क्षालयेत्सर्वतो देहमापादतलमस्तकम् ।
पृथिव्यादीनि तत्त्वानि समाधिपरया धिया ॥ २९ ॥

परमात्मनि संहृत्य प्रलयक्रममास्थितः ।
पृथिवीं पञ्चगुणकां पीताभां चतुरश्रिकाम् ॥ ३० ॥

घ्राणोपस्थेन्द्रिययुतां तन्मात्रालक्षणे ततः ।
गन्धे संहृत्य योगेन गहनेन विचक्षणः ॥ ३१ ॥

रसनापाय्विन्द्रियाभ्यां [च] सहापश्चतुर्गुणाः[1] ।
अर्धचन्द्राकृतिश्श्वेतास्तन्मात्रा लक्षणे रसे ॥ ३२ ॥

गन्धं च तन्मात्रात्मानं ततोऽग्निं त्र्यश्रपाटलम् ।
त्रिगुणं दृष्टिचरणं स्रोतोभ्यां[2] सुसमाहितः ॥ ३३ ॥

तन्मात्रालक्षणैरेतैरन्तस्तन्मात्रया सह[3] ।
संहरेद् द्विगुणं वायुं स्पर्शे[4] तन्मात्रलक्षणे । ३४ ॥

धूम्रं वृत्तं त्वक्कराभ्यां रूपतन्मात्रया सह ।
युञ्जानस्संहरेद्योगी खञ्च[5] शब्दगुणं पुनः ॥ ३५ ॥

तन्मात्रालक्षणे शब्दे नीलोत्पलदलप्रभम् ।
स्पर्शं च तन्मात्रात्मानं [श्रुतिवाक्]सहितं ततः ॥ ३६ ।

संहृत्य शब्दतन्मात्रां स्वान्ते स्वान्तमहङ्कृतौ ।
अहङ्कृतिं बुद्धितत्त्वे बुद्धिं च प्रकृतौ पुनः ॥ ३७ ।

जीवे च प्रकृतिं जीवं वासनाविवशं ततः ।
[6]सुसूक्ष्मे नाभिचक्रे स्वे भास्कराभमवस्थितम् ॥ ३८ ।

---

1. सह पश्चाच्चतुर्गुण $M_2$ ; सहपञ्चचतुर्गुणम् $M_1$ 2. श्रोत्राभ्यां $M_1$
3. "तन्मात्रालक्षणे रूपे रसतन्मात्रया सह" अयं पाठः $P_2$ कोशे दृश्यते 4. स्पर्श° $P_2$
5. खण्ड° $P_2$ 6. सुसूक्ष्मं T, $P_1$, $P_2$



सुषुम्नया नाडिकया पद्मसूत्रसुसूक्ष्मया ।
उपर्यारोहयेद्देहे कुम्भकेन नभस्वता ॥ ३९ ।

भित्त्वा च ब्रह्मणो रन्ध्रं बहिर्देहाद्विनिर्गतम् ।
प्रविश्य भास्करस्यापि मण्डलान्निर्गतं बहिः ॥ ४० ॥

अशरीरं तदा जीवं परस्मिन् ब्रह्मणि ध्रुवे ।
स्थितं ध्यायेत् स्थितं तत्र स्वदेहं योनिजं दहेत् ॥ ४१ ॥

न्यस्तेन शिखिबीजेन पादाग्रे ज्वलनत्विषा ।
पादादिमूर्धपर्यन्तं दग्धे देहे निजे ततः ॥ ४२ ।

निवृत्तिबीजं खे ध्यायेत्पूर्णचन्द्रायुतोपमम् ।
[1]तदूर्ध्वपीयूषनिधौ जाते पाण्डरपङ्कजे । ४३ ॥

स्मरेज्जीवं समुत्पन्नं सकाशाद्ब्रह्मणस्तदा ।
जीवात्प्रधानं तस्माच्च[2] बुद्धिं बुद्धेरहङ्कृतिम् । ४४ ॥

ततो मनस्ततश्शब्दतन्मात्रां खं ततस्सह ।
वाक्श्रुतिभ्यां शब्दगुणं तन्मात्रां स्पर्शलक्षणाम् । ४५ ॥

वायुं स्पर्शगुणं सार्धं त्वचा हस्तेन च स्मरेत् ।
[3]ततश्च रूपतन्मात्रं ततोऽग्निं सह चक्षुषा ॥ ४६ ॥

पद्भ्यां रूपगुणं [4]ताभ्यां तन्मात्रां च रसं ततः ।
आपो रसगुणाः पायूरसनाभ्यां सहाब्जज ॥ ४७ ॥

गन्धं च तन्मात्रात्मानं ततो[5] गन्धगुणां भुवम् ।
समुत्पन्नां स्मरेद्विद्वान् घ्राणोपस्थयुतां तथा ॥ ४८ ॥

---

1. तदुत्थ T, $P_1$ 2. तु $M_1$ 3. तन्मात्रां स्पर्शरूपां तां - $P_2$; तन्मात्रां च स्पर्शनाम्नीं - A; ततश्च स्पर्शतन्मात्रां - $M_2$ 4. तस्मात् $P_1$; रूप° $P_2$ 5. सह $P_2$

इत्थं शरीरमात्मीयं [1]शुद्धाशुद्धादिभूतजम् ।
विचिन्त्य पङ्कजं बुध्या प्रबुद्धं [2]तद्विनिर्गतैः ॥ ४९ ॥

शातकुम्भमयैः कुम्भैः पूर्णैरमृतवारिभिः ।
स्नापितं शुद्धमनघं चिन्तयित्वा निजं वपुः ॥ ५० ॥

आराधने हरेर्योग्यं परस्य परमात्मनः ।
ध्यायन्नष्टाक्षरं मन्त्रं द्वादशाक्षरमेव वा ॥ ५१ ॥

सृष्टिस्थितिलयन्यासैर्हस्तन्यासपुरस्सरम् ।
न्यसेदङ्गेषु मूर्धादिपादान्तेषु यथातथम् ॥ ५२ ॥

तलं पृष्ठं च करयोश्शोधयित्वाऽस्त्रविद्यया ।
अङ्गुलीनां च सर्वासां पर्वस्वाद्यन्तवर्तिषु ॥ ५३ ॥

इष्यते प्रणवन्यासो मध्यमेषु च पर्वसु ।
[3]मन्त्राक्षराणि विन्यस्येन्न्यास एषस्सनातनः ॥ ५४ ॥

पर्वे दक्षिणतर्जन्याः प्रक्रम्याङ्गुष्ठपर्वसु ।
दक्षिणेतरतर्जन्याः पर्वान्तं साधकोत्तमः ॥ ५५ ॥

सृष्टिन्यासमिमं कुर्याद् व्यत्यासेन तु संहृतिः[4] ।
प्रक्रम्य तर्जनीपर्वे कनिष्ठापर्वे विश्रमः ॥ ५६ ॥

स्थितावष्टाक्षरस्यैष मन्त्रस्य न्यास ईरितः ।
द्वादशाक्षरमन्त्रस्य न्यासस्सम्प्रति कथ्यते ॥ ५७ ॥

न्यासस्तले मध्यमया तर्जन्यङ्गुष्ठपर्वणि ।
कृत्वा प्रदक्षिणं पर्वस्वङ्गुष्ठेनेतरेषु तु ॥ ५८ ॥

---

1. सृष्ट्वा महदादि $T_1$; सृ॑ मह्यादि $P_1$, $P_2$ 2. विनिस्सृतैः $P_1$
3. मन्त्राक्षराणां विन्यासो A, $P_2$ 4. संहृतौ $P_2$



सव्ये तले तु विश्रान्तिस्सृष्टावपरथा लये ।
तलयोः प्रक्रमस्थाने दक्षिणेतरयोर्द्वयोः ॥ ५९ ॥

कनिष्ठयोश्च विश्रान्तिः [1]पर्वणोरुभयोरपि ।
द्वादशाक्षरमन्त्रस्य न्यासोऽयं कमलासन ॥ ६० ॥

हृदयादीनि चाङ्गानि ध्यात्वाङ्गुष्ठादिपञ्चसु[2] ।
न्यसेन्न[3]खमुखे नेत्रे तले सव्ये गदाधरौ ॥ ६१ ॥

सव्येतरे पद्मचक्रे न्यसेन्न्यासः करद्वये ।
ईरितस्तलयो[4]र्मन्त्रं ध्यात्वा तेजोभिरुज्ज्वलम् ॥ ६२ ॥

ताभ्यां मूर्धादिपादान्तं देहे न्यस्येत्समन्ततः[5] ।
व्यापकं कञ्चुकं यद्वा [6]मन्त्रं त्वक्षरशस्ततः ॥ ६३ ॥

मूर्ध्नि नेत्रे मुखे चित्ते [7]नाभौ गुह्ये च जानुनि ।
चरणौ क्रमशः स्पृष्ट्वा न्यासो मन्त्रस्य इष्यते ॥ ६४ ॥

विपरीतक्रमो ज्ञेयः संहृतौ पालने पुनः ।
नाभ्यादिहृदयान्तेषु [8]न्यासोऽङ्गेषु प्रकीर्तितः ॥ ६५ ॥

अष्टाक्षरस्य मन्त्रस्य स्थानान्येतानि तानि च ।
शिरसः पश्चिमं पूर्वं दक्षिणं चोत्तरं ततः ॥ ६६ ॥

चत्वारि च चतुर्वक्त्रस्थानानि द्वादशाक्षरे ।
मूर्ध्नि मध्यमयाऽङ्गुल्या तर्जन्या सह चक्षुषोः ॥ ६७ ॥

न्यस्येन्मुखेऽनामिकया साङ्गुष्ठेन च मन्त्रवित् ।
अङ्गुष्ठतर्जनीभ्यां तु हृदये न्यसनं भवेत् ॥ ६८ ॥

---

1. करयोः $M_1$ 2. पर्वसु $M_1$ 3. ०अन्तर्मुखे $M_1$ 4. मध्ये $M_1$
5. समाहितः A, $P_1$ 6. मन्त्रमक्षरशस्ततः $P_1$ 7. नाभ्यां $P_2$ 8. न्यास एव $M_1$

तथाङ्गुष्ठकनिष्ठाभ्यां नाभौ न्यासः प्रशस्यते ।
विनाङ्गुष्ठेन शेषाभिर्गुह्ये जानुनि चोभयोः ॥ ६९ ॥

समस्ताभिश्चरणयोरित्यष्टाक्षरभूमयः ।
प्राग्भागे शिरसोऽङ्गुल्या न्यासोऽङ्गुष्ठेन दक्षिणे ॥ ७० ॥

तर्जन्या पश्चिमे भागे न्यासोऽनामिकयोत्तरे ।
कनिष्ठया तदेताः स्युर्द्वादशाक्षरभूमयः ॥ ७१ ॥

रूपं क्रमेणाक्षराणां न्यासकालेऽपि चिन्तयेत् ।
शुक्लं हिरण्मयं कृष्णं रक्तं कुङ्कुमसन्निभम् ॥ ७२ ॥

पद्मकिञ्जल्कसदृशं सर्ववर्णकमष्टकम् ।
सितं कृष्णं च धूम्राभं श्यामं तारानिभं [1]तथा ॥ ७३ ॥

स्फटिकाभं च शङ्खाभं रक्तं शुक्लं च लोहितम् ।
तमोरूपं पीतवर्णं ध्यात्वा [2]मन्त्रं द्व्यक्षरम् ॥ ७४ ॥

स्थाने यथोक्ते विन्यस्य षडङ्गन्यासमाचरेत् ।
हृदयं च शिरश्चैव शिखा कवचमेव च ॥ ७५ ॥

[3]अस्त्रं नेत्रं षडेतानि हृदये मस्तके तथा ।
शिखायामानुपूर्व्येण स्कन्धस्योभयपार्श्वयोः ॥ ७६ ॥

नेत्रयोर्दिक्षु सर्वासु न्यसनीयानि भूमिषु ।
रूपाणि षण्णां कुमुदं बन्धूकमसितोत्पलम् ॥ ७७ ॥

अब्जकेसरमम्भोजमतसी[4]सूनसन्निभम् ।
दिव्यायुधधरं दिव्यवस्त्रमाल्यानुलेपनम् ॥ ७८ ॥

---

1. ततः $P_2$ 2. द्विषडक्षरम् T 3. नेत्रमस्त्रं A, $P_2$
4. रूपसम्पदम् $M_1$



कौस्तुभं वनमालां च श्रीवत्सं दिव्यलक्षणम् ।
बिभ्राणं भावयेत्साक्षादात्मानं परमेश्वरम् ॥ ७९ ॥

अर्चयेन्न्यासबीजानि गन्धपुष्पादिभिः क्रमात् ।
मानसैरुपचारैश्च हृदयाम्भोरुहे स्थितम् ॥ ८० ॥

होमान्ते अर्चयेत्पूर्वं वासुदेवं सनातनम् ।
आत्मशुद्धिरियं प्रोक्ता मन्त्रशुद्धिस्तु वक्ष्यते ॥ ८१ ॥

षड्विंशेनार्णबीजेन मन्त्रबीजानि शोषयेत् ।
सप्तविंशेन बीजेन दहेदेतानि वर्णशः ॥ ८२ ॥

अष्टाविंशेन बीजेन तेषु[1] स्तम्भनमाचरेत् ।
एकोनत्रिंशबीजेन तान्येव क्षालयेत्पुनः ॥ ८३ ।

हुङ्कारेण प्रबुद्धानि फट्कारेण विचक्षणः ।
कुर्यादभिमुखान्यन्यत् प्रणवेन विशोधयेत् ॥ ८४ ॥

तमक्षमालया शुद्धं जपेन्मन्त्रं समाहितः ।
अष्टोत्तरशतं वारानष्टाविंशतिमेव वा ॥ ८५ ॥

अष्टौ वा मन्त्रविन्मन्त्रं बीजाद्यन्तं पुटीकृतम् ।
पूजाद्रव्याणि सर्वाणि क्षालयेच्चाम्बुपूरिताम् ॥ ८६ ॥

दक्षिणे [2]वामपार्श्वे [3]तु विनिवेश्य गलन्तिकाम् ।
अर्घ्यादिपात्राण्यादाय गायत्र्या विष्णुपूर्वया ॥ ८७ ॥

प्रक्षाल्य पादेष्वादद्यादेवस्याग्रेऽथ पद्मज[4] ।
पाद्यं मध्ये दक्षिणेऽर्घ्यं वामे चाचमनीयकम् ॥ ८८ ॥

---

1. खे च $P_2$ 2. स्थापयित्वा तु वामपार्श्वे A 3. वा $P_2$
4. वाऽऽत्मनः $M_1$

[1]तस्य पात्रस्य पार्श्वे तु वामे स्नानीयपात्रकम् ।
पूर्णानि [2]चाक्षताम्भोभिः पात्राणि निगमादिना ॥ ८९ ॥

संस्पृश्यार्घ्यादिपात्रेषु द्रव्याणि विनिवेशयेत् ।
कुशाग्रमक्षतं पुष्पं फलं मलयजं तथा ॥ ९० ॥

तिलान् सिद्धार्थसहिता[3]न्न्यसेदर्घ्यस्य भाजने ।
[4]तिलदूर्वां विष्णुपर्णीं श्यामाकं पद्ममक्षतम् ॥ ९१ ॥

पाद्यपात्रे षडेतानि द्रव्याणि विनिवेशयेत् ।
एलालवङ्गकर्पूरजातीतक्कोलचन्दनम् ॥ ९२ ॥

पुष्पाण्याचमनीये तु पात्रे द्रव्याणि कल्पयेत् ।
गन्धं सर्वौषधीरत्नफलबीजकुशानि च ॥ ९३ ॥

तिलानि चाक्षतं चैव दधि क्षीरं [5]घृतं तथा ।
रजनी द्वादशाङ्गानि [6]स्नानीये च विनिक्षिपेत् ॥ ९४ ॥

कोष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचम्पका ।
वचा कचोरमुस्ताश्च सर्वौषध्यः प्रकीर्तिताः ॥ ९५ ॥

[7]तिलाश्च तुलसी चैव निक्षिपेच्छान्तिवारिणि ।
द्वादशारं भासमानं चक्रमध्ये तु भास्करम् ॥ ९६ ॥
हस्ते वामेतरे ध्यात्वा दीप्तौ तद्रश्मिभिः पुनः ।
द्रव्याणि दग्ध्वा निश्शेषं भस्मीभूतानि तानि च ॥ ९७ ॥
दक्षिणेतरहस्तस्थे सितपद्मे विकस्वरे ।
दलैः षोडशभिर्युक्ते चन्द्रं पीयूषरश्मिभिः ॥ ९८ ॥

---

1. "तत्पूर्वयोश्च शुद्धां वा पात्रं स्नानीयपात्रकम् ।" एषोऽर्धः $P_2$ कोशे दृश्यते । 2. गाळित° T, $P_1$ 3. यवानर्घ्ये विनिक्षिपेत् T, $P_1$, $P_2$ 4. तिलान् $P_2$; तिलं दूर्वां $M_1$ 5. घृतानि च T, $P_1$, $P_2$, $M_2$ 6. स्ननीयं द्रव्यमुच्यते $M_1$ 7. तिलानि $P_2$



[1]ह्लादयन्तं स्थितं ध्यात्वा तदुत्थैरमृताम्बुभिः ।
सिक्तानि जातानि पुन[2]र्यागयोग्यानि भावयेत् ॥ ९९ ॥

हस्तयोरुभयोर्देवं ध्यायेन्नारायणं प्रभुम् ।
ताभ्यामर्घ्यादिपात्रेषु स्पृष्ट्वा द्रव्याणि विश्वतः ॥ १०० ॥

सकृत् सकृत् सम्भृतानि गायत्र्या विष्णुपूर्वया ।
अभिमन्त्र्य ततो मुद्रां सौरभेयीं प्रदर्शयेत् ॥ १०१ ॥

तद्दुग्धेन च पात्राणि पूरितानि विचिन्तयेत् ।
ओमर्घ्यमित्यादिपूर्वं कल्पयामीति [3]चोच्चरन् ॥ १०२ ॥

स्पृशेत्पात्राणि हस्तेन पात्रेऽन्यस्मिन्ननन्तरम् ।
अर्घ्यपात्राज्जलं किञ्चिद् गृहीत्वा विनिवेशयेत् ॥ १०३ ॥

[4]दक्षिणेतरहस्ते तत् पात्रं संस्थाप्य मन्त्रयेत् ।
मन्त्रेण मूलभूतेन वारान् सप्त तदम्बुना ॥ १०४ ॥

[5]फडन्तेनास्त्रमन्त्रेण द्रव्याण्यात्मानमेव च ।
प्रोक्ष्य कूर्चेन[6] देवस्य योगपीठं प्रकल्पयेत् ॥ १०५ ॥

[7]अभिन्ने सहजे पीठे प्रतिमायाश्चतुर्मुख ।
आधारं प्रथमं कूर्मं कालाग्निं तदनन्तरम् ॥ १०६ ॥

उपरिष्टाच्च भोगीन्द्रं फणाभिर्भूमिमण्डलम् ।
चतुरश्रं सहस्रेण बिभ्राणं बलवत्तरम् ॥ १०७ ॥

भुवश्चोपरि धर्माद्याः कल्प्या योगासनाङ्घ्रयः ।
आग्नेयादिषु चत्वारश्चतसृष्वेव पद्मज ॥ १०८ ॥

---

1. प्लावयन्तं T, $P_1$ 2. योगयोग्यानि $M_1$ 3. चोच्चरेत् T, $P_1$ 4. "श्रीरर्घ्यस्य भवेद्देवे वागीशाचमनीयके । पाद्यस्य पितरो देवास्स्नानीये वरुणस्तथा । कस्य शान्तिस्सरस्वत्या त्रिष्वेतास्समर्चयेत् ॥" अर्धत्रयमिदं $P_2$ कोशे दृश्यते । 5. पठन् तेन $P_1$, 6. त्वब्जेन $M_1$ 7. अच्छिन्ने $P_1$

अथर्माद्याश्च तावन्तः प्रागादिषु यथाक्रमम् ।
आशासु तावतीष्वेव पुरुषाकृतयस्तथा[1] ॥ १०९ ॥

चतुर्भुजास्सिंहवक्त्रास्सिताः[2] पूर्वेऽरुणाः परे[3] ।
हस्ताभ्यामभिमुख्याभ्यां रचिताञ्जलिसम्पुटाः ॥ ११० ॥

अपराभ्यां च बिभ्राणा हस्ताभ्यां योगपीठिकाम् ।
मध्ये सदाशिवो देवस्तद्वदेव प्रतिष्ठितः ॥ १११ ॥

[4]अधस्तात्पुरुहूताद्या दिक्षु प्रागादिषु क्रमात् ।
अष्टावष्टसु पीठस्य पादरूपेण धारकाः ॥ ११२ ॥

ईषाश्चतस्रः पूर्वाद्याः [5]तासु वेदचतुष्टयम् ।
अहङ्कारास्त्रयः पाशा गुणाः सत्त्वादयो गुणाः ॥ ११३ ॥

तूलिका पञ्चभूतात्मा जीवात्माऽस्तरणं तथा ।
अग्नेस्सोमस्य सूर्यस्य मण्डलान्युपरि क्रमात् ॥ ११४ ॥

अम्भोजमुपरिष्टाच्च वलक्षं द्वादशच्छदम् ।
स्मरे[6]त्केसरसम्पूर्णं मध्ये विपुलकर्णिकम् ॥ ११५ ॥

भद्रासनं कल्पयित्वा यथोक्तेनैव वर्त्मना ।
अर्चयेद्गन्धपुष्पाद्यैः पीठपार्श्वे तु दक्षिणे ॥ ११६ ॥

ब्रह्माणं विष्णु[7]मीशं च समाराध्य तथोत्तरे ।
सनत्कुमारं सनकं सनन्दं च [8]सभाजयेत् ॥ ११७ ॥

पार्श्वे तु पश्चिमे दुर्गां विघ्नेशं नारदं तथा ।
आत्मनश्च [9]गुरुं ध्यात्वा प्रारभेताच्युतार्चनम् ॥ ११८ ॥

1. स्थिताः $P_1$, $P_2$ 2. स्थिताः $M_1$ 3. पुरे A 4. अथवा T, $P_2$
5. तस्य $P_2$ 6. केसरिणः पूर्णं $M_1$ 7. ईशानं $P_1$ 8. विभावयेत् $M_1$
9. गुरून् T, $P_1$, $P_2$



आवाहनपदं पात्रं [1]प्रक्षालितमथाम्बुभिः ।
पूरयेन्मूलमन्त्रेण हस्ताभ्यां च समुद्धरेत् ॥ ११९ ॥

ललाटसममेतस्मिन्नन्तगवाह्य केशवम् ।
मूलबिम्बाद्यथा दीपं दीपादविकृतं तथा ॥ ११० ॥

चतुरुच्चारयेन्मन्त्रमागच्छपदसंयुतम् ।
तेन तोयेन कर्मार्चां सिञ्चेत्कूर्चेन मूर्धनि ॥ १२१ ॥

तत्र संनिहितं देवं कर्मार्चायां विचिन्तयेत् ।
प्रणम्य किञ्चिदुत्थाय स्वागतोक्तिरनन्तरम् ॥ १२२ ॥

दर्शयेत्प्रतिमामुद्रां कल्पयित्वा च सन्निधिम् ।
यागावसानिकीं तत्र प्रार्थयेत हरेः स्थितिम् ॥ १२३ ।

संमुखीकरणं कुर्यात् पुण्डरीकाक्षविद्यया ।
दद्याच्च मूलमन्त्रेण सपर्यासनमादितः ॥ १२४ ॥

यथा देहे [2]तथा देवे मन्त्रन्यासं समाचरेत् ।
हस्तन्यासं विना शंखचक्रमुद्रां प्रदर्शयेत् ॥ १२५ ॥

[3]नावाहयेदेकबेरे सुरसिद्धावतारिते ।
ऋषिभिर्मनुजैर्वापि स्थापिते [4]निश्चिते हरौ ॥ १२६ ॥

सुस्थितेऽभिमुखीभावस्तदेवावाहनं हरेः ।
यथाग्निमाहितं कुण्डे यथा वा पुरुषं [5]स्वयम् ॥ १२७ ॥

काले [6]प्रबोधयेद्देवम् अर्चने बोधयेद्धरिम् ।
कल्पनं योगपीठस्य मन्त्रन्यसनमेव च ॥ १२८ ॥

1. प्रक्षाल्य च तथाम्बुभिः $M_1$ 2. तथार्चायां $P_1$, $P_2$ 3. आवाहयेत् $P_2$
4. निश्चले $M_1$ 5. स्थितम् $P_1$, $P_2$ 6. प्रबोधयस्येतं $M_1$

बिम्बे स्थिरे सदा कार्यं पूजारम्भे चतुर्मुख ।
अर्घ्यवस्त्राम्बराकल्पं पुष्पगन्धानुलेपनैः ॥ १२९ ॥

[1]प्रदिक्स्थिते स्थितं ध्यायेत् पाद्याचमनयोः पुनः ।
आसीनं स्नानकाले च पद्मासनसुखासने ॥ १३० ॥

नैवेद्यधूपदीपादावासीनं स्वस्तिकासने ।
उपचारेषु चान्यत्र तत्तत्कर्मानुसारतः ॥ १३१ ॥

स्थितमासीनमथवा देवं ध्यायीत पूजकः ।
अर्चयामीति साम्ना तु क्षिपेत्पुष्पाञ्जलिं हरेः ॥ १३२ ॥

विभो सकललोकेश विष्णो जिष्णो प्रभो हरे ।
त्वां भक्त्या पूजयाम्यद्य भोगैरर्घ्यादिभिः क्रमात् ॥ १३३ ॥

[2]इति विज्ञाप्य देवेशं यजेदर्घ्यादिभिः क्रमात् ।
भक्तिनम्रेण शिरसा दद्यादर्घ्यं तु मूर्धनि ॥ १३४ ॥

पादारविन्दयोर्दद्यात्पाद्यं पाद्यप्रतिग्रहे ।
ध्यायेदाचमनीयस्य दानकाले जगद्गुरुम् ॥ १३५ ॥

आचामन्तमिवाम्भोभिस्साक्षादम्भः प्रतिग्रहे ।
उपचर्योपचारेण मधुपर्कादिना [3]सह ॥ १३६ ॥

हस्ताभ्यां शिरसा पद्भ्यां मनसा च [4]हृदा तथा ।
अहङ्कारेण चात्मानं निपात्य धरणीतले ॥ १३७ ॥

अनेन प्रणिपातेन प्रणिपत्य जनार्दनम् ।
दासोऽहं ते जगन्नाथ सपुत्रादिपरिग्रहम् ॥ १३८ ॥

1. हृदि $M_1$ 2. "दिव्येनार्घ्योपचारेण यथाशक्ति यथाविधि । अर्चयिष्यामि समये भगवन्तं जनार्दनम् ॥" एष श्लोकः $P_1$ ग्रन्थे अधिकतया दृश्यते । 3. हरिम् T, $P_1$, $P_2$ 4. धिया A, $P_1$, $P_2$



प्रेष्यं प्रशाधि कर्तव्ये मां नियुङ्क्ष्व हिते सदा ।
इति विज्ञाप्य देवेशं [1]परिचारान् प्रकल्पयेत् ॥ १३९ ॥

योगासनाब्जपत्रेषु पूर्वादिषु यथाक्रमम् ।
द्वादस द्वादशस्त्वेव शक्तीः श्रीवत्सपूर्विकाः ॥ १४० ॥

श्रीवत्सं वनमालां च मायां योगात्मिकां तथा ।
वैष्णवीं विमलां सृष्टिं [2]शक्तिमुत्कर्षणीमपि ॥ १४१ ॥

प्रज्ञां सत्यां तथेशानामनुकम्पां पितामहीम् ।
प्रथमावरणे चापि दिक्षु प्रागादिषु क्रमात् ॥ १४२ ॥

व्याप्तिं कान्तिं च तृप्तिं च श्रद्धां विद्यां जयां क्षमाम् ।
शान्तिं च [3]शक्तिमष्टैताः [4]ध्यात्वा चामरधारिणीः ॥ १४३ ॥

ततो द्वितीयावरणे शङ्खाद्यायुधधारिणः ।
पुरुषानष्ट पूर्वादिष्वानुपूर्व्येण कल्पयेत् ॥ १४४ ॥

तृतीयावरणे स्वासु दिक्ष्विन्द्रादीन् प्रकल्पयेत् ।
बहिरावरणे तार्क्ष्यं भगवत्प्रमुखं तथा ॥ १४५ ॥

विष्वक्सेनं तथैशान्यां [5]द्वितीयावरणाद्बहिः ।
परिवारा निरीक्षेरन् सर्वे प्राञ्जलयो हरिम् ॥ १४६ ॥

दद्याच्च पादुके स्नातुमुत्थानसमये हरेः ।
इदं विष्णुरिति द्वाभ्यां पादुकारोहणं [6]स्मरेत् ॥ १४७ ॥

उद्धरेच्च हरिं स्नातुमुत्तिष्ठ ब्रह्मणस्पते ।
इति मन्त्रेण देवेशं प्रापयेत् स्नानपीठिकाम् ॥ १४८ ॥

1. परिवारान् T, $P_1$, $P_2$ 2. पुष्टिं $M_1$, $P_2$ 3. शक्तीरष्टैताः T, $P_1$, $P_2$ 4. कृत्वा $P_2$ 5. तृतीया A, $P_2$ 6. हरेः $P_1$, $P_2$

मन्त्रैस्तु भद्रं कर्णेभिरिति स्नानासनासने ।
सावित्र्या वितरेदर्घ्यं पाद्यं त्रीणि पदेति च ॥ १४९ ॥

आप: पुनन्त्वित्येतेन मन्त्रेणाचमनक्रिया ।
दन्तधावनकाष्ठं च तद्विष्णोरिति निर्वपेत् ॥ १५० ॥

[1]जिह्वानिर्लेपनं तत्र तद्विप्रास इति प्रभोः ।
मुखप्रक्षालनं दद्याद्विष्णुगायत्रिया पुनः[2] ॥ १५१ ॥

अभ्यङ्गं वामदेव्येन कुर्यादुद्वर्तनं पुनः ।
कार्यं विष्णोर्नुकमिति मन्त्रेणामलकादिना ॥ १५२ ॥

[3]न ते विष्णो इति द्वाभ्यामभिषेकविधिस्ततः ।
आपोहिष्ठेति तिसृभिरतो देवा अवन्त्विति ॥ १५३ ॥

कङ्कतेन मृजेत्केशान् कलशैः स्नपनं तथा[4] ।
हिरण्यवर्णां हरिणीमित्यालेपो[5] हरिद्रया ॥ १५४ ॥

हिरण्यवर्णाः शुचयः पावकेति चतसृभिः ।
क्षाल्यो गन्धाम्बुना देहः पुनस्तं कुङ्कुमेन तु ॥ १५५ ॥

आलिप्य विष्णुगायत्र्या क्षालयेत् पावमानिभिः ।
ब्रह्मजज्ञानमिति च कयानश्चित्र आभुवत् ॥ १५६ ॥

इत्येव[6]मर्घ्यपाद्याद्यैर्यजेताद्यं महेश्वरम् ।
परिषिच्य तु सावित्र्या सूक्तेन पुरुषात्मना ॥ १५७ ॥

सहस्रधारया स्नानं यद्वा कुम्भेन तद्भवेत् ।
अग्निर्मूर्धेति मन्त्रेण प्लोतेनाङ्गाम्बुनिःसृतिः ॥ १५८ ॥

1. "जिह्वानिर्लेखनं चैव विष्णुगायत्रिविद्यया ।" अयमर्धः $P_2$ कोशे दृश्यते । 2. अयं श्लोकः T, $M_1$ कोशयोरुपलभ्यते । 3. न ते विष्णुरिति क्षाल्यं $P_2$, प्रतद्विष्णुरिति क्षाल्यं T, $P_1$; न ते विष्णुरिति A 4. ततः $P_2$ 5. इति लेपो T, $P_2$ 6. धूपदीपान्तमर्चयेत् A



विष्णुगायत्रिया दद्याद्वस्त्रे द्वे धौतनिर्मले ।
प्रणवेन ब्रह्मसूत्रमुत्तरीयं च कल्पयेत् ॥ १५९ ॥

आचान्तमन्वधिष्ठाय पादुके मण्डनासने ।
सुखासीनाय देवाय प्राग्वदर्घ्यादि निर्वपेत् ॥ १६० ॥

धूपेनागरुजेनार्द्रान् मूर्धानं दिव इत्यृचा ।
केशान् [1]संशोष्य शुचिना चन्दनेन सुगन्धिना ॥ १६१ ॥

इदं विष्णुरिति श्रुत्या लेपनं [2]वपुषस्स्मृतम् ।
जितं त इति मन्त्रेण मण्डनैरपि मण्डयेत् ॥ १६२ ॥

पुष्पाणि दद्यात्तद्विष्णोरिति मन्त्रेण मन्त्रवित् ।
इरावतीति मन्त्रेण पादयोरक्षतान् क्षिपेत् ॥ १६३ ॥

अञ्जनं विष्णुगायत्र्या व्याहृत्या दर्पणेक्षणम् ।
जितं त इति धूपैश्च धूपयेदगरूत्थितैः ॥ १६४ ॥

उद्दीप्यस्वेति मन्त्रेण दीपारोपणमिष्यते ।
तिलान् वस्त्रं तथा हेम ताम्बूलं तण्डुलानपि ॥ १६५ ॥

फलानि गव्यमा[3]हारं गाश्च धान्यं यथावसु ।
गोग्रासं देशिकायैव दद्याद्देवस्य सन्निधौ ॥ १६६ ॥

अधिपस्य तथा राज्ञो राष्ट्रस्य सकलस्य च ।
प्रजानां ब्राह्मणादीनां दानमभ्युदयावहम् ॥ १६७ ॥

अपनीते [4]यावनिके पटे भक्तानुकम्पया ।
घोषयेत्तूर्यघोषेण नृत्तं [5]गेयं तथाचरेत् ॥ १६८ ॥

1. संशोध्य $P_1$ 2. वपुषि $P_1$ 3. आधारं A, T, $P_1$ 4. यवनिकापटे T, $P_1$, $P_2$ 5. गीतं T, $P_1$, $P_2$

स्तोत्राणि च [1]कथाश्चित्रा वेदानङ्गानि षट् तथा ।
पठेयुरग्रे देवस्य सर्वमन्यच्च मङ्गलम् ॥ १६९ ॥

[2]आसनात्पादुके दत्त्वा गमयेद्भोजनासनम् ।
दत्त्वार्घ्यं पाद्यमाचामं मधुपर्कं निवेदयेत् ॥ १७० ॥

प्रणवेन ततो दद्यात्ता[3]म्बूलीमास्यशोधनीम् ।
हविर्निवेदयेत्सिद्धं[4] भोज्यभक्ष्यादिकं तथा ॥ १७१ ॥

मधुरादिरसोपेतं [5]विध्युक्तं सुसमाहितम्[6] ।
सुसंस्कृतैश्च [7]निष्पन्नैर्युक्तमन्नैः फलादिभिः ॥ १७२ ॥

अपक्वैरतिपक्वैश्च यथायोगं प्रकल्पयेत् ।
राजोपचारवत्सर्वमुपचारे [8]प्रकल्पिते ॥ १७३ ॥

प्रोक्षणं[9] चास्त्रमन्त्रेण परिषिच्य च वर्मणा ।
प्रणवेनार्हणे दत्ते दहना[10]प्लावनादिके ॥ १७४ ॥

कृते च सुरभीमुद्रां दर्शयित्वा च देशिकः ।
न्यस्तेऽर्घ्यपुष्पे संस्पृष्टे विष्णुहस्ते समाधिना ॥ १७५ ॥

[11]अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।[12]
प्रगृहीतार्घ्यपुष्पेण दर्शितग्रासमुद्रया ॥ १७६ ॥

1. तथा वेदान् वेदाङ्गानि च षट् तथा $M_1$ ; कथा वेदाः वेदाङ्गानि च षट् तथा T 2. आचरेत् $P_1$, $P_2$ 3. ताम्बूलं आस्यशोधनम् T 4. पश्चात् A 5. वियुक्तं T 6. सुसमाहितः $P_2$ 7. मृष्टान्नैः A, $P_1$ 8. प्रकल्पयेत् $P_1$, $P_2$ 9. प्रोक्षितं T, $P_2$ 10. आप्लावनादिषु A, T 11. "विधाय दक्षिणं बाहुं भूमिसंस्पर्शकं पुनः ।" अयं श्लोकार्धोऽधियतया $P_2$ कोशे दृश्यते। 12. "उन्नम्य वामपृष्ठेन दक्षिणेन करेण तु ।" अयमर्धश्लोकः "अन्वारब्धे"त्यस्य प्रतिनिधितया P पुस्तके दृश्यते ।



देवस्य त्वेति मन्त्रेण नैवेद्यं तद्यथोदितम् ।
देवस्य दक्षिणे हस्ते निर्वपेत् साधकः स्वयम् ॥ १७७ ॥

दत्ते [1]च पानके हस्ते पानीये च सुसंस्कृते ।
कृते चाचमने दद्यात्ताम्बूलीमास्यशोधनीम् ॥ १७८ ॥

क्रियाकलापं पूजादौ कर्मार्चायां यदीरितम् ।
तत्सर्वं ध्रुवबेरादौ यथासम्भवमाचरेत् ॥ १७९ ॥

अर्घ्यादिषूपचारेषु कर्तव्येषु यथातथम् ।
मन्त्रपूर्वेषु सर्वेषु वाचमेनामुदीरयेत् ॥ १८० ॥

दिव्येनार्घ्योपचारेण यथाशक्ति यथाविधि ।
अर्चयिष्यामि समये भगवन्तं जनार्दनम् ॥ १८१ ॥

इत्यादिकामवितथां पूजकः सुसमाहितः ।
चतुर्भिरेव गन्धाद्यैः परिवारार्चनं मतम् ॥ १८२ ॥

सर्वस्मिन्नुपचारे च स्तुत्यन्तेऽनुष्ठिते पुनः ।
जपेच्च पूजको मन्त्रं यथोदीरितसंख्यया ॥ १८३ ॥

द्वादशाक्षरमन्यं वा तदन्ते जुहुयाद्धविः ।
भूतेभ्यो बलिदानं च कुर्यान्नित्यं महोत्सवम् ॥ १८४ ॥

विज्ञाप्य देवदेवेशं पूजकः [2]प्रणमेत् स्वयम् ।
आददीतावशिष्टानि पूजावस्तूनि कृत्स्नशः ॥ १८५ ॥

तैरात्मपूजनं कुर्यात् तुष्येत्तेनापि केशवः ।
मन्त्रैर्यथोक्तैराराध्यस्सूक्तेन पुरुषेण वा ॥ १८६ ॥

1. ॰अन्नपानके A, $P_1$ 2. प्रणतः $M_1$

अथवा द्वादशार्णाद्यैर्मन्त्रैर्बिम्बमुखे [1]हरिम् ।
प्रपद्यते परं श्रेयो निष्कामो यदि पूजकः ॥ १८७ ॥

[2]कामनायां तु काम्यानि फलानि प्रतिपद्यते ॥ १८८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
नित्ययागविधिर्नाम तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ॥

### अग्निकार्यविधिः ॥

**ब्रह्मा :—**

भगवन्नुत्सवो नित्यो होमश्चाग्नौ पुरोदितः ।
स कथं पूजकैः कार्यः कथयस्व यथातथम् ॥ १ ॥

**श्रीभगवान् :—**

द्वारस्थानग्न्यगारस्य चण्डादीनर्चयेत्क्रमात् ।
अन्तः प्रविश्य शकृदालिप्ते कुण्डेऽक्षतार्चिते ॥ २ ॥

उपविश्यात्मनः पार्श्वे दक्षिणे पुष्पभाजनम् ।
अन्यानि होमद्रव्याणि वामपार्श्वे तु निक्षिपेत् ॥ ३ ॥

[3]आज्यपात्रं चरुस्थालीं प्रोक्षणीं समिधः कुशान् ।
प्रणीतां तण्डुलांस्तोयं परिधीन् स्रुक्स्रुवौ तथा ॥ ४ ॥

दर्वीमग्नेर्विहरणं व्यजनानि च मोक्षणम् ।
शुष्कं च काष्ठं [4]गन्धांश्च गन्धद्रव्यं च साक्षतम् ॥ ५ ॥

1. हरि: $M_1$ 2. कामनायास्तु T, $P_1$ ; कामानवाप्नुयात् कामी A
3. "कुण्डस्योत्तरपार्श्वे तु प्रागग्रेषु कुशेषु च ।" इत्यर्धं: $P_1$, $P_2$ कोशयो:, "आज्यपात्रमि"त्यर्धात् पूर्वं दृश्यते । 4. घण्टाश्च T, $P_1$



द्वन्द्वानि च प्रयोज्यानि न्यञ्चि सत्येव सम्भवे ।
कुण्डमध्ये ततस्तिस्रो रेखाः प्रागायताः पृथक् ॥ ६ ॥

तथोदगायतास्तिस्रो लिखित्वा मूलविद्यया ।
दर्भस्तम्बद्वयेनाद्भिरभ्युक्ष्यादाय पावकम् ॥ ७ ॥

मथितं लौकिकं यद्वा निधाय च विहृत्य च ।
[1]अद्भिः परिसमूह्याग्निं परिस्तीर्य त्रिभिस्त्रिभिः ॥ ८ ॥

प्रागग्रैरुदगग्रैश्च दर्भैः पञ्चभिरेव वा ।
सप्तभिर्नवभिर्वापि यद्वैकादशसंमितैः ॥ ९ ॥

ग्रन्थीकृताग्रैरद्वन्द्वैः पञ्चविंशतिनिष्ठितैः ।
तत्राग्निमध्येऽपां पूर्णां प्रणीतामक्षतार्चिताम् ॥ १० ॥

निधाय दर्भयुग्मेन कूर्चं प्रादेशसंमितम् ।
निर्मायाच्छादनं तस्य त्रिभिर्दर्भैः पवित्रितैः ॥ ११ ॥

कूर्चेन तेन प्रोक्षण्यां प्रणीताजलमावपेत् ।
प्रोक्षणीमात्मनश्चाग्रे [2]सकूर्चं न्यस्य मन्त्रवित् ॥ १२ ॥

अङ्गुष्ठानामिकाभ्यां [3]तत्कूर्चं तत्करयोर्द्वयोः ।
पुनराधारमुत्पूय त्रिः प्रोक्ष्य प्रोक्षणीं पुनः ॥ १३ ॥

होमद्रव्याणि सर्वाणि प्रोक्षयेत्तेन वारिणा ।
स्पृशेच्च तानि द्रव्याणि नामादेशं यथायथम् ॥ १४ ॥

स्रावयेत्प्रोक्षणीवारि प्रादक्षिण्येन तां पुनः ।
कृत्वाम्भःपूरितां देवं प्रणीतायां सभाजयेत् ॥ १५ ॥

1. वासुदेवादिभिर्मन्त्रैः A 2. सकृद्विन्यस्य T 3. तु कूर्चं T, $P_1$, $P_2$

अग्नेर्दक्षिणतो दर्भकूर्चे तन्मयविष्टरे ।
आवाह्य बुध्या ब्रह्माणमिष्ट्वा प्रक्षाल्य वारिणा ॥ १६ ॥

विष्णुगायत्रिया स्थालीमाढकं तत्र [1]तण्डुलम् ।
प्रक्षिप्य हृदयाद्यङ्गैः प्रक्षाल्याग्ना[2]वधिश्रयेत् ॥ १७ ॥

आज्यस्थाल्यां निरूप्याज्यं द्रावितं गालितं तथा ।
तत्र प्रत्यस्य दर्भाग्रद्वयं मन्त्रेण मन्त्रवित् ॥ १८ ॥

अङ्गारेषु निधायाग्नौ तां दीप्तेनाथ बर्हिषा ।
पर्यग्निकुर्यादुत्तार्य यथास्थानं निवेशयेत् ॥ १९ ॥

उत्पूयोत्प्लवनं कूर्चमद्भिः स्पृष्ट्वा ह्युपर्बुधे ।
प्रहृत्य चामृतीकृत्य घृतं सुरभिमुद्रया ॥ २० ॥

अव[3]कुण्ठया च दिक्पालानिन्द्रादीन् पूजयेत्क्रमात् ।
उष्णोदकेन प्रक्षाल्य स्रुक्स्रुवौ कुशपञ्चकम् ॥ २१ ॥

कूर्चमादाय तौ तेन मूले मध्ये च मूर्धनि ।
संमृज्य कूर्चमूलेन मध्येनाग्रेण च क्रमात् ॥ २२ ॥

निष्टप्याग्नौ [4]निधातव्यौ तावुदीच्यामथात्मनः ।
स्रुवेणाज्यं समादाय होम[5]वस्तुषु सेचयेत् ॥ २३ ॥

चरुं चाज्येन संसिच्य पार्श्वे तमवरोपयेत् ।
केवलान्नं तथा मौद्गं पायसान्नं गुलोदनम् ॥ २४ ॥

चतुर्विधश्चरुर्ज्ञेयः पाकश्चतुर्ष्वपीष्यते ।
यादृङ्निवेद्यते बिम्बे होतव्यश्चापि तादृशः ॥ २५ ॥

1. तण्डुलान् T, $P_1$, $P_2$ 2. अधिश्रयेत् $M_1$ 3. अवकुण्ठ्य च दिक्पालान् T
4. विधातव्यौ T 5. वस्तूनि T, $P_1$, $P_2$



उदक्संस्थाः परिधयः प्रत्यगारम्भणास्तथा ।
निधातव्याः शिखीशानकोणयोस्समिधौ तथा ॥ २६ ॥

ऊर्ध्वे निधाय मनसा ध्यायन्निध्मान् प्रजापतिम् ।
एकतोऽग्रान् सकृत्यञ्च दशोक्तान् मुष्टिमुद्रया ॥ २७ ॥

आदधादाज्यपात्रं च कुशकूर्चेन वेष्टिते ।
वामे करे निधायाग्नावाघाराहुतिमाचरेत् ॥ २८ ॥

प्राजापत्यन्तथाचैन्द्रमाज्यभागं तथाचरेत् ।
आग्नेयं दक्षिणे भागे सौम्यं [1]भागे तथोत्तरे ॥ २९ ॥

मध्ये व्याहृतिभिर्हुत्वा स्मरेदग्निमनन्तरम् ।
द्विशीर्षकं सप्तहस्तं त्रिपादं सप्तजिह्वकम् ॥ ३० ॥

वरदं शक्तिपाणिं च बिभ्राणं स्रुक्स्रुवौ तथा ।
अभीतिदं चर्मधरं वामे चाज्यधरं करे ॥ ३१ ॥

जिह्वायां दक्षिणे वक्त्रे धूम्रायां मारणादिकम् ।
लोहिन्यां [2]च वशीकारं[3] काल्यां कर्म च शान्तिकम् ॥ ३२ ॥

सर्वसिद्धिः स्फुलिङ्गिन्यामानने दक्षिणेतरे ।
विश्वरूपरसज्ञायामणि[4]मादिमहाफलम् ॥ ३३ ॥

करालिका विजयदा पुष्टिदा च मनोजवा ।
कार्ष्ण्यं लौहित्यमेतासां वर्णश्श्यामत्वमेव च ॥ ३४ ॥

स्फुलिङ्गरूपं च ततो वर्णः स्फटिकसन्निभः ।
तपनीयनिभः प्रोक्तो [5]जिह्वायामानुपूर्वशः ॥ ३५ ॥

1. भागमथोत्तरे T, $P_1$, $P_2$ 2. तु $P_2$ 3. वशीकारः $P_2$
4. °मादिकफलम् A 5. जिह्वानाम्° T, $P_1$

तिलानाघार[1]संमिश्रान् जुहुयाज्जातशान्तये ।
अष्टोत्तरशतं वारान् द्वाद्वशाक्षरविद्यया ॥ ३६ ॥

पूर्णाहुत्यवसाने तु ध्यात्वा ज्वलनमर्चयेत् ।
गन्धाद्यैरात्मनो दद्यादक्षतानि च वर्मणा ॥ ३७ ॥

[2]परिषिच्य जलेनाग्निं तन्मध्ये योगपीठिकाम् ।
कल्पयित्वा च तन्मन्त्रैर्जुहुयात् सर्पिषासकृत् ॥ ३८ ॥

तत्रावतार्य हृदयाच्चिद्रूपं परमेश्वरम् ।
सकलीकृत्य मन्त्रस्य न्यासं कुर्याद्यथाविधि ॥ ३९ ॥

अर्घ्यपूर्वं निवेद्यान्नं [3]जुहुयात्सर्पिषा सकृत् ।
[4]जपार्थं च सकृन्मन्त्रैर्जुहुयात् सर्पिषा ततः ॥ ४० ॥

समिद्भिर्वा [5]तिलैः पुष्पैर्बीजैर्वाप्यथवा फलैः ।
परिवारार्थमप्येवं सर्पिषा जुहुयात्सकृत् ॥ ४१ ॥

आराधनं हरेरेतत्सप्तार्चिषि चतुर्मुख ।
आराधनं चेदन्यत्र प्रतिमादावनन्तरम् ॥ ४२ ॥

जुहुया[6]त्समिदाज्याद्यैर्वक्ष्यमाणेन वर्त्मना ।
आयामस्समिधां तालः कनिष्ठानहनं क्रमात् ॥ ४३ ॥

चर्महीने विनाशस्स्याच्छेदे क्षीणं कुलं भवेत् ।
आर्द्रासु बन्धुनाशस्स्यात्पुत्रनाशः पुरातने ॥ ४४ ॥

क्षतासु भार्यामरणं कलहाय च शाखिनी ।
उद्वेगाय भवेत् स्थूला ह्रस्वाऽवग्रहकारिणी ॥ ४५ ॥

1. समिधो $P_1$, $P_2$ 2. परिषिञ्चत्° $P_2$ 3. सर्पिषा जुहुयात् $P_2$
4. जपार्थं...; समिद्भिर्वा; परिवारार्थं...इति त्रयोऽर्धश्लोकाः T कोशे न दृश्यन्ते ।
5. दलैः $P_1$, $P_2$ 6. समिदाद्यैस्तैः $P_1$, $P_2$, T



दीर्घातिवृष्टिकरिणी त्याज्या दोषयुता समित् ।
शतं तदर्धं पादो वा समिधोऽष्टौ यथोदिताः ॥ ४६ ॥

तदर्धं वा घृताक्तास्ता जुहुयान्मूलविद्यया ।
आज्यावसिक्ताश्चरवः प्रत्यूचं ग्रासमुद्रया ॥ ४७ ॥

नृसूक्तेन च होतव्यं मूलमन्त्रेण सर्पिषा ।
शतादिसंख्यया होमो ध्यात्वा परमपूरुषम् ॥ ४८ ॥

स्रुवेण जुहुयादाज्यं हस्तेन समिधः[1] पुनः ।
चरुं पलाशपत्रेण यद्वा हस्तादिना भवेत् ॥ ४९ ॥

[2]कृत्वा पूर्णाहुतिं पूर्वं ततश्शान्तिं प्रकल्पयेत् ।
यज्ञवृक्षोद्भवैश्शान्तिः सौभाग्यं कुसुमैश्शुभैः ॥ ५० ॥

धूपद्रव्यैः सदारोग्यं पुष्टिं दध्ना पयश्शुचिः ।
अन्नेन विविधान् कामानाज्येनायुष्मतीः प्रजाः ॥ ५१ ॥

श्वेतपद्मैस्तु जुहुयादिच्छन् ब्रह्मश्रियं नरः ।
लक्ष्मीपुष्पैस्तु जुहुयाल्लक्ष्मीकामोऽथ वारुणैः ॥ ५२ ॥

पद्मैर्बिल्वसमिद्भिर्वा ज्ञानकामस्तु सर्पिषा ।
कन्याकामः कालपुष्पैः गोकामो गोमयैः पुनः ॥ ५३ ॥

आयुष्कामस्तु दूर्वाभिर्भूमिकामस्तु मृत्स्नया ।
[3]यवैर्वेन्द्रियकामस्तु तिलैः सर्वजनप्रियः ॥ ५४ ॥

ब्रह्मवर्चसकामस्तु ब्रह्मवृक्षसमुद्भवैः ।
वेणुभिश्च यवैश्चैव नीवारै[4]श्शालिजैस्तथा ॥ ५५ ॥

1. समिधं $P_2$ 2. हुत्वा $P_1$, $P_2$, T 3. यवाग्वेन्द्रिय° $P_1$, $P_2$; यवावेन्द्रिय° T 4. शालिभिः $P_1$, $P_2$

सर्वे कामाः प्रसिद्ध्यन्ति [1]होमबीजैर्यथोदितैः ।
लाजहोमेन सिद्ध्यन्ति सर्वे कामा न संशयः ॥ ५६ ॥

अन्नैरन्नादिकामस्तु पुत्रकामस्तु पायसैः ।
निम्बपुष्पैर्हिरण्यार्थी सर्वं सिद्ध्यति सर्पिषा ॥ ५७ ॥

होमे सर्पिर्मधुक्षीरधारा स्याच्चतुरङ्गुला ।
शुक्तिर्दध्याहुतिर्ग्रासं पाय[2]साद्याहुतिर्भवेत् ॥ ५८ ॥

भक्ष्याहुतिस्तदर्धं स्यात्फलैः पुष्पैरखण्डितैः ।
निष्पावबीजमाना तु धूपद्रव्याहुतिर्भवेत् ॥ ५९ ॥

तिलव्रीहियवाद्यैस्तु मुष्ट्यर्धार्धाहुतिः [3]क्रमात् ।
अष्टाङ्गुला तदर्धा वा समिद्दूर्वा षडङ्गुला ॥ ६० ॥

मृद्वीकाक्षप्रमाणा तु गोमयाहुतिरिष्यते ।
पूर्णाहुतिर्घृतस्य स्यात्कुडुपेन[4] चतुर्मुख ॥ ६१ ॥

न्यूनाधिकप्रमाणं तु हव्यकव्याहुतिं कृताम् ।
भुञ्जन्ति दानवा दैत्याः न फलाय च कल्प्यते ॥ ६२ ॥

कुक्कुटाण्डप्रमाणं तु चरोः पिण्डं घृताप्लुतम् ।
निक्षिप्य च स्रुचोर्गर्तेऽभिघार्य स्रुवेण च ॥ ६३ ॥

ससमिद्दर्भकुसुमं जुहुयान्मूलविद्यया ।
प्रायश्चित्तार्थमाज्येन पञ्चोपनिषदा पुनः ॥ ६४ ॥

[5]स्रुचमाज्येन संपूर्य सदर्भं समिधान्वितम् ।
उद्धृत्य नासिकाग्रान्तमभिघार्य स्रुवेण च ॥ ६५ ॥

1. होतृबीजै॰ $P_2$ 2. ॰आज्याहुतिः $P_1$ 3. भवेत् T, $P_1$
4. चतुर्थांशे $M_1$ 5. एष श्लोकः $M_1$ कोशे न दृश्यते।



जुहुयान्मूलमन्त्रेण पूर्णाहुत्या तु साधकः ।
[1]स्रुचं जलेन संपूर्य बहिः कुण्डात्प्रदक्षिणम् ॥ ६६ ॥

सेचयेद्वारिशेषं तु निनयेच्छिरसि स्वयम् ।
भस्मना तिलकं कृत्वा हरिमग्नेस्समुत्सृजेत् ॥ ६७ ॥

गृहीत्वार्घ्यं प्रदद्याच्च चाग्नि देवाय पूजकः ।
भक्त्या यदग्नौ विहितं यथाशक्ति यथाविधि ॥ ६८ ॥

आराधनं [2]तदेवेति गृहाण परमेश्वर ।
अग्निकार्यविधिर्ह्येषस्संक्षेपात्कथितो मया ॥ ६९ ॥

विधिनानेन यः कुर्यादग्निकार्यं दिने दिने ।
स याति ब्राह्मणस्थानं भुक्त्वा भोगान्यथेप्सितान् ॥ ७० ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
अग्निकार्यविधिर्नाम चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः ॥

### नित्योत्सवसमाराधनकालविभागः ॥

श्रीभगवानुवाच[3] :—
अथ नित्योत्सवविधिं कथयामि चतुर्मुख ।
सर्वदुःखहरं पुंसां सर्वभूतप्रहर्षणम् ॥ १ ॥

[4]राज्ञो राष्ट्रस्य ग्रामस्य यजमानस्य सद्मनः ।
सुखावहं शान्तिकरं पुण्यमायुर्विवर्धनम् ॥ २ ॥

1. तज्जलेन च संस्पृश्य $M_1$ 2. तदेवेदं $M_1$ 3. $P_2$ omits उवाच
4. राष्ट्रस्य राज्ञो $P_2$

आवाह्य तण्डुले शुद्धे [1]पात्रस्थे परमेश्वरम् ।
शक्तिभिर्दशभिर्द्वाभ्यां [2]सह प्रातर्दिने दिने ॥ ३ ॥

परिक्रमेदायतनं मध्याह्ने त्वन्नकल्पिते ।
सायं कुसुमसंघाते त्रिसन्ध्यं त्रिषु कल्पयेत् ॥ ४ ॥

बिम्बेन [3]वाथ परिधौ त्रिसन्ध्यमनुवासरम् ।
अथवान्नेन मध्याह्ने कालेऽन्यत्र द्वयेऽर्चना ॥ ५ ॥

त्रिसन्ध्यमथवान्नेन कुर्यान्नित्योत्सवं हरेः ।
मध्यन्दिने वा सर्वार्थं परिक्रम्य बलिं क्षिपेत् ॥ ६ ॥

यद्वोत्सवप्रतिकृतेरन्वगग्रे[4]ऽथवा नयेत् ।
त्रिसन्ध्यं चामर[5]च्छत्रवितानध्वजसंयुतम् ॥ ७ ॥

तण्डुलादिकमन्नं वा[6] केवलं कमलासन ।
पञ्चावरणके धाम्नि पञ्चस्वावरणेष्वपि ॥ ८ ॥

बलिं दत्त्वा पर्यटनं गेयवाद्यपुरस्सरम् ।
उत्सवं प्राहुरुत्कृष्टं [7]तदूनं मध्यमं विदुः ॥ ९ ॥

[8]हीनेऽधमं[9] जघन्यं [10]तन्न्यूने क्षुद्रमथेतरे ।
बलिप्रदानेन विना नोत्सवोऽभ्युदयावहः ॥ १० ॥

शुक्लाम्बरधरं सौम्यं शुक्लयज्ञोपवीतिनम् ।
सोत्तरीयं च सोष्णीषं स्वनुलिप्तमलङ्कृतम् ॥ ११ ॥

परिचारकमाहूय भावितं गरुडात्मना ।
तन्मूर्धनि च [11]वा पृष्ठे तण्डुलेऽन्ने प्रसूनके ॥ १२ ॥

---

1. पार्श्वस्थे T, $P_1$ 2. सायं T 3. वा परीयायात् T, $P_1$ 4. च वा भवेत् T, $P_1$, $P_2$ 5. चामरं $P_2$ 6. °अन्नेन T, $P_1$ 7. एकोनं T, $P_1$ 8. एष दशमश्लोकः $P_1$ कोशे न दृश्यते। 9. व्यूनेऽधमं $P_2$ 10. त्रिन्यूने T 11. पात्रस्थे $P_1$, $P_2$



देवमावाहयेन्मूलबेरादाराधकस्स्वयम् ।
इष्ट्वा च गन्धपुष्पाद्यैस्तत्र देवं यथाविधि ॥ १३ ॥

[1]विश्वादिमूर्तींश्च पुनः पूजयित्वा प्रदक्षिणम् ।
प्रागाद्येषु द्वादशसु पात्रस्थेषु दलेषु च ॥ १४ ॥

सूक्तं सर्वं स्वस्त्ययनं तथान्यच्चापि मङ्गलम् ।
पठन् पात्रं च बिभ्राणो व्रजेच्च परिचारकः ॥ १५ ॥

चण्डप्रचण्डप्रमुखान् द्वारपालान् प्रपूजयेत् ।
घोषयेन्मद्दतालाद्यैः बलिदानपुरस्सरम् ॥ १६ ॥

नृत्तं च[2] वैजयन्ती स्यादृषभं गेयमिष्यते ।
वितानधवलच्छत्रचामरव्यजनादिभिः ॥ १७ ॥

परि[3]भ्रमेत बल्यर्थं सर्वानावरणान् क्रमात् ।
पीठं प्रदक्षिणीकृत्य प्रविशेदालयं पुनः ॥ १८ ॥

तं [4]च प्रदक्षिणीकृत्य प्रविशेद्गर्भमन्दिरम् ।
दत्त्वार्घ्यं मूलमन्त्रेण मूलबेरे [5]समुत्सृजेत् ॥ १९ ॥

बलिशेषं क्षिपेत्किञ्चिद्विष्वक्सेनस्य मूर्धनि ।
परिशिष्टं महापीठे निक्षिपेदक्षतादिकम् ॥ २० ॥

नित्योत्सवश्चे[6]द्बिम्बेन तद्बिम्बं शिबिकादिषु ।
आरोप्य यद्वा शिरसि परिभ्रमणमिष्यते ॥ २१ ॥

आतोद्यनृत्तैर्बहुधा [7]वाद्यमानैस्समेधितम् ।
[8]तत्र नृत्तं बहुविधं तानि वक्ष्ये समासतः ॥ २२ ॥

---

1. विष्ण्वादिं T, $P_1$, $P_2$ 2. तु $P_2$ 3. °क्रमेत A, $P_2$ 4. तु $P_2$
5. नियोजयेत् $M_1$ 6. आरोप्य $P_1$, $P_2$ 7. भिद्यमानैः T, $P_1$, $P_2$
8. अस्ति T, $P_1$; हस्ति $M_1$

विलासं कर्तरी विष्णुक्रान्तमालीढमङ्गले ।
[1]भद्रमाली तार्क्ष्यपक्षौ करणं स्वस्तिकाह्वयम् ॥ २३ ॥

चारी प्रचारी सूची च सावर्तं पारिभद्रकम् ।
सौम्यं विषमसूची च खेटकं चावकुञ्चितम् ॥ २४ ॥

कटिबन्धमलङ्कारमश्मरी पिष्टकुट्टिमम् ।
उल्लंघी वामजान्वाख्यमासुरी चापवेष्टितम् ॥ २५ ॥

वासवेश्वरसञ्चारिभावौ स्यातां निकुट्टिमौ ।
कुट्टिमं घटितं स्थायिभावो यच्च विजृम्भितम् ॥ २६ ॥

मण्डलं कुषिताधीदि[कुञ्चितार्धेन्दु] पताका सर्वमङ्गलम् ।
कान्तारकुट्टिमाह्वानं प्रपूर्वं घटितं तथा ॥ २७ ॥

विलासं सर्वतोभद्रं शुद्धं कुञ्चितमिष्यते ।
मार्गचारी कराधीनमावभासमनन्तरम् ॥ २८ ॥

आवेष्टितं परीवर्तं निर्धूतं देशिमण्डलम् ।
समपूर्वं च घटितं पदं विषमपूर्वकम् ॥ २९ ॥

कर्करी विकलासश्च भवेद्विगलितं तथा ।
[2]अत्र भेदाः पृथग्भावा गात्रावयवचेष्टितैः ॥ ३० ॥

आतोद्यगीतिभेदानामानन्त्यान्नेह [3]तन्यते ।
पुष्पप्रभासमोपेतं ध्वजच्छत्रादिसंयुतम् ॥ ३१ ॥

सर्ववादित्रसुभगं सर्वगेय[4]समन्वितम् ।
ब्रह्मविद्ब्रह्मघोषेण सहितं दीपसङ्कुलम् ॥ ३२ ॥

1. क्षुद्रमाली A  2. नृत्त॰ T, $P_1$, $P_2$  3. गीयते A
4. ॰समेधितम् A



विष्णुक्रान्तं खगेशस्य नृत्तं गेयं च मध्यमम् ।
विलासं सर्वतोभद्रं खेटकं चक्रमण्डलम् ॥ ३३ ॥

कान्तार[1]कुट्टिमं [2]पृष्टिकुट्टिमं कटिबन्धनम् ।
वामजानूर्ध्वनृत्तं च पुरुहूतादिषु स्मृतम् ॥ ३४ ॥

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च[3] निषादश्च[4] पुरुहूतादिषु स्वराः ॥ ३५ ॥

सप्त ज्ञेया धैवतस्तु भवस्य स्वर इष्यते ।
नृत्तं च[5] विष्वक्सेनस्य स्वस्तिकं ऋषभस्वरः ॥ ३६ ॥

हस्तिनृत्तं गणेशस्य स्वरः पञ्चम इष्यते ।
धैवतं स्यात्स्वरो नृत्तं दुर्गायास्सर्वमङ्गलम् ॥ ३७ ॥

अन्येषामपि देवानां नृत्तं स्यात्सर्वमङ्गलम् ।
गानं च धैवतं प्रोक्तं गान्धारं पञ्चमं तथा ॥ ३८ ॥

तदवान्तर[6]भेदे वा गेयागेयविचक्षणैः ।
समतालाह्वयं वाद्यमैन्द्यां दिशि हविर्भुजः ॥ ३९ ॥

बद्धावतालाभिधानं यमस्य दिशि [7]भृङ्गिणी ।
नैरृत्यां [8]मट्टतालं स्याद्वारुण्यां मङ्गलाह्वयम् ॥ ४० ॥

वायव्यां जयतालाख्यं कौबेर्यां भद्रसंज्ञितम् ।
ऐशान्यां [9]ढक्करीतालं तार्क्ष्यस्य गरुडाह्वयम् ॥ ४१ ॥

भूतानां बलितालाख्यं सेनेशस्यापि तादृशम् ।
अन्येषामपि देवानां तालं भद्रं प्रशस्यते ॥ ४२ ॥

1. कान्तारं $P_2$  2. पृष्ठकुट्टिमं T, $P_1$  3. चैव $P_2$  4. $P_2$ omits च
5. तु $P_2$  6. ॰भेदा वा T, $P_1$, $P_2$  7. भृङ्गिणी M, $P_1$  8. मड्ड॰ $P_2$
9. कर्करी $P^1$

दिक्षु सर्वासु सर्वेषु मन्दिरावरणेषु च ।
नृत्तं गेयं च वाद्यं च साकल्येन समीरितम् ॥ ४३ ॥

खगध्वजं दर्शयित्वा मङ्गलाष्टकमेव च ।
सन्निधाने च देवस्य सर्वत्र बलिरिष्यते ॥ ४४ ॥

निवेद्य तत्र ताम्बूलं भक्ष्यं च पृथुकादिकम् ।
सर्वेष्वावरणेष्वेवं स्थानं प्रति समाचरेत् ॥ ४५ ॥

केवलाम्बुजनादेन प्राकारद्वारि निर्गमः ।
निर्गत्य[1] च महापीठे मन्दिराभिमुखं स्थितः ॥ ४६ ॥

दिक्षु सर्वासु पीठस्य वादित्रे घोषिते भृशम् ।
क्षालिते पीठिकामूर्ध्नि पूजयेद्विष्णुपार्षदान् । ४७ ॥

बलिं निरवशेषेण दत्त्वा पीठस्य मूर्धनि ।
पीठं परीत्य धामान्तः प्रविश्य मुखमण्टपे ॥ ४८ ॥

प्रदाय पादुके पीठे यानादेरवरोप्य च ।
प्राङ्मुखं विष्टरे देवमवस्थाप्य सभाजयेत् ॥ ४९ ।

उपहारमशेषेण प्रदायावसरोचितम् ।
प्रवेशयेद्गर्भगेहं देवमाराधकस्स्वयम् ॥ ५० ॥

वाद्ये गेये तथा नृत्ते बहिरङ्गणभूमिषु ।
न्यूनीभावं समाधातुं शुद्धताण्डवमाचरेत् ॥ ५१ ॥

महावातादिसंक्षोभे न नित्योत्सवमाचरेत् ।
बलिप्रदानमात्रं च[2] कुर्याच्च सति सम्भवे ॥ ५२ ॥

1. निर्गम्य $P_2$ 2. तु $P_2$



[1]बलिं चण्डप्रचण्डे तु केवलं वा विनिक्षिपेत् ।
तयोर्मध्ये तु पुरतो मूलमन्त्रेण साधकः ॥ ५३ ॥

भूतेभ्यो नम इत्येवं [2]विक्षिपेत्सोदकं बलिम् ।
आराधनविधिर्द्वेधु कालभेदेषु शस्यते ॥ ५४ ॥

अह्नि रात्रौ च तान् ब्रह्मन्नधुना कथयामि ते ।
एकस्त्रयो वा षड् वापि कालो द्वादश एव वा ॥ ५५ ॥

पञ्चकालश्चतुष्कालस्तत्कालो बहुधा मतः ।
यथाविभवमुद्दिष्टं समाराधनकर्मणि ॥ ५६ ॥

एको मध्याह्नसमयः प्रातर्मध्यन्दिनं निशा ।
त्रयश्चेत् षट्सु पूर्वे स्युः कालभेदाः पुनस्त्रयः ॥ ५७ ॥

[3]मध्यरात्रोऽपराह्णश्च तथा प्रत्यूष ईरितः ।
प्रत्यूषश्चार्धरात्रं च प्रातर्मध्यन्दिनं निशा ॥ ५८ ॥

पञ्च काला इमे प्रोक्तास्ततः कालचतुष्टयम् ।
[4]एतेषु हीनः प्रत्यूषो विज्ञेयश्चतुरानन ॥ ५९ ॥

काला द्वादश विज्ञेयाः पञ्च पञ्च च नाडिकाः ।
इतरे कालभेदाः स्युः[5] प्रत्येकं यामसंमिताः ॥ ६० ॥

उत्सवावसितं श्रेष्ठमाराधनमुदाहृतम् ।
होमान्तं मध्यमं प्रोक्तं स्नापनान्तमथाधमम् ॥ ६१ ॥

क्षुद्रं [6]च धूपदीपमधमाराधनं हरेः[7] ।
घटिके द्वे भवेत्स्नाने घटिकैकार्चने भवेत् ॥ ६२ ॥

1. चण्डप्रचण्डयोस्स्थाने केवलं वा विनिक्षिपेत् । A 2. प्रक्षिपेत् $P_2$
3. अयं श्लोकः $P_2$ कोशे 'पञ्चकाले' त्यनन्तरं दृश्यते । 4. एकेन $P_1$, $P_2$ 5. तु $P_2$
6. तु T, $P_1$, $P_2$ 7. भवेत् $P_2$

नृत्ते गेये तथा चैका तदर्धेन निवेदनम् ।
[1]होमश्चैका चोत्सवे द्वे शुद्धनृत्तावसानिके ॥ ६३ ॥

प्रहारकाल[2]पूजायां स्नानादिविधिरीदृशः ।
घटिकास्नान[3]समयस्तथार्धघटिकार्चनम् ॥ ६४ ॥

[4]गेयं नृत्तं च घटिका तदर्धेन निवेदनम् ।
[5]होमार्धं परिशिष्टार्धं भवेन्नित्योत्सवक्रिया ॥ ६५ ॥

कालभेदेषु सर्वेषु श्रेष्ठं कालत्रयं विदुः ।
प्रातर्मध्यन्दिनं रात्रिर्मुख्यं च कमलासन ॥ ६६ ॥

अवश्यम्भाविनौ तेषु बलिनित्योत्सवावुभौ ।
होमपर्यन्तमन्यत्र कालभेदेषु शस्यते ॥ ६७ ॥

उत्सवाद्यङ्गबिम्बानि सेनान्यं विहगेश्वरम् ।
चण्डप्रचण्डौ द्वारस्थौ सर्वकालेषु पूजयेत् ॥ ६८ ॥

मध्यन्दिने प्रदोषे च पुरस्ताद्वाद्यवादनम् ।
नीराजयेत्प्रदोषेषु [6]एवं तदपि कथ्यते ॥ ६९ ॥

स्वर्णपात्राणि युग्मानि विपुलानि यथावसु ।
तन्मध्ये शालिपृष्ठेषु[7] वर्तिदीपान् [8]प्रदीपयेत् ॥ ७० ॥

तथाविधानि पात्राणि करैरुद्धृत्य योषितः ।
कल्याणवस्त्राभरणा निर्गताश्च महानसात् ॥ ७१ ॥

श्रेणीबद्धाः पुरोगीतनृत्तवाद्यसमन्विताः ।
अन्तिके देवदेवस्य विन्यसेयुर्महीतले ॥ ७२ ॥

आधारेषु ततः पात्राण्यर्चयेद्विश्वविद्यया ।
आचार्यो ध्रुवबेरादौ [9]अङ्गन्यासं समाचरेत् ॥ ७३ ॥

---

1. एका होमे A, $P_1$   2. ॰भेदोऽयं $P_2$   3. ॰समये $P_2$   4. गेयनृत्तस्य T, $P_1$, $P_2$   5. होमाद्यैः परिशिष्टस्तु भवेन्नित्योत्सवे क्षणः । $M_1$   6. देवं T, $P_1$, $P_2$   7. ॰पिष्टेषु $M_1$   8. प्रकल्पयेत् $P_1$   9. षडङ्गन्यासमाचरेत् T, $P_1$, $P_2$



इष्ट्वा च देवमर्घ्याद्यैर्दीपपात्राणि पूजकः ।
उद्धृत्य भ्रामयेद्देवमापादतलमस्तकम् ॥ ७४ ॥

गुणमन्त्रैस्त्रिभिः पात्राण्यनु योषित्सु निक्षिपेत् ।
अर्चनामेव[1]मन्यत्र पात्राण्येकैकशः क्रमात् ॥ ७५ ॥

भ्रामयेद्[2] ध्रुवबेरस्य यद्वा सर्वाणि पद्मज ।
एवं नीराजनं दद्यात् श्रीभूम्योरिष्यते पृथक् ॥ ७६ ॥

नीराजने तन्यमाने तूर्यघोषमुदीरयेत् ।
नृत्तगीतप्रकारांश्च कुर्युर्वारपुरन्ध्रयः ॥ ७७ ॥

दीपपात्राणि सर्वाणि बलिपीठे समुत्सृजेत् ।
[3]नित्योत्सवं नदीस्नानं विधायार्चनमन्यतः ॥ ७८ ॥

[4]अर्धरात्रे तु संप्राप्ते कृत्वा स्नानादिकं हरेः ।
शुद्धपायसमुद्गान्नमपूपादिहविः क्रमात् ॥ ७९ ॥

गोक्षीरं सितखण्डादि मधुरं च निवेदयेत् ।
भास्करस्योदयात्पूर्वं बहवस्सूतमागधाः ॥ ८० ॥

प्रबोधयेयुर्देवेशं स्तुवन्तो वाद्यवादनैः ।
रात्रौ बिम्बेषु सर्वेषु कुर्यान्नीराजनं हरेः ॥ ८१ ॥

राजोपचारवत्सर्वमुपचारं प्रदर्शयेत् ।
अह्नि रात्रौ च ये प्रोक्ताः कालभेदाश्चतुर्मुख ॥ ८२ ॥

जघन्यमुख्यभेदेन तेष्वित्थं हरिमर्चयेत् ।
इति श्री पञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
नित्योत्सवसमाराधनकालविभागो नाम पञ्चमोऽध्यायः ॥

---

1. ॰अन्यासां T, $P_1$, $P_2$   2. मूल॰ $P_1$, $P_2$   3. नित्योत्सवान्तं स्नानादि विधायार्चनमन्यतः $P_2$   4. ७९, ८० श्लोकद्वयमिदं $M_1$ कोशे नोपलभ्यते ।

## षष्ठोऽध्यायः ॥

### नृसूक्तोपचारनीराजनविधिः ॥

**ब्रह्मा :—**

सूक्तस्याङ्गेषु भगवन् पौरुषस्य कथं भवेत् ।
न्यासः कथं वा तेन त्वां अर्चयामि [1]कथं [प्रभो] ॥ १ ॥

पृच्छतः संशयानस्य गृहार्चनविधिः कथम् ।
याथातथ्येन वक्तव्यो मयि चेदस्त्यनुग्रहः ॥ २ ॥

**श्रीभगवानु[2]वाच :—**

छन्दोऽनुष्टुब्नृषिरितस्य वासुदेवस्स देवता ।
मूर्ध्नि फाले नयनयोर्नासिकायां तथा मुखे ॥ ३ ॥

गले बाह्वोश्च हृदये नाभावङ्गे च मेहने ।
ऊर्वोश्चरणयोर्न्यासः [3]प्रथमाद्या ऋचः क्रमात् ॥ ४ ॥

आद्ययाऽऽवाहयेद्देवमासनं च द्वितीयया ।
पाद्यं तृतीयया चार्घ्यं चतुर्थ्या वितरेदृचा ॥ ५ ॥

पञ्चम्याचमनं स्नानं षष्ठ्या [4]सप्तम्या चाम्बरम् ।
उपवीतमृचाष्टम्या नवम्या गन्धलेपनम् ॥ ६ ॥

पुष्पं दशम्यैकादश्या द्वादश्या धूपदीपकौ ।
निवेदनं त्रयोदश्या चतुर्दश्या नमस्कृतिः ॥ ७ ॥

प्रदक्षिणं पञ्चदश्या षोडश्योद्वासनं [5]भवेत् ।
समिदन्नाज्यहोमाश्च[6] प्रत्यृचं जातवेदसि ॥ ८ ॥

---

1. यथा मम T, $P_1$, $P_2$ 2. $P_2$ omits उवाच 3. प्रथमादिऋचां $P_1$, $P_2$ 4. सप्त ऋचाम्बरम् T, $P_1$, $P_2$ 5. हरेः T, $P_1$, $P_2$ 6. ०होमश्च $P_2$



स्वगृहे पूजयेद्विष्णुं शुचौ देशे गृहे क्वचित् ।
स्थले [1]रत्नमये ध्यात्वा विमाने च तथाविधे ॥ ९ ॥

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
पुष्पोदपात्रमादाय तिष्ठन्नावाहयेद्धरिम् ॥ १० ॥

[2]ओंपूर्वाभिर्व्याहृतिभिः प्रत्येकं पुरुषोत्तमम् ।
व्यस्ताभिश्च समस्ताभिर्वेदाद्येनासनं ततः ॥ ११ ॥

पात्रस्थमम्भस्साविञ्या अभिमन्त्र्य पवित्रकम् ।
तदर्घ्यं विष्णुगायत्र्या दद्यात् त्रीणि[3] पदेति च ॥ १२ ॥

पाद्यमाचमनीयं च प्रणवेन प्रकल्पयेत् ।
मन्त्रैः स्नपनमब्लिङ्गैरङ्गश्च विमृजेत्ततः ॥ १३ ॥

व्याहृत्या श्रोत[4]वस्त्रेण जितं त इति विद्यया ।
वासो [5]विद्यादिना दद्यादुपवीतं च लेपनम् ॥ १४ ॥

इदं विष्णुरिति प्रोच्य प्रणवेन प्रसाधनम् ।
तद्विष्णोरिति पुष्पाणि जितं त इति धूपकम् ॥ १५ ॥

उद्दीप्यस्वेति दीपं च देवस्य त्वेति वै हविः ।
वासुदेवादिमन्त्रैश्च मत्स्याद्यैः केशवादिभिः ॥ १६ ॥

पुष्पाणि [6]दत्त्वा ध्यात्वा च तां तां मूर्तिं यथायथम् ।
चतुर्मुखादिदेवानां परिवारतयार्चनम् ॥ १७ ॥

न स्वातन्त्र्येण यष्टव्यः वैष्णवेन गृहार्चने ।
जपकाले नृसूक्तं वा द्वादशाक्षरमेव वा ॥ १८ ॥

---

1. रत्नमयस्थाने विधाय च तथाविधे $P_2$ 2. ओंभूरादिव्याहृतिभिः T, $P_1$, $P_2$ 3. पदेत्यृचा T, $P_1$, $P_2$ 4. श्वेत० $M_1$ 5. वेदादिना $M_1$ 6. दद्याद् $P_1$

अष्टाक्षरं वा यद्वान्यं मन्त्रं प्रणवमेव वा ।
जपेत्समाहितमना यद्वा त्र्यन्तगोचरान् ॥ १९ ॥

यो नित्यं पूजयेद्विष्णुं गृहस्थो वेश्मनि स्वयम् ।
स नयेत् स्वकुलोद्भूतान् पुरुषानेकविंशतिम् ॥ २० ॥

विष्णोः पदं वा सालोक्यं यद्वाऽन्यदपि[1] वाञ्छितम् ।
उपचारा हरेरद्य सपर्याविधिगोचराः ॥ २१ ॥

अष्टोत्तरशतं विंशच्छ्रुता ये मन्मुखोद्गताः ।
आवाहनं नमस्कारं[2] प्रत्युत्थानमनन्तरम् ॥ २२ ॥

पुष्पाञ्जलिस्स्वागतोक्तिरासनं पादपीठिका ।
अर्घ्यं पाद्यं प्रतिग्राहः पाद्य स्रोताभिमर्शनम् ॥ २३ ॥

आलेपनं चरणयोश्चन्दनक्षोदवारिणा ।
[3]अपामाचमनीयानां प्रतिग्रहणदर्शनम् ॥ २४ ॥

उपस्पर्शनमालेप[4]श्चन्दनाद्यम्बुचर्चया ।
पुष्पमाला धूपदानं मधुपर्कनिवेदनम् ॥ २५ ॥

घनसारो नागवल्ली स्नानविष्टरगोचराः ।
पादुके स्नानपीठं च स्नानशाटकमन्वतः ॥ २६ ॥

दन्तकाष्ठमथादर्शो जिह्वानिर्लेखपट्टिका ।
ताम्बूलवीटिका वस्त्रपरार्धप्रसारितम् ॥ २७ ॥

अभ्यङ्गो मौलिमाला च तालवृन्तमनन्तरम् ।
[5]चन्दनैश्चर्चनं तन्वा गन्धामलकवारिभिः[6] ॥ २८ ॥

---

1. अभि° T, $P_1$, $P_2$  2. आवाहननमस्कारौ $P_2$  3. अपामाचमनीयन्तु T, $P_1$ ; आचमनीयाम्भः $P_2$  4. °आलेपचन्दन° $P_2$  5. चन्दनोद्वर्तनं T, $P_1$  6. °वारि च $P_2$



कङ्कतं रजनीस्नानं वस्त्रं गन्धानुलेपनम् ।
उत्तरीयं पवित्रं च नृत्तं गेयमनन्तरम् ॥ २९ ॥

पाद्यं दशशत[1]च्छिद्रैः स्नानं धाराभि[2]रम्भसाम् ।
नीराजनं शिखा[3]स्रोतमुष्णीषं स्रोतवाससा ॥ ३० ॥

अङ्गाभिमर्शनं वस्त्रमुपवीतमनन्तरम् ।
उत्तरीयं त्रिंशदेते कथिताः कमलासन ॥ ३१ ॥

अलङ्कारासनस्थस्य हरेस्तत्कालगोचराः ।
[4]उपानहौ शिरस्त्राणं पीतकौशेय[5]धारणम् ॥ ३२ ॥

कर्पूररजसा लेपमापादतलमस्तकम् ।
कस्तूरिका मृगमदश्चन्दनेनानुलेपनम् ॥ ३३ ॥

व्यजनं चामरव्यूहः कुङ्कुमेनानुलेपनम् ।
गन्धं च कृत्रिमा भूषा ब्रह्मसूत्रप्रकल्पना[6] ॥ ३४ ॥

उत्तरीयं मौलिमाला बाहु[7]मालाविलम्बनम् ।
मृत्स्नया तिलकं कुर्याद् अञ्जनं च शलाकया ॥ ३५ ॥

पुष्पाविकिरणं ब्रह्मन् महादर्शप्रदर्शनम् ।
ताम्बूलिका धूपदीपौ शालितण्डुलपात्रिका[8] ॥ ३६ ॥

स्वाध्यायाध्ययनं दानं नाट्यं वेणुनिनादनम् ।
वीणादिवादनं पाठो मङ्गलानामनन्तरम् ॥ ३७ ॥

नीराजनं च पिण्डानां पञ्चानां क्षेपणं दिशि ।
यात्रासनोपचारास्तु हरेस्तत्कालगोचराः ॥ ३८ ॥

---

1. °शतैः $P_2$  2. एव च A, $P_1$ ; अर्णनाम् $P_2$  3. शिरः° $P_1$, $P_2$  4. उपचाराः $M_2$, $P_1$, $P_2$  5. °वाससा T, $P_1$, $P_2$  6. °प्रकल्पनम् A, $P_2$ ; क्षनन्तरम् $P_1$, $M_2$  7. °मूलाविडम्बनम् T, $P_1$  8. °मात्रया T, $P_2$

उपानहौ चामराणि मुक्तातपनिवारणम् ।
मयूरपिञ्छव्यजनं तालवृन्तं रथो गजः ॥ ३९ ॥

अश्वश्च शिबिकायानं वैनतेयध्वजोन्नतिः ।
क्रीडायष्टिश्च ताम्बूली क्रीडाफलसमृद्धयः ॥ ४० ॥

एवं पञ्चदश प्रोक्ता यात्रासनगताः परे ।
भोजनासनमारूढे हरौ तत्कालगोचराः ॥ ४१ ॥

मधुपर्कं च ताम्बूलवीटिका मुखशाटिका ।
अर्हणाम्भः पायसान्नं मुद्गान्नञ्च गुडोदनम् ॥ ४२ ॥

दध्योदनं पानकं च पानीयं हस्तशाटिकम् ।
शुद्धिश्च करयोरेला चन्दनाक्षोदवारिणा ॥ ४३ ॥

सुखासीने च दाशार्हे चन्दनोदकचर्चया ।
अङ्गेष्वालेपनं माल्यमपूपपृथुकास्तथा ॥ ४४ ॥

सक्तवस्तिलपिण्डाश्च फलानि कथितं जलम् ।
नालिकेराम्बुदानं च ताम्बुलीदलवीटिका ॥ ४५ ॥

प्रदक्षिणनमस्कारस्स्तुतिरात्मनिवेदनम् ।
अर्घ्यमुद्रासनं चैते [1]शताष्टोत्तरविंशतिः ॥ ४६ ॥

उपचारा हरेर्ब्रह्मन् विस्तरेण प्रदर्शिताः ।
आवाहननमस्कारौ सपर्यासनमन्त्रतः ॥ ४७ ॥

पादपीठं तथैवार्घ्यं [2]पाद्यादीनां प्रतिग्रहः ।
पाद्यमाचमनीयाम्भः प्रतिग्रहणमेव च ॥ ४८ ॥

1. शतमष्टौ च विंशतिः T, $P_1$, $P_2$ 2. पाद्यनीरप्रतिग्रहाः $P_1$



आचामो मुखवासश्च पादुके स्नानविष्टरम् ।
स्नानशाटी दन्तकाष्ठं जिह्वानिर्लेखनं तथा ॥ ४९ ॥

ताम्बूलाभ्यञ्जनं चैव व्यजनं चाङ्गपेषणम् ।
गन्धामलकजं स्नानं कङ्कतेन विशोधनम् ॥ ५० ॥

रजनीचर्चया स्नानमुत्तरीयपरिष्कृतिः ।
वारिधारासहस्रेण स्नानं नीराजनं तथा ॥ ५१ ॥

श्लोताभिमर्शनं वासो ब्रह्मसूत्र[1]प्रकल्पनम् ।
उत्तरीयमलङ्कारविष्टरं केशशोषणम् ॥ ५२ ॥

परिधानं दुकूलेन गन्धद्रव्य[2]विलेपनम् ।
व्यजनं भूषणं माला पुष्पाणां नयनाञ्जनम् ॥ ५३ ॥

ताम्बूलं दर्पणं धूपदीपौ मात्रापरिव्ययः ।
दानं नीराजनं छत्रमुपानच्चामरं ध्वजाः ॥ ५४ ॥

वाहनं शिबिकायानं [3]तूर्यं क्रीडा फलं तथा ।
भोजनासनसम्प्राप्तिर्मधुपर्कनिवेदनम् ॥ ५५ ॥

अर्हणं [4]प्रापणादीनि पानीयं सुखविष्टरम् ।
निवेदनमपूपादेस्ताम्बूली स्तोत्रशंसनम् ॥ ५६ ॥

विसर्जनमिति ब्रह्मन् षष्टिश्च चतुरुत्तरा ।
उपचारानथो वक्ष्ये द्वात्रिंशत्तु यथातथम् ॥ ५७ ॥

आवाहनासने पश्चादर्घ्यं पाद्यमनन्तरम् ।
आचामो मुखवासश्च पादुके दन्तधावनम् ॥ ५८ ॥

1. °अनन्तरम् A, $P_1$ $P_2$ 2. °अनुलेपनम् T, $P_1$, $P_2$ 3. त्रयं $P_1$
4. प्रापणान्तानि T ; प्रापणं पानं $P_1$

जिह्वानिर्लेखनं तैलं धात्र्या स्नानं हरिद्रया ।
वासश्चैवोत्तरीयं [1]च गन्धालेपश्च भूषणम् ॥ ५९ ॥

मालाऽञ्जनं तथादर्शदानं धूपश्च दीपिका ।
मात्रादान[2]मथ च्छत्रं चामरं तूर्यघोषणम् । ६० ॥

मधुपर्कार्हणं चैव निवेदनमनन्तरम् ।
भक्ष्यं तथा नागवल्ली विसर्जनमथान्तिमम् ॥ ६१ ॥

उपचाराः षोडश स्युरात्मनश्शक्त्यपेक्षया ।
आवाहनासने पूर्वमर्घ्यं पाद्यमनन्तरम् ॥ ६२ ।

उपस्पर्शस्तथा स्नानं वस्त्रं यज्ञोपवीतकम् ।
गन्धालेपस्तथा भूषा माला धूपः प्रदीपिका ॥ ६३ ॥

मधुपर्कं प्रापणं च विसर्जनमथान्तिमम् ।
आसनेषु च सर्वेषु पाद्यं पाद्यप्रतिग्रहः ॥ ६४ ॥

पादक्षौतश्चरणयोर्गन्धालेपश्चतुर्मुख ।
आचामश्च तदम्बूनां प्रतिग्रहणमिष्यते ॥ ६५ ॥

भोज्य[3]यात्रासने त्यक्त्वा कर्तव्यं पादविष्टरम् ।
उपक्रमोपरमयोर्मधुपर्कनिवेदनम् ॥ ६६ ॥

भोजनान्ते च वस्त्रस्य परिधाने तथाप्लुते ।
जिह्वानिर्लेखनान्ते च सर्वत्राचमनक्रिया ॥ ६७ ॥

निवेदने च वस्त्राणां केशानां शोषणे तथा ।
घण्टानादं विना धूपो न विनान्यत्र घण्टया ॥ ६८ ॥

---

1. उपवीतं च T, $P_1$, $P_2$ 2. ततश्छत्र॰ $P_2$ 3. ॰पात्रेति पाठः समीचनः प्रतिभाति ।



दीपोपचारे नैवेद्ये घण्टास्वननमन्यथा ।
विभवानां [1]क्षयस्थाने [2]स्याच्च पूजाऽऽसुरी कृता ॥ ६९ ॥

निर्लेखनं [3]त्रिसन्ध्यायां दन्तकाष्ठं च निक्षिपेत्[4] ।
उपस्पर्शनवारीणां प्रतिग्रहणभाजने ॥ ७० ॥

भक्षणाद्यन्नपानान्ते वाससा हस्तमार्जनम् ।
तथाञ्जनं नयनयोर्मार्जनं वाससा भवेत् ॥ ७१ ॥

अर्हणं भोजने दद्यान्न पानादौ कदाचन ।
परस्य सूक्ष्मस्य तथा स्थूलस्य तदनन्तरम् ॥ ७२ ॥

चिन्तासङ्क्रमणं तस्य बिम्बे प्रत्युद्गमस्तथा ।
स्वागतोक्तिर्नमस्कारस्सांनिध्यप्रार्थना तथा ॥ ७३ ॥

इत्यावाहनमष्टाङ्गं परस्य परमात्मनः ।
रत्नेषु स्फटिके स्वर्णे रजते ताम्रजेऽपि वा ॥ ७४ ॥

क्षणिके [5]चार्चयेद्देवमावाह्य विधिपूर्वकम् ।
चक्राब्जमण्डलं कुम्भं सोदकं सूत्रवेष्टितम् ॥ ७५ ॥

बीजं पिष्टं तथैवान्नं फलं पुष्पं जलं तथा ।
गन्धं वेदिः शक्रुत्कूर्चमित्यादि क्षणिकं मतम् ॥ ७६ ॥

आलये स्थापितं [6]देवं सदा नीराजयेद्धरिम् ।
सम्पूर्णमम्भसा कुम्भं हेमादिद्रव्यनिर्मितम् ॥ ७७ ॥

स्रग्विणं सपिधानं च मुखेऽश्वत्थदलैर्युतम् ।
अक्षतैरर्चितं गन्धवारिणाऽभ्युक्षितं तथा ॥ ७८ ॥

---

1. क्षये $P_2$ 2. सार्चा $P_2$ 3. रसज्ञाया $P_2$ 4. निर्वपेत् $M_2$, $P_2$
5. वार्चयेत् T, $P_1$, $P_2$ 6. बिम्बं A

चतुष्टयाङ्गुलो[1]त्सेधं दीपवर्तिविराजितम् ।
उच्चैरादाय हस्ताभ्यामापादतलमस्तकम् ॥ ७९ ॥

त्रिःपरिभ्राम्य देवेशं बलिपीठे विनिक्षिपेत्[2] ।
एतन्नीराजनं घोरशान्त्यर्थं पुष्टिवर्धनम् ॥ ८० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
नृसूक्तोपचारनीराजनविधिर्नाम षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ॥

### मण्डपाराधनाचार्याभिषेकविधि ॥

**ब्रह्मोवाच :—**

भगवान् कथ्यतां कीदृक् चक्राब्जं नाम मण्डलम् ।
यदाराध्यं समाराध्य तरन्ति भववारिधिम् ॥ १ ॥

**श्रीभगवान् :—**

चतुर्भिर्याज्ञिकैः काष्ठैः षडङ्गुलघनैश्शुभैः ।
द्वादशाङ्गुलविस्तारैराकारं चतुरश्रकम् ॥ २ ॥

मण्डलानुगुणायामविस्तारं परिकल्पयेत् ।
अष्टतालायतान् स्तम्भान् सुवृत्तांश्चतुरस्तथा ॥ ३ ॥

[3]सन्निकृष्टस्य कोणेषु चतुर्ष्वेतस्य मङ्गलान् ।
स्थापये[4]दुपरिष्टाच्च स्तम्भानां सन्निवेशयेत् ॥ ४ ॥

1. ॰उत्सेधदीप॰ $P_2$ 2. क्षिपेत्ततः $M_1$ 3. सन्निकृष्टेषु T; सन्निविष्टस्य $P_1$; सन्निविष्टेषु A 4. ॰अष्टदिक्षु $M_1$



चत्वारि चैव दारूणि यथा पूर्वोक्तलक्षणम् ।
[1]तच्चतुष्कं च दारूणां वितानध्वजमालया ॥ ५ ॥

भूषयेत्परितो मुक्तादामानि च विलम्बयेत् ।
शुद्धया च मृदाऽधस्ताच्चतुष्कोष्ठस्य चान्तरम् ॥ ६ ॥

पूरयेदन्तरं तस्य गोमयेनोपलेपयेत् ।
चक्राब्जादीनि बिम्बानि कुर्यात्तत्र महीतले ॥ ७ ॥

तेषामायामविस्ताराविष्येते हस्तसंमितौ ।
द्विगुणौ त्रिगुणौ वापि स्यातामथ चतुर्गुणौ ॥ ८ ॥

यद्वा पञ्चगुणौ ब्रह्मन्नवकाशानु[2]सारतः ।
चन्दनार्द्राणि सूत्राणि प्राञ्चि सप्तदश क्षितौ ॥ ९ ॥

निपातयेत्तथोदञ्चि तावन्ति कमलासन ।
षट्पञ्चाशत्समधिके [3]सन्त्येव द्वे शते पुनः ॥ १० ॥

कोष्ठानि सन्ति तत्रान्तष्षट्त्रिंशत्कोष्ठमध्यतः ।
स्थापयित्वा ततश्शङ्कु भ्रमयेत् सूत्रवर्त्मना ॥ ११ ॥

पञ्चवृत्तानि बिम्बानि समान्येकं तु मध्यमम् ।
कर्णिकाक्षेत्रमेतस्माद्बहिर्बिम्बं त्रिधा पुनः ॥ १२ ॥

विभज्य सूत्रमार्गेण प्रथमा केसरावनिः ।
दलभूमिर्द्वितीया तु तृतीया नाभिमण्डलम् ॥ १३ ।

तदेकं द्विविधं वापि त्रिविधं सूत्रवर्त्मना ।
विभजेन्नाभिभूभागाद्बहिर्द्वे मण्डले भवेत् ॥ १४ ॥

1. चतुरश्रं च $M_1$ 2. ॰रूपतः $M_1$, A 3. सत्येव $M_1$

अरक्षेत्रं बहिर्नेमिभूरेकं मण्डलं भवेत् ।
कोष्ठैरथाष्टविंशत्या परितो बहिरासनम् ॥ १५ ॥

चतुरश्रं भवेत्कोष्ठैरशीत्या बीथिका बहिः ।
पङ्क्तिद्वयेन विश्वात्मन् चतुरश्राद्बहिः पुनः ॥ १६ ॥

कोष्ठानि द्वादशाधिक्यं शतं पङ्क्तिर्द्वयोर्भवेत् ।
प्रत्याशं तेषु कोष्ठेषु चतुर्द्वारं प्रकल्पयेत् ॥ १७ ॥

कोष्ठैश्चतुर्भिः प्रत्येकं द्वयोः पङ्क्त्योश्चतुर्मुख ।
चतुर्षु कोणेषु तथा प्रत्येकं शंखसिद्धये ॥ १८ ॥

कोष्ठद्वयं तु संमार्ज्यं द्वयोः पङ्क्त्योश्चतुर्मुख ।
प्रतिद्वारं तदभ्यर्णे पार्श्वयोरुभयोरपि ॥ १९ ॥

अर्धशोभा[1]प्रसिध्यर्थं बाह्यानन्तरथ्ययोः ।
द्वे द्वे कोष्ठे बहिः पंक्त्यामेकैकं तदनन्तरे[2] ॥ २० ॥

संमार्ज्यमेवं शोभार्थमेकैकं बहिरन्यतः ।
त्रीणि त्रीणि च कोष्ठानि मार्जनीयानि पद्मज ॥ २१ ॥

उपशोभार्थमप्येवं व्यत्यासेन चतुष्टयम् ।
संमार्जनीयं कोष्ठानां विनियोगः [3]प्रदर्शितः ॥ २२ ॥

यद्वा पीठादिनिर्माणं विना कोष्ठानि विंशतिः ।
शतद्वयं च परितः [4]परिमृज्य चतुर्मुख ॥ २३ ॥

आदिपद्मप्रमाणेन कुर्यादावरण[5]त्रयम् ।
चतुर्दिशं चतुर्द्वारकल्पनं पद्ममानतः ॥ २४ ॥

---

1. ॰प्रक्लृप्त्यर्थं $P_1$ 2. तदनन्तरम् $P_2$ 3. प्रशिक्षितः $M_2$
4. परिगृह्य $M_2$ 5. ॰द्वयम् T, $P_1$



यद्वैकवलयं कुर्यादभीष्टदिशि पद्मज ।
द्वादशाब्जानि कल्प्यानि प्रत्यावरणकल्पनम् ॥ २५ ॥

चतुर्षु कोणेष्वेकैकं द्वे द्वे वलयपार्श्वयोः ।
दलैर्द्वादशभिर्युक्तं कर्णिकाकेसरान्वितम् ॥ २६ ॥

आदिपद्मार्धमानेन पद्मजातं प्रकल्पयेत् ।
मध्यमे पङ्कजे बिन्दून् कर्णिकायां प्रकल्पयेत् ॥ २७ ॥

द्वादशा[1]ब्जजरेखाश्च शतं च नवतिं तथा ।
[2]केसराणां विधायान्वग्दलक्षेत्रे प्रकल्पयेत् ॥ २८ ॥

विदिक्षु दिक्षु च तथा चतस्रो विंशतिं तथा ।
रेखे द्वे द्वे दलानि स्युस्सूच्यग्रवदनन्तरे ॥ २९ ॥

प्रदर्शयेदुपदलान्यरक्षेत्रे दिशः प्रति ।
अरे द्वे द्वे विदिक्षु स्यादेकैकं द्वादशारता ॥ ३० ॥

अराणीन्दीवरदलैस्तुल्यान्यब्जपलाशवत् ।
यद्वा यवोदराभानि मातुलुङ्गसमानि च ॥ ३१ ॥

पिपीलिकोदराभानि परस्परसमानि च ।
अन्तरालानि चैतेषां तुल्यमानानि पद्मज ॥ ३२ ॥

ईदृशं मण्डलं शस्तं वासुदेवसमर्चने ।
नारायणे तु यष्टव्या बिन्द्वाद्याः पूर्वमीरिताः ॥ ३३ ॥

अष्टावष्टौ विधातव्याः केसरा नवतिस्सषट् ।
पूर्वेरितानि कोष्ठानि मार्जयित्वा षडुत्तरम् ॥ ३४ ॥

---

1. °अब्जार° $M_2$ 2. केसरोर्व्यां T, $P_1$, $P_2$

त्रिंशच्च तत्र नाभ्यादि विना पद्मं प्रकल्पयेत् ।
शङ्कुमाहृत्य सूत्रेण तत्समं विभजेद्द्विधा ॥ ३५ ॥

प्रथमं कर्णिकाक्षेत्रं द्वितीयं विभजेत् त्रिधा ।
त्रिष्वाद्यं केसरक्षेत्रं दलक्षेत्रमनन्तरम् ॥ ३६ ॥

तृतीयमन्तरालं स्याद्दलपीठिकयोर्द्वयोः ।
अष्टौ द्वादश वा कुर्याद्बिन्द्वादीन् कमलासन ॥ ३७ ॥

मण्डलं भद्रकं नाम तदिदं सर्वकामदम् ।
चिकीर्षन् स्वस्तिकं बिम्बं क्षेत्रं षट्त्रिंशद्भिर्युतम् ॥ ३८ ॥

[1]संमृज्य तत्र[च] कोष्ठान्येकादश[2] च पातयेत् ।
प्रागायतानि[च] सूत्राण्युदीचीनायतानि च ॥ ३९ ॥

संमृज्यं मध्यतो द्वे द्वे वीथीं प्रागायतामपि ।
तथोदगायतामेकां कुर्यान्निर्गमनं पुनः ॥ ४० ॥

प्रागायताभ्यां कोष्ठाभ्यां बहिः पङ्क्त्या[श्च]उदङ्मुखम् ।
प्राचीनं पश्चिमं चापि [3]दक्षिणं मुखमिष्यते ॥ ४१ ॥

तथोद[4]गायतायां स्यादुदङ्[5]प्रत्यङ्मुखं शुभम् ।
दक्षिणाग्रं भवेत्प्राच्यामिति स्वस्तिकमीरितम् ॥ ४२ ॥

द्विधा विभज्य पूर्वोक्तं षट्त्रिंशत्कोष्ठमण्डलम् ।
मध्यतः पद्मकरणमवशिष्टे त्रिधा कृते ॥ ४३ ॥

द्वाभ्यां सुवृत्तं भागाभ्यां भ्रान्तं वृत्तस्य मण्डलम् ।
अविशिष्टेन भागेन त्वन्तरालं[6] भवेद्बहिः ॥ ४४ ॥

1. अयं श्लोकः $M_1$ कोशे नोपलभ्यते । 2. एकं दश च T, $P_1$, $P_2$
3. दक्षिणामुख° T, $P_1$, $P_2$ 4. °आयताभ्यां T, $P_1$ 5. °पङ्क्त्यामुदङ्मुखम् A
6. चान्तरालं A



सौरमण्डलमेतत् स्यादेतदेवेन्दुमण्डलम् ।
सर्वेषामेव विम्बानां पीठाद्याद्यं यथापुरम् ॥ ४५ ॥

विना विधध्यात्पीठादीन् केवलं चक्रपङ्कजम् ।
चक्रं [1]विना वा पद्मं स्यात् कर्तुः शक्तिसमीक्षया ॥ ४६ ॥

मण्डलं शोभयेद्रत्नैः पञ्चवर्णैस्सितादिभिः ।
अथवा चूर्णितै रत्नैर्लोहजैर्वाथ धातुजैः ॥ ४७ ॥

चन्दनागरुकुष्ठादिगन्धचूर्णैरथापि वा ।
शाल्यादितण्डुलैः पिष्टैस्सितैर्व्रीहिभिरप्युत ॥ ४८ ॥

पुटदग्धैरवक्षुण्णैरसितैर्याज्ञिकच्छदैः ।
श्यामैश्शुक्लैरवक्षुण्णैः कौसुम्भैरपि पाटलैः ॥ ४९ ॥

निशाचूर्णैः प्रसूनैर्वा पञ्चवर्णैश्च कालजैः ।
शोभयेत्कर्णिकादीनि यद्वर्णानि चतुर्मुख ॥ ५० ॥

तद्वर्णैरेव [2]रत्नादिद्रव्यैराकारशोभनम् ।
अन्तरालानि सर्वत्र कृष्णैः श्यामैरथापि वा ॥ ५१ ॥

शोभयेत्कर्णिकां पीतैश्शुक्लैर्बिन्दूनि शोभयेत् ।
पाटलैः कर्णिकारेखां कृष्णैर्वा [3]केसरावलिम् ॥ ५२ ॥

द्विधा कृत्वा पूर्वभागं श्वेतैर्भागमथोत्तरम् ।
पीतै रक्तैर्विरामेषु प्रतिकेसरमर्जुनैः ॥ ५३ ॥

बिन्दून्विदध्या[4]द्रत्नैस्तु दलकोटिषु रेखयेत् ।
आद्यन्तानि च बर्हाणां सितरक्तैर्विशोभयेत् ॥ ५४ ॥

1. विनापि A 2. वर्णादि° T, $P_1$; रत्नादिदीपै°: $M_1$ 3. केसरावनिम् T, $P_1$, $P_2$ 4. रक्तैस्तु T, $P_1$

बहिर्अन्तवलयं रक्तैः सितैर्वा भूषयेत्पृथक् ।
श्यामैः पीतैश्च रक्तैश्च नाभिरेखात्रयं क्रमात् ॥ ५५ ॥

द्विनाभित्वे श्यामपीतैः श्यामैरेवैकनाभिके ।
रेखयेदसितैरेव त्वरकोटीरराणि तु ॥ ५६ ॥

रक्तैररान्तवलयं कृष्णैर्नेम्यन्तमेदिनीम् ।
सितैर्नेमिमहीभागं द्विधा कृत्वै[1]कमादितः ॥ ५७ ॥

भागं कृष्णैः सितैरन्यन्नेमिभागं विशेषयेत् ।
पीठं पीतैः पाटलैर्वा सितैर्वा वीथिकां पुनः ॥ ५८ ॥

लतावितानपत्रादियुक्तां चूर्णैश्च चित्रयेत् ।
रक्तैश्शोभां तथा पीतैरुपशोभां च शोभयेत् ॥ ५९ ॥

द्वारं शुक्लैश्च रक्तैश्च पीतैः कृष्णैर्यथाक्रमम् ।
शोभयेदुत्तरादींश्च कोणान् कृष्णैरथार्जुनैः ॥ ६० ॥

[2]शंखं च कुर्यात्त[3]नैव स्वस्तिकं पाटलप्रभम् ।
यद्वा पीतनिभं ; [4]सौरमण्डलं पाटलप्रभम् ॥ ६१ ॥

मण्डलं चैन्दवं शुक्लमन्तरालं च सर्वशः[5] ।
[6]यथेष्टवर्णं सुभगं मण्डले हस्तसंमिते ॥ ६२ ॥

रेखासु चूर्णैरुत्सेधः कनिष्ठांगुलिसंमितः ।
द्विहस्तेऽनामिका मानस्त्रिहस्तेऽनामिकासमः ॥ ६३ ॥

चतुर्हस्ते मण्डले तु तर्जन्यंगुलिसंमितः ।
पञ्चहस्ते [7]समोंऽगुष्ठैरित्युत्सेधः प्रदर्शितः[8] ॥ ६४ ॥

1. एवमादितः $M_1$ 2. शङ्खांश्च $M_1$ 3. तैरेव $P_2$ 4. सौरं मण्डलं $P_2$
5. सर्वतः A 6. यथेष्टवर्णसुभगं $P_2$ 7. समाङ्गुष्ठैः $M_1$ 8. प्रकीर्तितः $M_1$



मण्डलं चित्रयित्वेवमारभेत समर्चनम् ।
आराधयेत्कर्णिकायां मन्त्राध्वानमनन्तरम् ॥ ६५ ॥

तत्त्वाध्वानं केसरेषु वर्णाध्वानं दलेषु च ।
पदाध्वानं नाभिभागे कलाध्वानमरेषु च ॥ ६६ ॥

षष्ठं तु भुवनाध्वानं नेमिभागे चतुर्मुख ।
कर्णिकायां द्वादशसु बिंदुषु द्वादशार्चयेत् ॥ ६७ ॥

अक्षराणि समावाह्य कर्णिकायां समाहिताः ।
यजेत परमात्मानं सकलीकृत्य [1]कृत्यवित् ॥ ६८ ॥

केसरेषु श्रियादींश्च यजेत दळभूमिषु ।
शक्तीस्तदीया दश च द्वे च पूज्या यथाविधि ॥ ६९ ॥

श्रीवत्साद्याश्शक्तयस्तु[2] व्याप्त्याद्याः परितस्स्थिताः ।
दलान्तवलये पूज्ये विष्णुः प्रथमनाभिगः ॥ ७० ॥

ब्रह्मा द्वितीयनाभिस्थः त्रिणेत्रस्तु तृतीयगः ।
द्वादशारेषु विष्ण्वाद्याः पूज्या द्वादशमूर्तयः ॥ ७१ ॥

अरान्तवलये पूज्या मीनाद्या दश मूर्तयः ।
प्रथमे नेमिवलये शङ्खाद्यायुधपूजनम् ॥ ७२ ॥

पीठकोणचतुष्केषु वराहो नरकेसरी ।
अनन्तश्च हयग्रीवस्तथाग्नेयादिषु क्रमात् ॥ ७३ ॥

[3]पीठिकायां लोकपालाः पुरुहूतादयः क्रमात् ।
पूज्या द्वारेषु चण्डाद्या द्वौ द्वौ प्रतिचतुर्ष्वपि ॥ ७४ ॥

1. तत्त्ववित् T, $P_1$ 2. °शक्तयश्च $P_2$ 3. वीथिकायां T, $P_1$, $P_2$; वेदिकायां $P_2$

ईशानकोणे रथ्यायां विष्वक्सेनं समर्चयेत् ।
गरुडोऽभिमुखस्तिष्ठन् पूर्वद्वाराद्बहिः क्षितौ ॥ ७५ ॥

चक्रं च दक्षिणद्वारि गदां च द्वारि पश्चिमे ।
वलजे चोत्तरे शंखं प्रथमावरणे ततः ॥ ७६ ॥

विष्ण्वादिमूर्तयः पूज्या द्वादशाब्जेषु पङ्कज ।
अनन्तरे चावरणे पद्मेषु द्वादशस्वपि ॥ ७७ ॥

वासुदेवादिकृष्णान्ता मूर्तयो द्वादशैव ते ।
पद्मेष्वावरणे चान्ते द्वादशादित्यपूजनम् ॥ ७८ ॥

एतस्मिन् मण्डले देवं वासुदेवं समर्चयेत् ।
बिंबे नारायणाख्ये तु बिन्दुष्वष्टसु तावताम् ॥ ७९ ॥

अष्टाक्षराणां न्यसनं व्याप्त्याधारशक्तयोऽष्ट च ।
केसरेषु समाराध्य दळेष्वष्टौ श्रियादयः ॥ ८० ॥

अरेष्वष्टसु शङ्खादीन्यायुधान्यष्ट पूजयेत् ।
चतुर्विंशतिपद्मेषु चतुर्विंशतिमूर्तयः ॥ ८१ ॥

त्रिषु चावरणेष्वेषु पूज्यास्तन्मण्डले हरिम् ।
नारायणं समावाह्य यजेत परमेश्वरम् ॥ ८२ ॥

दर्शे च पौर्णमास्यां च संक्रान्तौ श्रवणेषु च ।
द्वादश्यां विषुवे चैव ग्रहणेष्वयनेषु च ॥ ८३ ॥

जन्मऋक्षे विशेषेण मण्डले हरिमर्चयेत् ।
मण्डलाराधनमिदं धर्मकामार्थमोक्षदम् ॥ ८४ ॥

चक्राब्जमण्डले शस्ता दीक्षास्तस्याश्च मण्डलम् ।
एकद्वारं भवेत्तच्च सौम्यं स्यादग्रजन्मनाम् ॥ ८५ ॥



चित्रितं श्वेतवर्णेन प्राग्द्वारं पृथिवीभुजाम् ।
रक्तेन चित्रितं द्वारं पाश्चात्यं पीतवर्णकम् ॥ ८६ ॥

विशां भवेद्दाक्षिणात्यमसितं पादजन्मनाम् ।
द्वाराणि चानुलोमानामुत्पादकवदिष्यते ॥ ८७ ॥

सूतस्य वलजं प्राच्यां शूद्राणामिव योषिताम् ।
शिष्यं सुतं वा सर्वज्ञमनसूयं जितेन्द्रियम् ॥ ८८ ॥

आचार्यवंशजन्मानं निग्रहानुग्रहे क्षमम् ।
शान्तिके पौष्टिके चैव कर्मणि क्षममर्थिनाम् ॥ ८९ ॥

वेदवेदाङ्गतत्त्वज्ञमाचार्यपदकांक्षिणम् ।
देशिकेन्द्रो विधानेन वक्ष्यमाणेन तत्त्ववित् ॥ ९० ॥

कर्षणादिषु सर्वेषु विधानेष्वधिकारिणम् ।
कुर्यान्मण्डलपूजादि कुंभयागावसानिकम् ॥ ९१ ॥

दीक्षायामिव तत्सर्वं कृत्वा शिष्यस्य संनिधौ ।
आज्येन चरुणा चैव समिद्भिः कुसुमैस्तिलैः ॥ ९२ ॥

जुहुयान्मूलमन्त्राभ्यामष्टोत्तरसहस्रकम् ।
शिष्यस्य दक्षिणे हस्ते बद्ध्वा प्रतिसरं गुरुः ॥ ९३ ॥

नृत्तैर्गेयैस्तथा वाद्यैर्वेदघोषैर्नयेन्निशाम् ।
ततः प्रभाते शिष्यं तं स्नातं नूतनवाससम् ॥ ९४ ॥

समाहूय समाराध्य मण्डलं कुम्भमेव च ।
चतुर्विधं निवेद्यान्नं होमं कुर्या[1]द्यथा निशि ॥ ९५ ॥

---

1. यथाविधि T, $P_1$

कलशांश्चतुरो द्रोणपूर्णान् हेमादिनिर्मितान् ।
मृन्मयान्वा [1]यथावित्तं सूत्रवस्त्रादिवेष्टितान् ॥ ९६ ॥

संस्थाप्य धान्यराशौ तु रत्नादीनि विनिक्षिपेत् ।
आग्नेयकुंभे रत्नानि सर्वाणि विनिवेशयेत् ॥ ९७ ॥

नैऋते सर्वलोहानि गन्धद्रव्याणि मारुते ।
ईशाने तीर्थवारीणि ततो देवं समर्चयेत् ॥ ९८ ॥

अग्निकोणे वासुदेवं संकर्षणमनन्तरे ।
प्रद्युम्नं वायुकोणे तु कोणे रौद्रेऽनिरुद्धकम् ॥ ९९ ॥

ततोऽनु शिष्यं संस्थाप्य पीठे भद्रादिविद्यया ।
शिष्यं प्राङ्मुखमासीनं षडङ्गन्यासपूर्वकम् ॥ १०० ॥

अर्चयित्वा घृतारोपमाचरेदविलंबयन् ।
[तूर्य]घोषेण गेयेन ब्रह्मघोषेण घोषयेत् ॥ १०१ ॥

चतुर्दिक्षु ततो गंधैः पुष्पैस्ताम्बूलवीटिभिः ।
धनैर्बहुविधैरिष्टैस्सदस्यांस्तोषयेद् द्विजान् ॥ १०२ ॥

तोषयेच्च विशेषेण भगवद्भक्तिमाश्रितान् ।
मुहूर्ते शोभने प्राप्ते ब्राह्मणानामनुज्ञया ॥ १०३ ॥

ऋग्वेदमन्त्रितं कुम्भमाग्नेयदिशि निष्ठितम् ।
[2]समुपादाय पाणिभ्यां सूक्तेन पुरुषात्मना ॥ १०४ ॥

द्वादशाक्षरमंत्रेण संपुटी[3]कृत्य मूर्तिना ।
अभिषिञ्चेद् गुरुः शिष्यं कुम्भेन तदनन्तरम् ॥ १०५ ॥

1. समालभ्य A, $M_2$  2. तमुपादाय T, $P_1$, $P_2$  3. °कृतमूर्तिना T, $P_1$



नैऋतस्थेन यजुषा मन्त्रितेन समाहितः ।
वैष्णवेन च सूक्तेन ब्रह्मन्नाद्यावसानयोः ॥ १०६ ॥

संकर्षणाख्यमंत्रेण संपुटी[1]कृत्य मूर्तिना ।
कुम्भेन मारुतस्थेन सामघोषितवारिणा ॥ १०७ ॥

प्रद्युम्नसंपुटेनाथ ब्रह्मन्वारुणसामभिः ।
कुम्भेनाथर्ववेदेन पवित्रीकृतवारिणा ॥ १०८ ॥

ईशानकोणसंस्थेन संपुटीकृत्य मूर्तिना ।
अनिरुद्धाख्यमन्त्रेण नारायणसमाह्वया ॥ १०९ ॥

विद्यया कलशैस्सर्वैरभिषिंचेद्यथोदितम् ।
अभिषिक्तस्ततः शिष्यो नवाम्बरधरश्शुचिः ॥ ११० ॥

आचान्तश्चन्दनक्षोदैर्लिप्ताङ्गस्समलङ्कृतः ।
स्रग्वी वासोभिरुष्णीषं बद्ध्वा मकुटसंनिभम् ॥ १११ ॥

उत्तरीयं च बिभ्राणो बिभ्राणो योगपट्टिकाम् ।
अञ्जनाक्तेक्षणद्वन्द्वो बहुमालापरिष्कृतः ॥ ११२ ॥

निरीक्षितादर्शतलो ब्राह्मणैः स्वस्तिवाचितैः ।
दत्तप्रसववृष्टिश्च श्वेतव्यजनवीजितः ॥ ११३ ॥

दत्तोपानत्सितच्छत्रो दत्ताश्वगजवाहनः ।
नीराजितश्च कल्याणो जायते गुर्वनुग्रहात् ॥ ११४ ॥

अनेनैवाभिषेकेण लब्ध्वाचार्यपदं स्वयम् ।
आचार्यकृत्यमखिलं कर्तुमिच्छेच्चतुर्मुख ॥ ११५ ॥

1. °कृत T, $P_1$

गुरवे दक्षिणां दद्याद् गोभूहेमादिकं तथा ।
यथाविभवविस्तारं ततो हस्त्यादिवाहनम् ॥ ११६ ।

आरुह्य धवलच्छत्रश्वेतचामरवीजितः ।
आचार्यचिह्नैरखिलैर्लक्षितो ब्राह्मणैस्सह ॥ ११७ ॥

रथयानेनाग्रहारं प्रादक्षिण्येन रथ्यया ।
गत्वा देवस्य सदनं प्रविशेत्स्वस्य धाम वा ॥ ११८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे मण्डलाराधनाचार्याभिषेकविधिर्नाम सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ॥

### महाभिषेकः ॥

ब्रह्मोवाच[1]—

राज्ञो राष्ट्रस्य मर्त्यानां यदभ्युदयसाधनम् ।
यच्चोत्पातप्रशमनं व्याधीनां चापनोदनम् ॥ १ ॥

यदभिप्रेतमखिलं साधयत्यविलम्बितम् ।
कुर्वतां भगवंस्तन्मे तदर्चनमनुत्तमम् ॥ २ ॥

कथ्यतां मयि चेदस्ति दया परमपूरुष ।
रहस्यमपि तन्मह्यमाख्येयं जगतो हितम् ॥ ३ ॥

श्रीभगवान् :—

महाभिषेको नामाग्र्यं स्नपनं [2]मम संमतम् ।
विषुवे सङ्क्रमे चैव ग्रहणे चायनद्वये ॥ ४ ॥

1. P$_2$ omits उवाच    2. कमलासन P$_1$



द्वादश्यां श्रवणे चैव तथा कर्तुस्त्रिजन्मसु ।
दिनत्रये व्यतीपाते रोहिण्यां च तिथित्रये ॥ ५ ॥

दर्शे च पौर्णमास्यां च पुनर्वस्वोर्विशेषतः ।
पञ्चम्यां शुभनक्षत्रे तिथिवारेषु चाब्जज ॥ ६ ॥

प्रयुज्यमानं सर्वार्थसाधनं सर्वशान्तिदम् ।
कर्तव्यं तत् त्रिधा ब्रह्मन्नुत्तमाधममध्यमम् ॥ ७ ॥

जात्युत्कर्षं धनोत्कर्षमथवावेक्ष्य तत्त्ववित् ।
प्रयुञ्जीतोत्तमं स्नानमितरेष्वितरद्भवेत् ॥ ८ ॥

पूर्वेद्युरङ्कुरन्यासो बद्ध्वा कौतुकमङ्गलम् ।
अधिवासश्च बिम्बस्य सद्यो वा सकलं भवेत् ॥ ९ ॥

स्नपनं प्रतिमायां स्यादधिवासश्चतुर्मुख ।
तीर्थप्रतिकृतौ वापि पूर्वालाभेऽ[1]धिवासयेत् ॥ १० ॥

यद्वोत्सवार्थप्रतिमां बलिबिम्बमथापि वा ।
बिम्बं कर्मार्थमथवा [2]असत्सु कुशकूर्चकम् ॥ ११ ॥

लेपमृन्मयभित्तिस्थ[3]पटस्थेषु च दर्पणम् ।
कूर्चं मूर्त्यन्तराभावे क्लृप्तिरेषा सनातनी ॥ १२ ॥

प्रासादस्याग्रतः कुर्यात्ततः स्नपनमण्टपम् ।
दशहस्तप्रविस्तारं द्विगुणेनायतं शुभम् ॥ १३ ॥

चतुर्द्वारं चतुर्दिक्षु चतुस्तोरणभूषितम् ।
सर्वावरण[4]भूष्वे[5]तद्दिक्षु सर्वासु वा भवेत् ॥ १४ ॥

1. अधिवासनम् A, P$_1$    2. तेष्वसत्सु च कूर्चकम् A, P$_1$    3. पद्मस्थेषु T
4. °भूष्वेव P$_2$, M$_2$    5. P$_2$ omits तद्

वल्लसे वा मण्टपे कुर्यादवकाशानुसारतः ।
विभज्य तत्त्रिधा कुर्यात्तृतीयेंऽशेऽथ पश्चिमे ॥ १५ ॥

अवलम्ब्य ब्रह्मसूत्रं चतुरश्रं समन्ततः ।
चतुर्हस्तां स्नानवेदिं हस्तोत्सेधां शिलादिभिः ॥ १६ ॥

उपानहादिसंयुक्तं दर्शनीयां सलक्षणाम् ।
उपरिष्टाच्च वलयं वृत्तं वा चतुरश्रकम् ॥ १७ ॥

प्रादेशेन [1]च विस्तीर्णं ततमष्टाङ्गुलेन वा ।
षडङ्गुलेन वा ब्रह्मन् चतुरङ्गुलमुन्नतम् ॥ १८ ॥

वेदिकोपरि तद्धाराकुल्यामाश्वभ्रमेदिनीम् ।
मृन्मयादिषु बिम्बेषु बहिर्वेदिप्रकल्पनम् ॥ १९ ॥

[2]एकबेरे तु न बहिस्स्नानवेदीप्रकल्पनम् ।
दुकूलक्षौमवसनैर्मण्टपं सर्वतोदिशम् ॥ २० ॥

शोभयेत्पूर्णकुम्भाद्यै[3]स्तोरणानि विभूषयेत् ।
वेष्टयेद्दर्भमालाभिर्मुक्तादामानि लम्बयेत् ॥ २१ ॥

आस्थानमण्टपे स्नानमथ चैवार्घमण्टपे ।
तोरणादि न कर्तव्यं गृहार्चायां तथैव च ॥ २२ ॥

नित्ये च स्नपने चापि कौतुकं चाङ्कुरार्पणम् ।
निशाचूर्णेन स्नपनमिष्यते मण्टपस्थले ॥ २३ ॥

गोमयाम्भोभि[4]रालिप्य सुधाचूर्णैश्च भूषयेत्[5] ।
दीपानारोपयेत्तत्र न्यसेदङ्कुरपालिकाम्[6] ॥ २४ ॥

1. प्र° $P_2$ 2. अयमर्धः $P_2$ कोशे दृश्यते । 3. तोरणैश्च $P_1$,$P_2$; तोरणाद्यैः T
4. आलिप्ते $P_2$ 5. शोभयेत् $P_2$ 6. °पालिकाः T, $P_1$, $P_2$



कोणे रौद्रे मण्टपस्य जलद्रोण्यादिभाजनम् ।
कल्पयेद्गालितस्वादु सुगन्धिजलपूरितम् ॥ २५ ॥

पवमानादिभिस्सूक्तैर्मन्त्रितं सापिधानकम् ।
वेदिदक्षिणतो भूमावुपस्नानाम्बुकल्पनम् ॥ २६ ॥

अर्घ्यादिदीपपर्यन्तं पूजाद्रव्याणि कल्पयेत् ।
चन्दनार्द्राणि सूत्राणि [1]चतुर्दश निपातयेत् ॥ २७ ॥

प्रागायतानि तावन्ति सूत्राण्येव चतुर्मुख ।
उदगायतानि सन्त्येवं कोष्ठान्येकोनसप्ततिः ॥ २८ ॥

शतं च तेषामायामं विस्तारं षोडशाङ्गुलम् ।
धान्यपीठानुरूपं वा कलशानां चतुर्मुख ॥ २९ ॥

दिक्ष्वष्टासु तथा मध्ये प्रत्येकं नवभूमिषु ।
नव कोष्ठानि कुम्भानां पदानि कमलासन ॥ ३० ॥

एवमेकाधिकाशीतिकोष्ठानि कलशास्पदम् ।
अन्यान्यष्टोत्तराशीतिरथ्यां संमृज्य कल्पयेत् ॥ ३१ ॥

व्रीहिभिः पीठिकां कुर्यात्कोष्ठभूषु पृथक्पृथक् ।
आढकेन तदर्धेन तदर्धार्धेन [2]वा भवेत् ॥ ३२ ॥

पीठिकाधान्यतुर्यांशास्तण्डुलाः पीठिकोपरि ।
तत्तुर्यांशास्तिलास्तेषां भवेयुरुपरि स्थिताः ॥ ३३ ॥

[3]द्वे द्वे कुशाग्रे [4]प्रत्यस्येत्पीठिकासु चतुर्मुख ।
[5]सौवर्णा राजतास्ताम्रा मृन्मया वा यथावसु ॥ ३४ ॥

1. चतुर्दिक्षु $M_1$ 2. भावयेत् A, $P_2$ 3. द्वौ द्वौ कुशाग्रौ T, $P_1$
4. प्रत्यस्य वीथिकासु $M_2$, $P_2$ 5. सौवर्ण° $P_2$

कलशा लक्षणोपेताः पक्वबिम्बफलोपमाः ।
अच्छिद्रास्स्वनवन्तश्च कालमण्डलवर्जिताः ॥ ३५ ॥

अभिन्ना मृन्मयाः कुम्भाः पाषाणस्फोटवर्जिताः ।
द्रव्यकुम्भा द्रोण[1]पूर्णास्त[2]दर्धार्धेन वाथवा ॥ ३६ ॥

[3]पादेन कलशाश्शिष्टाः पूर्या वार्धाढकेन तु ।
[4]प्रक्षाल्य विष्णुगायत्र्या द्रव्यकुम्भांस्तथेतरान् ॥ ३७ ॥

स्थापयित्वा करतले सव्येऽसव्येन पाणिना ।
इन्द्रं नत्वेति मन्त्रेण तन्तुना परिवेष्टयेत् ॥ ३८ ॥

तन्तुना वेष्टितानां स्यादन्तरालं यवान्तरम् ।
अर्धाङ्गुलान्तरालं स्याद्वैकाङ्गुलमन्तरम् ॥ ३९ ॥

कलशास्पदमेदिन्याः पश्चिमे धरणीतले ।
धान्यपीठं विधायास्मिन् कलशानधिवासयेत् ॥ ४० ॥

धान्यपीठे ततस्तस्मिन् कुशानास्तीर्य विश्वतः ।
प्रागग्रानुदगग्रांश्च तेषु कुम्भानधोमुखान् ॥ ४१ ॥

ओमित्युच्चार्य [5]विन्यस्येन्नवमूषु यथोत्तरम् ।
[6]न्यस्तानामपि कुम्भानामुपरिष्टाद्यथापुरम् ॥ ४२ ॥

दर्भांस्तृणीयादाचार्यो मन्त्रेण परमेष्ठिना ।
प्रोक्षयेदर्घ्यतोयेन प्राङ्मुखः पुरुषात्मना ॥ ४३ ॥

विश्वमन्त्रेण विकिरेदक्षतान्यधिवासिते ।
उत्तानितेषु कुम्भेषु निवृत्त्याह्वानविद्यया ॥ ४४ ॥

---

1. °पूर्याः $M_1$ 2. तदर्धेनाथवाथवा । $P_2$ 3. पादोनकलशाः T 4. अयमर्धः A कोशे नोपलभ्यते । 5. विन्यस्य नव° $P_2$ 6. नवानामपि A, $M_2$



[1]अस्थि रत्नं सिरा तन्तुर्मांसं मृत्स्ना प्रकीर्तिता[2] ।
शोणितं रक्तमृद्भिस्तु जलं मेदस्तथैव च ॥ ४५ ॥

कूर्चं [3]तु [4]शुक्रमित्युक्तं चर्मणाम्बरवेष्टनम् ।
तत्तत्प्रतिकृति[5]र्जीवं क्रमादेवं[6] स्मरेद् [7]द्विजः ॥ ४६ ॥

सर्पिषाष्टोत्तरशतं विष्णुगायत्रिया कृते ।
होमे हुताज्यशेषेण स्नपनद्रव्यसेचनम् ॥ ४७ ॥

घृतादिस्नपनद्रव्यैरस्त्र[8]पूतैः परिष्कृतैः ।
पूरयेत्कलशांस्तांस्तान् मन्त्रैः पूर्णान् समुद्धरेत् ॥ ४८ ॥

सर्वमन्त्रेण विश्वात्मन् [9]कुम्भान् सप्तदशोद्धतान् ।
द्रव्यकुम्भान्धान्यपीठे स्थापयेद्विष्णुपूर्वया ॥ ४९ ॥

गायत्र्या च चतुष्षष्टिं द्वादशाक्षरविद्यया ।
उदकुम्भान् क्रमेणान्यान् प्राङ्मुखो वाप्युदङ्मुखः ॥ ५० ॥

नवके मध्यमे स्थाने [10]स्थापनीये तु मध्यमे ।
घृतकुम्भं स्थापयित्वा पदे [11]सौत्रामणेस्ततः ॥ ५१ ॥

उष्णोदकुम्भं [12]विन्यस्येद्रत्नकुम्भमनन्तरे ।
फलकुम्भं यमपदे लोहकुम्भं [13]च नैर्ऋते ॥ ५२ ॥

प्राचेतसे मार्जनाम्भः कुम्भं गन्धांम्बुमारुते ।
अक्षताम्बु च कौबेरे पदे शार्वे यवोदकम् ॥ ५३ ॥

---

1. ४५, ४६ श्लोकद्वयं $P_1$ कोशे नोपलभ्यते । 2. प्रकीर्तितम् A, T, $P_2$ 3. वै $P_2$ 4. शुक्रम् $M_1$ 5. जीवः $P_2$ 6. क्रमादेवं $P_2$ 7. बुधः $P_2$ 8. वस्त्र° $M_1$ 9. कूर्चान् $M_2$ 10. स्थापनीयास्तु $P_2$ 11. सौत्रामणौ $P_2$ 12. विन्यस्य $P_2$ 13. तु $P_1$

प्राच्यां तु कुम्भनवके मध्ये पाद्यघटं [1]पदे ।
अर्घ्यकुम्भं पदे याम्ये पदे प्राचेतसे पुनः ॥ ५४ ॥

उपस्पर्शनपानीयं पञ्चगव्यमुदक्पदे ।
आग्नेयकुम्भनवके मध्ये दधिघटं पदे[2] ॥ ५५ ॥

नैर्ऋते मध्यतः क्षीरं [3]वायवीये घटं मधोः ।
कषायकुम्भमीशाने सर्वत्र परितो घटान् ॥ ५६ ॥

शुद्धोदकांश्चतुष्षष्टिमष्टावष्टौ निवेशयेत् ।
सप्तभिः पञ्चभिर्वापि यद्वा दर्भैस्त्रिभिः [4]कृतान् ॥ ५७ ॥

कूर्चान् कुम्भेष्ववागग्रान् निक्षिपेल्लक्षणान्वितान् ।
महाकुम्भे कुशैः कूर्चं चतुर्विंशतिभिः कृतम् ॥ ५८ ॥

चक्रमन्त्रेण तान् [5]सर्वान् शरावैरपिधापयेत् ।
वासोभिर्द्रव्यकलशान् 'युवा सुवास' इत्यृचा ॥ ५९ ॥

कण्ठेषु वेष्टयेदन्यान् वासोभिश्छादयेन्नवैः ।
अधीयानैस्त्रयीविद्यां विद्वद्भिर्ब्राह्मणैस्सह ॥ ६० ॥

ऋत्विग्भिस्सह देवस्य यायान्मन्त्रविदन्तिकम् ।
ऋत्विजो देवमुत्थाप्य गुरुश्चोत्तिष्ठविद्यया ॥ ६१ ॥

साम्ना रथन्तराख्येन ब्रह्मयाने गुरुः स्वयम् ।
स्थापयेदृत्विजैस्सार्धं ब्राह्मणैर्वेदपारगैः ॥ ६२ ॥

शिबिकायां स्थापयित्वा मृद्वास्तरणकल्पिते ।
निवेशयेयुः प्रतिमां स्नानवेदीतले [6]शुचौ ॥ ६३ ॥

1. न्यसेत् $M_2$, $P_2$ 2. न्यसेत् $P_1$, $P_2$ 3. वायव्ये घटमम्मयम् $M_1$
4. क्रमात् T 5. कुम्भान् $P_1$, $P_2$ 6. शुभे A, $P_2$



पुण्याहं वाचयेत् पश्चात्पञ्चकालपरायणैः ।
अयुग्मैस्तोषयेद्वित्तैस्तान् विभूत्यनुसारतः ॥ ६४ ॥

द्वारतोरणकुम्भादीन् समभ्यर्च्य यथापुरम् ।
द्वारेष्वध्ययनं नृत्तं वाद्यं गेयं प्रवर्तयेत् ॥ ६५ ॥

सर्पिषा जुहुयादग्नौ यावत् कलशसंख्यया ।
मूलमन्त्रेण जुहुयाच्चरुं पूर्वोक्तसंख्यया ॥ ६६ ॥

नृसूक्तेन समभ्यर्च्य कलशान् स्थापितान् गुरुः ।
अर्घ्यादिभिस्तथा देवं घृतारोपणमाचरेत् ॥ ६७ ॥[1]

दन्तकाष्ठं [2]तथा तैलं गन्धामलकवारि च ।
वस्त्रं दत्त्वा चोत्तरीयमर्घ्याद्यैरर्चयेत्पुनः ॥ ६८ ॥

दीपान्तमर्चनं कृत्वा पाद्यकुम्भमुखैर्घटैः ।
घृतकुम्भावसानैश्च स्नापये[3]द्देशिकः क्रमात् ॥ ६९ ॥

छित्त्वैकतन्तुमुद्धृत्य पाद्यकुम्भं समर्चितम् ।
पुष्पैर्द्वारकरतले देशिकेन्द्रस्य मूर्तिपः ॥ ७० ॥

कूर्चमादाय कुम्भस्थं [4]तद्धस्ते देशिकोत्तमः ।
[5]अर्वागग्रेण कूर्चेन तीर्थैर्ब्रह्मादिभिस्ततः ॥ ७१ ॥

[6]शुद्धैर्वैष्णवगायत्र्या स्नापयेत्पाद्यवारिभिः ।
तद्विष्णोरिति मन्त्रेण स्नापयेदर्घ्यवारिभिः ॥ ७२ ॥

न ते विष्णो इति श्रुत्या कुम्भेनाचमनाम्बुना ।
विष्णोः कर्मेति मन्त्रेण पञ्चगव्याभिषेचनम् ॥ ७३ ॥

1. एतदनन्तरं, 'सप्तधातूनि देवानां कुम्भेषु कलशेषु च। सर्वतः संस्मरेद् ब्रह्मन्नाचार्यस्त्वादनु प्रभोः ॥' इत्ययं श्लोकः A, $P_2$ कोशयोरधिको दृश्यते। 2. गन्धतैलं तथामलकवारि च $P_1$, $P_2$ 3. देशिकोत्तमः $P_1$, $P_2$ 4. स्वहस्ते $P_1$ 5. अवागग्रेण T, $P_2$ 6. शुभैः $P_1$

दधिक्राविष्णयजुषा दध्ना देवाभिषेचनम् ।
साम्ना पयोवृतेनैव पयसा मधुना पुनः ॥ ७४ ॥

मधुवातेति मन्त्रेण स्नपनं मधुविद्विषः ।
ओषध्य इति मन्त्रेण [1]कषायाम्भोभिषेचनम् ॥ ७५ ॥

तद्विष्णोरिति मन्त्रेण स्नानमुष्णाम्बुधारया ।
फलिनीत्यनुवाकेन स्नपनं फलवारिभिः ॥ ७६ ॥

शं नो देवीरिति स्नानं मन्त्रितैर्मार्जनाम्बुभिः ।
[2]सावित्र्याक्षतपाथोभिस्त्रातारमिति सामभिः ॥ ७७ ॥

रत्नोदकैर्लोहतोयैर्महाव्याहृतिविद्यया ।
गन्धद्वारेति मन्त्रेण स्नपनं गन्धवारिणा ॥ ७८ ॥

[3]शतधारेति मन्त्रेण स्नानं स्याद्यववारिभिः ।
[4]घृतस्नातेति मन्त्रेण घृतेन स्नपनं हरेः ॥ ७९ ॥

अथवा पौरुषैः सूक्तैः क्रमात्पाद्यादिवारिभिः ।
ऋग्भिष्षोडशभिः स्नानमृचेदं विष्णुरित्यपि ॥ ८० ॥

अष्टाक्षरेण[वा]यद्वा द्वादशाक्षरविद्यया ।
विष्णुगायत्रिया वापि स्नानं यद्वा चतुर्मुख ॥ ८१ ॥

स्वमूर्तिविद्यया वापि स्नपनं मधुविद्विषः ।
क्षालनं च घृतस्नाने सामान्यैरुष्णवारिभिः ॥ ८२ ॥

पाद्यादिद्रव्यकुम्भानामुद्धारेष्वन्तरान्तरा ।
शुद्धोदकुम्भैरन्यैश्च स्नानमष्टभिरष्टभिः ॥ ८३ ॥

---

1. कषायैरभिषेचयेत् $M_2$, A; कषायैरभिषेचनम् $M_1$ 2. 'सावित्र्याक्षततोयेन अग्नआयाहि मन्त्रतः । रत्नोदकैरिवेत्वेति लोहतोयेन सेचयेन् ॥' अयं श्लोकः $M_2$ कोशे दृश्यते । 3. शतधारेण $P_2$ 4. घृतेन स्नापयेद्देवं ततः शक्रमसीत्यृचा A



अष्टाक्षरेण मन्त्रेण भवेद्देवस्य पद्मज ।
उपस्नानं तथा श्लोतं वस्त्रं चैवोत्तरीयकम् ॥ ८४ ॥

अर्घ्यं पाद्यं तथाचामं [1]गन्धं पुष्पं च धूपकम् ।
दीपं चैतानि देयानि प्रतिद्रव्यघटाप्लवम् ॥ ८५ ॥

उद्धरेद् द्रव्यकलशान् विष्णुगायत्रिविद्यया ।
शुद्धोदकांश्च कलशान् द्वादशाक्षरविद्यया ॥ ८६ ॥

हरिद्रातण्डुलैस्स्वर्णचूर्णैः कुम्भान् ससूत्रकान् ।
पूरयेन्नव निर्दोषान् सप्त वा पञ्च वाथवा ॥ ८७ ॥

त्रीण्येककुम्भमथवा ते च स्थाप्याः परिव्यये ।
सापिधानेषु कुम्भेषु सकूर्चेषु समर्चयेत् ॥ ८८ ॥

श्रियं ; कुम्भान् समुद्धृत्य श्रीसूक्तेनाभिषेचयेत् ।
पूर्णाहुतिर्यथा होमे चूर्णैः स्नानं तथा भवेत् ॥ ८९ ॥

वासुदेवतनुभ्रष्टान् चूर्णान् परमपावनान् ।
ये वहन्ति शिरोभिस्ते[2] नरा निर्धूतकल्मषाः ॥ ९० ॥

ते यान्ति वैष्णवं[3] स्थानं पुनरावृत्तिवर्जितम्[4] ।
अभिषेकजलं विष्णोर्ये पिबन्ति वहन्ति [5]च ॥ ९१ ॥

ते सर्वतीर्थाभिषेकफलमश्नुवते महत् ।
कृत्वा प्रदक्षिणं नत्वा स्तुत्वा स्तोत्रैश्च देशिकः ॥ ९२ ॥

ततस्सहस्रधाराभिः स्नापयित्वा जनार्दनम् ।
नीराजनान्तमिष्ट्वैवं ततोऽलङ्कारविष्टरे ॥ ९३ ॥

---

1. फलं $M_2$ 2. तैः $P_2$ 3. परमं $P_2$ 4. ॰वर्जिताः $M_1$
5. वा $P_2$

यजेत मात्रादानान्तं मात्रा[1]संख्या परिव्यया ।
खारि द्रोणं तदर्धं वा देयास्स्युर्देशिकाय ते ॥ ९४ ॥

चतुर्विधानि चान्नानि भोजयेद्भोजनासने ।
होमान्तमर्चयेद्देवं देशिकेन्द्रो यथाविधि ॥ ९५ ॥

स्नपनान्ते ततो देवं सुखमासीनमासने ।
याचेत यजमानोऽपि सर्वमिष्टं जनार्दनम् ॥ ९६ ॥

दक्षिणां देशिकेन्द्राय सौवर्णशतनिष्ककाम् ।
तदर्धं पादमथवा दद्याद्वित्तानुसारतः ॥ ९७ ॥

कुर्यादाचार्यसात्सर्वं द्रव्यं पूजाङ्गमाहृतम् ।
वस्त्रादिकं तथान्येषां ऋत्विजां तुष्टिमावहेत् ॥ ९८ ॥

नृत्तगेयरतानां च तथा स्वाध्यायशालिनाम् ।
ब्राह्मणानां यथा तुष्टिः तथा [2]वित्तविसर्जनम् ॥ ९९ ॥

अधमोत्तम[3]मेवं च स्नपनं परिकीर्तितम् ।
कोणेषु [4]कुम्भान् द्वात्रिंशत् केवलोदकपूरितान्[5] ॥ १०० ॥

तैर्विहीनं भवेत् स्नानं ज्ञेयं [6]चाधममध्यमम् ।
शुद्धोदकुम्भैर्यद्धीनं सर्वैस्तदधमाधमम् ॥ १०१ ॥

पाद्यकुम्भे तथा चार्घ्ये तथोपस्पर्शनाम्भसि ।
कुम्भे कषायफलयोः कुम्भे चाक्षतगन्धयोः ॥ १०२ ॥

एकैकस्मिन् घटेष्वेषु द्रव्याणामष्टकं क्षिपेत् ।
पाद्यादिषु क्रमाद्द्रव्यं तत्प्रमाणं च कथ्यते ॥ १०३ ॥

---

1. °संज्ञा $M_1$  2. वित्तं विसर्जयेत् A  3. °एतत्तु T, $P_1$, $P_2$
4. कुम्भैः $P_2$  5. °पूरितैः $P_2$  6. त्वधम° $P_2$



तुलसी च तथा पद्मं दूर्वा च स्यात्तथाऽक्षतम् ।
श्यामाकं विष्णुपर्णं च बिल्वपत्राणि चन्दनम् ॥ १०४ ॥

[1]शिष्टानि मुष्टिमात्राणि तत्पलं चन्दनस्य च ।
सिद्धार्थमक्षतं चैव कुशाग्रं च तथा फलम् ॥ १०५ ॥

यवास्तिलाश्चन्दनं च प्रसवाश्च सुगन्धयः ।
फलं सुपक्वमेतेषु चन्दनं च त्रिनिष्ककम् ॥ १०६ ॥

शिष्टानि मुष्टिमात्राणि तक्कोलं [2]चम्पकस्य च ।
मुकुलं घनसारं च जातिरेलाफलानि च ॥ १०७ ॥

लवङ्गत्वक् चन्दनं च पुष्पाणि सुरभीणि च ।
फलार्धपरिमाणानि प्रत्येकं कमलासन ॥ १०८ ॥

शमीपलाशखदिरं बिल्वाश्वत्थ[3]विकङ्कतम् ।
औदुम्बरश्च न्यग्रोधश्शम्यादीनां [4]त्वचस्तथा ॥ १०९ ॥

प्रत्येकं पलमानास्स्युः कदलीबीजपूरकम् ।
आम्रमामलकं बिल्वं नालिकेरफलं[5] तथा ॥ ११० ॥

पनसं मातुलुङ्गं च भिन्नान्येतानि निक्षिपेत् ।
नीवारवेणुशालीनां प्रियङ्गुयवयोरपि ॥ १११ ॥

कङ्कुषाष्टिकयोश्चैव गोधूमस्य च तण्डुलाः ।
मुष्टिप्रमाणं विज्ञेयाः कुङ्कुमं कोष्ठचन्दने ॥ ११२ ॥

अगरूशीरमूलानि ह्रीबेरं गिरिसम्भवम् ।
मांसी मुरं च प्रत्येकं पलमात्राणि पद्मज ॥ ११३ ॥

---

1. द्रव्याणि चन्दनं मुक्त्वा मुष्टिमात्राणि तत्पलम् T, $P_1$ $P_2$  2. चन्दनस्य $P_2$
3. °विकङ्कताः $M_2$, $P_2$  4. त्वचः स्मृताः T, $P_2$  5. फलानि च $M_2$, $P_2$

माणिक्यं पद्मरागं च नीलं वज्रं च पुष्यकम् ।
प्रवालं मौक्तिकं चैव तथा मरकतं क्षिपेत् ॥ ११४ ॥

वैडूर्यं नवरत्नानि तानि रत्नघटोदके ।
सुवर्णं रजतं ताम्रं सीसकं त्रपुकं तथा ॥ ११५ ॥

कांस्यमायससारं च सप्तलोहघटोदके ।
प्रत्येकं निष्कमानानि; रजनी सूर्यवर्तिनी ॥ ११६ ॥

सहदेवी शिरीषं च सदाभद्रं कुशाग्रकम् ।
मार्जनानि षडेतानि मुष्टिमात्राणि निक्षिपेत् ॥ ११७ ॥

यवा वेणुयवाश्चैव व्रीहयश्चेति तत् त्रिकम् ।
यवोदके निधातव्यं प्रत्येकं कुडपं भवेत् ॥ ११८ ॥

पञ्चगव्यानि [1]सङ्गृह्य मृत्पात्रे नूतने शुभे ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च पञ्चमम् ॥ ११९ ॥

कपिलाया जराया वा पञ्चगव्यं प्रशस्यते ।
तयोरभावे त्वन्यासां गवां गव्यं विधीयते ॥ १२० ॥

नार्ताया न च गर्भिण्या न वृद्धायाः कदाचन ।
नावत्साया उपादेयं धेनोर्मूत्रं शकृद्द्वयम् ॥ १२१ ॥

भूमिष्ठं गोमयं ग्राह्यं सोष्णं कृम्याद्यदूषितम् ।
निष्पीड्य सम्यग्गृह्णीयाद्गोमयस्य रसं पुनः ॥ १२२ ॥

सद्यस्तप्तं घृतं शुद्धमहोरात्रोषितं दधि ।
क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम् ॥ १२३ ॥

1. गृह्णीयात् T, $P_1$, $P_2$



गोमूत्रं विष्णुगायत्र्या गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ १२४ ॥

घृतं शुक्रमसीत्येवं गव्यानि सह योजयेत् ।
विष्णुगायत्रिया यद्वा पञ्चोपनिषदैस्तु वा ॥ १२५ ॥

परमेष्ठी शकृन्मन्त्रे गोमूत्रस्य तु पुरुषः[1] ।
विश्वमन्त्रो भवेद्दध्नो निवृत्तिस्सर्पिषो भवेत् ॥ १२६ ॥

पयसस्सर्वमन्त्रः स्यात्सर्वेषामष्टवर्णकम् ।
[2]दधि द्विगुणमाघारात्पीयूषं त्रिगुणं ततः ॥ १२७ ॥

षड्गुणं मूत्रमेतस्माच्छकृद्वारि चतुर्गुणम् ।
स्नपने कथितं मानं प्रोक्षणे पञ्चकं समम् ॥ १२८ ॥

गोमयेन समं मूत्रं दधि स्याद् द्विगुणं ततः ।
ततश्चतुर्गुणं सर्पि[3]स्तस्मादष्टगुणं पयः ॥ १२९ ॥

प्राशने पञ्चगव्यानां प्रमाणमिदमीरितम् ।
द्रोणमानं पञ्चगव्यं घृतमानं च तत्समम्[4] ॥ १३० ॥

तादृगेव दधि क्षीरं [5]तादृगेव च माक्षिकम् ।
अर्धं वा स्यादाढकं वा न्यूनं चेद्रासुरं भवेत् ॥ १३१ ॥

गृहार्चास्नपने न्यूनं [6]प्रस्थेनैव प्रकल्पयेत् ।
पाद्ये द्रव्यान्तरालाभे दूर्वा चार्घ्येऽत्व[7]सर्षपः ॥ १३२ ॥

शस्तमाचमनीये तु तक्कोलं मार्जनाम्भसि ।
सहदेवीगन्धतोये चन्दनक्षोद इष्यते ॥ १३३ ॥

1. पूरुषम् $P_2$ 2. दध्नो द्विगुणमाघारः T, $P_1$ 3. ॰सर्पिषः $P_2$
4. तादृशम् $P_2$ 5. तावदेव $P_1$, $P_2$ 6. व्यस्तेनैव $M_1$ 7. ॰अथ॰ T, $P_1$

कषायतोये चाश्वत्थश्शीतमुष्णोदकेऽसति ।
रत्नोदके वज्रमेकं कदल्येका फलाम्भसि ॥ १३४ ॥

सुवर्णं लोहपानीये शालितण्डुलमक्षते ।
यवोदकघटे व्रीहिश्शस्यते कमलासन ॥ १३५ ॥

[1]अलाभे दधिनि क्षीरं [2]क्षीरालाभे भवेद्दधि ।
मधुन्यलाभे[3] सर्पींषि तदलाभे भवेन्मधु ॥ १३६ ॥

अलाभे पञ्चगव्यानां घृतमेवैकमिष्यते ।
पञ्चगव्येषु यस्य स्यादलाभस्तत्पदे घृतम् ॥ १३७ ॥

स्नपनं मध्यमं वक्ष्ये [4]यथा तदवधारय ।
मध्ये पूर्वोक्तकलशस्थापने विहिते सति ॥ १३८ ॥

द्वौ द्वौ बहिस्ततः पङ्क्तीस्संमृज्य कमलासन ।
परितो वीथिकाः[5] कुर्यात् बहिस्ताभ्यो घटास्पदम् ॥ १३९ ॥

[6]पञ्चाशतमथैकोनं कलशानां विनिक्षिपेत् ।
पूर्वादिषु प्रतिदिशं चतस्रष्वम्बुजासन ॥ १४० ॥

चत्वारो द्रव्यकलशास्तेषु शुद्धोदकाः परे ।
गुलोदकं चेक्षुरसं नालिकेरजलं तथा ॥ १४१ ॥

शान्तिवारि च पूर्वादौ क्रमान्न्यस्येच्चतुष्टयम् ।
गुलाभावे चेक्षुरसस्तदभावे[7] गुलोदकम् ॥ १४२ ॥

गुलमानं पलाशीतिरर्धमर्धार्धमेव वा ।
नालिकेरजलाभावे तत्स्थाने क्षीरमिष्यते ॥ १४३ ॥

---

1. अलब्धे $P_2$ 2. क्षीराभावे तु तद्दधि $P_1$, $P_2$ 3. मधुन्यलब्धे $P_2$
4. यथावदवधार्यताम् $M_2$, $P_2$ 5. वेदिकाः $M_2$ 6. पञ्चाशतमथैकोनकलशान् दिक्षु विनिक्षिपेत् $P_1$ 7. ०तस्याभावे T, $P_1$, $P_2$



तुलसीवेणुनीवारयवाश्च श्वेतसर्षपाः ।
तिलाश्च षट् शान्तिकुम्भे द्रव्याणि तुलसी भवेत् ॥ १४४ ॥

मुष्टिमात्रं द्रव्यमन्यत् पृथ[1]क्कुडुबसंमितम् ।
तुलसीदलमन्येषामलाभे ग्राह्यमिष्यते ॥ १४५ ॥

गुलोदकादिभिर्द्रव्यैस्स्नपने विहिते सति ।
पाद्यादिद्रव्यकलशैर्घृतान्तस्स्नापयेद्धरिम् ॥ १४६ ॥

मधुवातेति मन्त्रेण स्नपनं गुलवारिणा ।
मधु नक्तमिति स्नानमैक्षवेन रसेन च ॥ १४७ ॥

मधुमान्न इति स्नानं नालिकेराम्बुना पुनः ।
वेदाहमिति मन्त्रेण शान्तिद्रव्यघटाम्बुभिः ॥ १४८ ॥

जितं त इति शुद्धेन वारिणा स्नपनं हरेः ।
मध्यमोत्तममुद्दिष्टं मध्यमे मध्यमं पुनः ॥ १४९ ॥

चतुर्भिर्द्रव्यकलशैः स्नानं शुद्धोदकैर्विना ।
बहिष्षैर्देवदेवस्य मध्यमाधममाप्लवः ॥ १५० ॥

सर्वैरेव द्रव्यकुम्भैः सर्वैश्शुद्धोदकैर्विना ।
[2]उत्तमं स्नपनं वक्ष्ये यथावदव[3]धार्यताम् ॥ १५१ ॥

विदिक्षु दिक्षुवत् कुम्भाः स्थाप्याः पूर्वोक्त[4]संख्यया ।
तेषु च द्रव्यकलशाश्चत्वारोऽन्ये चतुर्मुख ॥ १५२ ॥

शुद्धोदकाः विदिश्यग्रेर्विन्यसेन्मङ्गलोदकम् ।
इन्द्रवल्ल्यङ्कुराश्वत्थपल्लवाश्च कुशेशयम् ॥ १५३ ॥

---

1. ०कुण्डाम्बु० $P_2$ 2. उत्तमस्नपनं $M_1$ 3. ०अवधारय $P_1$, $P_2$
4. ०वर्त्मना A

एकपत्राम्बुजं कुष्ठं कुङ्कुमं रोहिणद्रुमम् ।
पुण्यास्सुमनसश्चाष्टौ यूथिका मल्लिकापि वा[1] ॥ १५४ ॥

त्रीण्युत्पलानि जातिश्च चम्पकं केतकी तथा ।
द्रव्याणि मङ्गलानीति प्रास्येन्मङ्गलपाथसि ॥ १५५ ॥

अङ्कुरद्वयमेकैकमेकपत्रं च पङ्कजम् ।
मुष्टिमात्रं सुमनसश्चैकैकं चन्दनादिकम् ॥ १५६ ॥

[2]पलत्रयं पृथक्कुम्भे नैरृते सकलौषधीः ।
मांसी कुष्ठं हरिद्रे द्वे मुरा शैलेयचम्पके ॥ १५७ ॥

मुस्ता वचा च कर्पूरं प्रत्येकं [3]फलसंमितम् ।
पिष्ट्वा सर्वौषधिघटे निक्षिपेत्कमलासन ॥ १५८ ॥

[4]वायव्ये सर्वगन्धद्रव्याणां क्षेपणं घटे ।
कर्पूरं कुङ्कुमं कुष्ठं मांसी मलयजं मुरम् ॥ १५९ ॥

प्रियङ्गु केसरं मुस्ता तमालं नागकेसरम् ।
मूलद्वयं च कच्चोरं सुरपर्णिककेसरम् ॥ १६० ॥

उशीरं तगरं लोध्रं तथैव हरिचन्दनम् ।
अगरुद्वयं सितं कुष्ठं कालेयं ग्रन्थिपल्लवम् ॥ १६१ ॥

मुकुलं चम्पकस्येति प्रत्येकं [5]फलसंमितम् ।
[6]चूर्णीकृत्य समस्तं [7]तन्न्यसेद्गन्धोदके घटे ॥ १६२ ॥

मूलौषधिघटे शार्वे मूलौषधिसमर्पणम् ।
व्याघ्री [8]शिवा बला चाग्निश्शतपुंखा शतावरी ॥ १६३ ॥

1. च T, $P_1$, $P_2$  2. फलं पृथक् T, $P_1$, $P_2$  3. पलसंमितम् $M_1$
4. वायवीये T, $P_1$, $P_2$  5. पलसंमितम् $M_1$  6. चूर्णीकृतं $P_2$
7. च न्यसेत्° $P_2$  8. सिंही T, $P_1$, $P_2$

बिल्वमूलं वचा [1]चूर्णी [2]पोरण्डं शतमूलिका ।
प्रत्येकं पलमानास्स्युः [3]पिष्ट्वा कुम्भे विनिक्षिपेत् ॥ १६४ ॥

मङ्गलोदकवस्तूनामलाभे चन्दनं वरम् ।
सर्वौषधीनामेतासामलाभे कुष्ठमिष्यते ॥ १६५ ॥

अलाभे सर्वगन्धानां शस्यते चन्दनं वरम् ।
मूलौषधीनां सर्वासामलाभे शस्यते बला ॥ १६६ ॥

[4]अधिदैवं समभ्यर्च्य उद्धृत्य स्नापयेत्क्रमात् ।
पूर्वादिदिक्षु प्रथममाग्नेयादि ततः परम् ॥ १६७ ॥

विष्णोर्नुकमिति प्रोच्य स्नापयेन्मङ्गलाम्भसा ।
ओषध्य इति मन्त्रेण सर्वौषधिजलेन च ॥ १६८ ॥

नारायणानुवाकेन सर्वगन्धाम्बुभिर्हरिम् ।
या ओषधीति मन्त्रेण मूलौषधिजलैस्ततः ॥ १६९ ॥

[5]अत्र शुद्धोदकैस्स्नायाद्विद्ययाष्टाक्षरात्मना ।
पाद्यपूर्वं घृतान्तं च [6]स्नायाद्देवं यथापुरम् ॥ १७० ॥

उत्तमोत्तममे[7]तच्च स्नपनं परिकीर्तितम् ।
अर्धशुद्धोदकैर्हीनं भवेदुत्तममध्यमम् ॥ १७१ ॥

सर्वशुद्धोदकैर्हीनमुत्तमाधममुच्यते ।
विंशतिः पञ्च च ब्रह्मन् संक्षेपे कलशा मताः ॥ १७२ ॥

चतुश्शतं च विस्तारे [8]सप्ततिश्च त्रिरुत्तरा ।
द्रव्याणामथ सर्वेषां कथयाम्यधिदेवताः ॥ १७३ ॥

1. शुण्ठी T, $P_1$, $P_2$  2. कोरण्डं T, $P_1$, $P_2$  3. पुष्पकुम्भे $M_2$, $P_2$
4. अधिदेवान् T  5. अथ T  6. स्नानं देवे $P_1$, $P_2$  7. °एतत्तु T, $P_1$, $P_2$  8. सप्ततिश्च त्रिरुत्तरम् T, $P_1$, $P_2$

घृतस्य [1]परमात्मा च वासुदेवोऽपि[2]देवता ।
उष्णोदकुम्भे पुरुषस्सत्यस्स्यात्तु फलोदके ॥ १७४ ॥

अच्युतो मार्जने दैवमनन्तश्चाक्षतोदके ।
रत्नोदके केशवस्स्याल्लोहे नारायणस्स्मृतः ॥ १७५ ॥

गन्धोदके माधवस्स्याद् गोविन्दस्स्याद्यवोदके ।
पाद्योदके भवेद्विष्णुरर्घ्ये च मधुसूदनः ॥ १७६ ॥

त्रिविक्रमस्तथाचामे पञ्चगव्येषु वामनः ।
दधनि श्रीधरो देवो हृषीकेशः पयस्यपि ॥ १७७ ॥

मधुनः पद्मनाभस्स्याद्दामोदरः कषायके ।
गुलोदके वराहः स्यान्नृसिंहश्चैक्षवोदके ॥ १७८ ॥

श्रीधरो नालिकेरस्य हयास्यः शान्तिवारिणः ।
वासुदेवो मङ्गलस्य कुम्भस्य कमलासन ॥ १७९ ॥

सर्वौषध्यम्बुकलशे देवस्सङ्कर्षणस्स्मृतः ।
प्रद्युम्नस्सर्वगन्धस्य मूलौषध्योऽनिरुद्धकः ॥ १८० ॥

मूर्तिरेतेषु कुम्भेषु साङ्गं पीठं समर्चयेत् ।
[3]शुद्धोदकेषु [4]सर्वेषु नारायणसमर्चनम् ॥ १८१ ॥

धान्यानां कलशानां च देवता स्याद्वसुन्धरा ।
कूर्चानां दैवतं चास्त्रं चक्रिकाणां सुदर्शनम् ॥ १८२ ॥

[5]वाससां दैवतं विष्णुस्सर्वेषां वा जनार्दनः ।
इत्येवं स्नपनं प्रोक्तं नवधा तव पद्मज ॥ १८३ ॥

---

1. परमात्मा स्यात् $P_2$ 2. °दैवतम् $P_2$ 3. गन्धोदकेषु $M_2$
4. सर्वत्र $M_1$ 5. वाससो $P_1$, $P_2$



एषाम[1]न्यतमं कुर्यात्स्नानं वित्तानुसारतः ।
पञ्चम्यां स्नपनं विष्णोर्यथोक्तं[2] फलमश्नुते ॥ १८४ ॥

त्रिजन्मर्क्षे दशगुणं श्रवणे द्विगुणं भवेत् ।
त्रिगुणं शशिनः [3]प्रोक्तं क्षये शतगुणं भवेत् ॥ १८५ ॥

चतुर्गुणं तु[4] द्वादश्यां त्रिगुणं तारकात्रये ।
सङ्क्रान्त्यां षड्गुणं [5]विद्याद्विषुवे [6]त्रिगुणं भवेत् ॥ १८६ ॥

अयने दक्षिणे स्नानमेकं शतगुणं भवेत् ।
अयनेऽन्यत्र विहिते [7]सहस्रगुणमाप्लवे[8] ॥ १८७ ॥

विधौ विधुन्तुदग्रस्ते स्नानं त्रिंशद्गुणं हरेः ।
सूर्ये शतसहस्रं तु युगान्ते कोटिसंमितम् ॥ १८८ ॥

अनन्तं स्याद्व्यतीपाते कालेष्वेतेषु पूजनम् ।
अनन्तरोक्तफलदं कल्पते चतुरानन ॥ १८९ ॥

अष्टोत्तरेण कुम्भानां शतेन कमलासन ।
स्नपनं कथ्यते विष्णोर्यथावदवधार्यताम् ॥ १९० ॥

ब्राह्मदिव्यमानुषेषु भागेषु त्रिषु भागयोः ।
आद्ययोः स्फालयेत्सूत्राण्ये[9]कादश पृथक् क्षितौ ॥ १९१ ॥

प्रागायतानि तिर्यक् च तत्र[10] मध्ये विदिक्षु च ।
चत्वारि चत्वार्यष्टसु कुम्भस्थानानि वीथिकाः[11] ॥ १९२ ॥

---

1. °अन्यतमं तु स्यात् T; °अन्यतमेन स्यात् $P_1$, $P_2$ 2. यथोक्तफलं $P_2$
3. पूर्तौ $M_1$ 4. स्यात् T, $P_1$, $P_2$ 5. चैव $P_1$, $P_2$; विद्धि $M_2$
6. द्विगुणं T 7. सहस्रगुणः $P_2$ 8. आप्लवः $P_2$ 9. सप्तदश T, $M_2$
10. दिक्षु $M_2$, $P_1$ 11. पद्मज $M_2$

अन्यानि कुर्यादेवं च षट्त्रिंशत्कोष्ठकं भवेत् ।
तत्र कुम्भांस्तोयपूर्णान्विन्यसेन्मानुषे पुनः[1] ॥ १९३ ॥

भागे नव नवांशासु कुम्भानष्टौ[2] समुद्धरेत ।
अष्टोत्तरशतं कुम्भास्सम्पद्यन्ते तथा सति ॥ १९४ ॥

ब्राह्मे तु मध्यमे स्थाने कलशानां चतुष्टये ।
एकस्मिन् द्रव्यमाघारं शिष्टं शुद्धोदकं त्रिकम् ॥ १९५ ॥

दिव्ये तु भागे प्राचीने कलशानां चतुष्टये ।
एकस्मिन्नुष्णमुदकं दिश्यग्ने रत्न[3]शम्बरम् ॥ १९६ ॥

याम्ये फलोदकं लोहं नैर्ऋत्यामथ वारुणे ।
मार्जनं वायुभागे तु गन्धतोयमुदग्दिशि ॥ १९७ ॥

अक्षतोदकमीशाने यवाम्भः कथिता नव ।
द्रव्यकुम्भा बहिर्भागे मानुषे पूर्ववद्भवेत्[4] ॥ १९८ ॥

पाद्यादिद्रव्यकलशाः पूर्वादिषु यथोदिताः ।
कल्पनीया यथापूर्वमुद्धृत्य स्नापयेत् क्रमात् ॥ १९९ ॥

कुम्भैरेकोनपञ्चाशकलशैरन्यदीर्यते ।
चन्दनार्द्राणि सूत्राणि दश प्रागायतानि च ॥ २०० ॥

तथोदगायतानि स्युः [5]स्फाल्यानि कमलासन ।
मध्ये नवसु कोष्ठेषु विन्यसेत्कलशान्नव ॥ २०१ ॥

दिक्षु प्रतिदिशं कुम्भान् षट्सु कोष्ठेषु तावतः ।
विन्यसेच्चतुरः कुम्भान्विदिक्ष्वपि पृथक्पृथक् ॥ २०२ ॥

1. पदे T, $P_1$, $P_2$ 2. ॰अष्टसु कल्पयेत् 3. ॰संयुतम् T, $P_1$, $M_2$
4. ॰पदे $P_1$, $P_2$ 5. स्थाप्यानि T, $P_1$



वीथयोऽन्यानि कोष्ठानि द्रव्याणि च यथापुरम् ।
कुम्भानां पञ्चविंशत्या स्नानमन्यदुदीर्यते ॥ २०३ ॥

पूर्ववद्दश सूत्राणि स्फालयित्वा भुवःस्थले ।
मध्ये नवसु कोष्ठेषु नवकुम्भान् प्रकल्पयेत् ॥ २०४ ॥

प्रागादिदिक्षु प्रत्येकं कलशांस्त्रीन् प्रकल्पयेत् ।
आग्नेयादिषु कुम्भानां कोणेष्वेकैककल्पनम् ॥ २०५ ॥

द्वौ द्वौ पूर्वादिषु घटौ पार्श्वतः केवलोदकौ ।
अष्टौ तान्वर्जयित्वान्ये द्रव्यकुम्भा यथोदिताः ॥ २०६ ॥

मध्यमे कुम्भनवके यथोक्तद्रव्यपूरणम् ।
गन्धद्रव्यैः पूरयेद्वा कलशान् पञ्चविंशतिम् ॥ २०७ ॥

चन्दनागरुकाश्मीरकुष्ठातगरवीरणैः ।
[1]असितागरुणा चापि हरिचन्दनवारिणा ॥ २०८ ॥

[2]ह्रीवेरकर्दमेनापि [3]नवमेन घटान्नव ।
मध्यादीशानपर्यन्तं पूरयेत्कमलासन ॥ २०९ ॥

तमालसित[4]मुस्ताभ्यां सुरपर्णीरजःकणैः ।
कर्पूरनागसुमनोमुस्ताचम्पककुड्मलैः ॥ २१० ॥

प्रियङ्गुपुष्पकालेयग्रन्थिपल्लवबीजकैः ।
मांसीखर्जूरशैलेयह्रीबेरैश्च सुरद्रुमैः ॥ २११ ॥

मुरेण तैर्यथायोगं बहिष्ठानपि षोडश ।
हित्वा बहिर्विदि[5]क्कुम्भान् यद्वान्यैस्स्नापयेद्धरिम् ॥ २१२ ॥

1. इत आरभ्य चत्वारः श्लोकाः A कोशे नोपलभ्यते । 2. श्री॰ $M_1$
3. नवकेन $M_1$ 4. ॰कुष्ठाभ्यां T, $P_1$, $P_2$ 5. वीथि॰ T

स्फालयेन्नव[1] सूत्राणि यथापूर्वं भुवःस्थले ।
ब्राह्मे स्थाने चतुष्कोष्ठे विन्यसेच्चतुरो घटान् ॥ २१३ ॥

द्वौ द्वौ स्यातां च पूर्वादिदिक्ष्वेकैकं विदिक्षु च ।
रत्नं लोहं तथा गन्धमाधारं च यथाक्रमम् ॥ २१४ ॥

द्रव्याणि कुम्भेष्वाग्नेयकोणादिस्थेष्वनुक्रमात् ।
बहिरैन्द्रपदे कोष्ठे द्वयोः कलशयोर्यथा ॥ २१५ ॥

पाद्यमर्घ्यं [2]तथाग्नेयकोणे दधिघटो भवेत् ।
याम्ये चाचमनीयं प्राक् पञ्चगव्यं तु पश्चिमे ॥ २१६ ॥

कोणे तु नैर्ऋते क्षीरं पश्चिमे तु [3]घटद्वये ।
दक्षिणेऽक्षतमन्यत्र मार्जनाम्भस्तथानिले ॥ २१७ ॥

कोणे मधु तथा सौम्ये कषायं च कुशोदकम् ।
यवोदकं शार्वकोणे [4]द्रव्यैः पाद्यादिभिः क्रमात् ॥ २१८ ॥

ऋग्भिष्षोडशभिस्सूक्तैः पौरुषैः स्नापयेद्धरिम् ।
कुम्भैर्द्वादशभिर्वापि चतुर्भि[5]र्मध्यतस्स्थितैः ॥ २१९ ॥

रत्नेन लोहेन तथा सर्वगन्धेन सर्पिषा ।
पूरितैर्बहिरिन्द्रादिकोष्ठस्थैरष्टभिर्घटैः ॥ २२० ॥

प्राचीमारभ्य पाद्येन दध्यर्घ्यक्षीरपूरितैः ।
तथैवाचमनीयेन मधुना पञ्चगव्यकैः ॥ २२१ ॥

फलोदकेन यद्वान्यैर्द्रव्यैर्द्वादशसंमितैः ।
मध्येऽग्निकोणे [6]कोष्ठेन नैर्ऋते वरुणानिले ॥ २२२ ॥

1. सप्त° T, $M_2$ 2. अथ° $M_1$ 3. घटद्वयम् $M_2$, $P_1$
4. पाद्यद्रव्यादिभिः $M_2$ 5. मध्यमस्थितैः $P_2$ 6. कुष्ठेन $M_1$



ग्रन्थिपल्लवबीजेन शार्वे मलयजाम्भसा ।
बहिःक्रमेण पूर्वादिदिक्ष्वष्टासु चतुर्मुख ॥ २२३ ॥

काश्मीरजेन मांस्या च तमालेन मुरेण च ।
मूलेन पर्वतोत्थेन सुरपर्णीरजःकणैः ॥ २२४ ॥

चम्पकप्रसवक्षोदैः खर्जूरेण प्रपूरितैः ।
कलशैः स्नापयेद्देवं नवभिर्वा विधेः पदे ॥ २२५ ॥

प्रागादिदिक्षु चाष्टासु क्रमेणाज्येन वस्तुना ।
[1]पाद्येन च तथार्घ्येण क्षीरेणाचम[2]नाम्भसा ॥ २२६ ॥

मधुना पञ्चगव्येन फलेन परिपूरितैः[3] ।
रत्नैर्वा नवभिः पूर्णैः कुम्भैर्नवभिराप्लवः ॥ २२७ ॥

पञ्चभिर्वा घटैर्मध्ये दिक्षु [4]पूर्वादिषु स्थितैः ।
मणिभिश्च प्रवालैश्च[5] मुक्ताभिः पूरितैः क्रमात् ॥ २२८ ॥

वज्रैर्वैडूर्य[6]शकलैः लोहैर्वा पञ्चभिश्शुभैः ।
पञ्चामृतैर्वा मधुना गुलेनाज्येन [7]पूरितैः ॥ २२९ ॥

दध्ना च पयसा यद्वा पञ्चगव्यैः क्रमाद्भवेत् ।
एकेन वा हरेस्स्नानं द्रव्यैः पूर्वोदितैः भवेत्[8] ॥ २३० ॥

व्यस्तैस्समस्तैर्वा [9]वित्तदेशकालानुसारतः ।
देया च दक्षिणा स्वर्णनिष्काः कलशसंमिताः ॥ २३१ ॥

1. पाद्येन दध्ना चार्घ्येण T, $P_1$ 2. °अम्बुना $P_1$, $P_2$ 3. फलेनापि च पूरितैः T, $P_1$, $P_2$ 4. प्रागादिषु $P_1$, $P_2$ 5. °वा $P_2$ 6. °कलशैः $M_1$
7. पूरयेत् $P_1$, $P_2$, $M_2$ 8. क्रमात् $M_1$ 9. वित्तं $P_1$

अर्धं पादं तदर्धं वा यथावित्तानुसारतः ।
स्नपनं दक्षिणाहीनं निष्फलं फलकामिनः ॥
कर्तुस्तस्मा[1]द्दक्षिणेयं देयाऽप्यापि फलार्थिभिः ॥ २३२ ॥

इति श्रीपाञ्चरात्रे महोपनिष[दि] पाद्मे तन्त्रे
चर्यापादे महाभिषेको नामाष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ॥

### सहस्रकलशाभिषेकविधिः ॥

ब्रह्मा[2]:—

नियुक्तोऽहं प्रजासृष्टौ त्वया कैटभसूदन ।
मुह्यामि च प्रजाः स्रष्टुं कथं कर्तव्यमित्यहम् ॥ १ ॥

श्रीभगवानुवाच[3] :—

देवराज्यात्परिभ्रष्टो देवेन्द्रो ब्रह्महत्यया ।
मां समाराध्य विधिना प्राप्तवानात्मनः पदम् ॥ २ ॥

एवमन्ये च राजानो ममाराधनमुत्तमम् ।
कृत्वा निर्धूय पापानि पातकानि महान्त्यपि ॥ ३ ॥

प्रापुर्लोकान् सुदुष्प्रापानिष्टानत्ययवर्जितान् ।
एकोत्तरेण [4]कलशसहस्रेणाभिषेचनम् ॥ ४ ॥

पवित्रवस्तुसहितैः पवित्रजलपूरितैः ।
आराधनं मम ब्रह्मन् प्रीणनं परमं मतम् ॥ ५ ॥

---

1. दक्षिणा च $M_2$, $P_1$, $P_2$ 2. $M_1$ adds उवाच 3. $M_1$ omits उवाच
4. कलशैः $P_1$, $P_2$, T



पापापनोदनैकान्तं सर्वाभ्युदयसाधनम् ।
प्रजानामपि राष्ट्रस्य राज्ञश्चायुर्विवर्धनम् ॥ ६ ॥

अनुष्ठितं पुत्रकामैस्तथा विजयकाङ्क्षिभिः ।
दुर्भिक्षदुर्निमित्तादिघोराणां शमनं परम् ॥ ७ ॥

सर्वसम्पत्करं सर्वपुरुषार्थैकसाधनम् ।
आराधनेन तेन त्वं मामाराध्य यथाविधि ॥ ८ ॥

ब्रह्मा :—

निर्मुक्तमोहो निष्पापः प्रजास्त्वं स्रष्टुमीशिषे ।
सहस्रकलश[1]स्नानविधिः कीदृकथं भवेत् ॥ ९ ॥

पवित्राणि च वस्तूनि कानि, [2]को हि भवेत् क्रमः ।
स्थापनं कलशानां च[3] को वा स्थापक इष्यते ॥ १० ॥

श्रीभगवान् :—

द्वात्रिंशद्धस्त[4]विस्तारं द्विगुणेनायतं शुभम् ।
कलशास्पद[5]भूभागे वैपुल्यानुगुणं महत् ॥ ११ ॥

मण्टपं कल्पयित्वा तु[6] द्वाराणि च [7]यथापुरम् ।
कलशस्थापनाभूमिं पञ्चविंशतिधा समम् ॥ १२ ॥

विभज्य सूत्र[8]पातेन मध्यमे ब्रह्मणः पदे ।
एकाशीतिघटास्स्थाप्या दिव्ये तु तदनन्तरे ॥ १३ ॥

भागे प्रत्येकमाशासु पूर्वादिचतसृष्वपि ।
एकाशीतिघटाः स्थाप्याः [9]कोणानां च चतुष्टये ॥ १४ ॥

---

1. °स्नानं कीदृक्को वा तस्य विधिर्भवेत् $M_2$ 2. को वा विधेः क्रमः $P_1$, $P_2$, T
3. °वा $P_1$,T 4. °विस्तीर्णं $M_2$ 5. °भूभागं $P_1$,T 6. °अन्यद्वाराणि $P_1$,$P_2$,T
7. यथाविधि $P_2$ 8. °मार्गेण $P_1$, $P_2$ 9. कोणेऽपि च $P_1$, $P_2$ ; कोणेषु च T

[1]ऊना चैकोनपञ्चाशत् प्रत्येकं मानुषे पुनः ।
भागे षोडशदिक्षु स्यात्प्रत्येकं पञ्चविंशतिः ॥ १५ ॥

वीथिकाश्च यथायोगं कल्पनीयाः पदे पदे ।
ब्राह्मे भागे तु नवके मध्यमे [2]मध्यमे घटे ॥ १६ ॥

[3]सर्वलोहानि रत्नानि सर्वाणि च फलानि च ।
सर्वौषधीश्च सर्वांश्च गन्धचूर्णांश्च निक्षिपेत् ॥ १७ ॥

श्रीवत्साद्याः प्रतिकृतीः कृत्वा निष्कप्रमाणिकाः ।
[4]स्वर्णं ताम्रं च रजतं केवलं चैव निक्षिपेत् ॥ १८ ॥

श्रीवत्सं वनमालां च शंखं चक्रं गदां तथा ।
[5]पद्मं खड्गं तथा शार्ङ्गमष्टौ चिह्नानि शार्ङ्गिणः ॥ १९ ॥

वासोभ्यां वेष्टिते कुम्भे वासुदेवं समर्चयेत् ।
ब्राह्म एव च भूभागे परितो नवकोष्ठके ॥ २० ॥

प्राचीनकुम्भनवके मध्यमे कलशे क्षिपेत् ।
सूर्यकान्तं पद्मरागं पुरुषस्तस्य देवता ॥ २१ ॥

[6]नवकानां तथान्येषां क्रमाद्द्रव्यं च देवताः ।
कुम्भस्य वक्ष्यते ब्रह्मन् मध्यमस्य पृथक्पृथक् ॥ २२ ॥

वैडूर्यमिन्दुकान्तं च द्रव्यं [7]द्रव्यं च देवता ।
वासुदेवश्चेन्द्रनीलोऽप्ययस्कान्तश्च तद् द्रव्यम् ॥ २३ ॥

---

1. स्थाप्यास्चैकोन॰ $P_1$, $P_2$ 2. च महाघटे A, $M_2$, $P_1$ 3. सूर्यकान्तं पद्मरागं पुरुषस्तस्य देवता । अयमर्धः $M_1$ कोशेऽधिकतया दृश्यते, २१ तमे श्लोकेऽप्युत्तरार्धे दृश्यते । 4. सुवर्णताम्ररजतैः केवला वा विनिक्षिपेत् $M_2$ 5. पद्मं शार्ङ्गं तथा खड्गं $P_1$, $P_2$ 6. नवानाश्च A 7. द्रव्यस्य देवता $M_2$



देवता सत्यमूर्तिः स्यात्प्रवालो वस्तु गारुडम् ।
सङ्कर्षणो देवता स्यात्पुष्पकं स्फटिकद्वयम् ॥ २४ ॥

द्रव्यं देवोऽच्युतः, पद्मरागः कनकमेव च ।
प्रद्युम्नो देवता तस्य वज्रं रजतमेव च ॥ २५ ॥

अनन्तो देवता तस्य ताम्रं मुक्ता च वस्तुनि ।
देवता चानिरुद्धस्स्यात्सर्वकुम्भेषु मौक्तिकम् ॥ २६ ॥

दिव्ये भागे दिशि प्राच्यामेकाशीतिघटास्पदे ।
नवके मध्यमे मध्यकलशे कदलीफलम् ॥ २७ ॥

पनसाम्रं मातुलुङ्गं हव्यजम्बुककेसराः ।
बदराणि च तत्त्वात्मा देवता तस्य कथ्यते ॥ २८ ॥

देवता द्रव्यमन्यत्र नवकेष्वष्टसूच्यते ।
[1]क्रमान्मध्यघटे द्रव्यं मातुलुङ्गं सदाडिमम् ॥ २९ ॥

पृथिवी देवता तस्य, जम्बूनारङ्गमेव च ।
देवताऽपामधिष्ठात्री, तक्कोलैलाफलद्वयम् ॥ ३० ॥

तेजस्वी पुरुषो देवः, क्षीरिकामलकद्वयम् ।
द्रव्यं देवो जगत्प्राणो द्राक्षाखर्जूरजं फलम् ॥ ३१ ॥

द्रव्यं विष्णुपदं देवश्चूतं पारावतान्वितम् ।
[2]देवो मनः, फलं क्षुद्रपनसं वस्तु, देवता ॥ ३२ ॥

[3]अहङ्कारं, फलं बिल्वकदल्योर्वस्तु, देवता ।
बुद्धिस्सर्वेषु कुम्भेषु बदराणि च निक्षिपेत् ॥ ३३ ॥

---

1. ॰मध्यगते T; मध्ये घटे $P_2$ 2. वासुदेवो मनः क्षुद्रपनसस्तु स देवता $M_2$
3. अहङ्कारः $P_1$, T; अहङ्कारफलं $P_2$

अष्टाक्षरेण मन्त्रेण पञ्चोपनिषदा पुनः ।
कुम्भानामपि सर्वेषामभिमन्त्रणमिष्यते ॥ ३४ ॥

[1]एकाशीतिघटे याम्ये मध्ये नवकमध्यमे ।
उशीरं कुङ्कुमं कुष्ठं मांसी मलयजं मुरम् ॥ ३५ ॥

ह्रीबेरमगरुं पिष्ट्वा कुम्भे तत्र विनिक्षिपेत् ।
त्रैलोक्यमोहनं देवमर्चयेन्मन्त्रवित्तमः ॥ ३६ ॥

[2]नवकेषु तथाऽन्येषु प्राच्यादिषु यथाक्रमम् ।
जलजो वीरणीमूलं, बभ्रुर्देवस्सभाज्यते ॥ ३७ ॥

कर्पूरकाश्मीरमुभौ द्रव्यं, शौरिश्च देवता ।
चम्पकं मुकुलं मांसी दाशार्हश्चाधिदेवता ॥ ३८ ॥

चन्दनं चन्दनं रक्तमन्नाधिपतिरच्युतः ।
सूरपर्णीरजो मूरं कर्दमो वस्तु, देवता ॥ ३९ ॥

वैकुण्ठी गिरिजं मूलं प्रियङ्ग्वाश्च रजःकणाः ।
पुरुषोत्तमदैवत्यं कुष्ठे द्वे द्रव्यमुच्यते ॥ ४० ॥

मुकुन्दः कृष्णधवलो वक्ररूपी वृषाकपिः ।
तमालपत्रं सर्वेषु निक्षिपेत्पुरुषात्मना ॥ ४१ ॥

पवमानादिभिर्मन्त्रैर्मन्त्रयेत्तान् सकृत्सकृत् ।
[3]प्रत्येकं गन्धवस्तूनि कलान्यष्टौ यथोदितम् । ४२ ।

[4]एकाशीतिघटग्रामे वारुणे ब्रह्मणः पदे ।
घटे वापिसरित्कूप[5]ह्रदवृष्टिहिमापगाः ॥ ४३ ॥

---

1. अयमर्धः $P_2$ कोशे नोपलभ्यते । ४१ तमे श्लोके उत्तरार्धे उपलभ्यते च । 2. नवकोष्ठे T 3. उत्तरार्धो $M_1$ कोशे न दृश्यते । 4. श्लोकार्धोऽयं $M_1$ कोशे ३५ तमे श्लोके पूर्वार्धतयोपलब्धोऽत्र पुनरुपलभ्यते । 5. ०ह्रदानां तीर्थमेव वा $M_2$, $P_1$



पत्युः पाथांसि चाहृत्य तटाकेषु च निक्षिपेत् ।
नवकानामथान्येषामष्टानां मध्यमे घटे ॥ ४४ ॥

पूर्वोक्तान्येव वाप्यादिनीराणि [1]क्रमशः क्षिपेत् ।
[2]मध्यमान् द्रव्यकलशान् सर्वानेव प्रपूरयेत् ॥ ४५ ॥

नलिनीनिर्झराम्भोभिर्मत्स्यकूर्मावपि द्वयम् ।
निष्कद्वय[3]परिच्छिन्नकाञ्चनेन विनिर्मितम् ॥ ४६ ॥

कलशेष्वेव नवसु मध्यमेषु विनिक्षिपेत् ।
मत्स्यादिरूपिणं देवं वर्जयित्वा च भार्गवम् ॥ ४७ ॥

यथोक्तकुम्भनवके क्रमेणैव सभाजयेत् ।
एकाशीतिपदे सौम्ये मध्ये नवकमध्यमे ॥ ४८ ॥

यवगोधूमकव्रीहिशालि मुद्गप्रियङ्गुकान् ।
माषश्यामाकनीवारान्नि[4]क्षिपेत्तत्र पूजयेत् ॥ ४९ ॥

देवेशं गरुडारूढं पद्मनाभं यथाविधि ।
धान्यान्येतानि चैकैकमन्येष्वष्टसु निक्षिपेत् ॥ ५० ॥

घटेषु मध्यमूतेषु क्रमात्सर्वत्र शालयः ।
पूजयेद्वनमालां च शंखं चक्रं च कौस्तुभम् ॥ ५१ ॥

पद्मं शार्ङ्गं गदां खड्गं क्रमादुक्तं घटाष्टके ।
पञ्चाशीतिघटेष्वग्नेरेकोनेषु तथा दिशि ॥ ५२ ॥

मध्यमं कुम्भनवकमाधारेण प्रपूरयेत् ।
षट्स्वैन्द्रेषु च गोमूत्रं क्षीरं [5]याम्येषु वारुणे ॥ ५३ ॥

---

1. कलशे $M_2$ 2. ४५ उत्तरार्धादारभ्य ४७ पूर्वार्धपर्यन्तं $P_2$ ग्रन्थे अर्धेन्दुरेखितं दृश्यते । 3. °परिच्छिन्नं $P_2$ 4. क्षिपेत्तत्र च $P_2$ 5. याम्ये तु $M_1$

दधि षट्सु तथा सौम्ये गोमयं षट्सु निक्षिपेत् ।
चतुर्षु कुम्भेष्वाग्नेये कोणे वाप्युष्णमुच्यते ॥ ५४ ॥

नैर्ऋते पञ्चगव्यानि पञ्चामृतमथानिले ।
ऐशाने सक्तुभिस्तेषु नारायणसमाजनम् ॥ ५५ ॥

नैर्ऋतेकोनपञ्चाशद्घटेषु ब्रह्मणः पदे ।
तैलेन नवकं पूर्यं [1]गन्धाद्भिष्षट् पुरःस्थिताः ॥ ५६ ॥

घनसारद्रवैर्याम्ये लाजैः [2]कुम्भे तु वारुणे ।
सौम्येऽभिमन्त्रिताम्भोभिः कोणेषु गुलवारिभिः ॥ ५७ ॥

यजेत तेषु कुम्भेषु वासुदेवं जगद्गुरुम् ।
मारुतैकोनपञ्चाशद्घटेषु नवकं पुनः ॥ ५८ ॥

पूर्यं सर्षप[3]तोयेन प्राच्यां षट्पाद्यवारिभिः ।
याम्ये षडर्घ्यैः षट्कुम्भाः[4] प्रतीच्याचमनाम्बुभिः ॥ ५९ ॥

षट् सौम्ये [5]मङ्गलाम्भोभिः पूरयेत्कमलासन ।
कोणेष्विक्षुरसैस्तत्र समाराध्योऽनिरुद्धकः ॥ ६० ॥

[6]ईशानैकोनपञ्चाशद्घटेषु ब्रह्मणः पदे ।
नवकं मधुभिः पूर्यं प्राच्यां षट् सर्वगन्धकैः ॥ ६१ ॥

शान्तिवारिभिरन्यत्र षट्कं [7]कोणे तु नैर्ऋते ।
आग्नेये च स्थिताः कुम्भा नालिकेरजलैरपि ॥ ६२ ॥

शार्वे च वायवीये च पीयूषैर्नालिकेरजैः ।
यष्टव्यो हरिरेतेषु कुम्भेषु कमलाशन ॥ ६३ ॥

---

1. गन्धाद्भिः षट्सु आस्थिताः $P_1$ 2. कुम्भेषु $P_2$ 3. °तैलेन $P_1$, $P_2$
4. कुम्भान् $P_1$, T 5. मार्जनाम्भोभिः $M_2$ 6. ऐशानैकोन° $P_1$ 7. कोणेषु A; कोणे च $P_2$



भागे तु मानुषे प्राच्यां कुम्भानां पञ्च[1]विंशके ।
मध्यमं पूरयेन्मृद्भिर्वक्ष्यमाणाभिरष्टभिः ॥ ६४ ॥

क्षेत्रतीर्थाब्धिशैलेषु गजसूकरयोरपि ।
वल्मीकवृषयोर्मृत्स्ना न्यस्यते मध्यमे घटे ॥ ६५ ॥

अष्टास्वन्येषु कलशेष्वेकैकां तां विनिक्षिपेत् ।
अर्च्यश्च केशवस्तेषु क्रमादन्यत्र चोच्यते ॥ ६६ ॥

सहदेवी वचा चैव शतमूला शतावरी ।
कुमारी च गुडूची च सिंही व्याघ्रीति चाष्टमी ॥ ६७ ॥

मूलानि मध्ये चैतेषां कलशे मध्यमे क्षिपेत् ।
एकैकमष्टास्वन्येषु तेषु नारायणार्चनम् ॥ ६८ ॥

न्यग्रोधोदुम्बराश्वत्थजम्बूबिल्वत्वचां रसाः ।
तथा पलाशमधुकशिरीषाणामपि त्वचः ॥ ६९ ॥

न्यसनीया घटे मध्ये प्रत्येकमितराष्टके ।
पूज्यश्च माधवस्तेषु तरूणां पल्लवा इमे ॥ ७० ॥

[2]पलाशबिल्वपत्रं च कदम्बाम्रशिरीषजाः ।
न्यग्रोधाश्वत्थजाश्चापि न्यसनीया विधेः पदे ॥ ७१ ॥

एकैकमितरेष्वर्च्यो गोविन्दो जातिमल्लिके[3] ।
प्रियङ्गुपद्मबकुलनन्द्यावर्तक[4]चूतकाः ॥ ७२ ॥

[5]कुन्दश्च पुष्पाण्येतेषां न्यसनीयानि मध्यमे ।
एकैकमष्टकेऽन्यत्र तेषु विष्णुश्च देवता ॥ ७३ ॥

---

1. °विंशतिः $M_2$,$P_1$,$P_2$ 2. पलाशबिल्वबकुल° $P_2$ 3. °मल्लिकैः $P_1$,$P_2$
4. चम्पकाः T, $P_1$, $P_2$ 5. कुन्दं चैतानि पुष्पाणि $P_1$,$P_2$, कुन्दपुष्पाण्येतानि A

सिद्धार्थो राजसिद्धार्थो वंशो गोरोचनापि च ।
इन्द्रवेणुर्यवष्षष्ठिरशमी च चणकस्तथा ॥ ७४ ॥

[1]एतानि मध्यमे कुम्भे एकैकमितरेषु तत् ।
तेषु [2]पूजा मधुरिपोस्सरसीरुहसम्भव ॥ ७५ ॥

तिलमारण्यकं [3]ग्राम्यं जीरकद्वयमेव च ।
अतसी[4]सम्भवं बीजं[5] शतपुष्पं कुमारकम् ॥ ७६ ॥

ऋषिबीजं च कलशे मध्यमेऽन्यत्र पूर्ववत् ।
तेषां त्रिविक्रमो देवो यष्टव्यस्साङ्गपीठकः ॥ ७७ ॥

श्यामाकष्षष्टिकश्शालि[6]नीवारस्स्याच्चतुर्भुज ।
दूर्वाकुशेन्द्रवल्लीनामङ्कुराः पिप्पलस्य च ॥ ७८ ॥

न्यस्यन्ते मध्यमे कुम्भे [7]घटेष्वन्यत्र पूर्ववत् ।
देवता वामनस्तेषु कुशा दिव्यौषधास्त्रयः ॥ ७९ ॥

[8]कांस्यमूलमुशीरस्य शरपुंखस्य मूलिका ।
मूलिकास्तगरस्यापि तथापामार्गमूलिका ॥ ८० ॥

ते मध्ये च घटे [9]पूर्वे घटेष्वन्यत्र पूर्ववत् ।
देवता श्रीधरस्तेषां तुलस्यौ च सितासिते ॥ ८१ ॥

वेणुकेसरिणोः पत्रे पत्रे केतकबिल्वयोः ।
शमीपर्णं तथा जातेर्मध्यमेऽन्यत्र पूर्ववत् ॥ ८२ ॥

देवता च हृषीकेशो द्वयं मुस्ताकचोरकम् ।
कुमुदोत्पलयोः कन्दं कह्लारं शीतलीयकम् ॥ ८३ ॥

---

1. एकैकं मध्यकुम्भेषु A  2. पूज्यो मधुरिपुः A, $P_1$, $P_2$  3. ग्राह्यं A
4. °संभवच्छिन्नम् $M_2$  5. चैव $P_2$  6. नीवारस्य च तण्डुलाः $P_1$, $P_2$
7. कुम्भेषु° $P_2$  8. काश° $T_1$, $P_1$  9. सर्वे $P_1$, $P_2$



न्यसेन्मध्ये कुवलयं कुम्भेष्वष्टसु पूर्ववत् ।
तेषां देवः पद्मनाभो मुद्गमाषयवाङ्कुराः ॥ ८४ ॥

निष्पावं तु वरीव्रीहिकुलुत्थानामथाङ्कुराः ।
आढकस्य च कुम्भानां मध्यमेऽन्यत्र पूर्ववत् ॥ ८५ ॥

दामोदरार्चनं तत्र [1]शंखपुष्पी बलां तथा ।
विष्णुकान्ता सदाभद्रा पद्ममेकदलं [2]मुरम् । ८६ ॥

सहा च [3]सहदेव्यौ च न्यसनीया विधेः पदे ।
अन्यत्र पूर्ववद्देवो[4] यज्ञनारायणो भवेत् ॥ ८७ ॥

श्वेतार्कश्च तथैवाग्नि[5]र्भद्रा ब्रह्मसुवर्चला ।
सरसा च विरक्ता च पृश्निपर्णी स्थिरा तथा ॥ ८८ ॥

एरण्डकं घटे मध्ये अन्यत्र स्याद्यथापुरम् ।
अर्चनीयो हरिस्तत्र सुरभिः पद्मकेसरम् ॥ ८९ ॥

पत्रमेला लवङ्गत्वङ् नागकेसरमेव च ।
लता जातिफले मध्ये न्यसनीया विधेः पदे ॥ ९० ॥

एकैकमितरेषु स्याच्चेषु कृष्णश्च देवता ।
सुवर्णं रजतं ताम्रं प्रत्येकं निष्कपञ्चकम् ॥ ९१ ॥

कृत्वा पद्माकृतिं कांस्यं दर्पणं [6]चषकानि च ।
अयोलवित्राद्याकारं [7]त्रपुसीसकपित्तलाः[8] ॥ ९२ ॥

त्रयं प्रकृतिरूपेण न्यस्यते मध्यमे घटे ।
प्रत्येकमितरेष्वेतद्धयग्रीवोऽधिदैवतम् ॥ ९३ ॥

---

1. पुष्पफलं $M_2$  2. वरम् $P_1$,$P_2$  3. सहदेवी A,$P_1$  4. पूर्ववत्पूज्यो $P_1$
देववत्पूर्वो $P_2$  5. तथा $M_1$  6. चाष्टकानि च T  7. त्रपुं $P_1$, $P_2$
8. सीसकपित्तले $P_1$, $P_2$

कुम्भेष्वन्येषु सर्वेषु पूरणं गन्धवारिभिः ।
सहस्रकलशस्नाने देशिका बहवः स्मृताः ॥ ९४ ॥

चत्वारो द्विगुणं वापि तेषां षोडश ऋत्विजः ।
पुण्याहं वाचयित्वान्वगधिदेवार्चनं भवेत् ॥ ९५ ॥

पञ्चोपनिषदैर्मन्त्रैः सहस्रं सर्पिषाहुतिः ।
शान्त्यर्थं मूलमन्त्रेण जुहुयात्समिदादिभिः ॥ ९६ ॥

यावद्रजोभिः हारिद्रैस्स्नपनं मधुविद्विषः ।
मृत्स्नाभिर्मानुषे भागे प्रक्रम्य ब्रह्मणः पदे ॥ ९७ ॥

रत्नोदकान्तं कलशैः सहस्रेणाभिषेचनम् ।
मृदा विष्णोर्नुकमिति स्नपनं मूलवारिभिः ॥ ९८ ॥

तद्विष्णोरिति देवस्य कषायकलशाम्बुभिः ।
प्रतद्विष्णुरितीशस्य विद्यया पल्लवाम्बुभिः ॥ ९९ ॥

देवस्य त्वेति कुसुमैः[1]स्तवामीत्यपि सर्षपैः ।
ध्रुवः पात्विति मन्त्रेण स्नपनं तिलवारिभिः ॥ १०० ॥

भद्रं कर्णेति मन्त्रेण षाष्टिकाम्बुभिराप्लवः ।
न ते विष्णुरिति स्नानं कुशमूलाम्बुभिर्हरेः ॥ १०१ ॥

इरावतीति मन्त्रेण तुलसीदलवारिभिः ।
मुस्ताम्बुभिरतो देवा अवन्त्विति चतुर्मुख ॥ १०२ ॥

इदं विष्णुरिति स्नानं मुष्णैः[2]त्रीणि पदेति च ।
शंखपुष्प्यम्बुभिः [3]श्वेतै रक्तैः कर्माणि पश्यत ॥ १०३ ॥

---

1. तावानित्यपि T 2. मुद्गैः $M_2$ 3. चेतैः विष्णोः $P_1$, $P_2$ श्वेतैरर्कैः T



तद्विष्णोः परममिति सुरभ्यादिजलैस्ततः[1] ।
तद्विप्रास इति स्नानं लोहैर्भागे नृणामपि ॥ १०४ ॥

दिव्ये भागे तु पौरस्त्ये एकाशीतिघटास्पदे ।
प्रागादिब्रह्म[2]भूम्यन्तं क्रमेण स्नानमिष्यते ॥ १०५ ॥

ऐन्द्रे फलाम्बुभिः स्नानं यज्ञायज्ञीयमन्त्रकम् ।
क्रमेण मन्त्राः कथ्यन्ते द्रव्यकुम्भाष्टके यथा ॥ १०६ ॥

इन्द्राविष्णू पदे मन्त्रो मनीषापदलक्षितः ।
वषट् ते विष्णोरित्येतत्तिस्रो [3]वाच इतीरितः ॥ १०७ ॥

इषे त्वोर्जेति मन्त्रेण [4]स्तरिरित्वमितीति च ।
यस्मिन्विश्वानि विद्या च पर्जन्यायेति लक्षितः ॥ १०८ ॥

एकाशीतिपदे याम्ये स्नानं [5]गन्धोदकैर्घटैः ।
नारायणानुवाकस्य ऋग्भिरष्टाभिरादितः ॥ १०९ ॥

व्यस्ताभिरष्टभिः स्नानं सर्वाभिर्मध्यमेन तु ।
दिग्भागे पश्चिमे ब्रह्मन्नेकाशीतिघटास्पदे ॥ ११० ॥

प्रागादिब्रह्मभूम्यन्तं स्नानं वाप्यादिभिर्जलैः ।
मन्त्राः क्रमेण वक्ष्यन्ते प्रतिद्रव्यघटाप्लवम् ॥ १११ ॥

या आप इति मन्त्रेण सिन्धुद्वीपेति विद्यया ।
एष ते चेत्यृचा स्नानमिमं मे वरुणेति च ॥ ११२ ॥

शं नो देवीरभीत्येष यासां राजेति मन्त्रतः ।
समुद्र[6]ज्येष्ठमन्त्रेण यासां देवेति विद्यया ॥ ११३ ॥

---

1. तथा $P_1$,$P_2$ 2. ॰पर्यन्तं T 3. वात $M_1$ 4. सावित्री त्वमसीति च $P_1$ 5. घर्मोदकैः A 6. ॰ज्योति॰ T

सूक्तेन वारुणेनैव स्नानं द्रव्य[1]घटैरिति ।
एकाशीति घटे सौम्ये पूर्वाद्यब्जपदावधि ॥ ११४ ॥

धान्यादिवस्तुकुम्भानां नवानां मन्त्र उच्यते ।
त्रातारमिन्द्रसाम्ना च मन्त्रश्चारवा वहन्त्विति ॥ ११५ ॥

मन्त्रो जितं त इत्येष आपो वहति लक्षितः ।
मन्त्रश्च तावतीत्येष स त्वं नो अग्नवित्यृचा ॥ ११६ ॥

त्वं नो अग्न इत्यृचा च महाव्याहृतयस्तथा ।
अणोरणीयानित्यन्तो मन्त्रः स्नानविधौ क्रमात् ॥ ११७ ॥

एकोनपञ्चाशत्कुम्भेष्वग्नेः कोणे यथाक्रमम् ।
गोमूत्रादिघटस्नाने मन्त्राणां कथ्यते क्रमः ॥ ११८ ॥

गायत्री प्रथमा तासां पयो वृतमनन्तरम् ।
दधिक्राव्णेति च स्नानं गन्धद्वारामितीदृशम् ॥ ११९ ॥

विष्णोरराटमिति च मूर्धानं दिव इत्यृचा ।
हिरण्यगर्भमन्त्रेण आप्यायस्वेति विद्यया ॥ १२० ॥

घृतस्नातेति मन्त्रश्च घृतस्नानविधौ क्रमः ।
एकोनपञ्चाशत्कुम्भे पदे निर्ऋतिगोचरे ॥ १२१ ॥

मन्त्राः क्रमेण [2]वक्ष्यन्ते वस्तुकुम्भैरथाप्लवे ।
रक्षोघ्नमिति सामाद्यं पवित्रं न इतीति च ॥ १२२ ॥

भगवान् वासुदेवेति सामवेदव्रताह्वयम् ।
[3]वैराजसामकथितं तथा चैवापराजिताः ॥ १२३ ॥

---

1. °घटेन तु $P_2$  2. कथ्यन्ते $M_1$  3. वैयाघ्र° $M_2$, $P_1$



कथ्यन्ते वायुकोणेऽपि मन्त्रस्नानविधौ तथा ।
द्वादशाक्षरमन्त्रश्च द्रुपदादिव इत्यसौ ॥ १२४ ॥

अष्टाक्षराह्वयो मन्त्रश्शं नो देवीरिति स्मृतः ।
हिरण्यपाणिरिति च वेदाहमिति च क्रमात् ॥ १२५ ॥

ईशानकोणे मन्त्रोक्तिरानोवीयुरिति स्मृतः ।
श्रीसूक्तं मधुमान्नश्च मधुनक्त इतीति च ॥ १२६ ॥

मधुवातेति कोणेषु मन्त्रक्लृप्तिरुदाहृता ।
ब्राह्मे पदे तु सूक्तस्य पौरुषस्यादितः क्रमात् ॥ १२७ ॥

अष्टासु द्रव्यकुम्भानामष्टानां मन्त्र [1]इष्यते ।
मध्यमे नवके पूर्वमष्टभिश्शुद्धवारिभिः ॥ १२८ ॥

स्नापयेन्मूलमन्त्रेण सहस्रेण घटैरिति ।
स्नापिते देवदेवेशे पश्चाद्दलघटाम्बुभिः ॥ १२९ ॥

सूक्तेन पौरुषेणैव स्नापयेद्देशिकस्स्वयम् ।
घटैश्शुद्धोदकैरन्यैः स्नपनं मूलविद्यया ॥ १३० ॥

हरिद्राचूर्णसम्पूर्णैः पञ्चविंशतिभिर्घटैः ।
स्नपनं [2]सप्तदशभिर्यद्वा षोडशसंमितैः ॥ १३१ ॥

यद्वा द्वादशभिः कार्यं नवभिर्वा यथावसु ।
आराध्य देवमुचितं निवेद्य च महाहविः ॥ १३२ ॥

होमस्सहस्रैराज्येन समिद्भिर्मूलविद्यया ।
अन्नैश्चतुर्विधै[3]श्चैव प्रत्यृचं पुरुषात्मना ॥ १३३ ॥

---

1. उच्यते $M_1$  2. पञ्चदशभिः $M_2$  3. चतुर्गुणैः $M_2$

सूक्तेन तुष्टिं वस्त्राद्यैर्देशिकानामनन्तरम् ।
सहस्रकलशस्नाने तत्संख्या स्वर्णदक्षिणा ॥ १३४ ॥

तदर्धमथवा पादो यथाश्रद्धं यथावसु ।
यावती दक्षिणा तेषां स्यादर्धमथ ऋत्विजाम् ॥ १३५ ॥

सहस्रं ब्राह्मणानन्नैर्भोजयेद्दक्षिणामपि ।
दद्यात्तुष्टिकरीमन्यानागतानपि तोषयेत् ॥ १३६ ॥

सेवां कुर्वन्ति ये मर्त्याश्श्रद्धाभक्तिसमन्विताः ।
देवस्य स्नानसमये सहस्रकलशाम्बुभिः ॥ १३७ ॥

गङ्गादि[1]सरितां स्नानफलमश्नुवते महत् ।
सहस्रकलशस्नाने यत्फलं [2]राजसूयके ॥ १३८ ॥

[3]पूजान्ते तदशेषेण प्रागुक्तमिति नोच्यते ।
महोत्सवफलेनैतत् [4]विद्धि तुल्यफलं स्मृतम् ॥ १३९ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
सहस्रकलशाभिषेकविधिर्नाम नवमोऽध्यायः ॥

---

## दशमोऽध्यायः ॥

### ध्वजारोहणविधिः

ब्रह्मोवाच[5] :—

[6]कदा महोत्सवः कश्चित्कीदृक्तस्य फलं च किम् ।
फलकामैरनुष्ठातुमविज्ञातो न शक्यते ॥ १ ॥

---

1. °स्नानफलदमश्नुते महतो महत् $M_2$ 2. राजराष्ट्रयोः $P_1, P_2$ 3. प्रजानां A; पूजने $M_1$ 4. किञ्चित् $P_1, P_2$, T 5. $P_2$ omits उवाच 6. कथं $P_1, P_2$



मह्यं जिज्ञासमानाय प्रसीद भगवन्निदम् ।
आख्यातुमर्हसि यथा महोत्सवमनुत्तमम् ॥ २ ॥

श्रीभगवान् :—

आराधनमिदं ब्रह्मन् मोक्षकामैरनुष्ठितम् ।
पश्वादिफलकामैस्तु दुरनुष्ठान[1]मद्भुतम् ॥ ३ ॥

तोषणं मम कल्याणमनुष्ठितममानुषम् ।
देवैरेव पुरा वृत्र[2]वधपापापनुत्तये ॥ ४ ॥

इन्द्रेणापि दिविष्ठेन मामुद्दिश्य कृतं शुभम् ।
रूपं तस्य प्रवक्ष्यामि यथा[3]वदवधारय ॥ ५ ॥

सर्वे सांसारिकं दुःखमुत्तरन्ति तदम्बुधिम् ।
[4]अष्टाक्षरेति विद्वांसो निर्ब्रुवन्त्युत्सवाह्वयम् ॥ ६ ॥

नित्यो नैमित्तिकः काम्यस्त्रिविधस्स महोत्सवः ।
तत्र नित्यं प्रतिसमं मासपक्षव्यवस्थया ॥ ७ ॥

शुभे च तिथिनक्षत्रे विषुवे चायनद्वये ।
कल्पितावभृथस्नानः सेवितस्सर्वदैवतैः ॥ ८ ॥

नैमित्तिकस्स विज्ञेयो [5]निमित्ते सति कल्पितः ।
अवग्रहे च दुर्भिक्षे चोल्कापाते तथा निशि ॥ ९ ॥

दर्शने सुरचापस्य नाल[6]मीनस्य दर्शने ।
[7]देवताप्रतिकायानां कम्पने भेदने तथा ॥ १० ॥

---

1. दुरनुष्ठेय° T, $P_1$, $P_2$ 2. वधे तत्पापनुत्तये T, $P_1$, $P_2$ 3. °तदव° T, $P_1$, $P_2$ 4. यष्टार इति T, $P_1$, $P_2$ 5. यो निमित्तैस्तु $M_2$ 6. °ऋक्षस्य $M_2$ 7. देवतानां निकायानां $M_2$

हसने चलने चैव रोदने पतने तथा ।
गोपुरालयसालानां मण्टपस्य च भेदने ॥ ११ ॥

[1]भङ्गे वा पतने वापि पर्वतानां तथैव च ।
निपाते चैत्यवृक्षस्य भङ्गे ज्वलनदर्शने ॥ १२ ॥

[2]वृक्षे त्वन्यफले दृष्टे दिवानक्षत्रदर्शने ।
भूतादिदर्शने घोरे भूमिकम्पे तथैव च ॥ १३ ॥

दिग्दाहे च महावाते महावृष्टौ तथैव च ।
ग्रहयुद्धे च सञ्जाते प्रतिसूर्यस्य दर्शने ॥ १४ ॥

नृपे रोगाभिभूते च ग्रामे जनपदे तथा ।
मसूरिकादिघोराणां व्याधीनां च प्रवेशने ॥ १५ ॥

परचक्रप्रवेशे च व्योम्नि नेमिस्वने तथा ।
दिव्यदुन्दुभिनिर्ह्रादे निर्मले गगने सति ॥ १६ ॥

वर्षे[3] वाशनिपाते च शक्रध्वजनिपातने ।
जलेऽग्निजनने चैव तथैवाद्भुतदर्शने ॥ १७ ॥

एवमादौ महोत्पाते नैमित्तिकमहोत्सवः ।
चतुर्णां पुरुषार्थानामुद्दिश्यान्यतमं फलम् ॥ १८ ॥

उत्सवोऽनुष्ठितः काम्यः सङ्कल्पितफलप्रदः ।
कथ्यतेऽवभृथस्नानसमयस्त्रिविधोत्सवे ॥ १९ ॥

मासर्क्षे विषुवे चैव ग्रहणे चायनद्वये ।
दर्शे च पौर्णमास्यां च श्रवणे सार्वमासिके ॥ २० ॥

1. भङ्गे चायतने चापि A  2. 'A' ग्रन्थे एष अर्धश्लोको न दृश्यते ।
3. अवर्षेऽशनिपाते च $M_2$



रोहिण्याश्च पुनर्वस्वोः प्रतिष्ठादिवसे तथा ।
राज्ञो जन्मदिने कुर्यादभिषेकदिने तथा ॥ २१ ॥

[1]उक्तेष्ववभृथस्नानं ब्रह्मन् सर्वार्थ[2]साधनम् ।
मासेन वा तदर्धेन द्वादशाहेन वा पुनः ॥ २२ ॥

नवाहे नोत्सवः कार्यस्सप्ताहे न चतुर्मुख ।
अहोभिः पञ्चभिर्वापि, त्रिभिर्वैकेन वा पुनः ॥ २३ ॥

एकाहे त्र्यहके धीमान् ध्वजकर्म न कारयेत् ।
सङ्कल्पपूर्वमालोच्य मासे ऋक्षे तथा तिथौ ॥ २४ ॥

तीर्थावगाहनं यद्वा संयोगे तिथितारयोः ।
[3]विषुवे चायने चैव नादरस्तिथि[4]तारयोः ॥ २५ ॥

दुष्टवारादिसंयोगे शुभमेव यथोदितम् ।
पत्तने नगरे ग्रामे प्रतिलोपानधिष्ठिते ॥ २६ ॥

अशून्ये बलिदानादिरथ्यासु बहिराचरेत् ।
नो चेदावरणेष्वेव कुर्यादन्तर्महोत्सवम् ॥ २७ ॥

ग्रामादिरहिते धाम्नि नोत्सवं बहिराचरेत् ।
अन्तरावरणेष्वेव न तु त्याज्यं कथञ्चन ॥ २८ ॥

वास्त्वङ्गे च स्वतन्त्रे च धामन्युत्सवसम्पदि ।
यौगपद्येन दोषस्स्याद् यो वास्त्वङ्गयोर्द्वयोः ॥ २९ ॥

स्वतन्त्रं परतन्त्रं चा(प्या)श्रयं समुदाहृतम् ।
उत्तमादिविभेदेन आलयस्त्रिविधो भवेत् ॥ ३० ॥

1. एतेष्ववभृथ° T, $P_1$, $P_2$  2. °साधकम् $M_2$  3. एष अर्धश्लोकः 'A' ग्रन्थे नास्ति ।  4. °वारयो: A

विष्ण्वालयं पुरा कल्प्य पश्चाद् ग्रामादिकल्पनम् ।
स्वतन्त्रमिति विज्ञेयमालयं तूत्तमं भवेत् ॥ ३१ ॥

[1]ग्रामालयं पुरा कल्प्य पश्चादा[2]लयकल्पनम् ।
अस्वतन्त्रमिति ख्यातमालयं मध्यमं भवेत् ॥ ३२ ॥

स्वतन्त्रालयवल्लप्तासु रथ्यावीथीषु पद्मज ।
अन्तरे स्थापितं यत्तदाश्रयन्त्वधमालयम् ॥ ३३ ॥

स्वतन्त्रे परतन्त्रे चाप्युत्सवादौ कृते सति ।
पूर्वं स्वतन्त्रे कर्तव्यं वास्त्वङ्गे द्विगुणार्चनम् ॥ ३४ ॥

आश्रयादिषु बिम्बेषु उत्सवादौ कृते सति ।
तत्तदावरणे कुर्याद्बाह्यवीथ्यां तु नाचरेत्[3] ॥ ३५ ॥

मोहाद्वा यदि वा लोभाद्विपरीते कृते सति ।
अरातिभिः परिभवो महाव्याध्यादिपीडनम् ॥ ३६ ॥

प्राङ्गणेषु च सर्वेषु प्रासादादिषु मूर्तिषु ।
प्रीत्याभिषेकमात्रं च स्नपनाद्युत्सवं विना ॥ ३७ ॥

[4]कारयेद्यदि संमोहात् प्रजानां पीडनं तथा ।
तस्मात् सर्वप्रयत्नेन विपरीतं तु नाचरेत् ॥ ३८ ॥

अन्यथा कारयेन्मोहाद्राजा राष्ट्रं च नश्यति ।
ग्रामाश्रयादिवेराणामालयाश्रयकेषु च ॥ ३९ ॥

ग्रामवास्तुबलिर्हीनं केवलोत्सवमाचरेत् ।
देवतान्तरकल्याणे वर्तमानेऽपि वैष्णवम् ॥ ४० ॥

1. ग्रामादिकं T, $P_1$, $P_2$ 2. ॰ग्रामादिकल्पनम् T 3. न चाचरेत् $M_1$
4. सदा देशाधिपस्य स्यात् $M_2$



कुर्याद्देवोत्सवं नैव वैष्णवेऽन्यं कदाचन ।
वासुदेवो हि देवानां देवताम्नायते यतः ॥ ४१ ॥

उत्सवे देवदेवस्य ध्वजारोहणपूर्वके ।
प्रवर्तिते देवयागे चौलादिर्नैव संस्क्रिया ॥ ४२ ॥

ग्रामाद्यनङ्गायतने प्रवृत्तेऽप्युत्सवे पुनः ।
कुर्याद्देवान्तरं यागं चौलादिर्नैव संस्क्रिया ॥ ४३ ॥

तोरणादीनि चान्येषां देवानामुत्सवे [1]सताम् ।
उत्पाट्य रथ्यासु हरेरुत्सवो नान्यथा भवेत् ॥ ४४ ॥

वल्तप्तानामुत्सवे विष्णो रथ्यादिष्वितरोत्सवः ।
स्थिराणां तोरणादीनां कार्यं नोत्पाटनं भवेत् ॥ ४५ ॥

अधिके मासि [2]शुक्रे च गुरौ चास्तमिते सति ।
नोत्सवः प्रथमः कल्प्यः कल्पने राजराष्ट्रयोः ॥ ४६ ॥

प्रजानां चैव दुःखं स्याद्व्याधिर्वा मृतिरेव वा ।
उत्सवे च द्वितीयादौ नोक्तदोषः कथञ्चन ॥ ४७ ॥

मासादावुत्सवदिने पश्चाद्वावधिके क्रमात् ।
ध्वजारोहणकालस्तु ब्रह्मन्नत्र प्रदर्श्यते ॥ ४८ ॥

एकोनविंशतितमे दिने तीर्थाङ्कुरार्पणात् ।
अष्टादशदिने वापि प्रागेव समये शुभे ॥ ४९ ॥

वैनतेयध्वजारोहाद् द्वादशाहेऽथवा भवेत् ।
यद्वा कल्याणदिवसं त्रिगुणीकृत्य तावताम् ॥ ५० ॥

1. सति A 2. शुक्रादौ $P_2$

आदौ दिनानां कर्तव्यं ध्वजारोहणमब्जज ।
अङ्कुरानर्पयित्वाह्नि पुण्ये पूर्वं यथोदिते ॥ ५१ ॥

ध्वजमारोपयेत्पश्चान्मङ्गलं मङ्गले दिने ।
देवाद्वा मानुषाद्वापि कुतश्चित्कारणाद्यदि ॥ ५२ ॥

उत्सवारम्भणात्पूर्वं यथोक्तेन कृते ध्वजे ।
उत्सवारम्भणदिने दिवारोप्य ध्वजं निशि ॥ ५३ ॥

भेरीताडन[1]मन्वक् च पालिकास्वङ्कुरान् क्षिपेत् ।
आघोष्य भेरीं प्रथमं ध्वजारोहणमन्वतः ॥ ५४ ॥

ततोऽङ्कुरार्पणं यद्वा यद्वा निश्यङ्कुरार्पणम् ।
प्रदोषेऽन्वक् ध्वजारोहो भेरीताडनमन्वतः ॥ ५५ ॥

तत्कालेऽपि ध्वजारोहे त्रैविध्यं चतुरानन ।
तन्तूत्थं क्षौमवसनं निर्दोषं सूक्ष्ममाहृतम् ॥ ५६ ॥

कार्पासं वा यथावित्तं ध्वजार्थे कल्पयेद् बुधः ।
आयतं दशभिर्हस्तैर्विस्तीर्णं पञ्चभिर्दृढम् ॥ ५७ ॥

नवभिर्वाष्टभिर्वापि सप्तभिर्वा चतुर्मुख ।
मूलबेरसमायामं द्वारायाममथापि वा ॥ ५८ ॥

आयामार्धेन विस्तीर्णं पादेन कृतशेखरम् ।
शेखरेण समं पुच्छं तदर्धं कर्णपुच्छकम् ॥ ५९ ॥

निर्णेजितं खलीयुक्तं शोषितं लक्षणान्वितम् ।
आहृत्य मध्ये वस्त्रस्य गरुडं काञ्चनप्रभम् ॥ ६० ॥

1. °आकल्प्य A



नवतालप्रमाणेन द्विभुजं धृतकञ्चुकम् ।
धृतपुष्पाञ्जलिपुटं श्वेताम्बरधरं विभुम् ॥ ६१ ॥

दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ।
नीलनासाग्रसंयुक्तं कुञ्चितासव्यपादकम् ॥ ६२ ॥

पृष्ठे निविष्टसव्याङ्घ्रिं पक्षविक्षेपशोभितम् ।
गगने गमनारम्भं [1]सुवृत्तं घोरदर्शनम् ॥ ६३ ॥

करण्डिकामकुटिनं ललाटे रचितालकम् ।
हारकेयूरवलयनूपुराभरणोज्वलम् ॥ ६४ ॥

अनन्तो वामकटको यज्ञसूत्रं च वासुकिः ।
उरसि न्यस्तकार्कोटं कटिसूत्रिततक्षकम् ॥ ६५ ॥

बिभ्राणं दक्षिणे कर्णे पद्माह्वयसरीसृपम् ।
महापद्मं तथान्यत्र शंखं शिरसि भोगिनम् ॥ ६६ ॥

गुलिकं चाङ्गदे सर्पं वर्णस्तेषां च कथ्यते ।
स्फटिकाभश्शोणिताभः पीताभो धूम्रवर्णकः ॥ ६७ ॥

रक्ताम्बुजनिभश्चैव पिङ्गलस्तुहिनप्रभः ।
भ्रमराभः क्रमाच्छत्रं मुक्ताहेमपरिष्कृतम् । ६८ ॥

उपरिष्टाच्च कर्तव्यं पार्श्वयोश्चामरद्वयम् ।
अधस्तादम्बुजं पूर्णकुम्भमद्भिश्च पालिकाः ॥ ६९ ॥

साङ्कुरा लिखितव्याः स्युर्दीपौ द्वौ पार्श्वयोर्द्वयोः ।
पञ्चवर्णैर्लिखेदेवमन्तरं श्यामवर्णकम् ॥ ७० ॥

1. वृत्ताक्षं A

अन्तरालं [1]तु कृष्णेन चित्रयेच्चित्रकृत्तमः ।
ध्वजार्धसंमितां चैव पताकां चैव चित्रयेत् ॥ ७१ ॥

अधिवासदिने प्राप्ते तमिस्रायां गुरुः स्वयम् ।
कारुशालां प्रविश्याथ कारयित्वाथ शिल्पिना ॥ ७२ ॥

नयनोन्मीलनं तस्मिन्विसृष्टे शिल्पिनीप्सितैः ।
अर्थैश्च तोषिते पश्चा[2]न्निक्षिप्य शिरसि ध्वजम् ॥ ७३ ॥

मूर्तिपस्य सुवर्णादिलोहपात्रे समर्पितम् ।
प्रादक्षिण्येन धामादीन्नीत्वा तूर्यनिनादितम् ॥ ७४ ॥

ततः प्रवेशयेद्यागमण्टपं देशिकोत्तमः ।
नयनोन्मीलनादन्यत्प्रतिष्ठायामिवाचरेत् ॥ ७५ ॥

छायाधिवासनं सद्यो जले कुर्याद्यथाविधि ।
कुम्भैष्षोडशभिः स्नायात् स्नपनं दर्पणे भवेत् ॥ ७६ ॥

पौरुषेणैव सूक्तेन गायत्र्या स्वस्य पूजयेत् ।
शाययेच्छालिभारादावास्तीर्णे नववाससि ॥ ७७ ॥

शायितस्य पटस्या[3]धोऽपसव्ये सहाष्टभिः ।
परितो न्यस्तकलशैर्वर्धन्या च घटं क्षिपेत् ॥ ७८ ॥

आवाह्य गरुडं कुम्भे करके च सुदर्शनम् ।
इन्द्रादीनष्ट पूर्वादिकलशेषु सुपूजयेत् ॥ ७९ ॥

शोधयित्वा च गरुडं पटस्थं शोषणादिभिः ।
संहृत्य तत्त्वानि ततः क्रमादुत्पाद्य पक्षिणम् ॥ ८० ॥

---

1. च T, $P_1$, $P_2$ 2. निक्षिपेत् $M_2$ 3. ॰अथ॰ T, $P_1$, $P_2$



चतुर्षु पार्श्वकुण्डेषु होमस्थण्डिल[1]भूमिषु ।
कुण्डे महानसे वापि [2]समिदाज्यैर्यथापुरम् ॥ ८१ ॥

शान्ति[3]होमस्पर्शनं च सेचनं च [4]यथापुरम् ।
पटं विस्तीर्य गरुडं मन्दिराभिमुखं यथा ॥ ८२ ॥

प्रदर्श्यावाहयेत्तत्र व्याहृत्या सन्निधिं ततः ।
प्रार्थयेत गुरुस्तस्य गाथया वक्ष्यमाणया ॥ ८३ ॥

महाबल महाबाहो वैनतेय वयोऽधिप ।
सन्निधत्स्व पटे तुभ्यं नमः प्रणवमूर्तये ॥ ८४ ॥

कर्मणां सिद्धिमाहूतः कुरुष्व विहगेश्वर ।
आहूतव्यास्त्रयो लोका देवस्योत्सवसम्पदि ॥ ८५ ॥

यजेदात्मीयगायत्र्या तमर्घ्याद्युपचर्यया ।
निवेदयेत्ततस्तस्मै [5]नैवेद्यं च चतुर्विधम् ॥ ८६ ॥

कुम्भाय च निवेद्यान्नं स्तोत्रैर्गरुडतोषणम् ।
वाहनाय महाविष्णोस्ताक्ष्र्यायामिततेजसे ॥ ८७ ॥

गरुडाय नमस्तुभ्यं सर्वसर्पेन्द्रमृत्यवे ।
नमो नमस्ते पक्षीन्द्र स्वाध्यायवपुषे नमः ॥ ८८ ॥

विहगेन्द्र नमस्तेऽस्तु समुत्पाटितकल्पक ।
आश्रितामृतकुम्भाय जननीदास्यमोचिने ॥ ८९ ॥

सुरासुरेन्द्रजयिने नागेन्द्राभरणाय ते ।
यदाधारमिदं सर्वं तदाधाराय ते नमः ॥ ९० ॥

---

1. ॰भूषु वा T, $P_1$, $P_2$ 2. समिदाद्यैः $M_2$ 3. ॰होमः $P_2$
4. समाचरेत् A 5. निवेद्यं T, $P_1$, $P_2$

पक्षौ यस्य बृहत्साम रथन्तरमपि द्वयम् ।
अक्षिणी चापि गायत्री [1]त्रिवृत्साम शिरः स्मृतम् ॥ ९१ ॥

स्तोम आत्मा नमस्तस्मै वामदेव्याङ्गसम्पदे ।
नमः प्राणादिवायूनामीशाय गरुडात्मने ॥ ९२ ॥

दोषानपनयाखण्डान् गुणानावह सर्वतः ।
विघ्नानि जहि सर्वाणि आत्मसात्कुरु मामपि ॥ ९३ ॥

स्तुत्वैवं गारुडं मन्त्रं जपेदेकाग्रमानसः ।
तूर्यघोषैर्वेदघोषैर्जागरेण नयेन्निशाम् ॥ ९४ ॥

निवेद्यं कवलीकृत्य मन्त्रयित्वा च मन्त्रवित् ।
पौरुषैर्गारुडैर्मन्त्रैर्वन्ध्यानामपि योषिताम् ॥ ९५ ॥

क्षिपेदञ्जलिषु ध्यात्वा गरुडं चाच्युतं हरिम् ।
भक्षयित्वा त्रयः पिण्डान् जनयेयुस्सुतान् बहून् ॥ ९६ ॥

तं प्रभाते समाराध्य निवेद्य च हविः क्रमात् ।
वस्त्राभरणपुष्पैस्तु पटस्थं शोभयेत् खगम् ॥ ९७ ॥

आरोप्य हस्तिपृष्ठे वा रथे वान्यत्र मङ्गले ।
शिबिकादौ नयेद् ग्रामं प्रादक्षिण्येन धाम वा ॥ ९८ ॥

भेरीमृदङ्गपटहैः शंखकाहलचिह्नकैः ।
घोषयेत् पुरतस्तस्य नृत्तैर्गेयैश्च सर्वतः ॥ ९९ ॥

खगेशवाद्ययोर्मध्ये पालिकाश्चाङ्कुरान्विताः ।
वहेयुर्ब्राह्मणास्सर्वे शिरोभिः संयतेन्द्रियाः ॥ १०० ॥

1. बृहत्साम $M_2$



बिम्बमौत्सवमन्वच्च गरुडस्यान्तिकेऽथवा ।
इच्छया यजमानस्य सर्वमङ्गलसंयुतम् ॥ १०१ ॥

अग्रतो बलिपीठस्य बहिर्वा धामगोपुरात् ।
ध्वजस्तम्भं खनेद्भूमौ निर्दोषं दारवं स्थिरम् ॥ १०२ ॥

अन्तस्सारो बहिस्सारो निस्सारो त्रिविधस्तरुः ।
क्रमुकादि बहिस्सारं प्रशस्तं विदुरुत्तमम् ॥ १०३ ॥

अन्तस्सारं चन्दनादि प्रशस्तं स्तम्भकल्पने ।
निस्सारं वर्जयेत् स्तम्भं शततालायतं शुभम् ॥ १०४ ॥

मानाङ्गुलप्रमाणेन विंशत्यूनमथापि वा ।
प्रासादोच्छ्रायमथवा यद्वा गोपुरसंमितम् ॥ १०५ ॥

चतुर्धा विभजेत् स्तम्भमेकांशेनैव मस्तकम् ।
तस्य चाधारभूतानां [1]छिद्रितानां च मूलतः ॥ १०६ ॥

त्रयाणामपि पीठानां स्तम्भाग्रे विनिवेशनम् ।
आयतानि च पीठानि द्वितालेन चतुर्मुख ॥ १०७ ॥

विस्तीर्णानि तदर्धेन तदर्धेन घनानि च ।
मूले स्थूलानि सूक्ष्माणि चाग्रे युञ्जीत भूरुहान् ॥ १०८ ॥

अग्रे पीठद्वयोश्छिद्रे ध्वजयष्टिं च संस्कृताम् ।
निवेशयेच्छिद्रयित्वा ध्वजस्तम्भं चतुर्मुख ॥ १०९ ॥

निवेशयेद्वेणुकं वा नव वा सप्त पञ्च वा ।
इत्थम्भूतं ध्वजस्तम्भं पीठस्योत्तरपार्श्वतः ॥ ११० ॥

1. छेदितानां तु T, $P_1$, $P_2$

आनाय्य वेदविद्विप्रैः प्रागग्रं शाययेद् गुरुः ।
यद्वोदगग्रं प्रक्षाल्य स्तम्भमब्लिङ्गमन्त्रतः ॥ १११ ॥

कुशैश्च साग्रैः प्रच्छाद्य स्तम्भमूर्ध्वमुखैश्शुभैः ।
संवेष्ट्य दर्भमालाभिर्विष्णुसूक्तेन देशिक ॥ ११२ ॥

ध्वजस्तम्भावटे न्यस्य लोहबीजादि शोभितम् ।
तत्रावटे ध्वजस्तम्भं स्थापयित्वा दृढं यथा ॥ ११३ ॥

प्रासादाभिमुखं तस्य वेण्वग्रविवरे ध्वजम् ।
पाशेनाङ्गुष्ठनाहेन त्रिगुणीकृत्य तन्तुना ॥ ११४ ॥

ध्वजं निवेशयेद्यद्वा स्तम्भमारुह्य बन्धयेत् ।
बद्धध्वजाग्रस्तम्भं वा स्थापयेच्छक्त्यपेक्षया ॥ ११५ ॥

[1]एवं नियोज्य यष्ट्यग्रे मुहूर्ते शोभने गुरुः ।
पूर्वाह्णे वाथ मध्याह्ने ध्वजमारोपयेत्तथा ॥ ११६ ॥

बद्ध्वा पुरुषमंत्रेण सपताकं सघण्टकम् ।
सुपर्णोऽसीति मन्त्रेण ध्वजस्यारोपणं[2] भवेत् ॥ ११७ ॥

प्रासादाभिमुखं स्थाप्य खगेन्द्रं पटसंस्थितम् ।
तूर्यघोषं तथाम्नायघोषं दिक्षु च घोषयेत् ॥ ११८ ॥

खगेशमालामन्त्रादींस्तत्काले देशिको जपेत् ।
स्तम्भमूलस्थले वेदिं हस्तैस्सप्तभिरायताम् ॥ ११९ ॥

तावद्भिरेव विस्तीर्णामेकहस्तसमुच्छ्रिताम् ।
पञ्चभिर्वा त्रिभिर्वापि चतुरश्रां प्रकल्पयेत् ॥ १२० ॥

1. इदं पादोनश्लोकद्वयं मूलमातृकायां नोपलभ्यते; $M_1$ कोशे केवलश्लोकसंख्यया सूचितम् । 2. °आरोहणं $P_1$



वेदिकायास्तृतीयांशे मध्ये पीठं प्रकल्पयेत् ।
[1]चतुष्टयाङ्गुलोत्सेधं मेखलात्रयसंयुतम् ॥ १२१ ॥

भागे तृतीये तस्यापि पद्ममष्टदलैर्युतम् ।
कर्णिकास्थो यथा स्तम्भस्तथा कुर्याद्विचक्षणः ॥ १२२ ॥

षोडशस्तम्भसंयुक्ता प्रपा स्यात्परितस्ततः ।
चतुर्द्वारसमायुक्तां दर्भमालाद्यलङ्कृताम् ॥ १२३ ॥

पुण्याहं वाचयित्वाथ प्रोक्षयेत्कुम्भवारिणा ।
गारुडेनैव मन्त्रेण कलशैश्चाष्टभिस्तथा ॥ १२४ ॥

इन्द्राद्यैः प्रोक्षयेत्स्तम्भं स्वैस्स्वैर्मन्त्रैर्यथाक्रमम् ।
प्रार्थयेत स्थितिं तस्य गरुडस्य ध्वजोदरे ॥ १२५ ॥

उत्सवावभृथं यावत् गाथया वक्ष्यमाणया ।
पक्षीन्द्र पक्षविक्षेपतरङ्गानिलसम्पदा ॥ १२६ ॥

निरस्तासुरसन्नाह समरे शत्रु[2]बर्हण ।
सन्निधत्स्व पटे यावदुत्सवावभृथावधि ॥ १२७ ॥

उत्सवप्रतिमां यानमारोप्य शिबिकादिकम् ।
ध्वजस्तम्भसमीपोर्वीमानीयादर्शयेत् खगम् ॥ १२८ ॥

आह्वानार्थमशेषाणां लोकानां पतगेश्वरम् ।
नियुज्य देवस्तदनु प्राप्नुयान्मण्डपावनिम् ॥ १२९ ॥

आराधयेत् त्रिकालं [3]च गरुडं च निवेदयेत् ।
अनिर्वाणं यथा दीपं रक्षेन्नक्तन्दिवं सदा ॥ १३० ॥

1. चतसृणांगुलोत्सेधं A 2. °सूदन T, $P_1$, $P_2$ 3. तु T, $P_1$, $P_2$

उत्सवप्रतिमां तत्र मण्डपे च यथाविधि ।
पूजयित्वा निवेद्याथ हविर्होमान्तमर्चयेत् ॥ १३१ ॥

रात्रौ च पूजयित्वैवं भेरीताडनसिद्धये ।
ध्वजपीठस्य पुरतः क्षितिं गोमयवारिणा ॥ १३२ ॥

आलिप्य चतुरश्रं च सुधाचूर्णैश्च शोभयेत् ।
चतुरश्रं धान्यपीठं [1]शालीनां द्रोणपञ्चकम् ॥ १३३ ॥

कल्पयित्वा कालचक्रं तस्य मध्ये निवेशयेत् ।
बल्यर्चामपि तत्रैव स्थापयेद् ध्वजसंमुखम् ॥ १३४ ॥

पूजयित्वा निवेद्याथ हवींषि विविधानि वा ।
आलिप्ते पुरतस्तस्य भूतले धान्यपीठके ॥ १३५ ॥

तावदेव[2] महाभेरीं वेष्टितां नववाससा ।
दक्षिणेतरयोस्तस्या भेरिकाया यथाक्रमम् ॥ १३६ ॥

भागयोरर्चयेद्विष्णुं श्रियं चैव यथाविधि ।
त्रिगुणां प्रकृतिं चैव मध्यभागे सभाजयेत् ॥ १३७ ॥

मुहूर्ते शोभने भेरीं शब्दतन्मात्रविग्रया ।
कोणेन ताडयेन्मूर्तित्रयं ध्यायेद् गुरुः स्वयम् ॥ १३८ ॥

ततः पारशवः स्नातो [3]दर्भपाणिरलङ्कृतः ।
सोपवीतोत्तरीयश्च वहन् भेरीमलङ्कृताम् ॥ १३९ ॥

शंखादिवाद्यसहितां तालभेदविधानवित् ।
घोषयेद् गुरुणेन्द्रादौ हूयमाने मरुद्गणे ॥ १४० ॥

1. द्रोणपञ्चकशालिना T, $P_1$, $P_2$ 2. स्थापयित्वा A 3. दर्भादिभिः $M_1$



दिव्यायुधानामाह्वानं तथा वैकुण्ठवासिनाम् ।
तथा पारिषदास्सर्वे विष्वक्सेनाभिरक्षिताः ॥ १४१ ॥

आहूतव्या मखे तस्मिन् कुमुदाद्यास्सनायकाः ।
ऋषिभिश्च मरीच्याद्यैर्ब्रह्मलोकनिवासिभिः ॥ १४२ ॥

समाह्वानं विरिञ्चस्य [1]इन्द्रलोकनिवासिभिः ।
सार्धं प्रमथसार्थैश्च रुद्रश्च वृषवाहनः ॥ १४३ ॥

आहूतव्यास्तथान्ये च तत्तल्लोकनिवासिनः ।
वाहनैः परिवारैश्च साकं तस्मिन्महोत्सवे ॥ १४४ ॥

विद्याश्च मूर्तिधारिण्यस्त्रयी चाङ्गैर्वपुष्मती ।
आहूतव्यास्समाह्वानं सर्वेषां च स्वनामभिः ॥ १४५ ॥

नित्योत्सवार्चा परितो वीथिकासु सुदर्शनम् ।
अन्नमूर्तिविधानं च प्रदीपैर्बहुभिर्वृतम् ॥ १४६ ॥

गमयित्वा प्रतिदिशं भेरीताडनपूर्वकम् ।
ग्राममध्यं समासाद्य तत्रावाह्य चतुर्मुखम् ॥ १४७ ॥

[2]अर्चयित्वा मखे तस्मिन् याचित्वा सन्निधिं गुरुः ।
इन्द्रादींश्च प्रतिदिशं बल्यर्थं सन्निधिं [3]तथा ॥ १४८ ॥

अर्चयित्वा तूर्यघोषं घोषयित्वा स्वतालवित् ।
अन्यत्र गारुडं [4]तस्या अन्तरालेषु घोषयेत् ॥ १४९ ॥

प्रविश्य मन्दिरं तत्र यथापूर्वं निवेशयेत् ।
आदायोत्सवबिम्बं वा केवलं वा सुदर्शनम् ॥ १५० ॥

1. रुद्र° T, $P_1$, $P_2$ 2. एष अर्धश्लोकः $M_1$ कोशे नोपलभ्यते ।
3. तदा T, $P_1$, $P_2$ 4. तालं T, $P_1$, $P_2$

अन्नमूर्तिविधानं वा भेरीमादाय केवलम् ।
रथ्यासु देवताह्वानं तत्र तत्र यथाविधि ॥ १५१ ॥

देवताह्वानवेलायां भेरीं शृण्वन्ति ये नराः ।
तैर्नदीतरणं नैव यानं वा योजनात्परम् ॥ १५२ ॥

अनादृत्योत्सवं मोहाद्दूरं यायाज्जनो यदि ।
स याति निरयस्थानं प्रेत्य दुःखमिहापि वा ॥ १५३ ॥

तस्मादवभृथं यावद्वसेत्तत्रैव नो व्रजेत् ।
ध्वजार्थमङ्कुरा येन न्यस्तास्स यदि कारणात् ॥ १५४ ॥

कुतश्चिदसमर्थो वा मृतो वा देशिकोत्तमः ।
शेषं समापयेदन्यः पुत्रो वा तदनुज्ञया ॥ १५५ ॥
शिष्यो वा यदि वा भ्राता ऋत्विग्वा गुणवत्तरः ।

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे ध्वजारोहणविधिर्नाम दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ॥

### महोत्सवविधिः ॥

श्रीभगवानुवाच—

उत्सवारम्भदिवसादर्वागहनि सप्तमे ।
अङ्कुरानर्पयेल्लग्ने शोभने देशिकोत्तमः ॥ १ ॥

[1]अष्टोत्तरशतेष्वेव पालिकासु यथाविधि ।
[2]षट्त्रिंशत्स्वथवा पश्चाद[3]लङ्कारैस्समाचरेत् ॥ २ ॥

---

1. अष्टोत्तरशतं वापि पालिकानां A 2. षट्त्रिंशद्भिस्तु वा $M_2$
3. ०अलङ्कारं T, $P_1$, $P_2$



क्रमुकैर्दारुजैर्वापि तोरणैर्वीथिकामुखम् ।
चत्वराणि तथाग्रेषु गोपुराणामलङ्क्रिया ॥ ३ ॥

फलभारावनम्राश्च कदलीक्रमुकादयः ।
पार्श्वेषु तोरणानां स्युः स्थाप्यागमनवीथयः ॥ ४ ॥

समभूमितलाः कार्यास्सिकताभिश्च शोभिताः ।
दुकूलक्षौमवासोभिर्दर्भमालाशतेन च ॥ ५ ॥

ध्वजैश्च सर्वतो दिक्षु शोभयेच्च प्रपादिभिः ।
शोधयेत्सर्वभूभागं गोमयाम्भोभिराप्लुतैः ॥ ६ ॥

प्रासादभित्तयः कार्याश्चित्रिता वर्णपञ्चकैः ।
[1]रम्भाभिः पूर्णकुम्भैश्च दीपिकावलिभिस्तथा ॥ ७ ॥

मुक्तादामभिरन्यैश्च साङ्कुरैः पालिकाशतैः ।
देशाद्देशात्समेतानां वर्णानां च तदुत्सवे ॥ ८ ॥

सेवितुं देवदेवेशमन्नाद्यैस्तुष्टिमावहेत् ।
प्रपापानीयशालाद्यैर्यजमानो दिवानिशम् ॥ ९ ॥

रोगार्तानथ भैषज्यैर्भिषजेद् धनराशिभिः ।
प्रथमावरणे ब्रह्मन् [2]कारयित्वा च मण्टपम् ॥ १० ॥

यद्वावकाशानुगुणं द्वितीयावरणे भवेत् ।
अन्तरालेषु सर्वत्र दिशामिष्टं च[3] तद्भवेत् ॥ ११ ॥

सप्तहस्तायतं यद्वा पञ्चहस्तायतं [4]शुभम् ।
विस्तारायामसदृशं चतुर्द्वारसमन्वितम् ॥ १२ ॥

---

1. अम्भोभिः $M_2$ 2. कारयेद्यागमण्डपम् T,, $P_1$, $P_2$ 3. क्वचिद्भवेत् T, $P_1$, $P_2$ 4. तु वा T, $P_1$, $P_2$

मण्डपं कारयेत्तस्य परितः कारयेत् प्रपाम् ।
तस्य मध्ये त्रियंशे तु वेदिं हस्तसमुच्छ्रिताम् ॥ १३ ॥

विस्तीर्णां द्वित्रिहस्तेन वेद्याः प्राच्यां प्रकल्पयेत् ।
कुण्डमाहवनीयस्य चतुरश्रं यथोदितम् ॥ १४ ॥

दक्षिणस्यां दक्षिणाग्नेर्दिशि चापसमाकृति ।
कुण्डं च[1] गार्हपत्यस्य प्रतीच्यां वृत्तमद्भुतम् ॥ १५ ॥

सभ्यस्य कुण्डं कौबेर्यां त्रिकोणं तदनन्तरम् ।
ऐशान्यामग्निकोणे वा कुण्डं च चतुरश्रकम् ॥ १६ ॥

आवसथ्यस्य शिखिनः पञ्चाग्न्युत्सवमुत्तमम् ।
यद्वावसथ्यरहितं चतुरग्नि चतुर्दिशम् ॥ १७ ॥

सभ्यावसथ्यरहितं यद्वाग्नित्रयसंयुतम् ।
एकमाहवनीयं वा कल्पयेत्कर्तुरिच्छया ॥ १८ ॥

अश्वत्थादिद्रुमैर्द्वारतोरणानि चतुर्दिशम् ।
स्रुक्स्रुवौ कारयेदष्टमङ्गलानि यथापुरम् ॥ १९ ॥

आसनान्यृत्विजां[2] होमपात्राणि विविधानि च ।
मण्टपानां च पुरतः प्रपा स्यात्पार्श्वयोरपि ॥ २० ॥

दुकूलक्षौम[3]कौशेयैर्विचित्रै[4]र्मण्टपं प्रपाम् ।
[5]वितानयेद्वेष्टयेच्च स्तम्भानन्तर्बहिःस्थितान् ॥ २१ ॥

मुक्तादामानि सर्वत्र लम्बयेद् दीपमालिकाः ।
आरोपयेच्च स्तम्भेषु पताकावलिबन्धनम् ॥ २२ ॥

---

1. तु $P_1$, $P_2$ 2. आसनं त्वृत्विजां T, $P_1$, $P_2$ 3. °कार्पासैः $M_2$
4. विचित्रं T, $P_1$, $P_2$ 5. वितानैः T



मुक्तावितानं बध्नीयात्पुष्पमालाश्च सर्वतः ।
एवमादिपरिष्कारैर्भूषयेन्मण्टपादिकम् ॥ २३ ॥

तिरस्करिण्यो विपुला बध्नीयाच्च विचित्रिताः ।
अग्रे चतुर्णां वरणमाचार्याणामथ[1]र्त्विजाम् ॥ २४ ॥

षोडशानां तथान्येषां स्वीकारः परिचारिणाम् ।
[2]ते च भूष्या यथावित्तं भूषणैः कटकादिभिः ॥ २५ ॥

वासोभिश्च नवैश्चित्रैरधिकारानुसारतः ।
उष्णीषैरुत्तरीयैश्च गन्धद्रव्यानुलेपनैः । २६ ॥

शोभनीयाः प्रयत्नेन यजमानेन सर्वथा ।
स्नपनं चोत्सवारम्भे तदन्ते च यथोदितम् ॥ २७ ॥

कुर्याद्दिवस्य पूर्वेद्युः कौतुकं बन्धयेद् गुरुः ।
सौवर्णे राजते वापि पात्रे [3]कलमतण्डुलैः ॥ २८ ॥

[4]खारीद्वयात्तदर्धेन यद्वा पादेन सम्मिते ।
न्यसेत्सूत्रं च सौवर्णं क्षौमं कार्पासमेव वा ॥ २९ ॥

सप्तभिः पञ्चभिर्वापि सूत्रं क्षौमादितन्तुभिः ।
शतेन षष्ट्यारूढेन फलैः क्रमुकजैरपि ॥ ३० ॥

नागवल्लीदलैस्सार्धं फलसंख्या चतुर्गुणैः ।
तदर्धैर्वा तदर्धैर्वा कदल्यादिफलैरपि ॥ ३१ ॥

सार्धं तदनु तत्पात्रं साधारं न्यस्य मूर्धनि ।
वस्त्रेणाच्छादितं छत्रचामरव्यजनान्वितम् ॥ ३२ ॥

---

1. च ऋत्विजाम् T, $P_1$, $P_2$ 2. $M_1$ कोशे इदं नोपलभ्यते 3. विमल-तण्डुले $P_1$, $P_2$ 4. खारीद्वयेन वार्धेन T, $P_1$, $P_2$

सहस्रदीप[1]संयुक्तं सवितानं च मूर्तिपः ।
पठद्भिश्शाकुनं सूक्तं ब्राह्मणैर्वेदपारगैः ॥ ३३ ॥

तूर्यमङ्गलगीतैश्च सार्धं नीत्वा प्रदक्षिणम् ।
धाम विष्णोस्तथा तस्य बहिरावरणानि च ॥ ३४ ॥

प्रादक्षिण्येन वा ग्रामं प्रविशेद्देवतान्तिकम् ।
देवस्य पुरतो भूमौ[2] तले गोमयवारिणा ॥ ३५ ॥

आलिप्ते चतुरश्रे च शालिभारेण पूरिते ।
पात्रं निधाय पुण्याहं वाचयित्वा यथाविधि ॥ ३६ ॥

सभाजयित्वा तत्सूत्रमस्त्रमन्त्रेण देशिकः ।
अङ्गुष्ठानामिकाभ्यां [3]तत् गृहीत्वा हस्तयोर्द्वयोः ॥ ३७ ॥

अपराजितया सूत्रं चन्दनक्षोदवारिणा ।
आलिप्य दक्षिणे हस्ते बध्वा चोत्सवकौतुकम् ॥ ३८ ॥

स्पृष्ट्वा दक्षिणहस्तेन सूत्रं [4]वारांश्च तज्जपेत् ।
अस्त्रमन्त्रं तथार्घ्याद्यैरिष्ट्वा देवं निवेदयेत् ॥ ३९ ॥

महापूपं तथापूपान् पृथुकांश्च फलान्यपि[5] ।
गेयं नृत्तं तथा वाद्यमाचरेद्देवतान्तिके ॥ ४० ॥

त्रिभिर्भागवतैर्देवं स्थानेऽन्यत्र निवेशयेत् ।
स्नानान्तं क्षौमवसनमालिप्तं [6]चाञ्जनादिना ॥ ४१ ॥

भूषितं भूषणैस्सर्वैस्स्रग्विणं देवदैवतम् ।
अर्चयित्वा यथाशास्त्रं परमान्नं निवेदयेत् ॥ ४२ ॥

---

1. बहुप्रदीप० T, $P_1$ ; बहुदीपक० $P_2$ 2. भूमि० T, $P_1$, $P_2$ 3. तु $P_1$, $P_2$
4. वारान् शतं जपेत् T, $P_1$, $P_2$ 5. फलानि च $M_1$ 6. चन्दनादिना T, $P_1$, $P_2$



यथोदितं प्रतिष्ठायां तथा[1] शय्यानुकल्पनम् ।
बिम्बस्योपरि विन्यस्य शयने स्थापयेच्छुभे ॥ ४३ ॥

कोणेषु स्थापयेद्दीपान् पालिकास्साङ्कुरास्तथा ।
तूर्यघोषैस्तथा वेदैस्स्तोत्रैस्स्तुत्वा मधुद्विषम् ॥ ४४ ॥

निशां नयेज्जागरेण समाहितमना गुरुः ।
श्वोभूते शोभने प्राप्ते मुहूर्ते भास्करोदये ॥ ४५ ॥

उत्तिष्ठेत्यादि[2]मन्त्रेण त्रिभिर्भागवतैः सह ।
दिक्षु शाकुनिकं सूक्तं पठत्सु ब्राह्मणेष्वपि ॥ ४६ ॥

उत्थाप्य शयनाद्देवं तमिदं विष्णुरित्यृचा ।
आरोपयेयुश्शिबिकां [3]सौवर्णप्रभया सह ॥ ४७ ॥

वहेयुर्भूसुरा[4] यानं ध्यायन्तो विहगाधिपम् ।
विकिरेत्सर्वतो दिक्षु पुष्पाणि सुरभीणि च ॥ ४८ ॥

लाजांश्च साकं मुक्ताभिस्तूर्यघोषैश्च नादयेत् ।
ईदृशैर्मङ्गलैरन्यैस्सर्वावरणभूमिकाः[5] ॥ ४९ ॥

नीत्वा प्रदक्षिणं यानादवरोप्य प्रभान्विते ।
भद्रासने दुकूलादिचित्रास्तरणशोभिते ॥ ५० ॥

पार्श्वे कल्पद्रुमच्छायाशीतले स्वर्णनिर्मिते ।
निवेश्य मण्टपे सर्वमुपचारं समाचरेत् ॥ ५१ ॥

[6]प्राहृतं चाहृतं सर्वं द्रव्यमुत्सवकारणम् ।
देवाय दर्शयेत्सर्वं जनसंसदि देशिकः ॥ ५२ ॥

---

1. यथा शयनकल्पनम् T, $P_1$, $P_2$ 2. उत्तिष्ठोत्तिष्ठ० $M_1$ 3. सुवर्ण० T, $P_1$, $P_2$ 4. शिबिका० A 5. ०भूमिषु A 6. प्राभृतं $P_2$

[1]कृत्वोपचारमखिलं [2]तद्बिम्बं स्नानमण्टपे ।
स्नापयेद्देवदेवेशं यथापूर्वोदितैः क्रमैः ॥ ५३ ॥

आचार्यो यजमानश्च समीक्ष्य विभवोदयम् ।
महाहविर्निवेद्यान्ते हुत्वा हव्यैर्यथाविधि ॥ ५४ ॥

गर्भगेहं [3]विमानस्य नयेन्मङ्गलसंयुतम् ।
ततोऽपराह्णसमये चाङ्कुराधारमृत्तिकाम् ॥ ५५ ॥

आनेतुं बहिरुद्यानभूमेर्यद्वा नदीतटात् ।
यानमारोप्य गरुडं सेनान्यं [4]वा परिष्कृतम् ॥ ५६ ॥

देवादेशं पुरस्कृत्य सर्वमङ्गलसंयुतम् ।
वहद्भिः पालिकाः पूर्वं खनित्रं चापि भूषितम् ॥ ५७ ॥

ब्राह्मणैर्बहुभिर्वेदानधीयानैस्समन्ततः ।
नीत्वा प्रदक्षिणं ग्रामं ततो निर्गत्य देशिकः ॥ ५८ ॥

दिशं प्राचीमुदीचीं वा प्रतिसंगृह्य मृत्तिकाम् ।
यथापूर्वोदितं धाम प्रविश्य रजनीमुखे ॥ ५९ ॥

प्रदोषे यागसदसि पालिका द्वादशावराः[5] ।
शरावकुम्भसहितास्तद्वर्गा अपि षोडश ॥ ६० ॥

ईशानभागे संस्थाप्य सोमकुम्भसमन्विताः ।
आवपेत्तासु बीजानि मुहूर्ते शोभने गुरुः ॥ ६१ ॥

ततः प्रविश्य सदनं यजमानो गुरुश्च तौ[6] ।
प्रणम्य दण्डवद्भूमौ देवमुत्सवसम्पदम् ॥ ६२ ॥

1. कृतोपचार° T, $P_2$ 2. ततः स्नपनमण्टपे T, $P_1$, $P_2$ 3. समासाद्य A
4. च $M_1$ 5. °अपराः T 6. तं $P_1$, T



याचेतां गुरुरन्वक् च बद्ध्वा कल्याणकौतुकम् ।
उत्सवस्नानबल्यर्थं प्रतिमासु यथाक्रमम् ॥ ६३ ॥

सुदर्शने च शयने कल्पितेऽन्यत्र पूर्ववत् ।
बद्ध्वा प्रतिसरं सर्वमधिवास्य यथाक्रमम् ॥ ६४ ॥

उत्थाप्य सद्यश्चाराध्य प्रादक्षिण्येन मन्दिरम् ।
नीत्वा प्रवेश्य यागार्थमण्टपं तत्र चासने ॥ ६५ ॥

नित्योत्सवार्चां चक्रं च निवेश्य तदनन्तरम् ।
वेदिकायां धान्यपीठं कृत्वा पूर्वोदितक्रमात् ॥ ६६ ॥

तत्र प्रक्षालितान् कुम्भान् सूत्रेण परिवेष्टितान् ।
गन्धोदकेन सम्पूर्णान्नवरत्नयुतान्नव ॥ ६७ ॥

सर्वगन्धरजोमिश्रान् करकेण समन्वितान् ।
प्रत्येकं न्यस्तसौवर्णनिष्कानश्वत्थपल्लवैः ॥ ६८ ॥

कुशकूर्चेन सहितान्मुखेष्वेव[1] समल्लिकान् ।
मध्यमं वस्त्रयुग्मेन शिष्टानेकेन वाससा ॥ ६९ ॥

वेष्टितान् वेदिकाभूमौ स्थापयेद्धान्यराशिषु ।
आयतं सप्तभिर्हस्तैः षड्भिर्वा चाथ पञ्चभिः ॥ ७० ॥

विस्तीर्णं वस्त्रमायाममानार्धेन नियोजयेत् ।
भगवन्मयविप्रैश्च पुण्याहमपि वाचयेत् ॥ ७१ ॥

द्वारतोरणकुम्भादीन् प्रतिष्ठायामिवार्चयेत् ।
मध्यकुम्भे मूलबेरं [2]करके च सुदर्शनम् ॥ ७२ ॥

1. मुखेष्वपि सपल्लवान् A 2. करकेष्वस्त्रपूजनम् M

पूर्वाद्याशागते कुम्भे वासुदेवादिकान् यजेत् ।
आग्नेयादिषु कोणेषु यष्टव्याः पुरुषादयः ॥ ७३ ॥

[1]क्रमेण पुरुषस्सत्यस्त[2]थैवाच्युतदेवता ।
अनन्तश्चेति हविषा चतुर्णां च निवेदनम् ॥ ७४ ॥

द्वारकुम्भे[3] तथास्त्रे च बलिबिम्बे[4]ऽष्टमङ्गलम् ।
वेष्टितं वाससा वेदेरधस्ताद्धान्यराशिषु ॥ ७५ ॥

न्यस्याभ्यर्च्य चतुर्दिक्षु वेदतूर्यादिघोषणे ।
प्रवृत्ते जुहुयादग्नौ ध्यायन्नाहवनीयके ॥ ७६ ॥

वासुदेवं दक्षिणेऽग्नौ सङ्कर्षणमनन्तरे ।
प्रद्युम्नं पश्चिमे चाग्नावुदीचीनेऽनिरुद्धकम् ॥ ७७ ॥

आवसथ्ये मूलमूर्तिमिष्ट्वा तीर्थावसानिकम् ।
सन्निधिं प्रार्थ्य कुण्डेषु जुहुयात्सर्पिरादिभिः[5] ॥ ७८ ॥

सर्पिषा च प्रसूनैश्च धूपद्रव्यैश्च पद्मज ।
समिधा पयसा दध्ना तिलव्रीहियवैस्तथा ॥ ७९ ॥

तत्तद्दैवतमन्त्रेणा(प्य)ष्टोत्तरशतं पृथक् ।
अष्टाविंशतिवारान्वा कुण्डेषु प्रागुपक्रमः ॥ ८० ॥

पायसैः कृसरैर्गौल्यैर्हरिद्रान्नैश्च मौद्गिकैः ।
होतव्यं पौरुषैः सूक्तैः पृथगग्निषु पञ्चसु ॥ ८१ ॥

---

1. तथैव T, $P_1$, $P_2$ 2. क्रमेणाच्युत° T, $P_1$, $P_2$ 3. कुम्भे कुम्भे T, $P_1$. $P_2$ वारिकुम्भे A ; कुम्भे कुम्भे तथास्त्रे च विन्यसेत् अष्टमङ्गलम् $M_2$ 4. बलिबिम्बे चैवाष्टमङ्गलम् $P_1$, $P_2$, T 5. समिदादिभिः A



पञ्चमे परमात्मेन ब्रह्माद्युद्दिश्य[1] दैवतम्[2] ।
तत्तन्नाम्ना[3] चतुर्थ्यन्तं परिवारपदान्वितम् ॥ ८२ ॥

स्वाहान्तं मन्त्रमुच्चार्य ध्यात्वा ब्रह्मादिदैवतम्[4] ।
ब्रह्मा प्रजापती रुद्रस्सर्वे देवा यथाक्रमम् ॥ ८३ ॥

छन्दांसि वेदा ऋषयो गन्धर्वाश्च सरीसृपाः ।
यक्षाश्चाप्सरसश्चैव मासाद्यैः सह वत्सराः ॥ ८४ ॥

सरितश्च समुद्राश्च पर्वताश्च तथापगाः ।
भूतानि पशवो वृक्षास्तथैवौषधयस्स्मृताः ॥ ८५ ॥

वनस्पतिश्चोद्भिदश्च स्वेदजाश्चाण्डजास्तथा ।
जरायुजाश्च भूरादिसप्तलोकास्तथैव च ॥ ८६ ॥

अतलाद्यास्तथा लोकास्सप्त चण्डादिदेवताः ।
इत्येतेभ्यो [5]हविर्द्रव्यं जुहुयान्मूलविद्यया ॥ ८७ ॥

इदं विष्णुरिति प्रोच्य पूर्णाहुतिमथाचरेत् ।
न दहेत्परिधीन् दर्भान् देवान्नोद्वासयेत् स्थितान् ॥ ८८ ॥

प्रत्यहं धारयेदग्निं[6] यावत्तीर्थदिनावधि ।
अहोरात्रं प्रतिदिनं जुहुयादुक्तवर्त्मना ॥ ८९ ॥

एकाग्नावपि होतव्यं होमद्रव्यमशेषतः ।
त्रये चतुष्टये चैवमग्नीनां चतुरानन[7] ॥ ९० ॥

बलिप्रदानं प्रथमं कुर्याद्यागस्य मण्टपे ।
चक्रं च बलिबिम्बं[8] च समादायात्तमूर्तिना ॥ ९१ ॥

---

1. °उद्दिश्यदेवताः A ; ब्रह्मादीन् च पृथक् पृथक् $M_2$ 2. देवताः $P_1$, $P_2$ 3. °नाम T, $P_1$, $P_2$ 4. °देवताः T, $P_1$, $P_2$ 5. बलिं दद्यात् A ; बलिद्रव्यं T, $P_1$, $P_2$ 6. °अग्नीन् T, $P_1$, $P_2$ 7. कमलासन T, $P_1$, $P_2$ 8. °मूर्तिं A

साकं निष्क्रम्य सदनात्तद्द्वारे कुमुदादिकम् ।
अभ्यर्च्य पुरतो दद्याद्बलिं भूमितले शुचौ ॥ ९२ ॥

पात्रस्थं [1]च बलिद्रव्यं [2]गन्धं प्रसवभाजनम् ।
तोयपूर्णं च करकं दीपपात्रं च दीपिकाम्[3] ॥ ९३ ॥

धूपपात्रं गृहीत्वाग्रे गच्छन्तु परिचारकाः ।
अग्रे गच्छेदस्त्रमूर्तिस्ततश्चक्रमनन्तरम् । ९४ ॥

[4]नित्योत्सवार्चां तदनु वितानादिसमन्विताम् ।
ततश्चण्डप्रचण्डादीन् द्वारेष्वावरणेषु च ॥ ९५ ॥

नित्योत्सवप्रक्रियया बलिमभ्यर्च्य निक्षिपेत् ।
मध्यमारभ्य च ग्रामे ब्रह्मादीनां यथाविधि ॥ ९६ ॥

देशेष्वीशानपर्यन्तं दत्त्वाभ्यर्च्य बलिं [5]तथा ।
महापीठे बलिद्रव्यं परिशिष्टमशेषतः ॥ ९७ ॥

दद्यात्पारिषदान् सर्वानुद्दिश्य कमलासन ।
मुहूर्ते शोभने प्राप्ते गुरुरुत्सवकौतुकम् ॥ ९८ ॥

शयनस्थमुपस्थाप्य[6] मन्त्रमुत्तिष्ठपूर्वकम् ।
उच्चारयन् स्वस्तिसूक्तं पठद्भिर्ब्राह्मणैस्सह ॥ ९९ ॥

निष्क्रम्य मन्दिरात्तस्मादुच्चार्य च रथन्तरम् ।
समारोप्य रथं युक्तं चतुर्भिर्हस्तिपुङ्गवैः ॥ १०० ॥

वाजिभिर्वा बलीवर्दैः शीघ्रगामिभिरुत्तमैः ।
कल्पकद्रुमसंयुक्तं हेमपीठमलङ्कृतम् ॥ १०१ ॥

1. तद्बलि॰ T, $P_1$, $P_2$ 2. घण्टां T, $P_1$, $P_2$ 3. दीपिका: T, $P_1$, $P_2$
4. अयं श्लोक $M_1$ कोशे नोपलभ्यते। 5. वत: $P_1$ 6. ॰समुत्थाय T, $P_1$



रथस्योपरि कृत्वा च नयेदास्थितसारथिम् ।
यन्त्रेण वा विप्रवरै[1]रथीयानैर्बलान्वितैः ॥ १०२ ॥

गजे वा स्यन्दनालाभे याने वा तदसम्भवे ।
भद्रं कर्णेति मन्त्रेण यानमारोपयेद् गुरुः[2]: ॥ १०३ ॥

स पुष्पहेमप्रभया युक्तं पुष्पैरलङ्कृतम् ।
हैमेन च वितानेन[3] युक्तं पुष्पादिशोभिना ॥ १०४ ॥

कूटाकारेण वा युक्तं मयूरच्छदशोभिना ।
सर्वालङ्कारयुक्तेन सुमनःपरिवेषिणा ॥ १०५ ॥

याने तत्र समासीनमभ्यर्च्य न्यासपूर्वकम् ।
देवं निवेदयेत्तस्मै भक्ष्यं च पृथुकादिकम् ॥ १०६ ॥

नान्नं चरणयोर्न्यस्येल्लिशाचूर्णानि सर्वशः ।
दीपैरुदग्रैर्बहुभिः परिषिक्तैर्घृतादिना ॥ १०७ ॥

परस्सहस्रैस्सर्वत्र दीपयेच्च शतावरैः ।
द्विजेन्द्रमुख्यैर्बहुभिर्भूषितैर्धवलाम्बरैः ॥ १०८ ॥

कञ्चुकोष्णीषसहितैर्व्यालव्यजनपाणिभिः ।
तालव्यजनहस्तैश्च बर्हिबर्हकरैस्तथा ॥ १०९ ॥

मुक्तातपत्रैः श्वेतैश्च[4] मेघडम्बरधारिभिः ।
बिभ्राणैर्धूपपात्राणि गन्धोद्गारीणि विश्वतः ॥ ११० ॥

यानारूढेन पुरतो रचिताञ्जलिकर्मणा ।
[5]उच्चैर्ध्वजाधिरूढेन तथा तार्क्ष्येण पद्मज ॥ १११ ॥

1. ॰वर्यैः T, $P_1$, $P_2$ 2. तदा T, $P_1$, $P_2$ 3. विमानेन T, $P_1$, $P_2$
4. मुक्तातपत्रहस्तैश्च T, $P_1$, $P_2$ 5. मत्स्यध्वज॰ $M_2$

पृष्ठतश्च प्रणमता शिबिकां कनकोज्ज्वलाम् ।
आरूढेन विरिञ्चादीन् समुत्सारयता बहिः ॥ ११२ ॥

विष्वक्सेनेन देवेन वेत्रहस्तेन सेवितः ।
उपानहौ पादुके च पात्रे कनकनिर्मिते ॥ ११३ ॥

समारोप्य पुरो विप्रैर्धारयद्भिरलङ्कृतैः ।
राजचिह्नानि चान्यानि यातव्यमविलम्बितम् ॥ ११४ ॥

विप्रैस्त्रयीमधीयानैर्जपस्तुतिपरायणैः ।
नृत्यता गायता चापि गाणिक्येनानुसेवितम् ॥ ११५ ॥

वीणादिवादनपरैर्वन्दिभिश्च तथा[1]परैः ।
षड्जादिगीतनिपुणैर्वाद्यवादनकोविदैः ॥ ११६ ॥

गद्यं पद्यं तथा मिश्रं पठद्भिस्स्तोत्रमुज्ज्वलम् ।
भाषाश्च बहुधाश्चित्रा[2] भाषमाणैरितस्ततः ॥ ११७ ॥

वैतण्डिकैस्तथा जल्पनिपुणैर्वादशिक्षितैः ।
तथा तत्त्वकथानिष्ठैः पदार्थज्ञैश्च तार्किकैः ॥ ११८ ॥

मीमांसकैर्याज्ञिकैश्च छान्दसैः सांख्यकोविदैः ।
योगज्ञैश्च पुराणज्ञैश्शाब्दिकैस्तत्त्ववेदिभिः ॥ ११९ ॥

मौहूर्तिकैश्च गणशः परस्परजिगीषुभिः ।
तत्तच्छास्त्रोक्तमार्गेण प्रमेयं बहुधा स्थितम् ॥ १२० ॥

उच्चैर्ब्रुवाणैर्विद्वद्भिः पञ्चरात्रपरायणैः ।
वासुदेवस्य माहात्म्यं कथयद्भिश्च [3]सात्त्वतैः ॥ १२१ ॥

1. °विधैः T 2. भिन्नाः T, $P_1$, $P_2$ 3. सात्त्विकैः T, $P_1$, $P_2$



संस्कृतं प्राकृतं मिश्रमीरयद्भिरितस्ततः ।
शास्त्रेषु नैपुणं सर्वं प्रदर्शयितुमुद्यतैः ॥ १२२ ॥

देवस्य पुरतः पृष्ठे पार्श्वतश्च स्थितैर्जनैः ।
सेनया सर्वतो दिक्षु चतुरङ्गबलाढ्यया ॥ १२३ ॥

देवस्य पार्श्वयोः पूर्वं लाक्षारञ्जितमस्करैः ।
यन्त्रैर्दारुमयैश्चित्रैः पक्ष्याकारैरितस्ततः ॥ १२४ ॥

देवताकृतियन्त्रैश्च तथा यन्त्रैर्गजादिभिः ।
निषादिभिस्समारूढैः स्त्रीभिश्च भरतोदितैः ॥ १२५ ॥

मार्गैर्बहुविधैर्नृत्तं दर्शयन्तीभिरद्भुतम् ।
[1]लेखायन्त्रैस्त्रियारूढैर्यन्त्रैरन्यैस्तथाविधैः ॥ १२६ ॥

गतागतानि कुर्वाणैरनुयातस्समाकुलैः ।
इत्थमावरणं सर्वं परिक्रम्य बहिस्तथा ॥ १२७ ॥

ग्रामादिवीथिकाश्चापि परिक्रम्य प्रदक्षिणम् ।
प्रवेशसमये चापि प्राकारवलयं तथा ॥ १२८ ॥

प्रादक्षिण्येन गत्वान्तः प्रविशेन्मण्टपावनिम् ।
तत्रावरोपयेद्देवं बलिबेरं तु मन्दिरे ॥ १२९ ॥

चक्रं च यागसदने बलिपीठे बहिः स्थिते ।
अन्नमूर्तिं क्षिपेन्नित्यं समाराधनकल्पितैः ॥ १३० ॥

वस्तुभिर्द्विगुणैर्नित्यं ध्रुवबेरं समर्चयेत् ।
रात्रिशेषे व्यतिकान्ते मण्टपे सिंहविष्टरे ॥ १३१ ॥

1. डोला° $M_2$

अवस्थाप्यौत्सवं बिम्बमर्चयेच्छास्त्रवर्त्मना ।
स्नपनं तत्र वा बिम्बे यद्वा स्नपनकौतुके ॥ १३२ ॥

एकबेरविधाने तु मूलबिम्बेऽभिषेचनम् ।
प्रत्यहं स्नपनं कुर्याद्यथाशक्ति यथावसु[1] ॥ १३३ ॥

महाहविर्निवेद्याथ बिम्बे कल्याणकल्पिते ।
मण्डनालयमासाद्य शोभयेद् भूषणादिभिः ॥ १३४ ॥

बिम्बे तत्र[2] स्थिते यागमण्टपं प्राप्य देशिकः ।
कुम्भादिकं समभ्यर्च्य निवेद्य च [3]यथोदितम् ॥ १३५ ॥

हुत्वा च पूर्ववत्पीठे बलिं दत्त्वा यथाविधि ।
सर्वमन्यच्च वल्यर्चां नीत्वा ग्रामादि[4]वीथिकाम् ॥ १३६ ॥

यथानिशं विधायान्वगुत्सवार्चां नयेद्बहिः ।
यथापुरमलङ्कारं कृत्वा परिकरांस्तथा ॥ १३७ ॥

दिवसानुगुणानन्यान् ध्वजादीन्विष्वगुच्छ्रितान् ।
ताम्बूलवीटिकां दत्त्वा स्थाने स्थाने [5]समाहृताम् ॥ १३८ ॥

पृथुकादींस्तथा भक्ष्यान्नालिकेरफलानि च ।
पानीयाचमनादीनि चोदितानि यथाविधि ॥ १३९ ॥

दत्त्वा निवेद्यमखिलमद्भिः प्रोक्ष्यास्त्रविद्यया ।
निवेदयेदपूपादीन् पक्वं तूष्णीं प्रदर्शयेत् ॥ १४० ॥

पानीयं च तथा स्वादु पयःप्रभृति चाहृतम् ।
पुष्पमालादि यच्चान्यच्चन्दनक्षोदभाजनम् ॥ १४१ ॥

1. यथाविधि T, $P_1$, $P_2$ 2. अन्यत्र $M_1$ 3. समाहितम् $M_2$; यथासुखम् A 4. °वीथिका: T, $P_1$, $P_2$ 5. समाहिताम् $M_2$



भूषणं चाङ्गुलीयादि भक्त्या यत्प्रतिदीयते ।
प्रोक्ष्य सर्वमथास्त्रेण देवाङ्गे योजयेद् गुरुः ॥ १४२ ॥

ग्रामं प्रदक्षिणं नीत्वा तथैवावरणानि च ।
प्रवेश्य[1] धाम शिबिकामन्यामारोप्य मङ्गलाम् ॥ १४३ ॥

स्नानमण्टपभूभागे काञ्चने परमासने ।
सुखास्तरणसंयुक्ते यानादेरवरोप्य तम् ॥ १४४ ॥

निवेश्याभीष्टदिग्भागे संमुखं मखकौतुकम् ।
आराधयेद्भगवतः सर्वालङ्कारसंयुतः ॥ १४५ ॥

अहतेन [2]सुसूक्ष्मेण वाससा श्लक्ष्णतन्तुना ।
बद्धोष्णीषोत्तरासङ्गः कर्णिकाद्यैरलङ्कृतः ॥ १४६ ॥

सौवर्णवारवाणेन धवलेन विराजितः ।
बद्धस्वदेहसंनाहः पवित्रितकरश्शुचिः ॥ १४७ ॥

समाराधनवस्तूनि नयद्भिः परिचारकैः ।
कञ्चुकोष्णीषवासोभिर्भवितव्यं समन्ततः ॥ १४८ ॥

देवस्य दक्षिणे[3] पार्श्वे पूजकेन्द्रोपवेशनम् ।
आसितव्यं भगवतः पार्श्वयोः पृष्ठतस्ततः ॥ १४९ ॥

एकाग्रमानसैस्सर्वैरेकान्तिभिरुपासकैः ।
आसितव्यं यतिवरैस्त्रिदण्डैरेकदण्डिभिः ॥ १५० ॥

ब्रह्मध्यानपरैरन्वगाराधनविधिक्रमम् ।
अनुसन्धायिभिश्शश्वदुपवेष्टव्यमन्तिके ॥ १५१ ॥

1. प्रविश्य $M_1$ 2. तु $M_1$ 3. वामपार्श्वे तु देशिकेन्द्रोपवेशनम् $M_2$

बहिस्तेषां च कल्याणैर्वैष्णवैः संयतेन्द्रियैः ।
[1]आनन्दजाश्रुसलिलैराप्लुताङ्गैर्महीसुरैः ॥ १५२ ॥

उपासितव्यमन्यैस्तु सदस्यैर्मण्टपाद्बहिः ।
अधस्तात्सर्वतो दिक्षु प्रपायामुपवेशनम् ॥ १५३ ॥

अधस्तादग्रतो नृत्तगीतवाद्यविशारदैः ।
नाट्यं बहुविधं वाद्यं प्रकृष्टं बहुधा स्थितम् ॥ १५४ ॥

[2]नृत्तं गीतं च षड्जाद्यैः स्वरैः कालानुसारिभिः ।
प्रदर्शयद्भि[3]र्वाद्यानि निबद्धानीतराणि च ॥ १५५ ॥

आविष्कुर्वद्भिरन्यांश्च श्राव्यं दृश्यं च तद्द्वयम् ।
दर्शयद्भिरधीयानैस्त्रयीं [4]स्वाध्यायकल्पिताम् ॥ १५६ ॥

इतिहासपुराणानि कथयद्भिर्यथा तथा[5] ।
सन्निधातव्यमन्याभिर्वर्णिनीभि[6]स्समन्ततः ॥ १५७ ॥

इत्थं संसेविते तत्र मण्टपे मधुविद्विषम् ।
आर्चयित्वा ततस्त्वानर्पीठे नीत्वा यथापुरम् ॥ १५८ ॥

सहस्रधारापर्यन्तं स्नापयेत्पुरुषोत्तमम् ।
अलङ्कारासने नीत्वा तत्र कृत्यमशेषतः ॥ १५९ ॥

कृत्वा यात्रासने देवमारोप्य सपरिच्छदम् ।
प्रवेश्य मण्टप तत्र न्यसेत्तं भोजनासने ॥ १६० ॥

महाहविर्निवेद्याथ पानकान्तं यथोदितम् ।
सुखासने स्थापयित्वा राजवत्सर्वमाचरेत् ॥ १६१ ॥

---

1. तदानन्दाश्रु° $M_1$ 2. गीतं च दिव्यं षड्जाद्यैः $T, P_1, P_2$ 3. लास्यानि $T, P_1, P_2$ 4. त्रय्यन्त° $M_2$ 5. यथायथम् $T, P_1, P_2$ 6. सर्वाण्येभिः $M_2, P_1$



अलङ्कारासनं नीत्वा यानमारोप्य मङ्गलम् ।
अवरोप्यासने तत्र मण्डयित्वा यथापुरम् ॥ १६२ ॥

होमादिबलिदानान्तं कृत्वा सर्वमशेषतः ।
औत्सवं बिम्बमादाय कुर्यादेवं महोत्सवम् ॥ १६३ ॥

[1]प्रत्यहं च [2]मयोक्तेन विधिना विहितं क्रमात् ।
अपूर्वाभरणैर्माल्यैरपूर्वैश्चाम्बरैस्तथा ॥ १६४ ॥

अपूर्वोद्यानयानाद्यैर्यथा कौतूहलं भवेत् ।
तथा विशिष्य कर्तव्यं यावत्तीर्थदिनावधि ॥ १६५ ॥

यस्मिन्नास्थानभूभागे ये भोगाः कल्पिताः पुरा ।
तत्रैव ते विधातव्या देवस्य सति सम्भवे ॥ १६६ ॥

[3]श्रिया वसुधया सार्धं ग्रामादौ नित्यमुत्सवे ।
परिक्रमण[4]मीशस्य केवलस्यापि वा भवेत् ॥ १६७ ॥

अहनि प्रथमादौ स्याद्बलिदानमनुक्रमात् ।
पललं रजनीचूर्णं करम्भान् लाजसंयुतान् ॥ १६८ ॥

चरुणा सह संयोज्य बलिं दद्याद्यथाविधि ।
द्वितीयेऽहनि संयोज्य चरुणा तिलतण्डुलम् ॥ १६९ ॥

मिश्रिताश्चरुणा लाजान् [5]धान्यान्यापूपिकांस्तथा ।
तृतीये च चतुर्थे च नालिकेरजलैस्सह ॥ १७० ॥

सक्तुं च[6] शालिपिष्टं च संयोज्य चरुणा सह ।
पञ्चमे पद्मबीजानि पायसं शालितण्डुलम् ॥ १७१ ॥

---

1. उत्सवं $M_1$ 2. प्रत्यहमहमुक्तेन 3. धरया A 4. भ्रमण $T, P_1, P_2$ 5. धानानि° $P_2$ 6. सक्तूंश्च $P_1$

षष्ठे [1]अपूपान् संयोज्य चरुणा निक्षिपेद्बलिम्[2] ।
सप्तमादिषु सर्वत्र सार्धमन्नैश्चतुर्विधैः ॥ १७२ ॥

अपूपांश्च तथा सक्तून् प्रत्यहं निक्षिपेद्बलिम् ।
ब्रह्मादीशानपर्यन्तं स्थानेष्वष्टसु पूर्ववत् ॥ १७३ ॥

विधाय बलिपीठानि गोमयालिप्तभूमिषु ।
तेषु वाद्यं तथा नृत्तं गेयं नित्योत्सवं तथा[3] ॥ १७४ ॥

कृत्वा दद्यात्तोयपूर्वं बलिं तोयोत्तरं तथा ।
बलिमुद्रां दर्शयित्वा दर्शयेन्मङ्गलाष्टकम् ॥ १७५ ॥

बलिं प्रदक्षिणीकृत्य गच्छेयुर्बलिदायिनः ।
आरम्भदिवसे रात्रौ समाप्तिदिवसेऽहनि ॥ १७६ ॥

बलिमेकां क्षिपेन्मध्यदिवसेषु बलिद्वयम् ।
अह्नि रात्रौ च सर्वत्र बलिदानं यथाविधि ॥ १७७ ॥

अवसानदिने रात्रौ ग्रहणे विषुवे दिने[4] ।
प्राप्ते कुर्यादवभृथं यदि तस्मिन् बलिद्वयम् ॥ १७८ ॥

ग्रामादिरहिते स्थाने मध्ये तु पुरतो बलिम् ।
महापीठस्य वितरेद्ब्रह्मणे[5] देशिकोत्तमः ॥ १७९ ॥

पूर्वेद्युस्तीर्थदिवसाद्देवस्य मृगया भवेत् ।
मृगयादिवसात्पूर्वं जलद्रोण्यवगाहनम् ॥ १८० ॥

अवगाहदिनात्पूर्वदिवसे देवमर्चयेत् ।
श्रीभूमिभ्यां सहैकस्मिन्विष्टरे विपुले स्थितम् ॥ १८१ ॥

---

1. त्वपूपान् T, $P_1$, $P_2$ 2. °बहिः A 3. नित्योत्सवे यथा T, $P_1$, $P_2$
4. °अयने T, $P_1$, $P_2$ 5. ब्रह्मणो A



उद्यानादौ च देवीभ्यां सार्धं देवस्य निर्गमः ।
क्रीडाश्च तत्र बहुधा दर्शयेच्चोपदाः पुनः ॥ १८२ ॥

देशाद्देशादाहृतानि प्राभृतानि गुरुः स्वयम् ।
प्रदर्श्य देवदेवाय जनसंसदि मण्टपे ॥ १८३ ॥

इतो यात मिथस्सर्वे[1] इतो यातमितीर्य च ।
देवादीनपि [2]चाहर्तॄन् काले विज्ञापयेत्ततः ॥ १८४ ॥

तन्मयत्वाद्देशिकेन्द्रो देवोऽहमिति [3]भावयेत् ।
कुर्यादनुग्रहं सर्वं देवस्यालोक्य [4]चाननम् ॥ १८५ ॥

अभिप्रायं यथाराज्ञो ज्ञात्वा तेन [5]प्रदर्शनम् ।
ब्रुवन्ति तत्समीपस्था राज्ञां तत्तदनुग्रहम् ॥ १८६ ॥

सुदर्शनान्नमूर्तिभ्यां [6]सहिताभ्यां विनापि च[7] ।
सह बल्यर्चया कुर्याद्विना वा तं महोत्सवम् ॥ १८७ ॥

केवलोत्सवबिम्बेन दिनेष्ववभृथावधि ।
जलद्रोणीं जलस्नानदिने कृत्वा यथापुरम् ॥ १८८ ॥

उत्सवं देवदेवस्य प्रातरारभ्य मङ्गलम् ।
अपराह्णे जलद्रोण्यामवगाहनमिष्यते ॥ १८९ ॥

सोपानदेशे सरसि जलद्रोणीं निवेशयेत् ।
कटाहं वापि सौवर्णं पूरयेद्गन्धवारिभिः ॥ १९० ॥

मुक्ताकाराण्यक्षतानि[8] परितो विकिरेत् स्थले ।
जलेष्वावाह्य गङ्गाद्यास्सरितस्तास्सभाजयेत् ॥ १९१ ॥

---

1. यातमिदंसर्वं T, $P_1$, $P_2$ 2. च भक्तान् $M_1$ 3. भावयन् T, $P_1$, $P_2$
4. चासनम् $P_2$ 5. प्रदर्शितम् T, $P_1$, $P_2$ 6. सह ताभ्यां T, $P_1$, $P_2$
7. वा $P_1$ 8. मुक्ताभान्यक्षतान्यत्र T, $P_1$, $P_2$

जलेऽभिमन्त्रिते मन्त्रैरब्लिङ्गैर्देवमर्चितम् ।
उपचारैर्यथापूर्वं [1]स्नानान्तैरवगाहयेत् ॥ १९२ ॥

काले तस्मिन्नधीयीरन् सूक्तं वारुण[2]मुच्चके ।
तन्मया दिक्षु सर्वासु घोषयेत्तुर्यमुच्चकैः ॥ १९३ ॥

अवगाहनतो[3] देवं यानमारोप्य मण्टपम् ।
अन्यमानीय तत्रापि यथापूर्वं सभाजयेत् ॥ १९४ ॥

अनुष्ठितमिदं तीर्थं ब्रह्माद्यैरपि दैवतैः ।
एतश्चै तीर्थसलिलैः पीतैश्शिरसि धारितैः ॥ १९५ ॥

स्नानैर्निर्धूतपाप्मानो यान्ति ब्रह्म सनातनम् ।
मृगयादिवसे [4]वापि प्रातरारभ्य पूर्ववत् ॥ १९६ ॥

कृत्वोत्सवमशेषेण तस्यान्ते मृगया भवेत् ।
मृगयानुगुणैस्सर्वैर्भूषणैर्भूषितं ततः[5] ॥ १९७ ॥

तद्योग्यायुधसन्नाहं हस्त्यादौ[6] परिकल्पिते ।
आरोप्य कृत्रिमे चाश्वे नयेद् ग्रामादि पूर्ववत् ॥ १९८ ॥

देवीभ्यां सह [7]सिंहादौ सैन्यैर्हस्त्यादिभिर्युतम् ।
उद्यानमण्डपे चापि मध्ये सौवर्णविष्टरे ॥ १९९ ॥

आसने तत्र चासीनं स्नानपूर्वं समर्चयेत् ।
मण्टपेऽन्यत्र विधिना निवेद्य च महाहविः ॥ २०० ॥

यानमारोप्य तद्रात्रौ मन्दिरान्तर्भुवं नयेत् ।
नित्योत्सवं यथापूर्वं कुर्यात्तदनु मङ्गलम् ॥ २०१ ॥

1. स्नातैः M$_2$ 2. शाकुनम्° M$_2$ 3. अवगाढं ततो T, P$_1$, P$_2$
4. चापि M$_1$ 5. तथा M$_1$ 6. साधु M$_1$ 7. सोमादौ T, P$_1$, P$_2$



पश्चिमे रात्रिभागे तु तीर्थबिम्बाधिवासनम् ।
बद्ध्वा प्रतिसरं तीर्थबिम्बाभावे चतुर्मुख ॥ २०२ ॥

नित्योत्सवप्रतिकृतेरभावे त्वधिवासनम् ।
स्नानार्चायां भवेद्यद्वा बिम्बस्योत्सवकारिणः ॥ २०३ ॥

उत्सवं प्रातरारभ्य कुर्यात्पूर्वोदितक्रमात् ।
उत्थाप्य शायितं बिम्बं निवेश्य मुख[1]मण्डपे ॥ २०४ ॥

आदाय स्थापितान् कुम्भान्यागमण्डपभूमिषु ।
नीत्वा प्रदक्षिणं धाम तीर्थबिम्बस्य सन्निधौ ॥ २०५ ॥

स्थापयित्वा धान्यराशौ तीर्थबिम्बं यथाविधि ।
वस्त्रान्तमर्चयित्वान्ते मुहूर्ते शोभने गुरुः ॥ २०६ ॥

एकबेरे मूलबेरमन्यथा तीर्थकौतुकम् ।
कुम्भैरभ्युद्धृतैर्देवं मूलमन्त्रेण मन्त्रवित् ॥ २०७ ॥

पूर्वादिमध्यकुम्भान्तमभिषिञ्चेद्यथाविधि ।
स्नानादिदीपपर्यन्तं प्रतिकुम्भं समर्चयेत् ॥ २०८ ॥

पठत्सु विप्रवर्येषु दिक्षु स्वाध्यायमुच्चकैः ।
घोषयत्सु च वाद्येषु मन्त्रैरब्दैवतैर्गुरुः ॥ २०९ ॥

नववस्त्रोत्तरीयाद्यैर्दीपान्तैरर्चिते हरौ ।
ध्वजपीठस्य पुरतः क्षितौ गोमयवारिणा ॥ २१० ॥

आलिप्ते चतुरश्रे च शालिभारैर्विकीर्य च ।
वस्त्रपूर्वाद्यलङ्कारैरुलूखलमलङ्कृतम् ॥ २११ ॥

1. स्नान° M$_1$

क्षालितं स्थण्डिले पीठे स्थापयित्वा चतुर्मुख ।
श्रीसूक्तविद्यया लक्ष्मीं [1]ध्यायन् मन्त्रितमर्चितम् ॥ २१२ ॥

मुसलं क्षालितं चापि मन्त्रितं मूलविद्यया ।
आदाय मूर्तिपैस्सार्धं देशिकेन्द्रस्समाहितः ॥ २१३ ॥

अवहन्यान्निशाचूर्णं निक्षिप्तं तदुलूखले ।
गायन्त्यो गणिका [2]गाथां [3]मङ्गलं देवदासिकाः ॥ २१४ ॥

अवहन्युर्निशाचूर्णं यथा सूक्ष्मतरं भवेत् ।
निक्षिप्तचूर्णं तदनु कुम्भं वेष्टितवाससम् ॥ २१५ ॥

सकूर्चं [4]मल्लकं पीठे तण्डलैः परिकल्पितम्[5] ।
स्थापितं मूलमन्त्रेण गन्धादिभिरथार्चितम् ॥ २१६ ।

[6]आदाय कुम्भचूर्णैस्तैः श्रीसूक्तेनाभिषेचयेत् ।
ऋत्विजो देशिकेन्द्रश्च देवं गत्वा प्रदक्षिणम् ॥ २१७ ॥

अष्टाङ्गप्रणिपातेन प्रणिपत्य विकीर्य च ।
पुष्पाण्यञ्जलिभिर्देवं स्तुत्वा स्तोत्रैरनेकशः[7] ॥ २१८ ॥

अलङ्कृतैर्भागवतैश्छत्रचामरधारिभिः ।
तैरेव सर्वैर्बहुभिर्भाव्यं देवसमीपके[8] ॥ २१९ ॥

आरोप्य देवं हस्त्यादौ तीर्थबिम्बमलङ्कृतम् ।
पश्चादुत्सवबिम्बेन नीयमानेन पूर्ववत् ॥ २२० ॥

सहितं सरितस्तीर्थं नीत्वा यद्वा सरित्तटम् ।
दर्शे च पौर्णमास्यां चा(प्य)र्वाक् चेद्योजनावधौ ॥ २२१ ॥

1. ध्यात्वा $M_2$ 2. गीतं T, $P_1$, $P_2$ 3. मन्दिरे T, $P_1$, $P_2$
4. पल्लवं $M_2$ 5. परिकल्पिते $P_1$, $P_2$ 6. आचार्यः $M_2$ 7. ०अनेकधा $M_1$
8. ०समीपगैः T, $P_1$, $P_2$



समुद्रतीरमथवा मण्डपे तत्र कल्पिते ।
अवरोप्यासने यानान्निविष्टे तीर्थकौतुके ॥ २२२ ॥

कलशानग्रतः पञ्चविंशतिं दश सप्त च ।
यद्वा यद्वा [1]नव न्यस्य यथाविधि [2]यथापुरम् ॥ २२३ ॥

कलशैरभिषिञ्चेत चक्रं शिष्टैश्च वारिभिः ।
सरिदादौ च तीर्थेषु तीर्थान्यावाह्य [3]नामतः ॥ २२४ ॥

निमज्जयेत्तत्र [4]बिम्बं चक्रमन्त्रैर्यथाविधि ।
तीर्थार्थमौत्सवे बिम्बे समानीते तु वारिभिः ॥ २२५ ॥

प्रोक्ष्य कूर्चाग्रपतितैर्बिम्बं चक्रं निमज्जयेत् ।
चक्राभावे तु तत्कूर्चं केवलं देवसन्निधौ ॥ २२६ ॥

देवेन सह तत्काले निमज्जन्ति च ये जनाः[5] ।
ते निर्धूयाशुभं सर्वं महापातकमप्यथ ॥ २२७ ॥

यान्ति ध्रुवं सुदुष्प्रापं स्थानमाचन्द्रतारकम् ।
मण्टपे देवमानीय पूजयित्वा यथापुरम् ॥ २२८ ॥

महाहविर्निवेद्याथ ब्राह्मणान् भोजयेत्ततः[6] ।
प्रत्यहं भोजयेद्विप्रान् सहस्रं शतमेव वा ॥ २२९ ॥

आलयाभ्यन्तरं यानमारोप्य प्रापयेत्ततः ।
तद्रात्रौ मण्डपे देवं नीत्वाभ्यर्च्य यथाविधि ॥ २३० ॥

निवेश्य च यथान्यायं प्रभाते मण्टपान्तरे ।
भक्तैर्भागवतैश्चैव सेविते भूतले क्वचित् ॥ २३१ ॥

1. नवं T, $P_1$, $P_2$ 2. यथाक्रमम् T, $P_1$, $P_2$ 3. नामभिः T, $P_1$, $P_2$
4. कुम्भं चक्रं मन्त्रैर्यथाविधि A 5. नाराः T, $P_1$, $P_2$ 6. भोजयेत्तमाम् $M_1$

चक्राब्जं वर्तयित्वोक्तवर्त्मना वरुणान्वितम् ।
प्रसवैः कालजैः श्यामैः कृष्णैश्च तुलसीदलैः ॥ २३२ ॥

न्यूनातिरेकरहितैर्वर्णैरेव सितादिभिः ।
विचित्रयेत्पञ्चवर्णैश्चित्रिते तत्र[1] मध्यतः ॥ २३३ ॥

भद्रपीठे [2]यथायुक्ते न्यस्ते कल्याणकौतुकम् ।
निवेश्याराधयेदर्घ्यपाद्यादिभिरनुक्रमात् ॥ २३४ ॥

द्वादशाक्षरमन्त्रस्थान्यक्षराणि यथायथम् ।
उद्दिश्य भूषापर्यन्तैरर्घ्याद्यैर्नवभिः क्रमात् ॥ २३५ ॥

प्रत्यक्षरं समस्तानि पुष्पै[3]रुपचरेद्धरिम् ।
हृदयादीनि चाङ्गानि समुद्दिश्याञ्जलिस्थितैः ॥ २३६ ॥

फलं भवतु मे पुष्पैर्नम इत्यवसानकम् ।
[4]तं तं मन्त्रं समुच्चार्य मन्त्रवित् देशिकोत्तमः ॥ २३७ ॥

[5]भूषणानि तथोद्दिश्य श्रीवत्सादीन्यनुक्रमात् ।
आयुधानि च दिव्यानि चक्रादीनि यथाक्रमम् ॥ २३८ ॥

तथैवावरणस्थानां देवतानां समर्चनम् ।
मत्स्यादिमूर्तिदशकं केशवादींस्तथापरान् ॥ २३९ ॥

चतुर्विंशति संख्यातानुद्दिश्य कुसुमार्चनम् ।
पौरुषेण तु सूक्तेन प्रत्यृचं कमलासन ॥ २४० ॥

नारायणानुवाकेन विष्णुसूक्तेन देशिकः ।
पुष्पाणि दद्याद्देवस्य चरणाम्भोजयोर्द्वयोः ॥ २४१ ॥

1. तस्य T, $P_1$, $P_2$ 2. प्रमा° T,$P_1$,$P_2$ 3. अभ्यर्चयेद्धरिम् T,$P_1$,$P_2$
4. तन्त्रमन्त्रं T, $P_1$, $P_2$ ; तत्र मन्त्र A 5. एष श्लोकः $M_1$ कोशे नोपलभ्यते ।



तथोपनिषदैर्मन्त्रैः पञ्चभिस्सर्वपावनैः ।
दिक्षु वेदांश्च चतुरः पठेयुर्मन्त्रवित्तमाः ॥ २४२ ॥

विदिक्ष्वेकायनां शाखां तन्मयास्सुमुखास्तथा ।
अधीयीरंस्तथा [1]स्तोत्रैर्नृत्तैश्च सततोद्यतैः ॥ २४३ ॥

तोषयेद्देवदेवेशं गेयैश्च बहुधा स्थितैः ।
पुष्पाभिषेकं प्रहितैः[2] पुष्पैरेव सितादिभिः ॥ २४४ ॥

देवस्य कृत्वा देवाय पायसादि चतुर्विधम् ।
अन्नं निवेद्य जुहुयाद्दिश्यग्नेर्मण्टपस्य च ॥ २४५ ॥

समिद्भिराज्यैश्चरुभिश्चतुर्थ्यैश्च[3] पृथक्पृथक् ।
अष्टोत्तरशतं वारान् मूलमन्त्रेण मन्त्रवित् ॥ २४६ ॥

ततः प्रदक्षिणं कृत्वा देवं स्तुत्वा च भूतले ।
प्रणमेद्दण्डवद्यानमारोप्य शिबिकादिकम् ॥ २४७ ॥

प्रवेशयेदावरणं प्रथमं तत्र च स्थितः ।
सेवानुभूतिविवशान् भक्तान् भागवतांश्च सः ॥ २४८ ॥

ब्रह्मादीनपि कल्याणमनुसन्धातुमागतान् ।
प्रणतानालयं स्वं स्वं गन्तुं सर्वेश्वरो हरिः ॥ २४९ ॥

नियुज्यावरणस्थं [4]च परिक्रम्य प्रदक्षिणम् ।
सार्धमभ्यन्तरैर्नित्यै[5]स्सेवकैरनुयायिभिः ॥ २५० ॥

अभ्यन्तरं मन्दिरस्य प्रविशेन्मङ्गलान्वितम् ।
तदहर्निशि पूर्वस्मिन्न्यसेत्[6] स्नपनमण्टपे ॥ २५१ ॥

1. श्चातोद्यैः $M_2$ 2. पुष्पाभिषेकसहितैः $M_2$ 3. चतुर्भिश्च T,$P_1$,$P_2$
4. नियुज्यावरणं तच्च T, $P_1$, $P_2$ 5. नित्यं $M_2$ 6. यामे स्नपन° $M_2$

उत्सवान्तोचितं स्नानं कलशैराचरेत् क्रमात् ।
महाहविर्निवेद्याथ नीत्वा तं मण्डपान्तरे[1] ॥ २५२ ॥

यागमण्टपमासाद्य होमं कुर्याद्यथाविधि ।
शान्तिहोमं ततः कुर्याद्यथापूर्वोदित[2]क्रमम् ॥ २५३ ॥

प्रायश्चित्तं तु जुहुयात्पञ्चोपनिषदा घृतम् ।
सहस्रं वा शतं वापि हुत्वा पूर्णाहुतिं चरेत् ॥ २५४ ॥

अग्नीन्विसर्जयेद्देवांस्तत्रस्थांस्तोरणादिषु ।
ध्वजस्तम्भं समासाद्य पूजयित्वा खगाधिपम् ॥ २५५ ॥

हविर्निवेद्य गरुडं परिक्रम्य प्रदक्षिणम् ।
तमुद्वसेत्पटात्तार्क्ष्यं संहारक्रममाश्रितः ॥ २५६ ॥

अवरोप्य ध्वजस्तम्भमुत्पाट्य च महानिशि ।
[3]स्तम्भं ध्वजं च गृह्णीयाद्देशिकेन्द्रः स्वयं ततः ॥ २५७ ॥

ग्रहणं देशिकेन्द्रेण तार्क्ष्यतृप्तिकरं भवेत् ।
स्थाने चावाहितान् देवांस्तत्र तत्र स्थितानपि ॥ २५८ ॥

बलिं दत्त्वा तूर्यघोषैस्स्थाने स्थाने सकृत्सकृत् ।
घोषयित्वा [4]चतुर्वक्त्र समुद्वास्य स्वन मभिः ॥ २५९ ॥

मूकैः परिजनैस्सार्धं गुरुरष्टाक्षरं जपेत् ।
प्रविश्य धाम देवस्य विज्ञाप्य शकटादिकम् ॥ २६० ॥

यानमारोप्य धामान्तः प्रापयेन्मखकौतुकम् ।
प्रभाते[5] तन्निशाया वानुष्ठिते यागकर्मणिः ॥ २६१ ॥

---

1. तन्मण्डपान्तरे $P_1$, $P_2$ 2. °क्रमात् T, $P_1$, $P_2$ 3. सह ध्वजं $M_2$
4. चतुर्मुख A 5. प्रभातायां निशायां T, $P_1$, $P_2$



यजमानो गुरुं वस्त्रैर्भूषणैः कटकादिभिः ।
सौवर्णैर्गन्धपुष्पाद्यैरलङ्कृत्याभिपूज्य च ॥ २६२ ॥

दक्षिणामुत्तमां स्वर्ण[1]शतेनैकान्ततोऽधिकाम् ।
यथाविभूति दत्त्वान्या दक्षिणाः प्रतिवासरम् ॥ २६३ ॥

[2]दशनिष्कं तदर्धं वा तदर्धं वा यथावसु ।
निष्करूपां यथाश्रद्धमाचार्याय तदर्धकाम् ॥ २६४ ॥

तदर्धमृत्विजां [3]दत्त्वा तदर्धं परिचारिणाम् ।
हेम[4]वस्त्रैस्तथान्नाद्यैस्तोषयेदुपचर्यया ॥ २६५ ॥

गायकाद्यान् जनान् सर्वानधिकारानुसारतः ।
कर्माङ्गभूतानन्यांश्च कल्याणं द्रष्टुमागतान् ॥ २६६ ॥

भक्तान् भागवतांश्चैव सामान्यांश्चेप्सितैर्धनैः ।
अत्यल्पिकां वापि दद्या[5]द्दक्षिणां[6] यागकर्मणि ॥ २६७ ॥

कर्मिभ्यो दक्षिणाहीनो निष्फलः कर्तुरब्जज ।
यज्ञः प्रत्युत कर्तॄणां प्रत्यवायाय कल्पते ॥ २६८ ॥

तस्मादर्थानुगुण्येन दातव्या दक्षिणा भवेत् ।
श्रद्धया वासुदेवस्य साङ्गोपाङ्गं सदक्षिणम् ॥ २६९ ॥

उत्सवं देवदेवस्य यः कुर्यात्सकलं स्वयम्[7] ।
उच्चारयन् स्वयं विष्णोस्सायुज्यं गच्छति ध्रुवम् ॥ २७० ॥

हयमेध[8]सहस्राणि यजते [9]च समाहितः ।
यश्चोत्सवेन यजते तयोस्तुल्यफलान्वयः ॥ २७१ ॥

---

1. °शतनिष्कां T, $P_1$, $P_2$ 2. शतनिष्कं A, $M_2$ 3. दद्यात् T, $P_1$, $P_2$
4. °वस्त्राश्नयानाद्यैः T, $P_1$, $P_2$ 5. अत्यल्पिकापि दातव्या T, $P_1$, $P_2$
6. दक्षिणा $P_1$,$P_2$ 7. स्वकम् T,$P_1$,$P_2$ 8. °सहस्रेण T,$P_1$,$P_2$ 9. यः T,$P_1$,$P_2$

यागानामपि सर्वेषां फलमुत्सव[1]कर्मणा ।
देवस्याश्नुवते सर्वं यष्टारो [2]नात्र संशयः ॥ २७२ ॥

उपकुर्वन्ति ये मर्त्या देवस्योत्सवकर्मणि ।
कर्मणा मनसा वाचा तेऽपि यान्ति यथेप्सितम् ॥ २७३ ॥

ग्रामे वा नगरे वापि पत्तने वा महोत्सवः ।
विष्णोः प्रवर्तते यत्र देशे राष्ट्रेऽपि वा भवेत् ॥ २७४ ॥

भयं न मृत्योर्न व्याधेर्न दुर्भिक्षादिसम्भवः ।
नश्यन्ति तस्करास्तत्र नाधर्मस्सम्प्रवर्तते ॥ २७५ ॥

धर्मयुक्तो भवेद्राजा जना धर्मपरायणाः ।
भवन्ति सुखिनस्सर्वे सर्वदुःखविवर्जिताः ॥ २७६ ॥

महोत्सवे वर्तमाने यदर्थिभ्यः प्रदीयते ।
पानीयमन्नं वस्त्रं वा तत्सहस्रगुणं भवेत् ॥ २७७ ॥

पुष्पमालाफलैरिज्या देवस्याभरणादिकैः ।
क्रियमाणा यथाशक्ति फलानन्त्याय[3] कल्पते ॥ २७८ ॥

सेवन्ते तत्र ये देवमहर्निशमतन्द्रिताः ।
तेषामिदमियच्चेति फलं वक्तुं न शक्यते ॥ २७९ ॥

आलेपनं मार्जनं च रजःप्रशमनं तथा ।
वारिभिर्दीपिकारोपं क्ष्वेलनास्फोटनादिकम् ॥ २८० ॥

कुर्वन्ति ये ब्रह्मलोकं ते यान्त्यमरदुर्लभम् ।
यानं वहन्ति ये विप्रास्ते यान्ति [4]ब्रह्मणः पदम् ॥ २८१ ॥

1. °कर्मणि A  2. नास्ति T, $P_1$, $P_2$  3. फलाधिक्याय $M_1$
4. परमं $M_1$, A



रथं वहन्ति ये [1]चान्ये तेऽपि यान्ति सुरालयम् ।
छत्रादिधारिणश्चापि मोदन्ते दिवि मानवाः ॥ २८२ ॥

देशिको मूर्तिपाश्चैव तथैव परिचारकाः ।
उत्सवेऽधिकृता विष्णोः प्राप्नुवन्ति यथेप्सितम् ॥ २८३ ॥

ऋचो यजूंषि सामानि ये तत्राधीयते[2] जनाः ।
ते परे व्योम्नि देवस्य पार्श्वे वर्तन्ति निःस्पृहाः ॥ २८४ ॥

सर्वशान्तिकरं सर्वदुःखोत्सादनमुत्तमम् ।
राज्ञो राष्ट्रस्य सुखदमायुरारोग्यवर्धनम् ॥ २८५ ॥

प्रजानां वासुदेवस्य [3]कल्याणं साधनं महत् ।
इमं देवादयस्सर्वे विष्णोरुत्सवमुत्तमम् ॥ २८६ ॥

कृत्वा शाश्वतिकं स्थानं प्रापुरत्यन्तदुर्लभम् ।
उत्सवे त्रिदिनैकाहसाध्ये श्रद्धा प्रवर्तिते ॥ २८७ ॥

बलिप्रदानं सुमनोबजनं चाधिवासनम् ।
नवानामपि कुम्भानां तथा तीर्थावगाहनम् ॥ २८८ ॥

मृगया च जलद्रोणी वर्जनीयानि पद्मज ।
तावत्येवोत्सवदिने तीर्थान्ते ग्रामवीथिषु ॥ २८९ ॥

ब्रह्मादिदेवता[4]स्सर्वस्समावाह्य बलिं क्षिपेत् ।
केवलोदनमग्नौ च होमो निश्यधिवासनम् ॥ २९० ॥

स्नपनं विषुवाद्येषु नद्यादाववगाहनम् ।
पुष्पयागो जलद्रोणी मृगया च न युज्यते ॥ २९१ ॥

1. चाश्वाः T, $P_1$, $P_2$  2. °अधीतिनो A  3. कल्याणाराधनं T, $P_1$, $P_2$
4. सर्वाः $M_1$

अन्यत्सर्वं यथापूर्वं कर्तव्यं फलकाङ्क्षिभिः ।
इति गुह्यतमं ब्रह्मन्नुत्तमाराधनं परम् ॥ २९२ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
महोत्सवविधिर्नाम एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ॥

### पुष्पहविर्विधानम् ॥

**ब्रह्मोवाच :—**

समाराध्यो हरिः पुष्पैः कैः पत्रैर्वा[1] हवींषि च ।
फलमूलानि चान्यानि कानि योग्यानि कथ्यताम् ॥ १ ॥

**श्रीभगवान् :—**

पुष्पाणि नन्दनवनादारामादात्मनोऽपि वा ।
अरण्याद्वा गृहीत्वा च विक्रीतान्यापणस्थलात् ॥ २ ॥

अयाचितानि लब्धानि यद्वा कमलसम्भव ।
पूर्वपूर्वोदितालाभे ग्राह्यमुत्तरमुत्तरम् ॥ ३ ॥

अन्यायोपार्जितान्यन्यदेवतार्थानि वा पुनः ।
अघ्राणि तथा भिन्नं मुकुलं पतितं तथा ॥ ४ ॥

जीर्णं पर्युषितं कीटदूषितं पादलंघितम् ।
म्लानं स्पृष्टं तथास्पृश्यैर्नीतं च प्रतिलोमजैः ॥ ५ ॥

स्नातश्शुद्धाम्बरो मौनी [2]पादौ प्रक्षाल्य वारिणा ।
पात्रे पुष्पाणि गृह्णीयाद्वेत्रजे तृणजेऽथवा ॥ ६ ॥

1. कालपत्रैः वा T, $P_1$, $P_2$  2. पाणि T, $P_1$, $P_2$



(सत् ?) कल्पकद्रु[1]माज्जातं पारिजातसमुद्भवम् ।
हरिचन्दनसन्तानमन्दारद्रुमसम्भवम् ॥ ७ ॥

सौगन्धिकोद्भवं पुष्पं षडेते सुरदारुजाः ।
पालाशं सप्तमं पुष्पमुपयुक्तानि चार्चने ॥ ८ ॥

अनिर्माल्यानि[2] देयानि पुनः प्रक्षाल्य वारिभिः ।
उत्तरोत्तरमेकैकं सहस्रगुणमिष्यते ॥ ९ ॥

प्रातः पद्मद्वयं शस्तमुत्पलत्रयमर्चने ।
फलं च पूर्ववज्ज्ञेयं तथैव शतपत्रिका ॥ १० ॥

चम्पकं [3]केतकं श्रीमन्मालती माधवी तथा ।
नन्द्यावर्तं च पुन्नागं सुरपर्ण्येकपर्णिका ॥ ११ ॥

प्रियङ्गुपाटलद्वन्द्वं मन्दारद्वयमेव च ।
लक्ष्मीश्च कर्णिकारश्च यूथिका कुरवस्तथा ॥ १२ ॥

षड्कैतानि शस्तानि फलं पूर्ववदिष्यते ।
शस्तं मध्यन्दिने श्वेतकरवीरजमर्चने ॥ १३ ॥

किङ्करातं[4] च सौवर्णं पुष्पं सहचरी तथा ।
पूर्ववच्च फलं [5]विद्यात्प्रदोषे च प्रशस्यते ॥ १४ ॥

जातीयुग्मं विचकिलं मल्लिकाद्वयमेव च ।
बकुलं [6]वनजातिश्च तथा च नवमल्लिका ॥ १५ ॥

कुमुदं वनमल्ली च पूर्ववच्च फलं स्मृतम् ।
प्रातःकालोदितं पुष्पं युक्तं मध्यन्दिनेऽपि च ॥ १६ ॥

1. ०द्रुमसंजातं T, $P_1$, $P_2$  2. समारोप्याणि M, A  3. केतकीयुग्मं T, $P_1$, $P_2$
4. केङ्किरातं T, $P_1$, $P_2$  5. दद्यात् A, $M_2$  6. पारिजातं च A

प्रदोषे [1]कथितं पुष्पं मध्यरात्रे च शस्यते ।
दिवापुष्पैर्दिवा पूजा निशापुष्पैस्तथा निशि ॥ १७ ॥

[2]आपत्काले यथायोगमर्चयेत्[3] पुरुषोत्तमम् ।
मालत्या पूजयेत्प्रातर्मध्याह्ने [4]करवीरजैः ॥ १८ ॥

सायाह्ने जातिपुष्पैस्तु प्रदोषे वकुलैरपि ।
मध्यरात्रे मल्लिकाभिर्यजेत जलजैस्सदा ॥ १९ ॥

प्रत्यूषे नन्दिकावर्तैः काल एष उदाहृतः ।
पद्मादिजलपुष्पाणामर्वाक् [5]कर्तुस्त्र्यहाद्भवेत् ॥ २० ॥

न च पर्युषितो दोषो नीरजानां भवेत्तथा ।
अबद्धेभ्यः प्रसूनेभ्यो बद्धा माला प्रशस्यते ॥ २१ ॥

मालाभ्यः स्रग्वरा माला सजातीया प्रसूनजा[6] ।
[7]स्रक् तु नानाविधैः पुष्पैर्निर्मिता[8] कदलीत्वचा ॥ २२ ॥

ह्रीबेरं च तमालं च तथा दमनकत्रयम् ।
न पर्युषितमेतैश्च सदैवाराधयेद्धरिम् ॥ २३ ॥

तुलस्यौ सितकृष्णे च केवलाक्षपकास्तथा ।
चत्वारस्तुलसीभेदा दूर्वा बिल्वदलानि च ॥ २४ ॥

सर्वदाराधनार्हाणि पूजितुं[9] करवीरजैः ।
गृहे कुलक्षयकरी पुष्पपत्राद्यसन्निधौ ॥ २५ ॥

अक्षतैरर्चनं कुर्याद्धरेः कलमजैस्सितैः ।
नीवारावेणवश्शालि[10]कलमाद्या यवा अपि ॥ २६ ॥

1. मथितमिति पाठेन भाव्यम् । 2. देशे काले $T, P_1, P_2$; प्रातःकाले $M_2$
3. पूजयेत A 4. ०वीरकैः $M_1$ 5. कर्तुं $M_1$ 6. सजातीयप्रसूनका $T, P_1, P_2$
7. सूत्रं $M_1$ 8. निर्मितं $M_1$ 9. पूजा तु $T, P_1, P_2$ 10. शाल्यः $T, P_1, P_2$



हविर्योग्या व्रीहयश्च तदभावे प्रियङ्गवः ।
अन्ये च याज्ञिका धान्यभेदाः कोद्रववर्जिताः ॥ २७ ॥

नीचैर्दत्तास्तथा स्पृष्टाः पतितैः प्रतिलोमजैः ।
आशौचवद्भिरपरैरपक्वाः कलमादयः ॥ २८ ॥

शस्यन्ते चरुपाकेषु पक्वाश्च तदसन्निधौ ।
चातुर्वर्ण्यैरुपहृता तण्डुला दोषवर्जिताः ॥ २९ ॥

अखण्डिताः खण्डिताश्चा(प्य)भावे [1]निष्फलीकृताः ।
चरुपात्रं ताम्रमयं प्रशस्तं मृन्मयं तु वा ॥ ३० ॥

विष्णुगायत्रिया भाण्डे क्षालिते गालितैर्जलैः ।
पूर्णे प्रणवसंस्पृष्टे तण्डुलान्मूलविद्यया ॥ ३१ ॥

यद्वा पञ्चोपनिषदा क्षालयेद्वारिभिः पुनः ।
पूरयेत्प्रणवेनैव पिदध्याच्चक्रमुद्रया[2] ॥ ३२ ॥

अग्निश्रित्य च मूलेन मन्त्रेणाग्निं समेधयेत् ।
पञ्चोपनिषदैर्मन्त्रैः काष्ठैः कीटाद्यदूषितैः ॥ ३३ ॥*

पक्वे जलमपि स्राव्य सिक्त्वाज्येन चरुं पुनः ।
उदगुद्वासयेद्दर्भैः फलके यज्ञदारुजे ॥ ३४ ॥

साधयेद्दीक्षितः पाकं विधिनोक्तेन तत्[3] स्त्रियः ।
यद्वा तूष्णीं साधयेयुरुपदंशांश्च शोधितान्[4] ॥ ३५ ॥

फलमूलानि तत्रादौ फलानि कदलीफलम् ।
आम्रं[5] पनसमुर्वारुं बृहतीं कर्करीमपि ॥ ३६ ॥

1. निस्तुषीकृताः $M_2$ 2. ०विद्यया $P_1, P_2$ * P ग्रन्थे एष अर्धश्लोकः अत्र अधिकतया दृश्यते "यज्ञवृक्षोद्भवैः काष्ठैः पाचयेत् पाचकः क्रमात्"। 3. न $M_2$
4. चोदितान् $T, P_1, P_2$ 5. वेत्रं $M_2$

कारवल्लीमलाबुं च कूष्माण्डं तिन्त्रिणीमपि ।
करवर्त[1] च निष्पावं गवाक्षं त्रपुसं तथा ॥ ३७ ॥

मुद्गभेदांश्च निर्दोषान् सदोषान् परिवर्जयेत् ।
उच्छिष्टं क्रिमिणा दष्टं शिवावैर्लङ्घितं तथा ॥ ३८ ॥

घ्रातं लालाजलस्पृष्टममेध्यप्रभवं तथा ।
पादस्पृष्टं च पतितमकाले चाशुचि[2] स्थितम् ॥ ३९ ॥

मु(मु ?)क्तशेषं तथास्पृश्यैः स्पृष्टं दत्तावशिष्टकम् ।
वर्ज्यं वल्लीत्रयं कन्दं सूरणद्वयमुत्पलम् ॥ ४० ॥

पिण्डारद्वितयं चापि हविर्योग्यं चतुर्मुख ।
जीवन्तीं वास्तुकं शाकं कारवल्लीदलं तथा ॥ ४१ ॥

तुम्बीदलं च भाङ्गी (च) [3]शिम्बी मुद्गदलानि च ।
शाकिनीं शतपर्वाणं तथैवाश्वाल[4]मर्दिनम् ॥ ४२ ॥

आगस्त्यं पाचयेच्छाकं विहितं ब्राह्मणस्य च ।
[5]एकमूलानि चान्यानि गृह्णीयादनिषेधने ॥ ४३ ॥

अङ्कुराण्यपि वेण्वादिवस्तूनां कमलासन ।
छेदयित्वा लवित्रेण लवणैर्मरिचैस्तथा ॥ ४४ ॥

सर्षपैर्जीरकैर्हिङ्गु[6]श्रीपर्णीदलमिश्रितैः ।
नालिकेरफलैराज्यैर्यथायोगं निवेशितैः ॥ ४५ ॥

संस्कार्यं व्यञ्जनं यूषयुक्तं रहितमेव वा ।
सर्पिषा वाऽऽयसे पात्रे घृष्टं मृन्मय एव वा ॥ ४६ ॥

1. करवर्तिं $M_1$  2. स्थले T, $P_1$, $P_2$  3. शिम्ब° T, $P_1$, $P_2$
4. °मर्दिनीम् T, $P_1$, $P_2$  5. शाक° A  6. °वापि $M_1$



कलायमुद्गनिष्पावशिम्बमाषकुलुत्थकाः ।
सयूषा वा वियूषा वा पचनीया गुणान्विताः ॥ ४७ ॥

त्वचो व्यपोह्य कुल्माषाः कार्या यद्वा यथोदितम्[1] ।
[2]आम्रादीनां च शुष्काणां फलानुगुणतिन्त्रिणी ॥ ४८ ॥

मिश्राणि पचनीयानि तथा लवणवासितम् ।
आम्रं च शृङ्गिबेरं च तथा केवलमिष्यते ॥ ४९ ॥

पनसं कदली चाम्रं कपित्थं बदरीफलम् ।
द्राक्षा राजादनं जम्बूफलं तोटकमप्यथ ॥ ५० ॥

खर्जूरं वेत्रजं चैव मातुलुङ्गं च दाडिमम् ।
फलान्येतानि पक्वानि कालपक्वानि योजयेत् ॥ ५१ ॥

[3]क्षीरमेको गुणस्तस्य तोयमर्धं तदर्धकम् ।
तण्डुलस्तावदेव स्याद्द्वित्रो मुद्गस्तदर्धकः ॥ ५२ ॥

घृतं समुदितं सर्वं परमान्नं निवेदयेत् ।
समभागं तु[4] पूर्वोक्तैस्तण्डुलैस्सम्मितं समम् ॥ ५३ ॥

गुलं फलेन निक्षिप्य गुलान्नं तद्विदुर्बुधाः ।
तण्डुलैस्संमितं निस्त्वङ्[5] मुद्गभिन्नं सुसाधितम् ॥ ५४ ॥

मुद्गान्नं कालपक्वैस्तु फलैराज्यपरिप्लुतम् ।
निवेदयेत्केवलान्नं तण्डुलैरेव साधयेत् ॥ ५५ ॥

फलानि कन्दाश्शाकानि[6] मुद्गभेदास्तथाङ्कुराः ।
पयो दधि घृतं चापि कालपक्वं तथा फलम् ॥ ५६ ॥

1. यथोदिताः T, $P_1$, $P_2$  2. आम्रादीनि च शुष्काणि फलानि गुलतिन्त्रिणी T, $P_1$, $P_2$  3. क्षीरश्चैको T, $P_1$, $P_2$  4. समवाये तु A  5. सम्यक् T
6. कन्दशाकानि $P_1$

आम्रादिर्लवणैश्चापि शृङ्गिबेरादि साधितम् ।
मत्स्यण्डिगुलमेदाश्च यच्चान्यदुपदंशकम् ॥ ५७ ॥

[1]परिमाणममीषां च यथाश्रद्धं यथावसु ।
मरीच्यादि यथायोग्यं द्रव्यसंस्कारकं भवेत् ॥ ५८ ॥

नागवल्लीदलानि स्युरशीतिरवरास्तथा ।
विंशतिः क्रमुकस्यापि फलान्यवरसंख्यया ॥ ५९ ॥

अङ्गानि तैलं तक्कोलं लवङ्गं जातिरेव च ।
मातुलुङ्गत्वगन्यच्च चूर्णं कर्पूरमिश्रितम् ॥ ६० ॥

पाषाणजं नालिकेरफलं पक्वं च निर्जलम् ।
कर्पूरं केवलं वाप्यामं (वापि चामं) वा शुष्कमेव वा ॥ ६१ ॥

एतैर्वस्तुभिरन्यैश्च न्यूनभावविवर्जितैः ।
ताम्बूलं वीटिका[2]स्तैलमृदुपूगफलान्वितम्[3] ॥ ६२ ॥

निवेद्य यजमानस्य श्रद्धावित्तानुसारतः ।
गोधूमशालिपिष्टोत्था अपूपाश्चापि संस्कृताः ॥ ६३ ॥

गुलमेदाज्यमारीचजीरकाद्यैर्यथायथम् ।
वस्तुभिर्विविधाकारा गुलपाकपरिप्लुताः ॥ ६४ ॥

पुटदग्धांस्तिलान्निक्षुरसपाकपरिप्लुतान् ।
मरीचैर्जीरकैर्युक्तान् पललांश्च निवेदयेत् ॥ ६५ ॥

पृथुकान् पुटदग्धान्वा केवलान्वा गुलाप्लुतान् ।
मरीचैर्जीरकैर्युक्तान् नालिकेरफलैस्सह ॥ ६६ ॥

1. परिमाणं यथा साध्यं $M_1$ 2. ताम्बूलवीटिका $P_2$
3. फलान्विताः T, 1, 2



सक्तून् गुलद्रवैर्मिश्रान् मरीचैरपि जीरकैः ।
करम्भानपि पूर्वोक्तैस्संस्कारैरपि संस्कृतान् ॥ ६७ ॥

पाकस्थानाच्च भाण्डान्वा वारिभिः क्षालितान् बहिः ।
भस्मना च चतुर्दिक्षु कृतोर्ध्वाकारपुण्ड्रकान् ॥ ६८ ॥

अस्त्रमन्त्रेण वासोभिश्छन्नान्वा वेत्रपञ्जरे ।
यद्वा प्रतिष्ठितान् भूमौ जलधारापुरस्सरम् ॥ ६९ ॥

वहेयुर्विधृतोष्णीषास्सितकञ्चुकसंवृताः ।
परिचर्यापरा विप्रा मण्टपे मन्दिरेऽपि वा ॥ ७० ॥

देवस्य दक्षिणे पार्श्वे नीत्वा फलकभूमिषु ।
सौवर्णादीनि पात्राणि विष्णुगायत्रिया ततः ॥ ७१ ॥

क्षालितानि [1]परामृज्य प्रणवेनाज्यधारया ।
पात्राणि [2]सिद्धमन्त्रेण तथा दर्व्या हवींषि च ॥ ७२ ॥

आदायादाय निक्षिप्य मन्त्रेणान्नमथार्पितम् ।
खारि तदर्धं पादं वा तदर्धं वा परं मतम् ॥ ७३ ॥

प्रतिस्थालीं पायसादि भक्तमानं चतुर्मुख ।
यथायथं व्यञ्जनानि निक्षेप्याणि घृतैस्सह ॥ ७४ ॥

दध्ना च सर्वाण्यन्नानि प्रकल्प्य व्यञ्जनैस्सह ।
निवेदयेयुर्धनानि यानि कानि च पूजकाः[3] ॥ ७५ ॥

चोष्याणि लेह्यखाद्यानि यथाविभवविस्तरम् ।
निवेदितानां तुर्यांशं विष्वक्सेनाय कल्पयेत् ॥ ७६ ॥

1. परामृश्य T, $P_1$, $P_2$ 2. सिक्त्वा T, $P_1$, $P_2$; सिक्त्वा चाज्येन A
3. निवेदयेयुर्देवाय पानकानि च पूजकाः T, $P_1$, $P_2$

तच्चागाधे जले[1] क्षिप्य तद्भक्तान्वापि भोजयेत् ।
तेनैव पार्षदास्तृप्ता भवेयुर्भूततृप्तये ॥ ७७ ॥

दास्यो वा गणिका भोज्या देवस्य [2]परिचारिकाः ।
ब्रह्मेशानादिदेवानां नैव भोज्यं [3]निवेदितम् ॥ ७८ ॥

न स्पृश्यं लङ्घनीयं च चण्डादीनां [4]तथैव च ।
देवीनां च श्रियादीनां विनतानन्दनस्य च ॥ ७९ ॥

चक्रादीनामायुधानां वस्तु यद्यन्निवेदितम् ।
भोक्तव्यमेव सर्वेषां विप्रादीनामशङ्कितम् ॥ ८० ॥

विष्णोर्निवेदितं शुद्धं पावनानां च पावनम् ।
प्रापणं दुर्लभं भोज्यं न त्याज्यं स्यात्कदाचन ॥ ८१ ॥

भुञ्जानानामेधते श्रीः त्यजतां परिहीयते ।
व्रतोपवासस्तुलितम् त्वशनं तस्य पावनम् ॥ ८२ ॥

शुनामिव पुरोडाशो न नीचेषु तदिष्यते ।
विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ॥ ८३ ॥

पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ।
धारितं विष्णुनिर्माल्यं चन्दनाद्यनुलेपनम् । ८४ ॥

अहर्निशं धारयतो[5] न पुनर्जननं भवेत् ।
तथाहि[6] चरणस्पर्शि विष्णोस्त्रिपथगाजलम् ॥ ८५ ॥

पुनाति सिद्धदेवर्षिसंघानंहोविघातकम् ।
पादोदकं च देवस्य पवित्रं परमं मतम् ॥ ८६ ॥

---

1. °अगाधजले $P_1$, $P_2$ 2. परिचारका: A 3. निवेदनम् $M_1$
4. निवेदितम् T, $P_1$, $P_2$ 5. धारयतां T, $P_1$, $P_2$ 6. यथाहि $M_1$



पाद्यं दत्त्वा जलं विष्णोर्मूलमन्त्रेण देशिकः ।
गृहीत्वा शतधारेण मूर्ध्नि धार्यं विशुद्धये ॥ ८७ ॥

शोधनं सर्वपापानां सर्वदुःस्वप्ननाशनम्[1] ।
लक्ष्मीविवर्धनं नित्यमायुर्वृद्धिकरं परम् ॥ ८८ ॥

म्रियमाणस्स्वयं विष्णोश्चरणस्पर्शितं जलम् ।
पीत्वा सद्गतिमाप्नोति [2]न चोर्व्यां जायते पुनः ॥ ८९ ॥

पितॄणां [3]तर्पितं शस्तं वारिणा तेन तर्पिताः ।
ऋणेभ्यः पितरो मुक्ता वसन्ति दिवि देववत् ॥ ९० ॥

भक्ताय देयं पादोदं[4] शान्ताय शुभकर्मणे[5] ।
पञ्चकालविधिज्ञाय तदनुष्ठानशीलिने[6] ॥ ९१ ॥

न नास्तिकाय दातव्यं दातव्यं नाभ्यसूयवे ।
पाषण्डिने न दातव्यं तेभ्यो रक्षेत्प्रयत्नतः ॥ ९२ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
पुष्पहविर्विधानं नाम द्वादशोऽध्यायः ॥

---

## त्रयोदशोऽध्यायः ॥

### पञ्चकालविधिः ॥

**ब्रह्मोवाच :—**

पञ्चकालविधिज्ञानं प्रशस्तं भगवन्निह ।
विहितं[7] पञ्चके काले विधयश्चापि पञ्च के ॥ १ ॥

---

1. °दुष्कृतनाशनम् T,$P_1$,$P_2$ 2. न चेह जायते पुनः T,$P_1$,$P_2$; पुनर्नैवेह जायते A 3. तर्पणं T,$P_1$,$P_2$ 4. पादोत्थं $P_2$ 5. °कर्मिणे $P_2$
6. °शालिने $P_2$ 7. कथितं $M_2$

मह्यं जिज्ञासमानाय कथयस्व यथातथम् ।
न चेद्रहस्यमत्यन्तं यदहं पृष्टवानिदम् ॥ २ ॥

श्रीभगवान् :—

आद्यं कर्माभिगमनमुपादानमतः परम् ।
इज्या च पश्चात्स्वाध्यायस्ततो योगस्ततः परम् ॥ ३ ॥

पञ्चैते विषयस्तेषां कालाः पञ्चैव ते क्रमात् ।
कल्याणाचरणान्तं यत् कर्मजातं चतुर्मुख ॥ ४ ॥

उत्थानादि क्रमादेतदभियानमुदीरितम् ।
ब्राह्मे मुहूर्ते बुध्येत ध्यायन्नारायणं परम् ॥ ५ ॥

उत्थायासीत शयने कीर्तयन् नाम वैष्णवम् ।
क्रमेण स्पृष्ट्वा तत्त्वानि देहमुत्पाद्य तत्त्ववित् । ६ ॥

न्यस्य देहे षडङ्गानि मन्त्रमुच्चार्य मानसम् ।
दशावतारान् व्यूहांश्च चतुर्णो मासपानपि ॥ ७ ॥

ध्यात्वा स्वनामभिस्तानि कीर्तयित्वा पृथक्पृथक् ।
अवकुण्ठ्य च वस्त्रेण शरीरं दक्षिणांघ्रिणा ॥ ८ ॥

आक्रम्य भूमिं प्रथमं त्रिविक्रममनुस्मरन् ।
नमः क्षितिधरायेति मन्त्रमुच्चार्य वाग्यतः[1] ॥ ९ ॥

ग्रामाद्बहिर्दिशं गत्वा नैर्ऋतिं न्यस्य दक्षिणे ।
उपवीतं कर्णदेशे व्यवधाय तृणादिना ॥ १० ॥

भूमौ समुत्सृजेन्मूत्रं किट्टं च तदनन्तरम् ।
उदङ्मुखो दिवा कुर्यात्सन्ध्ययोरुभयोरपि ॥ ११ ॥

1. मानसम् T, $P_1$, $P_2$



दक्षिणाभिमुखो रात्रौ वाति वातेऽनुसारिणि ।
दक्षिणेतरहस्तेन गृह्णीयान्मेहनं ततः ॥ १२ ॥

दक्षिणे मृत्तिकां हस्ते समुत्थाय जलाशयम् ।
प्रागुदीच्यां प्रतीच्यां वा गत्वा शौचं समाचरेत् ॥ १३ ॥

मृत्तिकाभिर्द्वादशभिर्गुदं षड्भिश्च मेहनम् ।
अन्तरा चान्तरं वामकरं प्रक्षाल्य वारिभिः ॥ १४ ॥

मृन्मात्राभिस्तदन्ते च[1] करौ द्वादशसंख्यया ।
संशोध्य चरणौ जङ्घे कटिं चोरुश्च वारिभिः ॥ १५ ॥

प्रत्येकं मृत्तिकामात्रा चतुष्केण विशोधयेत् ।
आचम्य प्राङ्मुखो भूत्वा दन्तधावनमाचरेत् ॥ १६ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षाम्रार्जुनधातकी ।
पालाशवेणुखदिरशमीदारूणि धावने ॥ १७ ॥

दन्तानामुदितान्येकादश चाम्भोरुहासन ।
दन्तधावनकाष्ठं च[2] द्वादशाङ्गुलमायतम् ॥ १८ ॥

दशाङ्गुलं तथा मानमष्टाङ्गुलं[3]मथायतम् ।
ब्राह्मणक्षत्रियविशां क्रमेण तदुदाहृतम् ॥ १९ ॥

जिह्वानिर्लेखनं कुर्याद्गण्डूषाचमनं पुनः ।
क्षालयित्वा मुखं तोयैराचान्तस्स्नानमाचरेत् ॥ २० ॥

अवगाहो भवेद्वाप्यां खायाद्वा सरसीषु च[4] ।
वाप्याद्य(दि ?)सम्भवे [5]नैव कूपेष्वाप्लवनं भवेत् ॥ २१ ॥

1. द्वौ T, $P_1$, $P_2$ 2. वद् $P_1$ 3. ०श्चयापि वा T, $P_1$, $P_2$
4. वा $P_1$ 5. एव A, $M_2$

स्नानं वा तप्ततोयेन दोषवैषम्यसम्भवे ।
नाभेरधस्ताद्वा देहं क्षालयित्वात्मनस्तनुम् ॥ २२ ॥

आचम्य प्रोक्षयेद्देहं वारिभिर्मन्त्रवित्तमः[1] ।
ओंपूर्वया च गायत्र्या वारिभिश्चाभिमन्त्रितैः ॥ २३ ॥

आत्मानं परिषिच्योर्ध्वमुत्क्षिपेत्सलिलाञ्जलिम् ।
योद्धुकामानि रक्षांसि सन्ध्ययोरुभयोरपि ॥ २४ ॥

शाम्यन्ति तैर्वज्र[2]हतैर्हस्ताभिप्रेरितैर्जलैः ।
प्रायश्चित्तं तु हिंसायाः परिभ्रमणमात्मनः ॥ २५ ॥

तर्पयेदुपविश्याथ तत्तन्मन्त्रमुदीरयन् ।
देवादीन् सलिले तिष्ठन् सावित्रीं प्राङ्मुखो जपेत् ॥ २६ ॥

यावत्सूर्योदयं दृष्ट्वा प्राञ्जलिस्तिमिरापहम् ।
उपस्थाय स्वशाखोक्तैर्मन्त्रैर्ध्यायन् हृदि स्थितम् ॥ २७ ॥

अभिवाद्य गुरून् वृद्धान् तथा भागवतान् क्रमात् ।
प्रविश्य[3] स्वाश्रमं देवमभिगम्य यथाविधि ॥ २८ ॥

अर्चयेज्जपहोमान्तं दद्याद् ग्रासं यथाविधि[4] ।
अञ्जनालेपनैस्स्रग्भिः [5]वासोभिः भूषणैस्तथा ॥ २९ ॥

अलक्तकरसाद्यैश्च [6]ताम्बूलमुखशोधनैः ।
उपेतो मङ्गलैरन्यैर्नयेदभिगमक्रियाम् ॥ ३० ॥

1. °तनुम $P_1$, $P_2$   2. °घातैः $M_2$, $P_2$; °भूतैः $P_1$, T   3. प्रणम्य T, $P_2$
4. गवामपि $P_1$, $P_2$   5. दूर्वाभिः $M_1$   6. ताम्बूली° T, $P_1$, $P_2$



उपादद्यात्ततः पूजासाधनानि [1]यथाविधि ।
पुष्पाणि फलमूलानि विविधान्योषधीरपि ॥ ३१ ॥

दध्यादि च हविर्योग्यं तण्डुलानि गुलानि च ।
स्नानीयानि च वस्त्राणि स्वादूनि सलिलानि च ॥ ३२ ॥

दर्भान् पर्णानि समिधो यथाशक्ति यथावसु ।
आहृत्य याज्ञिकार्थैर्वा पूजास्थाने निवेशयेत् ॥ ३३ ॥

नीत्वोपादानसमयमित्थं तदनु पूजयेत् ।
प्राप्ते मध्याह्नसमये स्नानं कुर्याद्यथाविधि ॥ ३४ ॥

न्यासमग्रे षडङ्गानां कृत्वादाय मृदं करे ।
सव्ये निधाय कृत्वा तु त्रिधा मूलाग्रमध्यतः ॥ ३५ ॥

मूले स्थितां मृदं पूर्वमभिमन्त्र्यास्त्रविद्यया ।
विदिक्षु दिक्षु चोर्ध्वायामधरायां [2]विनिक्षिपेत् ॥ ३६ ॥

ततो मध्यस्थितां मृत्स्नामुदके मूलविद्यया ।
निक्षिप्य भागमग्रस्थं कराभ्यां करयोर्द्वयोः ॥ ३७ ॥

[3]विधाय पङ्कमम्भोभिर्दर्शयित्वा च पूषणम् ।
अस्त्रहीनाङ्गविद्याभिरापादतलमस्तकम् ॥ ३८ ॥

आलिप्य देहमखिलमवगाह्य च वारिषु ।
देवमावाह्य लक्ष्मीशं दत्त्वा चार्घ्यादिकं ततः[4] ॥ ३९ ॥

तत्पादक्षालनाम्भोभिः पाणिभ्यां कुम्भमुद्रया ।
पावनैः शिरसि न्यस्तैरात्मानमभिषिच्य च ॥ ४० ॥

1. यथायथम् T, $P_1$, $P_2$   2. अपि क्षिपेत् T, $P_1$, $P_2$   3. पिधाय $M_2$
4. तथा $M_2$

वासुदेवमभिध्यायन्नघमर्षणमाचरेत् ।
उत्तीर्य कर्म निखिलं मध्याह्नसमयोचितम् ॥ ४१ ॥

कृत्वा यजेत देवेशं होमान्तं कमलासन ।
स्तोत्रेणाभिष्टुयाद्देवं दण्डवत्पतितः क्षितौ ॥ ४२ ॥

" जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ४३ ॥

नमस्ते वासुदेवाय शान्तानन्दचिदात्मने ।
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥ ४४ ॥

महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ।
सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥ ४५ ॥

सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ।
[1]अमूर्ताय नमस्तुभ्यमेकमूर्ताय ते नमः ॥ ४६ ॥

अनेकमूर्तये तुभ्यमक्षयाय[2] च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥ ४७ ॥

चिन्मात्ररूपिणे तुभ्यं नमस्त्वयन्त[3]भूमये ।
अणिष्ठाय[4] स्थविष्ठाय महिष्ठाय च ते नमः ॥ ४८ ॥

नेदिष्ठाय [5]दविष्ठाय क्षेपिष्ठाय च ते नमः ।
वर्षिष्ठाय[6] यविष्ठाय कनिष्ठाय च ते नमः[7] ॥ ४९ ॥

पद्मात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः ।
कल्पनापोढरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ५० ॥

---

1. अमृताय $P_1$,$P_2$ 2. °अक्षराय $P_1$,$P_2$,T 3. °मूर्तये T 4. अभीष्टाय $M_1$
5. यविष्ठाय T 6. वरिष्ठाय विशिष्टाय $M_1$ 7. गरिष्ठाय नमो नमः । $M_1$



नमस्ते गुणरूपाय गुणरूपातिवर्तिने ।
व्यस्ताय च समस्ताय [1]समस्तव्यस्तरूपिणे ॥ ५१ ॥

आदिमध्यान्तशून्याय [2]तद्वते च नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ ५२ ॥

लोकयात्राप्रसिध्यर्थं [3]सृष्टब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥ ५३ ॥

[4]पातकैः कर्मणः क्लेशैरस्पृष्टवपुषे नमः ।
नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥ ५४ ॥

नित्यासाधारणानेकलोकरक्षापरिच्छद ।
सच्चिदानन्दरूपाय वरेण्याय नमो नमः ॥ ५५ ॥

यजमानाय यज्ञाय यष्टव्याय नमो नमः ।
इज्याफलात्मने तुभ्यं नमस्स्वाध्यायशालिने ॥ ५६ ॥

नमः परमहंसाय नमः सत्त्वगुणाय ते ।
स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥ ५७ ॥

संसारसागरे घोरे विषयावर्तसङ्कुले ।
अपारे दुस्तरेऽगाधे पतितं कर्मभिस्स्वकैः ॥ ५८ ॥

अनाथमगतिं भीरुं दयया परया हरे ।
मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात्[5] ॥ ५९ ॥

---

1. नमोऽस्त्वव्यक्तमूर्तये A ; नमोऽस्त्वव्यक्तरूपिणे $M_2$ 2. तद्वदेव T,$P_1$, $P_2$ ; तत्त्वस्थाय A, $M_2$ 3. विष्णु° $M_1$ 4. विपाकैः कर्मभिः क्षोभैः A, T, $P_2$
5. सुदुस्सहात A, $M_1$, T

मन्त्रहानिं क्रियाहानिं [1]हानिं वान्यां त्वदर्चने ।
क्षमस्व[2] देवदेव[3] त्वमपराधसहो ह्यसि " ॥ ६० ॥

" [4]जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम माधव ॥ ६१ ॥

[5]नाहं हितं विजानामि त्वां भजाम्येव केवलम् ।
बुद्ध्वैवं नय गोविन्द [6]मामुपायेन वर्त्मना ॥ ६२ ॥

त्वमेव [7]वेत्थ श्रेयो मे [8]नेदमेतदितीति च ।
बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् " ॥ ६३ ॥

इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ।
कुर्यात्पञ्च महायज्ञानपि गृह्योक्तवर्त्मना ॥ ६४ ॥

अतिथीनपि तत्काले यथाशक्ति समर्चयेत् ।
पोष्यवर्गान् भोजयित्वा भुञ्जीत नियतस्स्वयम् ॥ ६५ ॥

इज्यायास्समयस्तस्याः कथितः कमलासन ।
मन्दिरे वा हरेर्नद्यास्तीरे वा मठभूमिषु ॥ ६६ ॥

विविक्ते विपिने वापि पर्वते वा गृहेऽपि वा ।
ऋचो यजूंषि सामानि भिद्यमानान्यनेकधा ॥ ६७ ॥

शाखाभेदैर्मूलशाखामेकायनसमाश्रयाम्[9] ।
त्रयीमथीमधीयीत सुखासीनस्समाहितः ॥ ६८ ॥

---

1. भक्तिहीनं यदर्चनम् J  2. तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु J
3. मम देव $P_1$, $P_2$
4. अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥
अयं श्लोकः A, T, $P_1$, $P_2$ ग्रन्थेष्वेवोपलभ्यते । अथापि स्तोत्ररत्नस्थस्यास्यात्र प्रक्षिप्तत्वेन भाव्यम् ।  5. अहं हितं न जानामि त्वां व्रजाम्येव केवलम् ।  6. मुक्त्युपायेन $P_1$
7. वेत्ता $P_2$; वेत्सि J  8. नैतदेतदितीति च $P_1$, $P_2$  9. °समाह्वयाम् $P_1$, $P_2$



अन्यैस्सार्धम[1]धीयानैष्षडङ्गेषु च कोविदैः ।
[2]अध्यापयीत वा शिष्यान् शास्त्राणि विविधानि च ॥ ६९ ॥

इतिहासपुराणानि धर्मशास्त्राणि वा पुनः ।
तथाराधननिष्ठानि समभ्यस्येद्यथायथम् ॥ ७० ॥

संसारभीरुभिर्विप्रैस्तत्त्वनिष्कर्षकोविदैः ।
सहासीतोपदेशादिप्रकारचतुरैरपि ॥ ७१ ॥

स्वाध्यायकालः कथितः स्वाध्यायोऽपि च कीर्तितः ।
ततः पश्चिमसन्ध्यायां प्राप्तायां तत्र चोदितम् ॥ ७२ ॥

जपहोमादिकं सर्वं कृत्वा परमपूरुषम्[3] ।
अर्चयित्वा यथान्यायं यथापूर्वमशेषतः ॥ ७३ ॥

भुक्त्वा संविश्य शयने समुत्थाय महानिशि ।
आचम्य [4]प्रयतो भूत्वा ध्यात्वा परमपूरुषम् ॥ ७४ ॥

योगासने सुखासीनो[5] युञ्जीतात्मानमात्मनि ।
यथोक्तेन प्रकारेण यथाशक्ति चतुर्मुख ॥ ७५ ॥

संहारक्रममाश्रित्य तत्त्वान्यात्मनि संहरेत् ।
आत्मानं वापि हृत्पद्मे परमात्मनि [6]निष्ठिते ॥ ७६ ॥

संहरेदुत्थितो योगात्स्वापं [7]क्लेशापहं व्रजेत् ।
इत्येषः कथितो ब्रह्मन् योगः कालश्च पञ्चमः ॥ ७७ ॥

पञ्चैते [8]हि मया पञ्च विधयस्तेषु दर्शिताः ।
इत्थमेतेषु कालेषु दर्शितैः कर्मभिर्नरः ॥ ७८ ॥

---

1. °अनूचानैः A  2. अयं श्लोकार्धः, ७०, ७१ पूर्वार्धश्च च अर्धचन्द्ररेखाभ्यां $P_1$,$P_2$ ग्रन्थयोर्निविष्टाः  3. °पूरुषान् $M_1$  4. प्रणतो A,$M_2$  5. योगासनसमासीनः $M_2$
6. विष्ठिते $M_2$  7. क्लेशावहं त्यजेत् T,$P_1$,$P_2$  8. समयाः T,$P_1$,$P_2$

आराधनं भगवतः कुर्वन्नेवावसीदति ।
वर्षेषु द्वादशस्वेवमनुतिष्ठन् समाहितः ॥ ७९ ॥

क्रियाकलापमखिलं याति सायुज्यसम्पदम् ।
षट्सु वर्षेषु [1]सारूप्यसामीप्यादि सुनिश्चितम् ।' ८० ॥

सालोक्यं फलमेकस्मिन् वत्सरे नात्र संशयः ।

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे पञ्चकालविधिर्नाम त्रयोदशोऽध्यायः ॥

---

## चतुर्दशोऽध्यायः ॥

### पवित्राद्युत्सवविधिः ॥

**ब्रह्मोवाच :—**

मासि मासि प्रशस्तानि नक्षत्राणि जनार्दन ।
भगवान् कानि येषु स्यादर्चनं परमं स्मृतम् ॥ १ ॥

कानि चांशावताराणां जन्मर्क्षाणि युगे युगे ।
उच्यतां तानि देवेश श्रोतुमिच्छामि तत्त्वतः ॥ २ ॥

**श्रीभगवान् :—**

चैत्रे मासि पुनर्वस्वोर्जन्म रामस्य मङ्गलम् ।
तिथौ नवम्यां लग्ने च कुलीरे कमलासन ॥ ३ ॥

राघवस्याप्रमेयस्य नक्षत्रे तत्र राघवम् ।
देव्या च सीतया सार्धमर्चयित्वा यथाविधि ॥ ४ ॥

1. सामीप्यं त्रिषु निश्चितम् T,$P_1$,$P_2$



उत्सवश्च भवेत्तस्मिन् सर्वमङ्गलसंयुतः ।
पुष्ये च मीनलग्ने च भरतस्समजायत । ५ ।

तत्र स्यादर्चनं देव्या माण्डव्या सह पूर्ववत् ।
उत्सवाश्च तथा सार्पे नक्षत्रे लक्ष्मणोऽपि च ॥ ६ ॥

शत्रुघ्नश्च कुलीरे च लग्ने जातस्तदर्चनम् ।
उभयोस्तत्र दिवसे देव्या चोर्मिलया सह ॥ ७ ॥

लक्ष्मणस्येतरस्यापि श्रुतकीर्त्या महोत्सवः ।
रामस्य जन्मनक्षत्रे सर्वे वा भरतादयः ॥ ८ ॥

अर्चनीया हनुमता [1]एतैः सर्वैर्महोत्सवः ।
तत्रैव श्रवणे चैव सायाह्ने नरकेसरी ॥ ९ ॥

अर्चनीयस्स हि तदा[2] हिरण्यमवधीद्रिपुम् ।
तस्मिन्नेव सिते पक्षे त्रयोदश्यां समर्चयेत् ॥ १० ॥

विष्णुं यद्वा पुनर्वस्वोः पौर्णमास्यामथापि वा ।
वसन्तकालतृप्त्यर्थं तत्समृद्धिभिराहृतैः ॥ ११ ॥

पुष्पैर्नानाविधैर्देवमर्चयेद्दक्षिणामुखम् ।
आसीनं मण्डपे क्लृप्ते वेदिमध्ये[3] मनोरमे ॥ १२ ॥

उद्याने मन्दिरे वापि कृत्रिमोद्यानशोभिते ।
नद्यादौ च[4] यथायोगं फलपुष्पोदकान्विते ॥ १३ ॥

पौर्णमास्यां तिथौ तस्मिन्मासे दमनिकादलैः ।
पुष्पान्वितैः प्रपां कृत्वा मण्टपे पूजयेद्धरिम् ॥ १४ ॥

1. सार्धं T, $P_1$, $P_2$   2. तथा $M_1$ ; नृसिंहस्तु A   3. वापि मध्ये $P_1$
4. वा $P_1$, $P_2$

पुष्पैर्दमनिकाभिश्च सर्वालङ्कारमाचरेत् ।
उत्सवश्च भवेत्तस्मिन् होमो दमनिकादलैः ॥ १५ ॥

वैशाखे मासि वा कुर्याद्वसन्तोत्सवमब्जज ।
दमनीदलकल्याणमपि वा पूर्वमीरितम् ॥ १६ ॥

वैशाखे मासि वा चैत्रे सिते पक्षे शुभे दिने ।
दमनीदलवत्कुर्यात्कल्हारकुसुमोत्सवम् ॥ १७ ॥

स्थानेषु पूजयेद्देवं कुम्भादिषु चतुर्ष्वपि ।
महाहविर्निवेद्याथ होमं कृत्वा समापयेत् ॥ १८ ॥

फलान्यपि समाहृत्य वन्यजानपदान्यपि ।
ज्येष्ठे वा श्रावणे वापि देवाय विनिवेदयेत् ॥ १९ ।

सर्वालङ्कारसंयुक्तं विदध्याच्च महोत्सवम् ।
एवं यः कारयेत्पूजां श्रद्धापूतेन चेतसा ॥ २० ॥

सर्वान् कामानिहावाप्य विष्णुलोकं स गच्छति ।
श्रावणे जन्म पूर्वाह्णे वामनस्य त्रिविक्रमम् ॥ २१ ॥

मध्यन्दिने च [1]तत्काले पूजा च मधुविद्विषः ।
पौर्णमास्यां च वैशाख्यां [2]हरेरर्चनमिष्यते ॥ २२ ॥

अनूराधे हनुमतो जन्म तस्मिन् समाजयेत् ।
तं राघवेण सहितं सीतया लक्ष्मणेन च[3] ॥ २३ ॥

आञ्जनेयं तदत्यन्तप्रीणनं राघवात्मनः ।
अनूराधे पौर्णमास्यां कलशैः स्नपनं हरेः ॥ २४ ॥

---

1. तत्कालद्वये पूजा मधुद्विषः T, $P_1$, $P_2$ 2. उत्सव इष्यते T, $P_1$, $P_2$
3. च विशेषतः $M_1$



आषाढे शुक्लपक्षे च द्वादश्यां कमलासन ।
चक्राब्जमण्डले देवमर्चयित्वा यथाविधि ॥ २५ ॥

कल्पिते शयनागारे मन्दिरे वा यथावसु ।
पर्यङ्के कल्पिते तत्र शाययित्वाथ कौतुकम् ॥ २६ ॥

देवीभ्यां सह कूर्चं वा त्रितयं तदभावतः ।
तत्र नित्यार्चनं मासांश्चतुरो मङ्गलान्वितम् ॥ २७ ॥

नयेच्च शयनेनैव शाययेदन्यकौतुकम् ।
व्रतोपवासनियमान् कल्पयित्वा [1]तदादिकान् ॥ २८ ॥

तथानु[2]शायिनस्तत्र चातुराश्रम्यमाश्रिताः ।
आसीनास्तत्र[3] नियतास्तरेयुस्ते[4] तरङ्गिणीम् ॥ २९ ॥

देवस्य यावदुत्थानं भोगिपर्यङ्कशायिनः ।
श्रावणे मासि कृष्णे च पक्षेऽष्टम्यां तिथौ हरेः ॥ ३० ॥

रोहिण्यां जन्म कृष्णस्य लोकानां मङ्गलावहम् ।
जयन्ती नाम सा [5]ख्याता जयत्यशुभमित्यसौ ॥ ३१ ॥

मध्यरात्रे ततस्तस्मिन् कल्याणं सर्वमाचरेत् ।
तिथ्ययोगेऽपि[6] नक्षत्रे केवलेऽर्चनमिष्यते ॥ ३२ ॥

देवस्य देवकीसूनोरपरेद्युर्महोत्सवः ।
नित्यं नैमित्तिकं काम्यं कर्म यच्छ्रुतिचोदितम् ॥ ३३ ॥

तत्कुर्वतामाश्रमेषु स्थितानामानुपूर्वशः ।
वर्णानां मन्त्रलोपादिशान्त्यर्थं प्रत्यहं [7]नरैः ॥ ३४ ॥

---

1. तदात्मकान् A, $M_2$ 2. तदनु॰ T, $P_1$, $P_2$ 3. आसीरंस्तत्र T, $P_1$, $P_2$
4. न तरङ्गिणीम् $M_1$, $P_1$, $P_2$ 5. प्रोक्ता T, $P_1$, $P_2$ 6. च $M_2$ 7. हरेः T, $P_1$, $P_2$

आराधनं भगवतः पूर्णाहुत्या [1]समं मतम् ।
तस्य न्यूनातिरेकाभ्यां दुष्कृतं सकलं भवेत् ॥ ३५ ॥

कर्मजातं ततः पूर्णमाराधनमभीप्सितम् ।
प्रतिसंवत्सरं मासि श्रावणे तन्तुनिर्मितम् ॥ ३६ ॥

पवित्रभूषणं विष्णोरारोप्यं बहुमाल्यवत् ।
आराध्य विधिवद्भाद्रपदे चाश्वयुजेऽपि वा ॥ ३७ ॥

मन्त्रलोपादिना कर्म पतितं विहितं पुनः ।
प्रायश्चित्तेन तत्कर्म कर्तारं त्रायते पुनः[2] ॥ ३८ ॥

तत्पवित्रं फलैर्भूयो रोहत्येव समाहितम् ।
इति निर्वचनात्तज्ज्ञैः पवित्रारोहणं मतम् ॥ ३९ ॥

पूर्वोदितेषु मासेषु द्वादश्यां प्रतिपद्यपि ।
दशम्यां पौर्णमास्यां वा पञ्चम्यामथवा तिथौ ॥ ४० ॥

एकादश्यां त्रयोदश्यां द्वितीयायामथापि वा ।
सिते पक्षे शुभे वारे लग्ने शुभतरेऽथवा[3] ॥ ४१ ॥

श्रवणे पुष्यरोहिण्यां रेवत्यां भरणीषु च ।
स्वातौ हस्तपुनर्वस्वोरश्विन्यां मित्रदैवते ॥ ४२ ॥

ऋक्षेष्वन्यतमे कार्यं पवित्रारोपणं हरेः ।
तन्तून् ब्राह्मणकन्याभिर्निर्मितान् दोषवर्जितान् ॥ ४३ ॥

कार्पासान्वाथ कौशेयान् क्रीतान्वा शुद्धवारिभिः ।
क्षालितान्मिश्रितांश्चूर्णैर्मौद्गकै[4]श्शोधयेद्बहिः ॥ ४४ ॥

---

1. स्वयं T, $P_1$, $P_2$ 2. यतः $M_2$ 3. तथा $M_1$
4. शोषयेत् T, $P_1$, $P_2$



आतपेषु ततश्शुद्धान् शोषितांस्त्रिगुणीकृतान् ।
पुनस्तांस्त्रिगुणीकृत्य तावतोऽपि चतुर्गुणान् ॥ ४५ ॥

यद्वा त्रिगुणितान्नीत्वा चातुर्गुण्यं चतुर्मुख ।
त्रिगुणांस्त्रिगुणीकृत्य यद्वा तानेकतां नयेत् ॥ ४६ ॥

गोमयालेपिते भूमितले मानानुसारतः ।
शङ्कोस्स्थापितयोर्यज्ञद्रुमसम्भूतयोस्ततः ॥ ४७ ॥

आरोप्य भगवद्भक्ताः प्राङ्मुखा वाप्युदङ्मुखाः ।
आसीना गुरुरन्यो वा[1] तत्प्रयुक्ताः समाहिताः ॥ ४८ ॥

स्नाता निर्माणनिपुणा मनुष्या भगवन्मयाः ।
कुर्युः पवित्रं कल्याणं यथा स्याद् भूषणोत्तमम् ॥ ४९ ॥

पवित्रमधिवासार्थमाद्यं नाभ्यवधि स्मृतम्[2] ।
अष्टोत्तरशतैस्सूत्रैर्द्वात्रिंशद्ग्रन्थिभिर्युतम् ॥ ५० ॥

मूलबेरादिबेराणां पवित्रमि[3]दमिष्यते ।
पवित्रं मण्डले पद्मतुल्यमानं घटेऽपि च ॥ ५१ ॥

कुण्डे च मेखलामानं पूर्वेद्युर्मानमीरितम् ।
अपरेद्युः पवित्रेषु मानं संप्रति कथ्यते[4] ॥ ५२ ॥

पद्मनाभ्यरनेमीनां चक्राब्जे मण्डले सताम् ।
तन्मानानि पवित्राणि बाह्यमानं बहिस्समम् ॥ ५३ ॥

ग्रन्थयस्तन्तवश्चैषां कथ्यन्ते च यथाक्रमम् ।
चतुश्शतानि सूत्राणि ग्रन्थयस्सप्तविंशतिः ॥ ५४ ॥

---

1. गुर्वनुज्ञाताः $M_2$ 2. स्थितम् $M_1$ 3. प्रमाणम्° $M_2$
4. कीर्त्यते $M_1$

शतत्रयं तन्तुसंख्या ग्रन्थयो द्विगुणा मताः ।
द्वे शते [1]त्रिगुणा ग्रन्थिश्शतमेकमनन्तरम् ॥ ५५ ॥

चतुर्गुणा ग्रन्थिसंख्या बाह्यसूत्रं चतुश्शतम् ।
ग्रन्थयः पञ्चगुणिताः कुम्भे चाष्टोत्तरं शतम् ॥ ५६ ॥

तन्तवो ग्रन्थिसंख्या च सप्तविंशतिरिष्यते ।
एकाधिकाशीतिसंख्यास्तन्तवः करके मताः ॥ ५७ ॥

सप्तविंशतिसंख्याश्च ग्रन्थयः परिकीर्तिताः ।
पवित्रसंख्या बेराणां दश तानि वदामि ते ॥ ५८ ॥

प्रामाण्यं ग्रन्थिसंज्ञं [2]तदलङ्काराह्वयं तथा ।
उत्तमाधममध्याख्यं किरीटाह्वमनन्तरम् ॥ ५९ ॥

श्रीवत्सकौस्तुभाह्वानं वनमालाह्वयं तथा ।
[3]मानान्येषां च सूत्राणि ग्रन्थयश्च यथाक्रमम् ॥ ६० ॥

कथ्यन्ते नाभिमर्यादा सूत्राण्यष्टोत्तरं शतम् ।
द्वात्रिंशद्ग्रन्थयस्तस्य हृदयान्तमनन्तरम् ॥ ६१ ॥

सूत्राण्यशीतिस्तस्योक्ता[4] ग्रन्थयः पञ्चविंशतिः ।
जङ्घा[5]मध्यस्थमायामं निर्मितं शततन्तुभिः ॥ ६२ ॥

अष्टोत्तरैर्ग्रन्थिभिश्च द्वात्रिंशद्गुणितैर्युतम् ।
उत्तमाख्यस्य सूत्राणां भवेत्संख्या चतुश्शतम् ॥ ६३ ॥

शतमष्टोत्तरं संख्या ग्रन्थीनां जानुसीम तत् ।
शतानि त्रीणि तन्तूनां ग्रन्थयोऽशीतिरि[6]ष्यते ॥ ६४ ॥

1. द्विगुणा T, $P_1$, $P_2$ 2. चापि॰ $P_1$, $P_2$ 3. मानानि तेषां T, $P_1$, $P_2$; मानश्च तेषां सूत्राणां $M_2$; मानस्तेषां च सूत्राणि A 4. ॰संख्योक्ताः $M_2$, A 5. ॰मध्यान्त॰ T, $P_1$, $P_2$ 6. ॰उच्यते A



आयतं चोरुमध्यान्तं द्वे शते तन्तवः पुनः ।
नाभ्यन्तं ग्रन्थयष्षष्टिस्तन्तवश्च[1] चतुश्शतम् ॥ ६५ ॥

किरीटमानं द्वात्रिंशद्ग्रन्थयस्तदनन्तरम् ।
शतानि त्रीणि तन्तूनां हाराकारप्रकल्पितम् ॥ ६६ ॥

ग्रन्थिभिस्सप्तविंशत्या द्वे शते ग्रन्थयः[2] पुनः ।
द्वात्रिंशत् स्तनमर्यादं सहस्रं चाष्टभिर्युतम् ॥ ६७ ॥

तन्तवश्चरणायाममनेकग्रन्थिभिर्युतम् ।
विष्टरस्य सहोर्ध्वस्य[3] पवित्रं तत्समं ततम्[4] ॥ ६८ ॥

तन्तवोऽष्टोत्तरशतं ग्रन्थयः पञ्चविंशतिः ।
प्रभा पवित्रं तत्तुल्यं ग्रन्थयो बहवस्स्मृताः ॥ ६९ ॥

सर्वेषां च स्वतन्त्राणां बिम्बानामिदमीरितम् ।
परतन्त्रेषु बिम्बेषु त्रितयं[5] तूत्तमादिकम् ॥ ७० ॥

देवीनां च श्रियादीनां पवित्रं तद्वदिष्यते ।
अष्टोत्तरशतैस्सूत्रैर्ग्रन्थिस्सप्तभि[6]र्युतम् ॥ ७१ ॥

अग्निकुण्डे मेखलासु पवित्रं प्रतिमेखलम् ।
तन्तुभिस्सप्तविंशत्या तावद्भिर्ग्रन्थिभिर्युतम् ॥ ७२ ॥

अग्नेः पवित्रं हस्तेन समायामं प्रकीर्तितम् ।
मध्यमं पञ्चविंशत्या द्वाविंशत्याधमं[7] मतम् ॥ ७३ ॥

सूत्राणां पञ्चविंशत्या पवित्रं स्रुक्स्रुवादिषु ।
तदायामसमायामं ग्रन्थिभिर्बहुभिर्युतम् ॥ ७४ ॥

1. तन्तवोऽथ T, $P_1$, $P_2$ 2. तन्तवः T, $P_1$, $P_2$ 3. सहोत्थस्य A, T, $P_1$, $P_2$ 4. तत्समीरितम् A; तत्समं मतम् $P_1$, $P_2$, T 5. तृतीयं $P_1$ 6. बहुभिर्युतम् T, $P_1$, $P_2$ 7. द्वादशैर्वाधमे मताः A

अर्घ्यपात्रे तथा धूपदीपपात्रे चतुर्मुख ।
घण्टायामक्षमालायां सर्वत्राष्टोत्तरैश्शतैः ॥ ७५ ॥

सूत्रैर्यथेप्सिता ग्रन्थिर्द्वादशाङ्गुलमायतम् ।
विष्वक्सेनस्य तार्क्ष्यस्य तथा दुश्च्यवनादिषु ॥ ७६ ॥

दिग्देवतासु द्रुहिणे दुर्गायां विघ्ननायके ।
रुद्रे च परिवारेषु पवित्रं तन्तुभिः कृतम् ॥ ७७ ॥

शतेनाष्टोत्तरेण स्यात् द्वात्रिंशद्ग्रन्थिभिर्युतम् ।
हस्तमानायतं कार्यं चण्डादिषु तु[1] सर्वतः ॥ ७८ ॥

सप्तविंशतिसूत्रेण ग्रन्थिभिश्चेन निर्मितम् ।
हस्तमानं भवेत् कुम्भ[2]तोरणादिषु तादृशम् ॥ ७९ ॥

बलिपीठपवित्रं तु कर्णिकायास्समं मितम्[3] ।
आचार्याणां यतीनां च पवित्रं तन्तुभिः कृतम् ॥ ८० ॥

अष्टोत्तरशतै[4]स्सूत्रैर्ग्रन्थिभिः पर्वभिर्युतम् ।
ऋत्विजां पूजकानाञ्च ब्राह्मणानां तथैव च ॥ ८१ ॥

एकाशीत्या कृतं सूत्रैर्नाभ्यन्तपरिलम्बितम् ।
राज्ञः पवित्रं सूत्रेण शतेनाष्टोत्तरेण तु ॥ ८२ ॥

यथेष्टग्रन्थिनिचयैस्तूलगर्भैश्च निर्मितम् ।
[5]नाभ्यन्तमानमेतत् स्यात्तथा तदनुजीविनाम् ॥ ८३ ॥

एकाशीत्या कृतं सूत्रैर्वैश्यादीनां च तन्तुभिः ।
चतुर्विंशतिभिस्तेषां पवित्रमुपवीतवत् ॥ ८४ ॥

1. च $P_1$, $P_2$ 2. कुम्भे $M_2$ 3. कर्णिकायामसंमितम् $P_1$, $P_2$ 4. युक्तं ग्रन्थिभिर्बहुभिर्युतम् A, $M_2$ 5. नाभ्यन्तं त्रयमेतत् स्यात् $M_2$



पवित्रेषु समस्तेषु विस्तारो विभवे सति ।
पादोनमर्धं पादो वा संख्या स्याद्विभवक्षये ॥ ८५ ॥

ग्रन्थिं ततः[1] पवित्राणां द्रव्यैः कस्तूरिकादिभिः ।
मणिमुक्ताप्रवालाद्यै रत्नैश्चापि यथावसु ॥ ८६ ॥

लोहैश्च कलधौताद्यैस्तूलैर्वा तदसन्निधौ ।
पूरयित्वा दृढं बद्ध्वा ग्रन्थींस्तांस्तन्तुरज्जुभिः ॥ ८७ ॥

ग्रन्थयश्शंखसंस्थानसमानाकृतयोऽथवा ।
धात्रीफलसमाकारा यद्वा मुक्तादिसन्निभाः ॥ ८८ ॥

कुंकुमै रोचनाभिश्च तथा मलयजैरपि ।
लोहितैरप्यवश्यायैस्सम्पिष्टैः कर्दमीकृतैः ॥ ८९ ॥

ग्रन्थीनामन्तरालानि लिम्पेच्छोभा यथा भवेत् ।
ग्रन्थीनां पूरणं यद्वा मल्लिकाद्यैस्सुगन्धिभिः ॥ ९० ॥

पुष्पैस्तदन्तरालानि निशाचर्चाभिरेव वा ।
रञ्जयेत्तन्तवश्चापि ग्रन्थयश्च यथेच्छया ॥ ९१ ॥

यथाविभवविस्तारं कल्पनीयाश्चतुर्मुख ।
विभवे सति सङ्कोचो नैव कार्यो न वासति[2] ॥ ९२ ॥

[3]विस्तारो नैव कार्यस्स्यात्तदेव प्रीणनं हरेः ।
[4]सद्योऽधिवास्य वा तस्मिन्नुपोष्याराधयेद्धरिम् ॥ ९३ ॥

गृहार्चने कौतुके वा मण्डले वा घटेऽपि वा ।
अर्चनं श्रद्धया कार्यं श्रद्धापूतमिदं जगत् ॥ ९४ ॥

1. ग्रन्थींस्तत्र $M_2$ ; ग्रन्थांस्ततः $P_2$ 2. तथा सति T, $P_1$, $P_2$ ; कार्यस्तथासति . $P_1$, $P_2$ 3. विस्तारेणैव $M_1$ 4. सद्योऽधिवासे $M_1$

विहितेषु पवित्रेषु यथोक्तेनैव वर्त्मना ।
आरभेतार्चनं विष्णोर्दशम्यां च निवेदनम् ॥ ९५ ॥

निशामुखे गुरुस्सार्धं मूर्तिपैस्सुसमाहितः ।
यजमानेन सहितः प्रविशेद्विष्णुमन्दिरम् । ९६ ॥

प्रविश्य पूजयित्वा तं गुरुस्तैस्सहितस्स्वयम् ।
विज्ञापयेदिमां गाथामीरयन्[1] प्राञ्जलिस्स्थितः ॥ ९७ ॥

न्यूनातिरेकशान्त्यर्थं पवित्रारोपणं[2] परम् ।
अर्चनं भगवन् सर्वदुरितोत्सारणक्षमम् ॥ ९८ ॥

सम्पदां चापि सर्वासामुत्पादनमनुत्तमम् ।
क्रियते तदविघ्नेन यथा स्यात्कर्म चोदितम् ॥ ९९ ॥

तथानुज्ञापयामि त्वामनुजानीहि कर्म तत् ।
इति विज्ञाप्य निर्गत्य मन्दिरान्मण्डपे[3] पुनः ॥ १०० ॥

संस्तीर्य दर्भान् प्रागग्रांस्तेषु [4]प्रागानतो गुरुः ।
उपविश्योपवासं च कल्पयित्वा समाहितः ॥ १०१ ॥

नयेत्तत्रैव तां रात्रिं जपध्यानपरस्सदा ।
अपरेद्युर्निशायां स्याद[5]धिवासनकर्म तत् ॥ १०२ ॥

आरभेतैकबेरेषु बद्ध्वा तत्रैव कौतुकम् ।
बहुबेरेषु कल्याणबिम्बे कौतुकमङ्गलम् ॥ १०३ ॥

ततो निर्गत्य विपुले मण्डपे तोरणादिकम् ।
अर्चयित्वा यथापूर्वं दिक्षु चैव विदिक्षु च ॥ १०४ ॥

1. °ईरयेत् $P_1$, $M_2$, A 2. पवित्रारोहणं $P_1$, $P_2$ 3. मण्डले $P_1$
4. प्रागासनो $P_1$, $P_2$ 5. निशीथिन्याम्° T, $P_1$, $P_2$



चतुर्वेदविदो विप्रानेकायनविदः तथा ।
अधीयानान् स्थापयित्वा तूर्यघोषेषु [1]सत्सु च ॥ १०५ ॥

मङ्गलेष्वपि चान्येषु कल्पितेषु यथातथम् ।
पवित्रपात्राण्यादाय प्रागुदक्भुवि मण्डपे ॥ १०६ ॥

धान्यराशिषु संस्थाप्य पुण्याहं वाचयेत्ततः ।
दहनाप्यायनध्यानैः पात्रस्थानि विशोधयेत् । १०७ ॥

धूपयेद्गन्धवद्द्रव्यैर्लिम्पेत्कस्तूरिकादिभिः[2] ।
पुष्पाणि विकिरेत्तेषु गन्धवन्ति बहूनि च ॥ १०८ ॥

तानि भूषणपात्राणि वेष्टयेन्नववाससा ।
दर्शयेच्चक्रमुद्रां च [3]पूजयेदस्त्रविद्यया ॥ १०९ ॥

ऐशानीं दिशमारभ्य सूत्रैस्संवेष्ट्य मण्डपम् ।
मण्डपस्योपरि ध्यात्वा चक्रं भूमितले पुनः ॥ ११० ॥

पद्मं गदाञ्च द्वारेषु शङ्खमष्टसु दिक्षु च ।
प्रत्यूहकारिणां तस्य छिद्रमन्विष्य धावताम् ॥ १११ ॥

भूतानां राक्षसादीनां माषान्नेन बलिं क्षिपेत् ।
बहुबेरेषु कल्याणबिम्बं स्नानासने बहिः ॥ ११२ ॥

स्थापयित्वोपवीतान्तमुपचर्य[4] यथाविधि[5] ।
चक्राब्जमण्डलं[6] भूयस्समानीय चतुर्मुख ॥ ११३ ॥

हविर्निवेदनान्ते तु समाराधनकर्मणि ।
निष्ठिते करके कुम्भे देवमावाह्य पूजयेत् ॥ ११४ ॥

1. सत्स्वपि $M_1$ 2. °जलैः T 3. पूजयित्वा° A, M
4. °उपवीताद्यैरुपचर्य $M_2$ 5. °तथम् T, $P_1$, $P_2$ 6. °मण्डले $P_2$

हविर्निवेदयित्वान्ते हुत्वा चाग्निं यथापुरम् ।
एकबेरे तु कल्याणकौतुकाराधनं विना ॥ ११५ ॥

अन्यत्सर्वमनुष्ठेयं यथापूर्वोदितक्रमात् ।
सम्भवे कौतुके तस्मिन् पवित्रं भूषणं पुनः ॥ ११६ ॥

निक्षिपेत्कुम्भकरके दहने तदनन्तरम् ।
चक्राब्जमण्डले [1]मन्त्रमिदं विष्णुरिति ब्रुवन् ॥ ११७ ॥

प्रविश्य मन्दिरं सर्वैर्मङ्गलैस्सह देशिकः ।
मूलबेरं समासाद्य पवित्रन्यसनं ततः ॥ ११८ ॥

पूर्वोदितेन मन्त्रेण [2]सर्वार्चास्स्युर्यथाक्रमम् ।
पवित्रभूषणन्यासः पञ्च[3]रङ्गैश्च तन्तुभिः ॥ ११९ ॥

प्रासादं वेष्टयेद्रात्रौ सर्वमाङ्गल्यघोषणैः ।
वाद्यैर्गेयैश्च नृत्तैश्च स्तोत्रैर्जागरिता जनाः । १२० ॥

नयेयुरपरेद्युश्च कौतुकं मण्डले स्थितम् ।
स्नानवेद्यां समानीय स्नापयित्वा यथाविधि ॥ १२१ ॥

अलङ्कृत्य च देवेशं मण्डले मार्जनादिभिः ।
शोधिते वर्तयित्वा च चक्राब्जं [4]वर्णपञ्चकैः ॥ १२२ ॥

द्वारादियजनं प्राग्वत्कृत्वावस्थाप्य मण्डले ।
देवमाराध्य [5]दीपान्तं कुम्भादीनपि पूजयेत् ॥ १२३ ॥

अन्नं चतुर्विधं चापि कुम्भे देवे निवेद्य च ।
अग्नौ च जुहुयादन्नं पायसादि चतुर्विधम् ॥ २२४ ॥

1. तत्र $M_1$  2. सर्वार्चासु T, $P_1$, $P_2$; सर्वासु च $M_2$  3. ०रागैश्च $P_2$
4. पञ्चवर्णकैः T, $P_1$, $P_2$  5. धूपान्तं $M_2$



पौरुषेणैव सूक्तेन यवैश्च व्रीहिवेणुभिः ।
तिलैर्लाजैस्तथा पुष्पैस्तथा चागरुभिर्घृतैः ॥ १२५ ॥

समिद्भिर्मूलमन्त्रेण पृथगष्टोत्तरं शतम् ।
मुहूर्ते शोभने प्राप्ते दैवज्ञपरिशोधिते ॥ १२६ ॥

पवित्राणि समादाय चक्राब्जं भूषयेत्पुनः ।
पद्मादीनि तदङ्गानि यथास्वमिदमित्यृचा ॥ १२७ ॥

ततः कुम्भे च करके देवे च तदनन्तरम् ।
स एव मन्त्रः कुण्डेऽपि हव्यवाहेऽपि तोरणे ॥ १२८ ॥

द्वारकुम्भेषु तत्स्थेषु पवित्राणि यथातथम्[1] ।
ततः प्रदक्षिणीकृत्य मण्डलस्थं जगद्गुरुम् ॥ १२९ ॥

प्रविश्य मन्दिरं सर्वैर्मङ्गलैस्सह देशिकः ।
स्नपनादि विधायादौ समाराधनमुच्यते[2] ॥ १३० ॥

हविर्निवेदनान्तं [3]तत् कृत्वा तत्रत्यदेवताः ।
मूलबेरं समारभ्य पवित्रैर्भूषयेत् स्वकैः ॥ १३१ ॥

[4]स्वतन्त्राः परतन्त्राश्च सर्वाः पूर्वोक्त[5]विद्यया ।
अभ्यर्च्य गन्धपुष्पाद्यैः पवित्राणि पृथक् पृथक् ॥ १३२ ॥

देयानि दानवेलायां वाद्यवादनकोविदाः ।
नर्तकाः गायकाश्चैव तथा स्वाध्यायकोविदाः ॥ १३३ ॥

सर्वे यथा स्वनृत्तादि दर्शयेयुस्तदन्तिके ।
चण्डादिपरिवाराणामन्येषां [6]प्राङ्गणे सताम् ॥ १३४ ॥

1. ०यथम् M; तथा $P_1$, $P_2$, T  2. ०अच्युते $P_2$; °इष्यते A  3. तद् $M_1$
4. परतन्त्रास्स्वतन्त्राश्च $P_1$, $P_2$  5. °संख्यया $M_2$  6. प्राङ्गणासीनानाम् T;
प्राङ्गणासिनाम् $P_1$, $P_2$

पवित्राणि प्रदेयानि बलिपीठावसानकम् ।
ब्रह्मादिदेवतानां च तार्क्ष्यसेनेशयोरपि ॥ १३५ ॥

[1]अन्येषामप्यनुक्तानां पवित्राणि यथायथम् ।
मन्त्रश्च विष्णुगायत्र्या यद्वेदं विष्णुरित्ययम् ॥ १३६ ॥

यद्वा चाष्टाक्षरेणैव मन्त्रेण द्वादशात्मना ।
देशिको मूर्तिपैस्सार्धं यजमानेन संयुतः ॥ १३७ ॥

प्रविश्य मन्दिरं विष्णो रत्नपूर्णाञ्जलिस्स्वयम् ।
हेमपुष्पाञ्जलिर्वापि यद्वा पुष्पभृताञ्जलिः ॥ १३८ ॥

स्तोत्रैस्स्तुवानो बहुभिर्विकिरेत्तानि पादयोः ।
रत्नानि हेमपुष्पाणि पुष्पाणि सुरभीण्यपि ॥ १३९ ॥

कल्पितानि मनुष्याणां पवित्राणि यथायथम् ।
न्यस्य देवेशपदयोः पुष्पवत् सुसमाहितः ॥ १४० ॥

क्षौमादीनि [2]पवित्राणि देवं विज्ञाप्य देशिकः ।
स्वयं गृहीत्वा क्षौमादि पवित्रं चात्मनः कृतम् ॥ १४१ ॥

दद्यात्पूजकमुख्यानामृत्विजां सहकारिणाम् ।
एकायनीयनिष्ठानामन्येषां विदुषामपि ॥ १४२ ॥

यथाधिकारं क्रमशो देवस्यालोक्य [3]चाननम् ।
स्पृष्ट्वा देवपदाम्भोज[4]माचार्योऽथ जनान्तिके ॥ १४३ ॥

न्यूनातिरेकशान्त्यर्थं गाथामेतामुदीरयेत् ।
[5]भगवन् देवदेवेश शंखचक्रगदाधर ॥ १४४ ॥

1. सर्वेषां° T, $P_1$, $P_2$ 2. च वस्त्राणि $M_2$ 3. चासनम् A
4. °आचार्येण पदान्तिके $M_2$ 5. एष अर्धश्लोकः $P_2$, $M_1$ कोशयोरेव दृश्यते ।



संवत्सरोपचाराणां पूरणार्थं कृतं मया ।
आराधनं गृहाण त्वं भक्तानां हितकाम्यया ॥ १४५ ॥

नाहं स्वतन्त्रः किञ्चिच्च करोमि विहितं हितम् ।
किं तु त्वत्प्रेरितस्सर्वं करोमि तव [1]न स्वयम् ॥ १४६ ॥

तत् क्षन्तव्यमशेषेण क्रियालोपाद्यनुष्ठितम् ।
समये यजमानस्तु गां भुवं काञ्चनं तथा ॥ १४७ ॥

वस्त्रादीनि[2] तथा धान्यं भोजयित्वा महीसुरान् ।
दत्त्वा यथेप्सितं नत्वा[3] आचार्याय च दक्षिणाम् ॥ १४८ ॥

शतनिष्कावरां गोभूवस्त्रधान्यादिकान्यपि ।
मूर्तिपेभ्यस्तथान्येभ्यस्तत्तत्कर्मानुसारतः ॥ १४९ ॥

यथा तुष्टिकरं देयं यागे तत्रोपकुर्वताम् ।
अपराह्णे बहिर्ग्रामे कुर्यादेवं महोत्सवम् ॥ १५० ॥

प्रोक्ष्य प्रत्यहमेतानि पूजाकालेषु पूजकैः ।
न्यसनीयानि दिवसांश्चतुर्दश चतुर्मुख ॥ १५१ ॥

यद्वैकविंशतिं सप्त यदि वा दिवसानपि ।
त्रिरात्रमेकरात्रं[4] वा पश्चात्तान्यवरोहयेत् ॥ १५२ ॥

उच्चरन् पौरुषं सूक्तं साम यद्वा रथन्तरम् ।
त्रिसुपर्णं तथा मन्त्रं मूलमन्त्रमथापि वा ॥ १५३ ॥

अवरोप्य पवित्राणि देयानि गुरवे ततः ।
गुरवे तानि दत्तानि प्रीणनाय मधुद्विषः ॥ २५४ ॥

1. यत्स्वयम् T, $P_1$, $P_2$ 2. वस्त्रादिकं T, $P_1$, $P_2$ 3. यथेप्सितानर्थान् T, $P_1$, $P_2$ 4. °पञ्चरात्रं $M_2$

अन्यथा कर्मनैष्फल्यं क्षयस्स्याद्राजराष्ट्रयोः ।
मण्डलस्थं च कुम्भस्थमग्निस्थं च विसर्जयेत् ॥ १५५ ॥

पवित्रारोपणदिने कालोत्कर्षो न युज्यते ।
कृत्वावरोपणं तेषां स्नपनं तदनन्तरम् ॥ १५६ ॥

कार्यं यथोक्तविधिना प्रविशेन्मन्दिरं ततः ।
इत्येष कथितो ब्रह्मन् पवित्रारोपणे विधिः ॥ १५७ ॥

अनेन विधिना विष्णोः पवित्रारोहणं चरेत् ।
कुर्वन् फलान्यनन्तानि प्राप्नुयान्नैव संशयः ॥ १५८ ॥

सुखं जीवति निर्व्याधिर्यावदायुस्समृद्धिमान् ।
आयुश्च विन्दति प्राप्तं धर्मार्थी धर्ममाप्नुयात् ॥ १५९ ॥

कामानवाप्नुयात्कामी अर्थार्थी चार्थमाप्नुयात् ।
मोक्षार्थी मोक्षमाप्नोति प्रजार्थी [1]लभते प्रजाः ॥ १६० ॥

बान्धवैर्लभते चापि प्रवासिभिस्समागमम् ।
कीर्तिं चाप्नोति परमां कीर्तिकामो न संशयः ॥ १६१ ॥

ज्ञानार्थी ज्ञानमाप्नोति शान्त्यर्थी शान्तिमाप्नुयात् ।
शत्रवस्तु प्रणश्यन्ति ग्रहभूताद्युपद्रवाः ॥ १६२ ॥

आरोग्यकामी चारोग्यं श्रीकामः श्रियमाप्नुयात् ।
बहुनात्र किमुक्तेन फलं यद्यदभीप्सितम् ॥ १६३ ॥

तत्सर्वं तस्य हस्तस्थं नात्र कार्या विचारणा ।
भुक्त्वा भोगांश्च विपुलान् ध्यात्वा चान्ते मधुद्विषम् ॥ १६४ ॥

---

1. चाप्नुयात्प्रजाम् A



तल्लोकं समवाप्नोति [1]पुनश्चेह न जायते ।
धारयन्ति पवित्राणि ये भक्ताः श्रद्धयान्विताः ॥ १६५ ॥

तेऽपि निर्धूय पापानि मोदन्ते दिवि देववत् ।
आचार्यो मूर्तिपास्सर्वे ये चान्ये परिचारकाः ॥ १६६ ॥

ये शृण्वन्ति च पश्यन्ति कीर्तयन्ति च कर्म तत् ।
ते सर्वेऽपि समृद्धार्था लभन्ते सर्वसम्पदः ॥ १६७ ॥

आग्रयणं श्रावणे मासि मासि प्रोष्ठपदेऽपि वा ।
मासे चा[2]श्वयुजे ब्रह्मन् कार्तिके मासि वा भवेत् ॥ १६८ ॥

वर्षास्वेवं ततोऽन्यत्र [3]तैषे माघेऽपि[4] वा भवेत् ।
[5]फाल्गुने [6]चापि चैत्रे वा वैशाखे वा तथाचरेत् ॥ १६९ ॥

हस्ते च श्रवणे पौष्णे नैर्ऋते च प्रजापतेः ।
नक्षत्रे वारुणे पुष्ये वायव्येऽदितिदैवते ॥ १७० ॥

[7]मघासु मैत्रे चित्रायां श्रविष्ठायामथापि वा ।
सौम्ये त्रिषूत्तराख्येषु सम्भवानुगुणं भवेत् ॥ १७१ ॥

अयुग्मास्तिथयस्सर्वा नवमीपरिवर्जिताः ।
युग्मास्तु तिथयो नेष्टा द्वितीयां दशमीं विना ॥ १७२ ॥

सोमो बृहस्पतिस्सौम्यो भृगुश्चेति ग्रहाश्शुभाः ।
मेषवृश्चिक[8]मीने तु कन्याझषकुलीरके ॥ १७३ ॥

---

1. न देहाज्जायते पुनः T, $P_1$; न चेहाजायते पुनः $P_2$ 2. वा° $M_1$
3. तैष्ये T, $P_1$ 4. मासेऽपि° M, $P_1$ 5. फल्गुने $P_1$ 6. मासि T, $P_1$, $P_2$ 7. मखे च मैत्रे T, $P_1$; मखे च चित्रे चित्रायां A, $M_2$
8. °मासे $M_2$

पूर्वपक्षे च [1]कर्तव्यस्तत्रायं कर्मणः क्रमः ।
आदौ दध्योदनं क्षेत्रे क्षेत्रपालाय कल्पयेत् ॥ १७४ ॥

मुहूर्ते लवनस्योक्ते विधाय लवनं [2]ततः ।
धान्यं कणिशभारेण गृह्णीयाद् भूमिकर्षकैः[3] ॥ १७५ ॥

कदलीपनसादीनि तथा दधिघृतादिकम् ।
धान्यभारानपि तथा कदल्यादिदलानि च ॥ १७६ ॥

नयेयुर्नृत्तवादित्रगीतालङ्कारसंयुतम् ।
पुरतः पृष्ठतश्चैव सेनेशविहगाधिपौ ॥ १७७ ॥

अलङ्कृतौ कुञ्जरादियानारूढौ यथावसु ।
छत्रचामरकौशेयध्वजादिपरि[4]बर्हिणौ ॥ १७८ ॥

नीत्वा प्रदक्षिणं ग्राममालयं च मधुद्विषः ।
गोष्ठागारं प्रविश्यान्तर्धान्यं कणिशगोचरम्[5] ॥ १७९ ॥

श्रीसूक्तेन समभ्यर्च्य भाण्डेष्वभिनवेषु तत् ।
निक्षिप्य सङ्ग्रहं तस्य कुर्युस्तत्रालयेषु च ॥ १८० ॥

कर्मिणां देवदेवस्य [6]यथादेवं समर्चितम् ।
यथाधिकारं धान्यादि दद्याच्च समये शुभे । १८१ ॥

तण्डुलान्नूतनानामान्[7] क्षालितांस्त्रिफलीकृतान् ।
मरीचैर्जीरकैर्युक्तान् गुलपाके सुभावितान् ॥ १८२ ॥

1. कर्त्तव्यः $M_1$ 2. पुनः A 3. °भूमिकर्षणैः $M_1$ 4. °बर्हकौ $T, P_1, P_2$ 5. °गोपुरम् A 6. तथा $T, P_1, P_2$ 7. °नूतनानन्यान् $M_2$



नालिकेरफलोपेतानिक्षु[1]दण्डसमन्वितान् ।
मूलबेरादिबेराणां मुहूर्ते शोभने गुरुः ॥ १८३ ॥

निवेदयेत्ततो मूलबिम्बयाष्टोत्तरं शतम् ।
तण्डुलैर्जुहुयादग्नौ [2]ब्रह्मादीनां यथापुरम् ॥ १८४ ॥

तस्मिन् दिने परेद्युर्वा नवान्नानि निवेदयेत् ।
प्रभूत[3]संस्कृताने[4]कनिष्ठानि कदलीदले ॥ १८५ ॥

इति पञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
[5]पवित्राद्युत्सवविधिर्नाम चतुर्दशोऽध्यायः ॥

---

## पञ्चदशोऽध्यायः ॥

### व्रतानुष्ठानक्रमः ॥

**श्रीभगवान् :—**

मासि भाद्रपदे देवं श्रावणे चादिरूरुषम् ।
वराह[6]देवं सुभगं हिरण्याक्षासुरद्विषम् ॥ १ ॥

यजेत देव्या धरया[7] सार्धं सर्वार्थसिद्धये ।
अन्येषां मूर्तिभेदानामपि तस्मिन् समर्चनम् ॥ २ ॥

स्नात्वा चायुजे मासि यजनं स्नपनादिभिः ।
कार्तिके मासि सम्प्राप्ते द्वादश्यां चासितेतरे ॥ ३ ॥

पक्षे प्रबोधयेद्देवमर्चयित्वा यथावसु ।
मन्त्रश्चोदित्यमित्येष उत्तिष्ठेति च बोधने ॥ ४ ॥

1. °खण्ड° $P_1, P_2$ 2. ब्राह्मणानां $T, P_1, P_2$ 3. °संस्कृतान्° $P_1, P_2$
4. °अन्नानि निष्ठानि A 5. आग्रायणोत्सवविधिर्नाम A 6. °रूपं $T, P_1, P_2$
7. धरया देव्या $P_1, P_2$

प्रबोध्य चार्चयेद्देवमुत्थितं विधिवर्त्मना ।
औत्सवं बिम्बमभ्यर्च्य मण्डपे मण्डले स्थितम् ॥ ५ ॥

द्वारतोरणकुम्भादियजनं च यथापुरम् ।
ग्रामे महोत्सवः कार्यस्सर्वमङ्गलसंयुतः ॥ ६ ॥

सर्वे चाश्रमिणः कुर्युर्व्रतानां च विसर्जनम् ।
दशनिष्कं तदर्धं वा दक्षिणां गुरवे तदा ॥ ७ ॥

कृत्तिकासु च कार्तिक्यां पौर्णमास्यां मधुद्विषः ।
कृत्तिकाभिरयोगे वा केवलायां तिथौ भवेत् ॥ ८ ॥

दीपोत्सव[1]स्तदा सर्वं [2]शोभयेद्देव[3]मन्दिरम् ।
आरोप्य सर्वतो दीपान् स्तम्भेषूच्चैर्मधुद्विषः ॥ ९ ॥

दिक्षु सर्वासु सर्वत्र तथा[4] चावरणेषु च ।
कूटाकाराः कल्पनीया[5]स्तेषु[6] स्युर्दीपमालिकाः ॥ १० ॥

प्राकारभित्तिषु तथा मण्टपे गोपुरेषु च ।
बह्वीभिर्दीपमालाभिर्भाव्यं सर्वासु दिक्षु च ॥ ११ ॥

दीपोत्सवाय पूर्वेद्युर्निशि कल्याणकौतुकम् ।
बध्नीयादौत्सवे बिम्बे सर्वमङ्गलसंयुतम् ॥ १२ ॥

अपरेद्युश्च मूलादिबेराणामर्चनं भवेत् ।
नैमित्तिकं प्रदोषे तु कुर्याद्दीपाधिवासनम् । १३ ॥

पुरस्तान्मूलबेरस्य पात्रमारोप्य नूतनम् ।
धान्यराशौ ततस्तस्मिन्नाज्यमाढकसंमितम् ॥ १४ ॥

1. दीपोत्सवं $P_1$, $P_2$  2. शोधयेत् $M_2$  3. °भम T, $P_2$
4. तदा $P_2$  5. कूटाकाराः कल्पयित्वा T, $P_1$, $P_2$  6. तेषां T, $P_1$, $P_2$



कापिलं तैलमथवा निक्षिप्य परिशोधितम् ।
ऋजुवर्तिं तन्तुभिर्वा वाससा नूतनेन वा ॥ १५ ॥

कल्पयित्वा समुद्धृत्य कुण्डाग्निं तेन दीपयेत् ।
वर्तिमाग्नेयमन्त्रेण अग्निमुद्रां प्रदर्शयेत् ॥ १६ ॥

अभ्यर्च्य चाग्निमन्त्रैस्तु मुहूर्ते शोभने गुरुः ।
आदाय [1]पात्रन्यस्तेन वह्निना वलजादिषु ॥ १७ ॥

दीपयेद्दीपिकास्सर्वास्तूर्येषु विदिशो दिशः ।
घोषयत्सु तथा नृत्तगीतादीनां [2]समुद्यमे ॥ १८ ॥

अधीयानेषु विप्रेषु मन्त्राननल[3]दैवतान् ।
औत्सवं बिम्बमादाय सर्वालङ्कारशोभितम्[4] ॥ १९ ॥

यानमारोप्य रथ्यासु नयेदावरणेषु च ।
दृश्यानि नाटकादीनि कृत्रिमाणीतराणि च ॥ २० ॥

दर्शयेद्देवदेवाय [5]भाषाभेदान्यथोदितान् ।
आसाद्य मण्डपे तस्मिन्निवेद्य च महाहविः ॥ २१ ॥

पृथुकान् संस्कृतान् सक्तून् [6]पलालानग्नितृप्तये ।
अपूपान् समये तस्मिन्निवेद्य मधुविद्विषे ॥ २२ ॥

अभ्यन्तरं मन्दिरस्य गमयेन्मङ्गलान्वितम् ।
कृत्तिकादीपविधिना समाराधनमीरितम् ॥ २३ ॥

विशां च राज्ञो राष्ट्रस्य सम्पत्करमनुत्तमम् ।
विपत्प्रशमनं ब्रह्मन् प्रीणनं जातवेदसः ॥ २४ ॥

1. पात्रं तत्स्थेन T, $P_1$, $P_2$  2. समुज्जयेत् A  3. °देवतान् A
4. °संयुतम् A  5. सर्वालङ्कारशोभितम् A  6. पललान्° T, $P_1$, $P_2$

मार्गशीर्षे सिते पक्षे मासि व्रतमनुत्तमम् ।
[1]द्वादशीव्रतपूर्वत्वाद्व्रतमाराधनं हरेः ॥ २५ ॥

आराधनं भगवतः कुर्वंस्ताद्दशमुत्तमम् ।
दशम्यां हरिमाराध्य भोजयित्वा च भूसुरान् ॥ २६ ॥

दक्षिणां च यथाशक्ति दत्त्वा तेभ्यस्समाहितः ।
भगवत्सन्निधौ तेषां विज्ञाप्य द्वादशीव्रतम् ॥ २७ ॥

अनुज्ञापूर्विकां पूजां व्रतपूर्वां महाफलाम् ।
सङ्कल्प्य दर्भेष्वासीनः प्राङ्मुखः प्रणिधानवान् ॥ २८ ॥

हविष्याशी [2]व्रती कृत्वा सर्वं कर्माह्निकं तथा[3] ।
रात्रौ च भगवद्योगमास्थाय च यथाविधि ॥ २९ ॥

अपरेद्युः क्रियाजातमेकादश्यां यथाविधि ।
पूर्वं त्रिषवणस्नायी नियमं परमास्थितः ॥ ३० ॥

अनश्नन् देवमाराध्य होमान्तं मौनमास्थितः ।
भगवद्ध्याननिरतो व्यवहारं च लौकिकम् ॥ ३१ ॥

असंस्पृशन्मनः कायकर्मभिश्चेङ्गितादिभिः ।
स्थितो मौनी तदा तद्वद्रात्रौ कौतुकबन्धनम्[4] ॥ ३२ ॥

बद्ध्वा देवेशमाराध्य दर्भशायी नयेन्निशाम् ।
ब्राह्मे मुहूर्ते चोत्थाय कृत्वा सन्ध्यां यथाविधि ॥ ३३ ॥

कर्म देवान्तिकं गत्वा कुर्यात्पूजां यथापुरम् ।
चतुर्वेदविदो विप्रान् दिक्षु प्राच्यादिषु क्रमात् ॥ ३४ ॥

1. द्वादश्यां T, $P_1$, $P_2$ 2. सकृत् T, $P_1$, $P_2$ 3. तदा $P_1$, $P_2$
4. व्मङ्गलम् $M_1$



[1]दर्भासनेष्वासयित्वा देवस्याभिमुखं यथा ।
कोणेषु च दिशां विप्रानेकायनविदस्तथा ॥ ३५ ॥

अध्यापयेदध्ययनं यथा स्वच्छन्दसां गुरुः ।
सामगानितरालाभे केवलांस्तपसि स्थितान् ॥ ३६ ॥

एकायनविदो वापि हरेस्तत्प्रीणनं परम् ।
प्राशयेद्ब्राह्मणैस्सार्धं व्रतस्थः कायशुद्धये ॥ ३७ ॥

कुशोदकं पञ्चगव्यं प्रापणं च यथाक्रमम् ।
दिवास्वापं परान्नं च पुनर्भोजनकर्म च ॥ ३८ ॥

स्त्रीसेवां तैलसेवां च कांस्यभोजनमेव च ।
मांसाशनं त्यजेत्तस्मिन् दिवसे कर्म गर्हितम् ॥ ३९ ॥

भोजयेच्च यथाशक्ति दद्यादन्ते च दक्षिणाम् ।
उपवासाक्षमो नक्तमेकादश्यां समाचरेत् ॥ ४० ॥

[2]अज्ञानाच्च त्रयोदश्यां पारणं राक्षसं भवेत् ।
वर्ज्याश्च वारा मन्दस्य भृगोरङ्गारकस्य च ॥ ४१ ॥

नक्षत्रं यमदैवत्यं व्रतारम्भे चतुर्मुख ।
पारणं चोपवासश्च न दोषाय तिथित्रये ॥ ४२ ॥

न सम्भाषेत पाषण्डवृत्तिभिर्गर्हितैर्नरैः ।
प्रमादादपि नैवान्यैर्नास्तिकैः प्रतिलोमजैः ॥ ४३ ॥

नाशौचवद्भिर्द्वादश्यां व्रतस्थो नावलोकयेत् ।
आर्द्रायामपि मासेऽस्मिन् जन्मर्क्षे च गरुत्मतः ॥ ४४ ॥

1. दर्भासने स्थापयित्वा A 2. अज्ञानाचेत् T, $P_1$, $P_2$

तत्प्रीतये समाराध्यो हरिश्शास्त्रोक्तवर्त्मना ।
पायसान्नं गुलान्नं च [1]प्रभाते विनिवेदयेत् ।। ४५ ॥

बिम्बं चौत्सवमाकल्प्य वीथिकावरणेषु च ।
[2]गरुडेनैव सहितं गमयेन्मङ्गलान्वितम् ॥ ४६ ॥

उत्तरे चायने देवं स्नपनाद्यैस्समर्चयेत् ।
घृतेनाभ्यञ्जयेद्देवं मज्जयेद्वा घृतादिषु ॥ ४७ ॥

घृते वा दध्नि पीयूषे यद्वा मधुनि सम्भृते ।
फलेषु वा [3]फलरसैः पञ्चगव्यरसेषु वा ॥ ४८ ॥

पायसादिषु चान्नेषु कालपुष्पोच्चयेषु वा ।
दलेषु वा तुलस्यादेर्नवरत्नचयेषु वा ॥ ४९ ॥

सुवर्णकलधौतेषु पुष्पाकारेषु [4]शोभने ।
सुवर्ण[5]गोलकाः कृत्वा [6]कल्पितावयवोज्ज्वलाः ॥ ५० ॥

कल्पिताकल्पकल्याणप्रतिमाकारसंमिताः ।
पीठिकाकारतुलितास्ताभिराच्छाद्य भूषयेत् ॥ ५१ ॥

पञ्चायुधसमाकारा हस्तादिसदृशाकृतीः ।
कृत्वा पृथग्यथाशोभं गोलकाः कञ्चुकाकृतीः ॥ ५२ ॥

भूषयेत्ताभिरङ्गानि चायुधानि च सर्वशः ।
आपाद[7]मस्तकां वान्यैर्व्रीह्यादिभिरधोक्षजम् ॥ ५३ ॥

छादयेन्मूलमन्त्रेण पूरणं सर्ववस्तुभिः ।
[8]तिलस्त्रिपादसहितानपि वा द्विगुणांस्तथा ॥ ५४ ॥

1. प्रातःकाले निवेदयेत् $M_2$ 2. उत्तरे गरुडेनैव सहितं मङ्गलान्वितम् $M_2$
3. फलरसे $T, P_1, P_2$ 4. शोधने $M_1$ 5. ॰गोलिकाः $M_2$ 6. लिखिता॰ $M_2$
7. ॰मस्तकं $T, P_1, P_2$ 8. त्रिपादभारसहिता नाडीर्वा द्विगुणास्तथा $M_2$



पूरयेत्कालमातोद्यनृत्तगीतादिमङ्गलम् ।
आचरेत्सर्वमेतस्मिन् यथाविभवविस्तरम् ॥ ५५ ॥

जुहुयात्सर्पिषा यावत्पूरणं मूलविद्यया ।
देया च दक्षिणा स्वर्णमाचार्याय यथावसु ॥ ५६ ॥

घृतादिपूरणं चैतत्सर्वकामसमृद्धिदम् ।
पुष्ये च मासि नक्षत्रे पौर्णमास्यामथापि वा ॥ ५७ ॥

आराधनं भगवतस्सर्वपापविनाशनम् ।
माघमासे सिते पक्षे पञ्चम्यां मधुविद्विषम् ॥ ५८ ॥

समाराध्य यथाशास्त्रं देवस्याग्रे महीतले ।
गोमयालेपिते [1]द्वाभ्यां हस्ताभ्यामपि संमिते ॥ ५९ ॥

चतुर्भिर्वा समायामविस्तारे छादिते पुनः ।
वाससा नूतनेनैव सदशेन तथोपरि ॥ ६० ॥

कृष्णाजिनेन शुद्धेन भेदनच्छेदनादिना ।
वर्जितेन [2]समाच्छाद्य वस्त्रं तदुपरि क्षिपेत् ॥ ६१ ॥

तिलानां भारमेकं वा द्वौ वा कृत्वा च वेदिकाम् ।
त्रिमेखलां तिले तस्मिन् पद्माकारसमाकृतिम् ॥ ६२ ॥

निष्कत्रयात्मकं स्वर्णं लेखापद्मं तिलेषु वा ।
निक्षिप्य नवरत्नानि दिक्षु चाष्टासु निक्षिपेत् ॥ ६३ ॥

धान्यपूर्णानि पात्राणि द्वे द्वे प्रतिदिशं क्रमात् ।
प्रस्थतैलं तथा सर्पिर्दधि चापि चतुर्गुणम् ॥ ६४ ॥

1. बाह्ये $M_1$ 2. समासाद्य T

पार्श्वयोः पुरतश्चापि पात्रस्थं न्यस्य भूतले ।
[1]तिलाज्याहारः पुरतस्त्रीण्यहानि यतेन्द्रियः ॥ ६५ ॥

उपोष्य वा गुरुः पूर्वमेकरात्रं चतुर्मुख ।
अभ्यर्च्य गन्धपुष्पाद्यैस्तिलान्नैस्तदनन्तरम् ॥ ६६ ॥

अधीयानेषु विप्रेषु तूर्यवादित्रघोषणे ।
मङ्गलेषु तथान्येषु प्रवृत्तेषु यथा[2]तथम् ॥ ६७ ॥

तिलैस्सहस्रकृत्वोऽग्नौ जुहुयान्मूलविद्यया ।
आचार्यं पञ्चकालज्ञं भगवच्छास्त्रकोविदम् ॥ ६८ ॥

कल्याणाचारनिरतं सर्वैस्समुदितं गुणैः ।
तस्मै भागवतायेदमर्चयित्वा[3]क्षतादिभिः ॥ ६९ ॥

तिलपद्मं[4] प्रदातव्यं सन्निधौ वारिपूर्वकम् ।
प्रीयतां भगवान्विष्णुरित्याचार्येण मन्त्रवित् ॥ ७० ॥

तदन्ते देवमभ्यर्च्य [5]भोजयित्वा महीसुरान् ।
दद्याच्च दक्षिणां तेभ्यो गुरवे च यथोदिताम् ॥ ७१ ॥

[6]इत्थं तिलसरोजं यो दद्याद्धान्यादिसंयुतम् ।
पुनाति स पितॄन् सर्वानात्मानं च[7] परावरान् ॥ ७२ ॥

मासर्क्षे पौर्णमास्यां च यजनं स्नपनादिभिः ।
फाल्गुने मासि फल्गुन्यां श्रीकामो हरिमर्चयेत् ॥ ७३ ॥

उपोष्य पूर्वं नियतो ध्यायन्नित्थं[8] समाहितः ।
विपुले बिल्वविपिने मध्ये पुष्करशोभिते ॥ ७४ ॥

---

1. तिलाज्यभारसहितः त्रीण्यहानि जितेन्द्रियः $M_2$ 2. °यथम् T, $P_1$, $P_2$
3. यथाविधि A 4. तिलपत्रं T 5. पूजयित्वा $M_1$ 6. एवं $M_1$
7. कुल्यानपि M 8. ध्यायंस्तीर्थ° $M_1$



महातटाके शिञ्जानपक्षिसङ्घसमाकुले[1] ।
मण्डले[2] तत्र माहेन्द्रे [3]प्राकारपरिवेषणे ॥ ७५ ॥

[4]चतुर्द्वारे चतुर्दिक्षु कल्पकद्रुममण्डिते ।
सौवर्णे बहुकल्याणरत्नस्तम्भसमन्विते ॥ ७६ ॥

सिंहासने वरे रत्नपद्मेऽष्टदलसंयुते ।
कर्णिकाकेसरोपेते सुखासीनं श्रिया सह ॥ ७७ ॥

पूर्वादिदिक्षु ध्यातव्या वासुदेवादयो दले ।
आग्नेयादिषु कोणेषु चत्वारो हस्तिनः क्रमात् ॥ ७८ ॥

गुग्गुलुश्च कुरण्डश्च दमकश्शललस्तथा ।
शङ्खपद्मनिधी चापि सिंहविष्टरपार्श्वयोः ॥ ७९ ॥

अन्योन्याभिमुखौ भूरि वमन्तौ वसु सर्वदा ।
भूम्यादयोऽष्टौ पूर्वादिदिक्षु चामरपाणयः ॥ ८० ॥

इन्द्रादयश्च पूर्वादिदिक्ष्वष्टावष्टसु [5]स्थिताः ।
स्थिताश्चतुर्षु द्वारेषु वेत्रहस्तास्सकञ्चिकाः[6] ॥ ८१ ॥

कुब्जवेषाः स्त्रियो द्वारि पालयन्त्यो मनोहराः ।
बलाकिनी भीषिका च तथैव वनमालिनी ॥ ८२ ॥

शाङ्करी च क्रमादेताः पूर्वादिषु चतुर्मुख ।
द्वाराणि पालिकाभिश्च पूर्णकुम्भैर्द्विजैस्तथा ॥ ८३ ॥

तोरणैर्दामभिर्मौक्तिकैर्दीपैरन्यैश्च मङ्गलैः ।
परिष्कृतानि ध्यात्वैवं देवीं देवं च पूजयेत् ॥ ८४ ॥

---

1. °महातले $M_1$ 2. मण्डपे $P_1$, $P_2$ 3. रत्नप्राकारवेष्टिते T, $P_1$, $P_2$
4. चतुर्दिक्षु चतुर्द्वारे $P_1$, $P_2$ 5. क्रमात् A, $P_2$ 6. सकञ्चुकाः T, $P_1$, $P_2$

श्रियं वा केवलां पद्मे कर्णिकायामवस्थिताम् ।
मण्डपे तत्र पूर्वोक्ते परिवारसमन्विते ॥ ८५ ॥

लक्ष्मीप्रसूनकैः पद्मैः होमो बिल्वादिपल्लवैः ।
समिदाज्यैश्च मन्त्रेण श्रियश्चाष्टाक्षरेण च ॥ ८६ ॥

श्रीसूक्तानि चतुर्दिक्षु पाठ्यानि पृथिवीसुरैः ।
आराध्याभिष्टुयादन्ते स्तोत्रैर्बहुविधैः श्रियम् ॥ ८७ ॥

नमामि देवि लोकानां जनयित्र्यब्जसम्भवे[1] ।
सर्वलोकेश्वरैशेशवल्लभे दुर्लभेऽधमैः ॥ ८८ ॥

वासुदेवाङ्गसंस्पर्शसुखैकरसभाजने ।
नमस्ते [2]शुभदे देवि देवानामधिदेवते ॥ ८९ ॥

यदृच्छयापि ते [3]येषु कटाक्षाः पतितास्सकृत् ।
क्षुद्रेष्वपि [4]प्रगल्भन्ते ते त्रिलोकेश्वराः क्रमात् ॥ ९० ॥

न स्पृशन्ति त्रिलोकेशानपि यान् वीक्षणानि ते ।
सम्पाद्यन्ते क्षणात् क्षुद्रा नाकपृष्ठादपि च्युताः ॥ ९१ ॥

लावण्यादिगुणा यत्र काष्ठामश्नुवते पराम् ।
तानि त्वदीयान्यङ्गानि देवि कः स्तोतुमर्हति ॥ ९२ ॥

त्वं माया त्वमविद्यासि बंधन्ती [त्वं शक्तिः] कर्मणामपि ।
चैतन्यशक्तिस्त्वमसि प्रकृतिस्त्रिगुणात्मिका ॥ ९३ ॥

त्वमेव विद्या त्रय्यन्ता त्रयी च त्वं [5]परावरे ।
यस्यास्त[6]वायुतांशांशे देव्यो वागादयस्स्थिताः ॥ ९४ ॥

1. जनन्यायब्धिसम्भवे $P_2$ 2. सुभगे $M_2$ ; सुखदे T, $P_1$, $P_2$ 3. देवि T, $P_1$, $P_2$ 4. प्रकल्पन्ते T 5. परावरा $P_1$, $P_2$ 6. °आयतापाङ्गे $M_1$



सच्चिदानन्दरूपस्य परस्य परमात्मनः ।
आनन्दादिमयी मूर्तिरविभक्ता भवत्यसि ॥ ९५ ॥

प्रभासि तस्य नित्या त्वं भास्वतः परमात्मनः ।
सन्ध्या त्वमसि विप्राणां वन्दनीया दिने दिने ॥ ९६ ॥

भूर्भुवः स्वस्त्रयी च त्वं भूरसि त्वं भुवोऽसि च ।
[1]स्वरसि व्याहृतिश्चासि ऋग्यजुस्सामकारणम् ॥ ९७ ॥

त्वमाहुतिस्त्वमिष्टिश्च दक्षिणासि त्वमेव च ।
सिद्धिश्च कर्मणां त्वत्तो नान्यास्ति कमलालये ॥ ९८ ॥

नीतिरान्वीक्षकी वार्ता विद्या [2]चान्यासि लौकिकी ।
दृष्ट्वा देवि त्वया हीनं मृतप्रायं जगत्त्रयम् ॥ ९९ ॥

यत्नैरम्भोधिमथनप्रायैराविर्बभूविथ ।
आनुषङ्गिकमुत्पन्नं प्राप्तमप्सरसामपि ॥ १०० ॥

तादृगेवामृतादन्यदिन्दिरे हरिमन्दिरे ।
हालाहलविषं चापि जन्मनः श्रेयसे तव ॥ १०१ ॥

प्रत्यूहरूपेणोत्पन्नं क्षीरवारिधिसम्भवे ।
[3]अभ्यर्हिता तवोत्पत्तिरेवं नाम मधुद्विषः ॥ १०२ ॥

कूर्मादितिर्यग्योनित्वं यत्प्राप्तं परमात्मना[4] ।
त्वं सर्वलोकजननी जनको जगतां हरिः ॥ १०३ ॥

त्वया च विष्णुना चैतद्व्याप्तं स्थावरजङ्गमम् ।
मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् ॥ १०४ ॥

1. स्वरपि $M_2$ 2. चाद्यासि T, $P_1$, $P_2$ 3. अभ्यर्चिता M
4. परमात्मनः T, $P_1$, $P_2$

मा शरीरं कलत्रं च त्यजेथा मा च सन्ततिम् ।
श्रुतवान् शीलवान् दक्षो बुद्धिमान्वित्तवानृजुः ॥ १०५ ॥

वृत्तवान् बन्धुमान् श्रीमान् पशुमान् धान्यवानपि ।
गुणवान् कीर्तिमान् लोके तथाभिजनवान् प्रभुः ॥ १०६ ॥

आयुष्मान् विजयी भूमांस्तथैवारोग्यवानपि ।
श्लाघ्य[1]वाग् देवि पुरुषः कटाक्षविषयात्तव ॥ १०७ ॥

गुणैर्यथोक्तै रहितस्त्वद्दर्शनविवर्जितः ।
क्रीडाभूमिर्हरेर्य[2]स्या वक्षोभूमिस्सनातनी ॥ १०८ ॥

आनन्त्यात्तव कल्याणि गुणानां वर्णने क्षमः ।
न वाचस्पते[3]रन्येषां दूरे स्यान्मादृशां स्थितिः ॥ १०९ ॥

प्रसीद देवि पद्मे त्वं पद्महस्ते शुचिस्मिते ।
पद्मासने पद्मयोनेर्जनयित्रि हरिप्रिये ॥ ११० ॥

पद्मप्रिये नमस्तुभ्यं विष्णोर्वक्षःस्थलालये ।
स्तुत्यन्तमित्थमाराध्य देव्यस्सर्वाः श्रियादयः ॥ १११ ॥

अर्हणं चोपवीतं च वर्जयित्वोपचर्यया ।
ध्यात्वा यथोक्तमात्रेण यद्वा धूमध्वजार्चनम् ॥ ११२ ॥

उत्सवं च श्रिया देव्या सार्धं तद्व[4]न्मधुद्विषः ।
यावज्जीवं श्रियं देवीमर्चयन् सम्पदं पराम् ॥ ११३ ॥

इहानुभूय भूयोऽपि परत्र श्रियमश्नुते ।
[5]यद्यत्कामयमानेन पुरुषेणार्चनं श्रियः ॥ ११४ ॥

---

1. °वान् T, $P_1$, $P_2$ 2. यस्य T, $P_1$, $P_2$ 3. °अप्येष T, $P_1$, $P_2$
4. तस्मिन् T, $P_1$, $P_2$ 5. यद्वा कामयमानेन T, $P_1$, $P_2$



लभते तत्तदेवेह फलभेदैः किमीरितैः ।
आरोग्यकामस्सावित्रे मण्डले रक्तपङ्कजे ॥ ११५ ॥

आसीनं विष्टरे पीतकौशेयवसनं हरिम् ।
निष्टप्ततपनीयाभं चतुर्भुजमधोक्षजम् ॥ ११६ ॥

प्रसादसुमुखं [1]सेव्यं दिव्याभरणभूषितम् ।
देवीसहायं कल्याणं केवलं वा चतुर्मुख ॥ ११७ ॥

पूर्वाद्यष्टदलासीनं[2] शक्त्यष्टसमुपासितम् ।
एवं ध्यात्वार्चयेन्नित्यमारोग्यं परमश्नुते ॥ ११८ ॥

अनन्यलभ्यमारोग्यं सर्वं [3]लब्ध्वा ततः परम् ।
दिनानि पञ्च शस्तानि वैष्णवानि चतुर्मुख ॥ ११९ ॥

तेषु व्रतमनुष्ठेयं सर्वाभिप्रेतसाधनम् ।
पक्षद्वयेऽपि[4] द्वादश्यौ सिनीवाली कुहूस्तथा ॥ १२० ॥

श्रवणर्क्षं दिनानि स्युर्मासेषु द्वादशस्वपि ।
चैत्रादिषु द्वादशसु मासेषु द्वादशाधिपाः ॥ १२१ ॥

अर्चनीयाः क्रमाद्विष्णुस्तथैव मधुसूदनः ।
त्रिविक्रमो वामनश्च श्रीधरस्तदनन्तरम् ॥ १२२ ॥

हृषीकेशः पद्मनाभो दामोदरसमाह्वयः ।
केशवो नामधेयेन तथा नारायणः स्मृतः ॥ १२३ ॥

माधवोऽन्यश्च गोविन्दो द्वादशैते प्रकीर्तिताः ।
मासे चैत्रे [5]समारम्भो मार्गशीर्षेऽथवा भवेत् ॥ १२४ ॥

---

1. सर्व° T, $P_1$, $P_2$ 2. °आसीन° $P_1$, $P_2$ 3. लभ्यमितः परम् $M_2$; लभ्येत्ततः परम् T, $P^1$, $P_2$ 4. च $P_1$, $P_2$ 5. व्रतारम्भे $M_1$

अश्नन् हविष्यं पूर्वेद्युरनश्नन्परेऽहनि ।
श्रवणे मध्यमे भागे शुचिर्दक्षस्समाहितः ॥ १२५ ॥

चक्राब्जमण्डले यद्वा बिम्बे कुम्भेऽथवा हरिम् ।
आराध्य मूर्तिं मासेशमुपचारैर्यथोदितैः ॥ १२६ ॥

[1]आदावन्ते च वित्तानि दत्त्वा शक्त्यनुसारतः ।
ब्राह्मणेभ्यस्तथा दत्त्वा गुरवे दक्षिणादिकम् ॥ १२७ ॥

अपरेद्युस्तथा [2]देवीमर्चयित्वा यथाविधि ।
पारणं ब्राह्मणैस्सार्धं कुर्यान्नियतमानसः ॥ १२८ ॥

एवं चतुर्षु चान्येषु दिनेष्वाराधनक्रमः[3] ।
मासि मासि च यष्टव्या[4] मासेशो मूर्तिरब्जज ॥ १२९ ॥

दिनेषु पञ्चसूक्तेषु सर्वाभिप्रेतसिद्धये ।
त्रिषु संवत्सरेष्वेवं कृत्वा मासेषु च त्रिषु ॥ १३० ॥

व्रते समाप्ते स्नपनं कुर्यात्पूर्वोक्तवर्त्मना ।
याचयेत व्रतफलं धान्यराशौ [5]स्थितो द्विजः ॥ १३१ ॥

भोजयित्वा द्विजवरान् दत्त्वा तेभ्यश्च दक्षिणाम् ।
दक्षिणाभिस्तथाचार्यं तोषयेत्काञ्चनादिभिः ॥ १३२ ॥

पौर्णमास्यामपि ह्येष क्रमो मासाधिपार्चने ।
विशेषतस्त्रियामायां चन्द्रमस्युदितेऽ[6]र्हणाम् ॥ १३३ ॥

कुह्वामपि तिथौ प्राग्वदर्चयेद् व्रतमास्थितः ।
आराधनं दिनेष्वेषु चतुर्वर्गफलप्रदम् ॥ १३४ ॥

---

1. आराधनान्ते वित्तानि T, $P_1$, $P_2$  2. देवम्° T, $P_1$, $P_2$  3. ॰क्रमम् T  4. यष्टव्यो $M_1$  5. स्थितं द्विजम् $M_2$  6. अर्हणा T, $P_1$, $P_2$



सर्वस्मिन्मासनक्षत्रे प्रादुर्भावदिनेषु च ।
अर्चयित्वाङ्कुरान् पूजा कार्या स्नपनपूर्विका ॥ १३५ ॥

[1]होमावसानिका विप्रान् तर्पयेच्च यथावसु ।
इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
व्रतानुष्ठानक्रमो नाम पञ्चदशोऽध्यायः ॥

---

## षोडशोऽध्यायः ॥

### संमार्जनादिफल-देवस्वापहारदोषकीर्तनम् ॥

ब्रह्मोवाच :—

भगवन् भाविनां कर्मफलानामशुभात्मनाम् ।
सूचनेषु निमित्तेषु सञ्जातेष्वशुभात्मसु ॥ १ ॥

ग्रहदोषादिषु नृणामधिपस्य च भूपतेः ।
तेषामकस्माज्जातानां कर्म यच्छमनं परम् ॥ २ ॥

तत्समाख्यायतां कीदृक् किं कथं [2]वेति चाच्युत ।
रहस्यमपि तद्वाच्यं दयया परया मयि ॥ ३ ॥

श्रीभगवान् :—

जन्मर्क्षाद्यशुभ[3]स्थानं गतेष्वङ्गारकादिषु ।
क्रूरेषु दुर्निमित्तेषु [4]दुःस्वप्नसमयेषु च ॥ ४ ॥

[5]गृहक्षेत्रादिकेष्वेवं वल्मीकजनने तथा ।
रक्तवृष्टिषु[6] जातास्वग्निदाहे च वेश्मनाम् ॥ ५ ॥

---

1. अयं श्लोकार्धः A,T,$P_1$ कोशेषु $P_2$ ग्रन्थे चैवोपलभ्यते ।  2. चेति $P_1$,$P_2$  3. ॰स्थान॰ T, $P_1$, $T_2$  4. दुःस्वप्नेष्वामयेषु च T, $P_1$, $P_2$  5. गृहक्षेत्रादिषु स्वेषु वल्मीकाक्रन्दनेषु च $M_2$  6. रक्तस्त्रीषु $P_1$, $P_2$

वस्त्रादिमूषिकादंशे दग्धेषु शयनादिषु ।
सङ्कटेष्वपि चान्येषु पुत्रादिकलहात्मसु ॥ ६ ॥

नृपकोपे तथा चित्तदुःखे निगलबन्धने ।
पीडायामरिपक्षेण पिशाचाद्यैर्भयानकैः ॥ ७ ॥

व्रतध्वंसे प्रागभावे पुत्रा[1]णामर्थहानिषु ।
[2]अनिष्टसूचने पुत्रजन्मन्युत्पातसम्भवे ॥ ८ ॥

एवमादिषु चान्येषु दोषेष्वाराधनं मम ।
शान्तये कल्पते ब्रह्मन् प्रकारस्तस्य कथ्यते ॥ ९ ॥

[3]स्नानपूर्वाणि कर्माणि कृत्वा विधिवदादृतः ।
शुचौ भूमितले कुम्भं [4]सौवर्णं राजतं तु वा ॥ १० ॥

ताम्रं वापि यथावित्तं वारिपूर्णं सकूर्चकम् ।
तन्तुभिर्वेष्टितं न्यस्तवारिबीजं समल्लकम्[5] ॥ ११ ॥

आचार्यं वरयेत् पश्चान्मदाराधनतत्परम् ।
शमादिगुणसंयुक्तं पञ्चकालपरायणम् ॥ १२ ॥

धान्यराशिषु संस्थाप्य न्यस्तरत्नसुवर्णकम् ।
शान्तिद्रव्यसनाथं च अश्वत्थदलमङ्गलम् ॥ १३ ॥

वेष्टितं नववस्त्रेण रक्तेनाक्षतसंयुतम् ।
प्राच्यां दिशि च देवे[6]शमावाह्य घटिकासने ॥ १४ ॥

1. पुराणामर्थ॰ $P_1$, (fn.) $P_2$ (fn.) 2. अरिष्ट॰ $P_1$, $P_2$ 3. सार्धमयं श्लोकः A, T कोशयोः, $P_2$ ग्रन्थे चैव दृश्यते । 4. वारिपूर्णं सकूर्चकम् $M_1$, $P_1$ 5. सपल्लवम् T, $P_1$, $P_2$ 6. सार्धः श्लोकोऽयं $P_1$, $P_2$ ग्रन्थयोरेवोपलभ्यते ।
याम्ये सङ्कर्षणं तथा ।
प्रद्युम्नं पश्चिमे भागेऽनिरुद्धं तथोत्तरे ॥
एवं क्रमेण देवेशमावाह्य घटिकासने । इति पाठः $P_2$ ग्रन्थे एव दृश्यते ।



कुशकूर्चैः पश्चिमाशासंमुखेऽष्टाक्षरेण तु ।
यजेतार्घ्यादिना यद्वा रिक्तं[1] तस्य [2]तदर्चनम् ॥ १५ ॥

कुम्भे चावाह्य यजनं [3]जुहुयाद्गव्यसर्पिषा ।
[4]मन्त्रेणाष्टाक्षरेणैव लक्षवारानथायुतम् ॥ १६ ॥

सहस्रमपि वा कुण्डे शतं वाष्टोत्तरं गुरुः ।
ध्यात्वा हरिं सर्वशान्तिकरं सर्वसमृद्धिदम् ॥ १७ ॥

गौरवं लाघवं चापि समवेक्ष्य यथोचितम् ।
दोषाणां यत्नमातिष्ठेदर्चनादिषु सर्वतः ॥ १८ ॥

अन्ते प्रणवमङ्गल्यैर्यजमानं गुरुस्स्वयम् ।
मन्त्रैः कुम्भस्थतोयेन प्रोक्षयेन्मूलविद्यया ॥ १९ ॥

सहस्रकृत्वः कूर्चेन स्नापयेच्छेषवारिभिः ।
आचार्याय यथावित्तं दद्यात्स्वर्णादि दक्षिणाम् ॥ २० ॥

ब्राह्मणान् भोजयेत्तेभ्यो दक्षिणामल्पिकामपि ।
प्रभूणामपि सर्वेषां सर्वोपद्रवशान्तये ॥ २१ ॥

सर्वाभिप्रेतलाभाय विशेषयजनं हरेः ।
कुर्यात् स्नपनपूर्वं तदह्नि नित्यार्चने कृते ॥ २२ ॥

तदन्ते शान्तिकं कर्म अपराह्णेऽथ[5] पौष्टिकम् ।
पूर्वाह्णे नित्यकर्मोक्तं वस्तुभिर्द्विगुणैरिह ॥ २३ ॥

1. रुक्मं न्यस्य T, $P_1$, $P_2$ 2. तदर्धकम् $M_2$ 3. जपेन्मन्त्रमनुत्तमम् $P_2$
4. मूलमन्त्रेण लक्षं वा तदर्धं वा तदर्धकम् । ततः पुंसूक्तमन्वाकं नारायणानुवाककौ ॥ ततः श्रीसूक्तभूसूक्ते जपेदाचार्य ऋत्विजाम् । मूलेनाग्निं प्रतिष्ठाप्य जुहुयाद्गव्यसर्पिषा । अग्निप्रतिष्ठां कृत्वाथ वैष्णवीकरणं तथा ॥ 5. तु T, $P_1$, $P_2$

पूजाद्रव्यैरेकबेरे मूलबेरे समर्चनम् ।
बहुबेरे तु बिम्बे स्यादौत्सवे कमलासन ॥ २४ ॥

आचार्य एव पूजायां वैशेषिक्यां समर्चयेत् ।
होमकुण्डं भवेत् पद्मतुल्याकारं सुशोभनम् ॥ २५ ॥

पौष्टिके शान्तिके वृत्तं प्रत्यहं समिदादिभिः ।
प्रत्येकं तिलहोमस्स्यादयुतं वा शतावरम् ॥ २६ ॥

प्रत्यहं भोजयेद्विप्रान् यथाशक्ति च दक्षिणा ।
नृत्तं गेयं च वाद्यं च तथाध्ययनमन्वहम् ॥ २७ ॥

कर्मावसानदिवसं यावदग्नेश्च धारणम् ।
सप्ताहं द्विगुणं वा स्यात् त्रिगुणं वा चतुर्गुणम् ॥ २८ ॥

स्नपनं प्रत्यहं कार्यं दानहोमादयस्तथा ।
शान्तिके कर्मणि ध्येयो हरिः स्फटिकसन्निभः ॥ २९ ॥

पौष्टिके तु सुवर्णाभः श्रियासीन[1]स्सहासने ।
चक्राब्जमण्डले कुम्भे [2]यत्र प्रथममर्चनम् ॥ ३० ॥

तत्रैवान्येद्युराराध्यो न तु निर्माल्यता तयोः ।
आचार्यदक्षिणा चापि यथाविभवविस्तरम् ॥ ३१ ॥

कर्मण्यधिकृतानां च कर्मगौरवलाघवम् ।
अवेक्ष्य तोषणं वित्तैः ऋत्विजां चोपकुर्वताम् ॥ ३२ ॥

[3]दिनेषु चानुकूलेषु प्रारम्भ्या पौष्टिकी क्रिया ।
शान्तिकी प्रतिकूलेषु यजमानस्य पद्मज ॥ ३३ ॥

---

1. महासने $M_2$ 2. यत्र यत्र समर्चनम् $P_2$ 3. दिनादिष्वनुकूलेषु $T, P_1, P_2$



ब्रह्मोवाच :—

भगवन् मार्जनादीनि मन्दिरे कुर्वतां नृणाम् ।
विष्णोः क्षेत्रादिदातॄणां पूजोपकरणानि च ॥ ३४ ॥

भूषणानि च वस्त्राणि फलमभ्युदयात्मकम् ।
कीदृक् कीदृक् च तान्येव [1]दत्तान्याहरतामपि ॥ ३५ ॥

अनर्थकरमेतन्मे संशयानस्य कथ्यताम् ।
मार्जनं मन्दिरे विष्णोः कुर्वन् संमार्ष्टि देहजम् ॥ ३६ ॥

श्रीभगवान् :—

मलं पापात्मकं सर्वं परत्रेह च सम्भृतम् ।
प्रत्यहं मार्जनं कुर्वन् प्रत्यहं हन्ति किल्बिषम् ॥ ३७ ॥

गोचर्ममात्रमालिप्य गोमयेन च भूतलम् ।
आलये लभते सद्यो गोप्रदानफलं नरः ॥ ३८ ॥

मार्जनालेपने कुर्वन् विष्णोरायतने नरः ।
उषित्वा [2]स चिरं स्वर्गे कर्मशेषेण भूतले ॥ ३९ ॥

भूयोऽपि जायते भूपः कुले महति पूजिते ।
स्रजं बद्ध्वा सुमनसां यः प्रयच्छति विष्णवे ॥ ४० ॥

स भुक्त्वा विपुलान् भोगान्नाकपृष्ठे विराजते ।
दीपानारोपयेद्विष्णोर्मन्दिराभ्यन्तरे बहिः ॥ ४१ ॥

दिवि देववदास्थित्वा[3] जायते परमार्थवित् ।
नित्यान्नैमित्तिकान्वापि दीपानारोपयेन्नरः ॥ ४२ ॥

---

1. दत्तानां हरतामपि T, P, $M_2$ 2. सुचिरं T, $P_1$, $P_2$
3. ध्यासित्वा T, $P_2$

बहुदुःखसमाकीर्णं नरकं [1]न स पश्यति ।
अहोरात्रं स्वनिर्वाणं[2] दीपमारोपयेन्नरः ॥ ४३ ॥

सर्वपापविशुद्धात्मा विष्णुलोके महीयते ।
उदकाभ्युक्षणं विष्णोरालये विदधाति यः ॥ ४४ ॥

लोकं स वारुणं प्राप्य रमते वत्सरान् बहून् ।
[3]संमृज्यालिप्य च हरेर्धाम पुष्पाणि भूतले ॥ ४५ ॥

विकिरेन्मनुजस्सर्वकामानाप्नोति पुष्कलान् ।
[4]विष्णुसात्कुरुते भूमिं [5]बहुसस्यफलप्रदाम् ॥ ४६ ॥

यस्स लोकानवाप्नोति सर्वानेव न संशयः ।
पुष्पोद्यानप्रदानेन तपोलोके महीयते ॥ ४७ ॥

फलवृक्षसमोपेतां प्राग्भूमिं(तु) [6]जलान्विताम् ।
यो ददाति महर्लोके स चिरं वसति ध्रुवम् ॥ ४८ ॥

उत्पादयति यः क्षेत्रे वैष्णवे फलिनस्तरून् ।
नालिकेरादिकान् याति स स्वर्गं प्रेत्य दुर्लभम् ॥ ४९ ॥

आराधनाय तुलसीं उत्पादयति यत्नवान् ।
सुरभीणि च पुष्पाणि दिवि देवैः स पूज्यते ॥ ५० ॥

वापीकूपतटाकानि विष्णोर्मन्दिरभूमिषु ।
उत्पादयति हस्ते स्युस्तस्य[7] सर्वसमृद्धयः ॥ ५१ ॥

न तं बध्नन्ति पापानि बहुजन्मार्जितान्यपि ।
यः कुर्याद्वैष्णवं धाम भक्ति[8]श्रद्धोभयोचितम् ॥ ५२ ॥

---

1. नैव T, $P_1$, $P_2$ 2. अहोरात्रमनिर्वाणं $P_1$, $P_2$ 3. सम्मार्ज्य° T, $P_1$, $P_2$ 4. विष्णोर्यं कुरुते $M_1$ 5. सर्वं° T,$P_1$,$P_2$ 6. समन्विताम् A 7. हस्तस्थास्तस्य T, $P_1$, $P_2$ 8. °श्रद्धाभियोजितम् $M_1$



खण्डिते स्फुटिते धाम्नि दूषिते च सुधादिभिः ।
समादध्यात्पुनर्धाम स लोकं याति वैष्णवम् ॥ ५३ ॥

स्नान[1]पानाम्भसोर्विष्णोः प्रदानात्तत्सलोकभाक् ।
स्नानीयद्रव्यदानेन नीरोगः प्रेत्य मोदते[2] ॥ ५४ ॥

क्षौमादिदानादाप्नोति परलोके महत् सुखम् ।
आलेपनद्रव्यदानात् कामानाप्नोति शाश्वतान् ॥ ५५ ॥

एलाकर्पूरताम्बूलीतैलादिस्पर्शनात् सुखी ।
परत्रेह च लोके स्याद्दीर्घकालं [3]न संशयः ॥ ५६ ॥

चामरव्यजनच्छत्रदानात् स्वाराज्यमश्नुते ।
दानादाभरणादीनां तेजस्वी दिवि मोदते ॥ ५७ ॥

दानाच्च नवरत्नानां देवसालोक्यमश्नुते ।
आदर्शनप्रदानेन दृश्यस्सर्वैर्भविष्यति[4] ॥ ५८ ॥

धूपद्रव्यप्रदानेन स्वस्थानं स्वर्गिणां भवेत् ।
उपानहौ पादुके च वाहनं यानमेव च ॥ ५९ ॥

ददाति यो मण्डयित्वा मणिकाञ्चनचित्रितम् ।
स विमानं सुदुष्प्रापं प्राप्नोत्येव न संशयः ॥ ६० ॥

अलङ्कृतं भद्रपीठं प्रयच्छन् सर्वकामभाक् ।
विनतानन्दनस्थानं ध्वजमुत्पाद्य दर्शयन् ॥ ६१ ॥

सामीप्यं सहसा विष्णोर्याति सद्यश्चतुर्मुख ।
ध्वजं च वाद्यमुत्पाद्य विष्णुसात्कुरुते च[5] यः ॥ ६२ ॥

---

1. °स्नानाम्भसां T,$P_1$,$P_2$ 2. प्रतिमोदते $M_1$ 3. असंशयः T,$P_1$,$P_2$ 4. अयं श्लोकः $P_2$ ग्रन्थे नोपलभ्यते । 5. तु $P_1$,$P_2$

स दिव्यदुन्दुभिप्रायं स्थानं प्राप्य विराजते ।
दासीदासं तदात्मीयमात्मानं च प्रयच्छति ॥ ६३ ॥

वासुदेवाय दास्येन मुक्तिः करतले स्थिता ।
नृत्तभेदैर्गीतभेदैस्तथा वाद्यैरनेकधा ॥ ६४ ॥

श्रोतव्यैरपि [1]दिव्यैश्चाप्येवं देवस्य सन्निधौ ।
[2]आसनाद्युपचारैस्तैर्ये समाराधयन्ति ते ॥ ६५ ॥

प्रेत्य दिव्येषु [3]कालेषु पूज्यन्ते तैर्न संशयः ।
प्रदक्षिणनमस्कारैस्स्तुतिप्रायोपचर्यया ॥ ६६ ॥

आराधयन्ति ये देवं देवानामधिदैवतम् ।
ते देवै[4]रुपवर्ण्यन्ते परत्र भगवान् यथा ॥ ६७ ॥

स्थितं शयानमासीनं देवं [5]देवेश्वरेश्वरम् ।
यदृच्छयापि पश्यन्तः प्राप्नुवन्ति परं पदम् ॥ ६८ ॥

किं पुनर्भक्ति[6]पूर्वा ये वीक्षन्ते क्षण[7]मप्यथ ।
[8]निर्धूतदुष्कृतास्सर्वे यान्ति लोकान् यथेप्सितान् ॥ ६९ ॥

अष्टाङ्गप्रणिपातेन ये नमस्यन्ति मानवाः ।
तपस्स्वाध्यायशीलानां फलमश्नुवतेऽचिरात् ॥ ७० ॥

इयदेतदिति स्मर्तुं फलं वक्तुं च कः क्षमः ।
सकृत्प्रणमतां देवं फलं यन्मधुविद्विषम् ॥ ७१ ॥

1. दृश्यैश्च एवं देवेश° $T, P_1, P_2$  2. आसीनमुपचारैः $T, P_1, P_2$  3. लोकेषु $T, P_1, P_2$  4. °उपचर्यन्ते $T, P_1, P_2$  5. सर्वेश्वरेश्वरम् $T, P_1, P_2$  6. °पूर्वं ये पश्यन्ति $T, P_2$  7. °अच्युतम् $T, P_2$; °अप्यमुम् $M_2$  8. निर्धूय दुष्कृतं सर्वं $T, P_1, P_2$



शिरसा श्रवणाभ्यां च[1] मनसा वा करेण वा ।
बाहुभ्यां वाथ पद्भ्यां वा जानुभ्यां वापि वक्षसा[2] ॥ ७२ ॥

एकैकेनाङ्गजातेन प्रणमन्मधुविद्विषम् ।
कामानाप्नोति विपुलाननन्तानन्यदुर्लभान् ॥ ७३ ॥

किं पुनर्येऽष्टभिस्सर्वैरङ्गैः प्रणिपतन्ति ते[3] ।
वासुदेवाश्रयकथा व्याचक्षाणा दिने दिने ॥ ७४ ॥

वासुदेवालये यान्ति वाचस्पत्यमसंशयम् ।
गवां च कपिलादीनां प्रदानादश्नुते जनः ॥ ७५ ॥

ब्रह्मलोकादिलोकेषु वासं विन्दति शाश्वतम् ।
हविषां पायसादीनां हरये च निवेदनात् ॥ ७६ ॥

सुखैकरसपूर्णात्मा राजते विष्णुसन्निधौ ।
भक्ष्यपानीयभोज्यानामन्येषामपि दानतः ॥ ७७ ॥

श्वेतद्वीपे तत्समीपे वसन्ति सुखिनः सदा ।
बहुनात्र किमुक्तेन वासुदेवार्थमादरात् ॥ ७८ ॥

ददाति वस्तुजातं यः स्थानं प्राप्नोति चेप्सितम् ।
कर्मणां मार्जनादीनां फलभोगादनन्तरम् ॥ ७९ ॥

कर्मशेषैः पुनर्जन्म कर्मानुगुणयोनिषु ।
उत्कृष्टास्वेव भोक्तारो लभन्ते सुखिनः सदा ॥ ८० ॥

प्रासादमण्डपादीनां [4]भोक्तारः कैटभद्विषः ।
ये मूढमतयः प्रेत्य निरयेषु निरत्यथाः ॥ ८१ ॥

1. वा $T, P_1, P_2$  2. दृग्भ्यां वा वक्षसापि वा $T, P_1, P_2$  3. च $T, P_1, P_2$  4. भेत्तारः A

वसन्ति भूयो नीचासु जायन्ते योनिषु ध्रुवम् ।
भूषणच्छत्रवस्त्रादि[1]हर्ता यो दुर्मतिर्नरः ॥ ८२ ॥

गले निगलितः पाशैः कृष्यते निरयेषु सः ।
वाहनानि च यानानि वैष्णवानि हरन्ति ये ॥ ८३ ॥

मोहाद्वसन्ति ते दीर्घमज्ञार[2]नरकोदरे ।
प्रेत्य भूयोऽपि जायन्ते गर्दभोष्ट्रादियोनिषु ॥ ८४ ॥

चन्दनादीनि वस्तूनि पुष्पाणि सुरभीण्यपि ।
हरन्ति स्वानि विष्णोस्ते व्रजन्ते याम्ययातनाम् ॥ ८५ ॥

अनुभूय पुनर्ब्रह्मन् जायन्ते गन्धमूषिकाः ।
उपानत्पादुकापीठव्यजनानि हरन्ति ये ॥ ८६ ॥

उषित्वा निरयेष्वेते जायन्ते फणिनां कुले ।
गोभूहिरण्यवस्त्रादिधनं विष्णोः परिग्रहम् ॥ ८७ ॥

आहृत्य ये तु भुञ्जन्ते नरकेषु निरत्ययाः ।
उषित्वा प्रेत्य भूयोऽपि जायन्तेऽ[3]श्वादियोनिषु ॥ ८८ ॥

सर्वेषु नरकेष्वेवं देवब्रह्मस्वहारिणः ।
वसन्ति मूढमतयो याम्यदुःखानि भूयसा ॥ ८९ ॥

व्यायामोद्वर्तनाभ्यङ्गस्नानपानाशनादिकम् ।
कुर्वन्ति मन्दिरे विष्णोर्ये ते निरयगामिनः ॥ ९० ॥

पच्यन्ते तत्र भूयोऽपि जायन्ते नीचयोनिषु ।
वासुदेवप्रतिकृतेः भेदनच्छेदनादिषु ॥ ९१ ॥

1. यो हर्ता $P_2$ 2. निरये नराः M. 3 नीच॰ A



[1]विकृतादीनि चान्येषु यतन्ते पापचेतसः ।
एते यान्ति क्रमात्सर्वान्नरकान् भृशदारुणान् ॥ ९२ ॥

अन्येष्वप्यपचारेषु स्थूलसूक्ष्मेषु मानवाः ।
कृतिनः प्रेत्य नरके पच्यन्ते दुःखभागिनः ॥ ९३ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे संमार्जनफल-
देवस्वापहारदोषकीर्तनं नाम षोडशोऽध्यायः ॥

—:*:—

## सप्तदशोऽध्यायः ॥

### जीर्णोद्धारसंप्रोक्षणविधिः ॥

**ब्रह्मा :—**

प्रतिमानां तथा धाम्नां जीर्णानां भगवन्नहम् ।
उद्धारं श्रोतुमिच्छामि तन्मे ब्रूहि यथायथम् ॥ १ ॥

**श्रीभगवान् :—**

स्वायम्भुवार्षदिव्येषु मानुषेषु चतुर्ष्वपि ।
अङ्गहानौ रत्नजेषु तप्तजाम्बूनदैः पुनः ॥ २ ॥

समाधातव्यमेवाङ्गं न त्याज्यं शैलजेष्वपि ।
तद्वदेव समाधानं दारुजादिषु पञ्चसु ॥ ३ ॥

[2]हीनाङ्गानि तु बिम्बानि हित्वा तानि पुनः सृजेत् ।
अङ्गमात्रसमाधाने सृष्टौ सर्वात्मनापि च ॥ ४ ॥

1. विक्रीतादीनि T, $P_1$, $P_2$ 2. हीनाङ्गेषु तु T, $P_1$, $P_2$; हीनेष्वङ्गेषु $M_2$

कुम्भे शक्तिं समावाह्य निर्माय च यथापुरम् ।
अधिवासादिकं सर्वं प्रतिष्ठायामिवाचरेत् ॥ ५ ॥

स्थितवत् [1]स्वेषु बिम्बेषु समाधिर्यदि शक्यते ।
न त्यागो युज्यते तेषां सर्वेषामेव पद्मज ॥ ६ ॥

त्यक्तं च लोहजं बिम्बं द्रावयित्वा पुनः सृजेत् ।
देवे जीर्णे पुनःसृष्टौ देव्यः प्राच्यो यथास्थिताः ॥ ७ ॥

ताभिरेव पुनर्योज्यो देवो[2] नान्याः सृजेत्पुनः ।
नोद्वाहश्च पुनः कार्यः सन्ततौ तासु पूजने ॥ ८ ॥

प्रभापद्मासनादीनां वैकल्ये चलनेऽपि वा ।
[3]आयुधेऽपि च चक्रादौ यष्टव्यो [4]नासमाहितः ॥ ९ ॥

उद्वास्य प्रतिमाशक्तिं मूलबेरे घटेऽपि वा ।
चक्रादेश्च समाधानं कार्यं तस्मिन् समाहिते ॥ १० ॥

सम्प्रोक्ष्य पूजयेच्छक्तिमावाह्य प्रतिमासु ताम् ।
[5]बिम्बे[6] पुरातने जीर्णे [7]नवबिम्बं कृतं यदि ॥ ११ ॥

तं पीठे स्थापयेद्देवं न दोषः पद्मसम्भव ।
[8]पीठेऽप्यनूतने जीर्णे [9]नवं कृत्वा यथापुरम् ॥ १२ ॥

[10]तद्बिम्बं स्थापयेत्पीठे प्रतिष्ठाकर्मभिः सदा ।
न दोषस्तत्र विज्ञेयः प्रभादीनां चतुर्मुख ॥ १३ ॥

---

1. तेषु सर्वेषु $M_2$ 2. देवो योज्यो $P_1$,$P_2$ 3. "आयुधेऽपौ"त्यारब्धानि "प्रतिमासु ता"मित्यन्तानि वाक्यानि $P_1$, $P_2$ ग्रन्थयोः दृश्यन्ते । 4. नासमाहिते T,$P_1$,$P_2$ 5. बिम्बे इत्यारभ्य चतुर्मुखेतिपर्यन्तं श्लोकाः $P_1$, $P_2$ ग्रन्थयोर्नोपलभ्यन्ते । 6. बेरे A 7. न पीठं विकृतं A 8. पीठे पुरातने A 9. नवबिम्बं A 10. कर्तव्यमिति तत्रैव न दोषः पद्मसंभव । A



बालालयं कल्पयित्वा तत्र शैलादिवस्तुषु ।
बिम्बे तु शक्तिमावाह्य जीर्णेभ्यः पूजनं हरेः ॥ १४ ॥

त्यक्तं च बिम्बं निखनेत् क्षितौ वाम्भसि निक्षिपेत् ।
प्रासादे चापि शिथिले पूजयेद्बालवेश्मनि ॥ १५ ॥

उपेतं परिवारैः स्वैर्देवं मूले यथा तथा ।
अजीर्णे ध्रुवबिम्बे तु जीर्णे धामनि [1]च स्थितान् ॥ १६ ॥

देवान् देवपरीवारान् मूलबेरे निवेशयेत् ।
अजीर्णधामनिष्ठानां जीर्णे तु ध्रुवकौतुके ॥ १७ ॥

नोद्वासोऽन्यत्र कर्तव्यो देवादीनां चतुर्मुख ।
[2]अजीर्णे चाङ्गहीने च धामादौ नैव कल्पयेत् ॥ १८ ॥

भूयस्तरोऽपि मर्त्येन[3] व्यामोहाद्यदि कल्पयेत् ।
आत्महानिर्ध्रुवा तस्य यजमानस्य [4]सान्वया ॥ १९ ॥

यदि प्रमाणरहितं प्रमादात् कल्पितं पुरा ।
प्रासादादि [5]तदाप्यूर्ध्वं कल्पयेल्लक्षणान्वितम् ॥ २० ॥

बहुबेरैकबेरेषु कल्पनं स्याद्यथापुरम् ।
बहुबेरे नैकबेरं नैकबेरे तथापरम् ॥ २१ ॥

देवीविरहितं पूर्वं बहुबेरं कृतं यदि ।
[6]पुनः प्रकल्पने तस्य देवीभ्यां सह वा विना ॥ २२ ॥

अमानुषं च बिम्बादि पूर्वं लक्षणवर्जितम् ।
जीर्णोद्धारेऽपि कर्तव्यं तथैव न तदन्यथा ॥ २३ ॥

---

1. तत्स्थितान् T, $P_1$, $P_2$ 2. अजीर्णे नाङ्गहानौ च T, $P_1$, $P_2$; अजीर्णे नाङ्गहीने च $M_2$; अजीर्णेऽप्यङ्गहानिश्चेद्धामादौ नैव कल्पयेत् । 3. भूयस्तरो भवेन्मर्त्यो M 4. सान्वयम् T 5. पुनस्सृष्टौ T, $P_1$, $P_2$ 6. भूयः T, $P_1$, $P_2$

शयनं वासनं स्थानं यानं वा तद्यथापुरम् ।
बिम्बस्य पुनरुद्धारस्तथैव स्यादमानुषे ॥ २४ ॥

मानुषेषु[1] स्थितादीनां बिम्बानामिच्छया भवेत् ।
पुनःसृष्टिर्न दोषाय तथा सति चतुर्मुख ॥ २५ ॥

दिव्यं विमानं यद्वस्तु यन्मानं यादृशं पुरा ।
तादृगेव पुनः[2]सृष्टौ नान्यथा तत् प्रकल्पयेत् ॥ २६ ॥

अन्यथाकल्पने दोषो राज्ञो राष्ट्रस्य च ध्रुवम् ।
मानुषं सदनं चार्षं चैष्टकं वाथ मृन्मयम् ॥ २७ ॥

जीर्णे पुनः समुद्धारे शैलेनेष्टकयापि वा ।
उपपीठादिकं [3]सर्वं रक्षार्थं [4]बन्धयेद्बहिः ॥ २८ ॥

परिवारांश्च तत्रस्थानुपपीठे च वर्धिते ।
स्थापयेन्मूलबेरस्य रक्षार्थत्वान्न दूषणम् ॥ २९ ॥

सालगोपुर[5]पीठादिवलने जीर्ण एव वा ।
दृढं शिलादिभिः कुर्याद्विस्तीर्णमथवान्यथा[6] ॥ ३० ॥

नद्यादिजलवेगेन चलिते नष्ट एव वा ।
प्रासादादौ पुनःस्थाने निर्बाधेऽन्यत्र कल्पयेत् ॥ ३१ ॥

या मूर्तियेन [7]तन्त्रेण यादृशेनाधिकारिणा ।
प्रथमे [8]कल्पने सैव द्वितीये [9]कल्पने भवेत् ॥ ३२ ॥

---

1. मानुषे तु $P_1$, $P_2$ 2. सृष्टा $M_2$ 3. वलसं T, $P_1$, $P_2$ 4. वर्धयेद्बहिः T,$P_1$,$P_2$ 5. पीठादौ चलिते T,$P_1$,$P_2$ 6. न्यसेत् $M_2$ 7. मन्त्रेण T,$P_1$,$P_2$ 8. कल्पिता T,$P_2$ 9. कल्पिता T,$P_2$



मूर्ति[1]स्तदेव तन्त्रं च स एव स्थापकः पुनः ।
अपूर्वकल्पने जीर्णे[2] समुद्धारे द्वयोरपि ॥ ३३ ॥

तुल्यं फलं [3]कल्पनानां धामादेर्नास्ति संशयः ।
तन्त्राधिकारिमूर्तीनां व्यत्यये [4]कल्पिते पुनः ॥ ३४ ॥

नृणां नरपतेश्चापि राष्ट्रस्य च भवेत् क्षयः ।
बहुबेरप्रतिष्ठायां जीर्णोद्धारे यथापुरम् ॥ ३५ ॥

कर्मार्चां स्थापयेद्वेद्यां शाययेच्चापि मण्टपे ।
[5]नाधिवासो जले कार्यो [6]न नेत्रोन्मीलनं तथा ॥ ३६ ॥

न तत्त्वसंहारोत्पादौ सर्वं [7]कर्मान्यथाचरेत् ।
मूलबिम्बं समासाद्य प्राग्वत्सर्वं समाचरेत् ॥ ३७ ॥

बालकौतुकमभ्यर्च्य यात्रामन्यत्र[8] तद्गताम् ।
शक्तिं कुम्भे समावाह्य कुम्भं धान्यस्थितं पुनः ॥ ३८ ॥

अभ्यर्च्य समये प्राप्ते मूलबेरे गुरुः स्वयम् ।
शक्तिं निवेशयेच्छास्त्रदृष्टेन विधिना हरौ ॥ ३९ ॥

कुम्भतोयावशेषेण परिवारप्रकल्पनम् ।
उत्सवं कारयेदन्ते सर्वशान्तिकरो हि सः ॥ ४० ॥

ब्रह्मा :—

सम्प्रोक्षणनिमित्तं किं प्रकारो वास्य कीदृशः ।
कथ्यतां भगवन् मह्यं जिज्ञासा मेऽनुवर्तते ॥ ४१ ॥

---

1. तेनैव मन्त्रेण तादृशेनाधिकारिणा A ; मूर्तिस्सैव च $P_1$,$P_2$ 2. जीर्णसमुद्धारे $P_1$,$P_2$ 3. कल्पनायां $P_1$,$P_2$ 4. कल्पने T,$P_1$,$P_2$ 5. नाधिवासं जले कुर्यात् T,$P_1$,$P_2$ 6. नयनोन्मीलनं तथा $P_1$,$P_2$ 7. पूर्ववदाचरेत् T,$P_2$; सर्वकर्म सदाचरेत् $P_1$ 8. यात्रामूर्तिंच $M_2$

श्रीभगवान् :—

प्रासादे चाङ्गभङ्गादिसन्धाने नूतने कृते ।
प्रतिमायां च पीठे च प्रभायां चायुधेऽपि च ॥ ४२ ॥

आराधने च विच्छिन्ने मासादौ कमलासन ।
स्पर्शने प्रतिलोमाद्यैर्निन्द्याशौचविगर्हितैः ॥ ४३ ॥

[1]उदक्यादिभिरन्यैश्च शिल्पिभिः स्पर्शदूषिते ।
विण्मूत्ररुधिरापेयस्पर्शदोषे च मन्दिरे ॥ ४४ ॥

जनने मरणे चैव श्वसृगालशवादिभिः[2] ।
स्पृष्टे च बिम्बे तन्त्राणां सङ्करे समुपस्थिते ॥ ४५ ॥

एवमादिषु चान्येषु सम्प्रोक्षणविधिर्भवेत् ।
धामादिकमसम्प्रोक्ष्य प्रतिमादिकमप्यथ ॥ ४६ ॥

अर्चने राष्ट्रमधिपः प्रजाश्च सदनं हरेः ।
शून्यं स्यादिरिणप्रायमुपद्रवसमाकुलम् ॥ ४७ ॥

दुर्भिक्षव्याधिकलहमृतिप्रायाः स्युरीतयः ।
तस्मात्सम्प्रोक्षणं कार्यं धामादीनां यथाविधि ॥ ४८ ॥

विष्णोर्नुकमिति स्वच्छैर्जलैः प्रोक्षणमिष्यते ।
अब्लिङ्गैरितरैर्मन्त्रैराचार्यो ब्राह्मणैः सह ॥ ४९ ॥

ध्रुवबेरादिबिम्बानां शोधने क्षालने कृते ।
इदं विष्णुरितिप्रायैर्मन्त्रैः परमपावनैः ॥ ५० ॥

---

1. प्रतिलोमानुलोमैश्च सूतैश्च रथकारकैः ।
वैखानसैश्च संस्पृष्टे भार्गवागमपूजकैः ॥
शैवादिभिश्च पाषण्डैर्ब्रह्महत्यादिदूषितैः ।
क्षयापस्मारिकुष्ठाद्यैः कृच्छ्रभिर्मूलरोगिभिः ॥ एतौ द्वौ श्लोकौ T, $P_1$, $P_2$ ग्रन्थेष्वधिकतया दृश्येते । 2. खरादिभिः T, $P_1$, $P_2$



स्नपनं च यथाशक्ति कुर्यात् [1]पुण्याहपूर्वकम् ।
द्वारतोरण[2]कुम्भादीन् पूजयेत्समनन्तरम् ॥ ५१ ॥

धान्यपीठे मण्टपस्य मध्यभागे सुशोभिते ।
स्थापयित्वा महाकुम्भं सूत्रवस्त्रादिवेष्टितम् ॥ ५२ ॥

पूर्वोक्तवर्त्मना तस्मिन् परमात्मानमर्चयेत् ।
कुण्डे वा स्थण्डिले वापि जुहुयात्समिधादिभिः ॥ ५३ ॥

प्रत्येकमष्टोत्तरशतं शान्तिहोमो यथापुरम् ।
बध्नीयात्कौतुकं बिम्बे प्रोक्षयेदपरेऽहनि ॥ ५४ ॥

प्रभातसमये प्राप्ते शोभने देशिकोत्तमः ।
स्थापितं कुम्भमादाय प्रादक्षिण्येन मन्दिरम् ॥ ५५ ॥

नीत्वा देवस्य पुरतो धान्यपीठे निवेश्य च ।
कूर्चेन तोयमादाय कुम्भस्थं मूलविद्यया ॥ ५६ ॥

पञ्चोपनिषदैर्मन्त्रैरब्लिङ्गैरितरैस्तथा ।
शान्तिमन्त्राणि समये पठेयुर्विप्रसत्तमाः ॥ ५७ ॥

ब्राह्मणान् भोजयेच्चापि यथाशक्ति च दक्षिणा ।
आचार्यदक्षिणा चापि दशनिष्कावरा तथा ॥ ५८ ॥
सद्यो वा सकलं कुर्यान्निशि वा दिवसेऽपि वा ।[3]

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे जीर्णोद्धार-
संप्रोक्षणविधिर्नाम सप्तदशोऽध्यायः ॥

---

1. स्नपनपूर्वकम् T, $P_1$, $P_2$ 2. ०कुम्भादियजनं तदनन्तरम् T, $P_1$, $P_2$
3. न तिथिर्न च नक्षत्रं कालवेला न विद्यते । सद्य एव तु कर्तव्यमिति शास्त्रस्य निश्चयः । एष श्लोकः T, $P_1$, A ग्रन्थेष्वधिकतया दृश्यते ।

## अष्टादशोऽध्यायः ॥

### नित्याराधनप्रायश्चित्तविधिः ॥

**ब्रह्मा :—**

नैमित्तिकानां नित्यानां कर्मणां भगवन् हरे ।
आराधनानां वैकल्यं लोपो वा प्रायसंज्ञितम् ॥ १ ॥

तस्य चित्तं समाधानमिति निर्वचनक्रिया ।
तस्य किं वा समाधानं कः प्रकारोऽस्य कथ्यताम् ॥ २ ॥

**श्रीभगवान् :—**

अस्नातोऽनुपवीतो वा[1] [2]न कृत्वा तिलकं तथा ।
अर्चयेद्देवदेवेशं प्रायश्चित्तीयते नरः ॥ ३ ॥

समाधानं मूलमन्त्रशतं [3]च स्यात्तदर्चनम् ।
अकृत्वा पादयोश्शौचमनाचम्यापि वार्चने ॥ ४ ॥

पञ्चोपनिषदां जापः प्रायश्चित्तं तदर्चनम् ।
नग्नो वा मुक्तकेशो वा स्विन्नाङ्गो वा हसन् श्वसन् । ५ ।

कुप्यन् वा प्रलपन् वापि पूजायां तु शतं जपेत् ।
शतकृत्वोऽस्त्रमन्त्रस्य समाराधनसन्ततः । ६ ॥

केशास्थिलोमलोष्टादिस्पर्शने नैव निष्क्रिया ।
वसानो नीलमलिनक्लिष्टवासोऽपवित्रकः । ७ ॥

अर्चयेन्मूलमन्त्रस्य जपस्तस्य प्रतिक्रिया ।
गत्वा स्त्रियमनाप्लुत्य [4]पूजयेत् स्नापयेद्धरिम् ॥ ८ ॥

---

1. अनुपनीतो वा A 2. अधृत्वा T, $P_1$, $P_2$ 3. जप्त्वा तदर्चनम् T, $P_1$, $P_2$
4. पूजने T, $P_1$, $P_2$



पञ्चगव्यैस्ततः पञ्चमहोपनिषदां जपः ।
विण्मूत्ररेतोरुधिरबालादिस्पर्शने सति ॥ ९ ॥

अस्नानपूजने देवं स्नापयेत्कुशवारिभिः ।
मूलमन्त्रजपश्चोक्तो निष्क्रिया तस्य कर्मणः ॥ १० ॥

वस्त्रं रजस्वलायाश्च स्पृष्ट्वा देवार्चने कृते ।
पञ्चगव्यैः स्नापयित्वा पञ्चोपनिषदां जपः ॥ ११ ॥

श्वानं रजस्वलां यूपं चण्डालं वेदविक्रयम् ।
चितिं च [1]नीचचैत्यस्थं वृक्षं स्पृष्ट्वा तदर्चने ॥ १२ ॥

पञ्चवारुणमन्त्रैश्च स्नापयेत्कुशवारिणा ।
काकपाषण्डपतितप्रतिलोमखरादिकान् ॥ १३ ॥

अस्पृश्यमन्यदप्येवं स्पृष्ट्वा प्राग्वत्प्रतिक्रिया ।
[2]केशादिदोषदुष्टेन पुष्पेणाराधने कृते ॥ १४ ॥

क्षीरेण स्नपनं कृत्वा शान्तिहोमः प्रतिक्रिया ।
पुरीषादिकमाक्रम्य यद्यनाप्लुत्य पूजयेत् ॥ १५ ॥

स्नपनं कुशपाथोभिर्जपः प्राग्वत्प्रतिक्रिया ।
स्त्रियो वानुपनीतो वा स्पृशेद्विम्बं प्रतिक्रिया ॥ १६ ॥

उक्षणं कुशतोयेन मन्त्रेण परमेष्ठिना ।
आराधने सम्प्रवृत्ते निष्ठीवादिकमन्तरा ॥ १७ ॥

[3]आदावन्ते चाचमनं स्पृशेद्वा दक्षिणं श्रवः ।
प्रलयादिक्रमाद्देहमसंशोध्य समाधिना ॥ १८ ॥

---

1. चैत्यभूमिस्थं T, $P_1$, $P_2$ 2. मूत्रादि॰ A, $M_2$ 3. यद्यापते-दाचमनं T, $P_1$, $P_2$

मन्त्रन्यासमकृत्वा च पूजने पूर्ववज्जपः ।
अर्चनं च पुनस्सर्वं कृत्वा देवस्य निष्कृतिः ॥ १९ ।

चण्डालाद्यैरसंस्पृश्यैर्हविः स्पृष्टं निवेदयेत् ।
यदि प्रमादात्, स्नपनं गोघृतेन प्रतिक्रिया ॥ २० ॥

शान्तिहोमश्च कर्तव्यस्तदन्ते कमलासन ।
दृष्टं च स्पृष्टवत् तद्वत्सृगालाद्यैश्च दूषितम् ॥ २१ ॥

आचाररहितैरन्यैस्तथा वा[1]शुचिवस्तुभिः ।
अयाज्ञीयैः कोद्रवाद्यैर्हविर्भिश्च निवेदने ॥ २२ ॥

पूर्ववच्च समाधानं मूलमन्त्रायुतं जपेत् ।
शाकमूलफलैर्लेह्यपेयाद्यैश्च विवर्जितैः ॥ २३ ॥

स्नपनं शान्तिहोमश्च मूलविद्याजपस्तथा ।
अत्युष्णस्यातिशीतस्य हविषश्च निवेदने । २४ ॥

निवृत्तिमन्त्रजापश्च विश्वमन्त्रजपः क्रमात् ।
[2]शवादिदूषिते गेहे पक्वस्य हविषस्तथा ॥ २५ ॥

निवेदनं चेत् स्नपनं शान्तिहोमस्तथैव च ।
क्रिमिकेशादिदुष्टस्य हविषश्च निवेदने ॥ २६ ॥

पौरुषेणैव सूक्तेन कुर्याच्छुद्धाभिषेचनम् ।
मुखवात[3]हताघ्रातं रजस्तुषकणान्वितम् ॥ २७ ॥

मृत्पाषाणशकृत्प्राय[4]दूषितस्य निवेदने ।
[5]मूलमन्त्रजपं कुर्यात्तद्वत्पर्युषितं यदि ॥ २८ ॥

1. तथैव° $P_1$, $P_2$ 2. सत्त्वादि° $M_2$ 3. °वायु° T, $P_1$, $P_2$
4. °हविर्यदि निवेदयेत् $M_2$; °दूषितश्च निवेदयेत् A 5. मूलमन्त्रायुतजपः T,$P_1$,$P_2$



निवेदितस्य हविषो भूयो यदि निवेदनम् ।
[1]स्नानपूर्वार्चनं मूलमन्त्रस्य च जपस्तथा[2] ॥ २९ ॥

निवेदयेच्च निर्माल्यमुच्छिष्टं वा प्रतिक्रिया ।
कुम्भैर्द्वादशभिः स्नानं शान्तिहोमो जपस्तथा ॥ ३० ॥

गुर्वादीन्मनसा वाचा कर्मणानुमतः[3] करे ।
स्थितानि हविरादीनि पुष्पादीनि चतुर्मुख ॥ ३१ ॥

पूजावस्तून्ययोग्यानि समाराधनकर्मणि ।
तैरर्चने पञ्चकुम्भैः स्नपनं पूर्ववज्जपः ॥ ३२ ॥

वासुदेवं प्रणमतः पूजावस्तूनि हस्तयोः ।
स्थितानि नार्चनार्हाणि सेनान्ये तानि निक्षिपेत् ॥ ३३ ॥

तैरर्चनं चेत्स्नपनं कलशैः सप्तभिर्भवेत् ।
शान्तिहोमश्च कर्तव्यो मूलमन्त्रजपस्तथा ॥ ३४ ॥

मण्डूकमूषिकासर्पबिडालाद्यैश्च जन्तुभिः ।
क्रिमिकीटपतङ्गाद्यैः पक्षिभिर्वायसादिभिः ॥ ३५ ॥

[4]स्पृष्टं दष्टं हविर्नैव [5]देयं यदि निवेदने ।
स्नपनं कलशैरेव त्रिभिर्होमान्त[6]मर्चनम् ॥ ३६ ॥

मक्षिकाद्यैश्च संस्पृष्टं प्रोक्ष्य देवाय कल्पयेत् ।
[7]भुक्तशेषं प्रमादाच्च लोभाद्वा देवमर्चयेत् ॥ ३७ ॥

मूलमन्त्रायुतजपः शान्तये तस्य कल्पते ।
[8]भुक्तशेषप्रदानेन तद्वदेव च निष्कृतिः ॥ ३८ ॥

1. स्नपनं पूर्ववन्मूल॰ $M_2$ 2. इष्यते T,$P_1$,$P_2$ 3. नमतः °T,$P_1$,$P_2$
4. दृष्टं $M_1$ 5. देवार्हं तन्निवेदने T,$P_1$,$P_2$ 6. °अर्चयेत् T,$P_1$,$P_2$
7. भुक्तशेषैः प्रसादाद्वा T,$P_1$,$P_2$ 8. दत्त° T,$P_2$

स्नाने पर्युषिताम्भोभिः पुनरेवमथाम्बुभिः ।
अब्लिङ्गैः पावनैर्मन्त्रैः [1]प्रायश्चित्तिर्निरुच्यते ॥ ३९ ॥

पुण्यतीर्थे सरित्तोये न पर्युषितदूषणम् ।
समुद्रतोयं दशमात्परं पर्युषितं दिनात् ॥ ४० ॥

तिर्यग्योनिभिरस्पृश्यैर्मानुषैरतिलङ्घितम् ।
स्पृष्टं च वारि न स्नानयोग्यं स्नाने च वारुणैः ॥ ४१ ॥

स्नानं पुनर्विधातव्यं शान्त्यर्थं तस्य कर्मणः ।
अजाश्वमुखसंस्पर्शो न दोषाय कदाचन ॥ ४२ ॥

गोमुखेनैव संस्पृष्टं वर्जनीयं समर्चने ।
प्रायश्चित्तं पुनः स्नानं मूलमन्त्रजपस्तथा ॥ ४३ ॥

विण्मूत्ररुधिरापेययुक्तैः तोयादिवस्तुभिः ।
नार्चयेदर्चने स्नानं कलशैरधमाधमैः ॥ ४४ ॥

शिवनिर्माल्यदुष्टेन तोयप्रभृतिवस्तुना ।
पूजने कलशैः स्नानमधमैर्मध्यमैर्भवेत् ॥ ४५ ॥

शवादिदूषिते कूपे जलमुद्धृत्य पूर्ववत् ।
सर्वं तदन्ते पुण्याहं वाचयेज्जलशुद्धये ॥ ४६ ॥

पश्वादिमरणे कूपे चण्डालस्नानपानयोः ।
तथा रजस्वलाद्यैश्च प्रतिलोमैर्विगर्हितैः ॥ ४७ ॥

कूपस्थं तज्जलं सर्वमुद्धरेत् कमलासन ।
चुचुन्दर्यादिमरणे जलस्यार्धं समुद्धरेत् ॥ ४८ ॥

1. प्रायश्चित्तं तदुच्यते T, $P_1$, $P_2$



दिवा समुद्धरेत्तोयं रात्रौ चेदग्निसन्निधौ ।
उद्धरेदन्यथा तौर्यैरुपयोगे च[1] वारुणैः ॥ ४९ ॥

पञ्चभिर्जुहुयादग्नौ ब्राह्मणानपि भोजयेत् ।
पूजाकाले तु दीपस्य निर्वाणे द्विगुणार्चनम् ॥ ५० ॥

दीपमुद्दीप्य जप्तव्यो विश्वमन्त्रः शतावरः ।
अकस्मादेव निर्वाणे शान्तिर्नैव त्वहैतुके ॥ ५१ ॥

अनिर्वाणस्य निर्वाणे दीपस्य स्नपनं हरेः ।
क्षीरेण मूलमन्त्रस्य जपश्चाष्टोत्तरं शतम् ॥ ५२ ॥

सर्पिषा तिलतैलेन दीपारोपणमाचरेत् ।
नान्यैरेरण्डतैलाद्यैर्नाजाविमहिषादिजैः ॥ ५३ ॥

स्नेहैरारोपणं [2]कुर्यान्न च प्राण्यङ्गसम्भवैः ।
प्रमादात्फलजैस्तैलैः स्नपने दीपने हविः ॥ ५४ ॥

निवेदने च होमे च स्नेहैरन्यैश्च निन्दितैः ।
अनुष्ठाने कृते कुम्भैः स्नापयेन्मध्यमोत्तमैः ॥ ५५ ॥

शान्तिहोमस्तथा दानं द्विजेभ्यो भोजनं तथा ।
हविःप्रभृतिदध्याद्यैः स्नानादौ विहिते सति ॥ ५६ ॥

प्रायश्चित्तं यथापूर्वमाचरेत्कमलासन ।
पूर्वोपचारवस्तौ तु न्यूनायां कलशवस्तुभिः ॥ ५७ ॥

वस्तुभिर्द्विगुणैर्भूयस्समाराध्य मधुद्विषम् ।
सर्पिषाष्टोत्तरशतं जुहुयान्मूलविद्यया ॥ ५८ ॥

1. अथ T, $P_1$, $P_2$ 2. कार्यं T, $P_1$, $P_2$

मन्त्रहानौ[1] क्रियाहानौ मुद्राहानौ तथैव च ।
जपहानौ[2] ध्यानहानौ हीनेष्वन्येषु केषुचित् ॥ ५९ ॥

मूलमन्त्रजपस्तस्य यथाशक्ति प्रतिक्रिया ।
गेयवादित्रनृत्येषु पूर्वक्लृप्तेषु पूजने ॥ ६० ॥

हीने कस्मिंश्चिदाराध्यो हरिः स्नपनवर्त्मना ।
वाद्यहानौ तु पयसा नृत्तहानौ घृतेन तु ॥ ६१ ॥

[3]गानहानौ तु मधुना जुहुयात्पूर्वसंख्यया ।
पूर्वक्लृप्तोपदंशादिहानौ द्विगुणवस्तुभिः ॥ ६२ ॥

निवेदयेत्स्नानपूर्वं कालाति[4]क्रमणेऽपि च ।
भोगद्रव्यैर्द्विगुणितैराराध्यः क्षम्यतामिति ॥ ६३ ॥

उच्चारयेत्तथा सन्ध्यातिक्रान्तौ द्वादशस्वपि[5] ।
कालेषु क्लृप्तसंख्येषु हानौ कालस्य कस्यचित् ॥ ६४ ॥

द्विगुणैर्वस्तुभिः पूज्यः कालेषु च यथोत्तरम् ।
कालं प्रथममारभ्य द्विगुणैस्त्रिगुणैस्तथा ॥ ६५ ॥

चतुर्गुणैः पञ्चगुणैरेवमाद्यैस्तु वस्तुभिः ।
पूजयेज्जपहोमाद्यै[6]स्तद्वदेव यथायथम् ॥ ६६ ॥

अतिक्रान्ते दिनविधौ विधिरेष प्रकीर्तितः ।
द्विदिनादौ तु पक्षान्ते पूजाहीने घटैस्तथा ॥ ६७ ॥

अधमोत्तममार्गेण स्नापयेत्तस्य शान्तये ।
मासे च पूजाविकले मध्यमोत्तमवर्त्मना ॥ ६८ ॥

1. °हीने क्रियाहीने मुद्राहीने A, $M_2$  2. जपहीने ध्यानहीने A, $M_2$
3. गेय° T,$P_1$,$P_2$  4. °क्रमणेन $M_2$  5. द्वादशेष्वपि T,$P_1$$P_2$  6. °होमान्तं A



तिलाज्यचरुभिश्चैव जुहुयान्मूलविद्यया ।
संवत्सरत्रयादर्वाङ् मासादूर्ध्वमनर्चिते ॥ ६९ ॥

सम्प्रोक्षणं भवेदूर्ध्वं प्रतिष्ठाविधिरुच्यते ।
मृगुप्तामपि चैकाहमुद्धृत्य प्रतिमां पुनः ॥ ७० ॥

सम्प्रोक्षयेद् गृहार्चायामाराधनविलोपने ।
स्नपनं पञ्चगव्येन सूक्तेन पुरुषात्मना ॥ ७१ ॥

शान्तये जुहुयादग्नौ ब्राह्मणानपि तर्पयेत् ।
मासादूर्ध्वं तु षण्मासं पूजाहीने चतुर्मुख ॥ ७२ ॥

कुम्भैष्षोडशभिः स्नानं सूक्तेन पुरुषात्मना ।
भोजयेद् ब्राह्मणानग्नौ जुहुयाच्छान्तये पुनः ॥ ७३ ॥

ऊर्ध्वं सम्प्रोक्षणं कार्यं यावत्संवत्सरावधि ।
प्रतिष्ठाविधिरूर्ध्वं तु वत्सरादुक्तवर्त्मना ॥ ७४ ॥

त्रिदशादिप्रतिष्ठायां पूजालोपो[1] न दूषणम् ।
प्रायश्चित्तं तु [2]मध्यानां प्रतिष्ठायामुदीरितम् ॥ ७५ ॥

सालग्रामशिलादीनां पूजालोपो न दूषणम् ।
तथैवाशुचिसंस्पर्शे क्षालयित्वार्चयेत्पुनः ॥ ७६ ॥

सर्वथा लोपने शान्ति[3]श्चोक्तकाले यथा भवेत् ।
अज्ञानादथवा ज्ञानाद्बहितर्पणवर्जने[4] ॥ ७७ ॥

पञ्चोपनिषदैर्मन्त्रैः सर्पिषा जुहुयात् शतम् ।
एकादिकालातिक्रान्तौ द्विगुणादि यथापुरम् ॥ ७८ ॥

1. °लोपे T, $P_1$, $P_2$  2. मर्त्यानां T, $P_1$, $P_2$  3. नोक्तकालाश्रया° T, $P_1$, $P_2$ ; नोक्तकालो यथा° A  4. °सर्जने $M_2$ ; °वर्जिते T, $P_1$, $P_2$

बहुभिः कलशैर्देवं स्नापयेद्दिवसात्परम् ।
मासावधि तदूर्ध्वं तु कलशैर्वत्सरावधि ॥ ७९ ॥

अष्टोत्तरशतैः कुर्यात्स्नपनं जुहुयात्पुनः ।
अष्टोत्तरसहस्रेण तिलाज्यचरुभिः [1]क्रमात् ॥ ८० ॥

द्वादशाक्षरमन्त्रेण शान्तिहोमस्तथा भवेत् ।
वत्सरादुपरिष्टात्तु स्नपनं मध्यमोत्तमम् ॥ ८१ ॥

कुण्डे चाग्निं स्थापयित्वा तिलव्रीहियवैरपि ।
लाजैश्च कालपुष्पैश्च समिच्चरुघृतैरपि ॥ ८२ ॥

अष्टोत्तरसहस्रेण जुहुयान्मूलविद्यया ।
शान्तिहोमस्ततो[2] दानं विप्राणां चापि भोजनम्[3] ॥ ८३ ॥

सत्यग्नावप्यहोमे तु प्रायश्चित्तमितीरितम् ।
अग्नौ शान्ते मथित्वाग्निं शान्तिहोमं समाचरेत् ॥ ८४ ॥

पञ्चोपनिषदैर्मन्त्रैर्व्याहृतिप्रमुखैरपि ।
सुपरिस्तीर्य च कुशैर्होमः प्रणवविद्यया ॥ ८५ ॥

अष्टोत्तर[4]शतेनाज्यैः मूलमन्त्रजपस्तथा ।
अयथोक्तक्रमे तद्वत्प्रायश्चित्तं विधीयते ॥ ८६ ॥

काम्ये परिधयो नेष्टा नित्यकर्मणि वा न वा ।
अलाभे समिधामाज्यैश्चरुभिर्वाहुतिर्भवेत् ॥ ८७ ॥

तयोरलाभे [5]बीजैर्वा समिद्भिर्वा यथोदितैः ।
अग्नौ केशादिभिर्दुष्टे[6]ऽस्पृश्यस्पर्शने तथा ॥ ८८ ॥

1. पृथक् $M_1$ 2. तथा $T, P_1, P_2$ 3. तर्पणम् $B_1$ 4. °शतैर्नाम्नां $M_1$ 5. लाजैर्वा $M_2$ 6. स्पृष्टे $T, P_1, P_2$; जुष्टे $M_2$



होमो व्याहृतिभिः कार्यो वारानष्टोत्तरं शतम् ।
अयुतं पुष्पवंत्यादिस्पर्शे मथनजेऽनले ॥ ८९ ॥

पाकस्थाने [1]चुल्लीस्पर्शे नरैः पूर्वोदितैस्तथा ।
श्वादिभिः स्थानमालिप्य गोमयेन महानसम् ॥ ९० ॥

आनीयाग्न्यन्तरं चुल्ल्यां पुण्याहं वाचयेद्द्विजैः ।
विण्मूत्राद्यैस्तथा स्पर्शे पूर्ववच्छुद्धिरिष्यते ॥ ९१ ॥

[2]पक्केन चुल्ल्यां दुष्टायां हविषा च निवेदने ।
स्नापयेन्नवभिः कुम्भैर्देवं वाथ घटैस्त्रिभिः ॥ ९२ ॥

परिवारार्चने [3]च्छिन्ने तत्तन्नामान्यु[4]दीरयन् ।
सर्पिषा जुहुयादग्नौ प्रत्येकं त्वष्टसंख्यया ॥ ९३ ॥

द्विगुणाद्यैर्द्विकालादौ बल्यर्थं च हविर्यदि ।
दूषितं केशकीटाद्यैरस्पृश्यैर्मनुजैस्तथा ॥ ९४ ॥

काकादिभिश्च तत्त्यक्त्वा हविषान्येन कर्म तत् ।
यदि दुष्टेन हविषा बलिं दद्यात्प्रमादतः ॥ ९५ ॥

शान्तिहोमस्तदा कार्यश्शास्त्रदृष्टेन वर्त्मना ।
तण्डुले चोदने पुष्पे बल्यर्थे पात्रसम्भृते ॥ ९६ ॥

[5]देवे चावाहिते तस्मिन् पूर्ववद्दूषणं यदि ।
पतिते वा बलिद्रव्ये [6]मूलबेरेऽथवात्मनि ॥ ९७ ॥

उद्वास्य देवमानीय द्रव्यान्तरमदूषितम् ।
तस्मिन्नावाह्य देवेशं यथापूर्वं पुनर्नयेत् ॥ ९८ ॥

1. चुल्लि° $T, P_1, P_2$ 2. पक्वस्य $M_2$ 3. भिन्ने $M_1$ 4. °उदीरयेत् $T$ 5. देवतावाह्य ते $M_2$ 6. बलिबेरेऽथ $A, M_2$

तद्दोषशान्तये पश्चाद्दध्ना क्षीरेण वा हरिम् ।
स्नापयेज्जुहुयाच्छान्तिं मूलमन्त्रजपस्तथा ॥ ९९ ॥

बलि[1]बिम्बे निपतिते [2]यानादेरुत्सवे बहिः ।
स्थापयित्वा यथापूर्वं [3]बलिशेषं नयेत्पुनः ॥ १०० ॥

शान्तये नवभिः कुम्भैः स्नापयेत् पतिते भुवि ।
अधमाधममार्गेण शान्तिहोमो जपस्तथा ॥ १०१ ॥

नृत्तगेयरता नार्यो गणिकाश्चाथवेतराः ।
देवदास्यो दूषयेयू रजोभिः पृथिवीतलम् ॥ १०२ ॥

रजस्वलारजोदुष्टं भूतलं जानुमात्रकम् ।
खात्वा च मृद्भिरन्याभिः पूरयित्वा महीतलम् ॥ १०३ ॥

आलिप्य गोमयाम्भोभिः पुण्याहं वाचयेत्ततः ।
प्रोक्षणं पञ्चभिर्गव्यैस्सन्निकृष्टं च कौतुकम् ॥ १०४ ॥

अधमोत्तममार्गेण कलशैः स्नापयेद्धरिम्[4] ।
तिलाज्यचरुभिर्होमः प्रत्येकं मूलविद्यया ॥ १०५ ॥

सहस्रकृत्वस्तदनु शान्तिहोमो जपस्तथा ।
कवाटादिकमप्यन्यत् स्पृष्टं प्रक्षाल्यमम्भसा ॥ १०६ ॥

तासां च मार्गा संशोध्याः गोमयाम्भोभिरुक्षणम्[5] ।
चोरभूतैर्ब्राह्मणाद्यैः स्पृष्टे बेरेऽप्यचोदितैः ॥ १०७ ॥

चोरस्पर्शनिमित्तं तु स्नपनं कलशैर्हरेः ।
वर्णानामानुपूर्व्येण त्वधमाधमपद्धतिम् ॥ १०८ ॥

1. ०बेरे T, $P_1$, $P_2$ 2. यानादावुत्सवे T, $P_1$, $P_2$ 3. बिम्बं शेषं T
4. ०गुरुः T, $P_1$, $P_2$ 5. °उक्षणैः T, $P_1$, $P_2$



आरभ्य गणितैः कुर्यात्संस्कारैरपि[1] तद्भवेत् ।
बीजप्रयुक्तकलशैः स्नपनं शान्तये भवेत् ॥ १०९ ॥

शान्तिहोमो ब्राह्मणानां[2] भोजनं दानमेव च ।
अज्ञातजातिसंस्पर्शे स्नापयेदुत्तमोत्तमैः ॥ ११० ॥

[3]त्रिवस्तुकं मृन्मयं च लेपबिम्बं च भित्तिजम् ।
चित्रं नीचैर्यदि स्पृष्टं चण्डालाद्यैस्तथापरैः[4] ॥ १११ ॥

नवीकरणमास्थेयं सम्प्रोक्षणविधिस्तथा ।
प्रतिष्ठा वा यथावित्तं दोषभूयस्तयाथवा[5] ॥ ११२ ॥

पटस्पर्शे क्षालयित्वा यथापूर्वं पुनः सृजेत् ।
दीक्षितैरन्यशास्त्रेषु स्पृष्टे स्नपनमाचरेत् ॥ ११३ ॥

दीक्षितैरितरैर्वापि[6] शूद्रैस्तद्वत्समाचरेत् ।
महा[7]पातकिसंस्पर्शे स्नपनं चोत्तमोत्तमम् ॥ ११४ ॥

उपपातकिसंस्पृष्टे स्नपनं चाधमोत्तमम् ।
परस्त्रीगमनासक्तैस्तथानियत[8]वृत्तिभिः ॥ ११५ ॥

स्पर्शे च नवभिः कुम्भैः स्नपनं कौतुके भवेत् ।
अस्पृश्यैरितरैर्वापि कुण्डादिस्पर्शने सति ॥ ११६ ॥

स्नपनं पूर्ववत्कार्यं स्त्रीभिर्दुष्टाभिरेव च ।
अनुलोमाः स्त्रियश्शूद्रा व्रजेयुर्गर्भमन्दिरम् ॥ ११७ ॥

1. सङ्करैरपि T, $P_1$, $P_2$ 2. द्विजेन्द्राणां $P_1$ 3. त्रिवस्तुकेत्यस्य पूर्वतः शान्तिहोमो द्विजेन्द्राणां तोषणं दानमेव च । इति श्लोकार्धः $M_1$ कोशे प्रमादात्पुनर्लिखित इति भाति । 4. विगर्हितैः T, $P_1$, $P_2$ 5. ०भवेत् A, $M_2$ 6. चापि T, $P_1$, $P_2$
7. °पतित° A 8. तथा अनियत इति च्छेदः ।

भूतलं पञ्चगव्येन सिञ्चेद्वा गोमयाम्बुभिः ।
चण्डालैः पुल्कसैर्वापि पतितैर्मद्यपैस्तथा ॥ ११८ ॥

श्वपचैर्मन्दिराभ्यन्तः प्रवेशे मृन्मयांस्त्यजेत् ।
[1]तत्र स्थानं क्षालयित्वान्तः कवाटादिमहीतलम् ॥ ११९ ॥

आलिप्य गोमयाम्भोभिः [2]पुण्याहं वाचयेद् द्विजैः ।
प्रतिमाश्चापि तत्रस्थाः स्नापयेत्कलशैर्गुरुः ॥ १२० ॥

शान्तिहोमो जपश्चैव द्विजानां दानभोजने ।
आशौचवत्प्रवेशे च पूर्ववद्विधिरिष्यते ॥ १२१ ॥

चण्डालः श्वपचो वापि तादृशाः पुल्कसादयः ।
अज्ञानाद्धर्मगेहे तु कर्मस्वधिकृता यदि ॥ १२२ ॥

वसेयुश्चैव तैस्सार्धं भोज्यं वा वस्तु तादृशम् ।
स्पृष्ट[3]माराधनं चेत् स्पृष्टं वा कौतुकं यदि ॥ १२३ ॥

क्रियासमभिहारेण प्रायश्चित्तमिहोच्यते ।
शोधयेन्मन्दिरं पूर्वं गोमयालेपनादिभिः ॥ १२४ ॥

पुण्याहं वाचयित्वाथ ब्राह्मणांस्तत्र भोजयेत् ।
स्वाध्यायं परिकुर्वीरन् ब्राह्मणा वेदपारगाः ॥ १२५ ॥

इतिहासपुराणानि पठेयुर्वा[4] दिवानिशम् ।
कपिलाश्च प्रदेशेषु तत्र तत्राधिवासयेत् ॥ १२६ ॥

एवं मासादिकालेषु दोषगौरवलाघवम् ।
अवेक्ष्य शोधिते धाम्नि ब्राह्मणांस्तोषयेद्धनैः ॥ १२७ ॥

---

1. तत्रस्थान् T, $P_1$, $P_2$ 2. पुण्याहमपि वाचयेत् T, $P_1$, $P_2$
3. °आराधनाङ्गं चेत् T, $P_1$, $P_2$ 4. च $P_1$, $P_2$



प्रतिमानां यथायोग[1]मुत्थानं वा नवीकृतम् ।
कुर्यात्ततो यथापूर्वं निमित्ते वा नवीकृते ॥ १२८ ॥

प्रतिष्ठाप्य यथाशास्त्रं स्थापयेत्कलशैरपि[2] ।
सहस्रेण पुरावृत्तदोषाणामपनुत्तये ॥ १२९ ॥

अन्यो महोत्सवः कार्यो न चेद्राष्ट्रनृपक्षयः ।
बिम्बं न चालयेच्छैलं न नवीकरणं तथा ॥ १३० ॥

तथैव दिव्यमार्षं च स्वयंव्यक्तं च कौतुकम् ।
तथान्यैर्मागधाद्यैश्च प्रतिलोमैश्च गर्हितैः ॥ १३१ ॥

सहस्रकलशैर्देवं स्नापयेत्तस्य शान्तये ।
श्वापदैश्च सृगालाद्यैश्चण्डालाद्यैश्च गर्हितैः ॥ १३२ ॥

प्रथमादि प्रविष्टं चेद्धामावरणभूतलम् ।
प्रोक्षयेत्पञ्चगव्येन पुण्याहमपि वाचयेत् ॥ १३३ ॥

धामस्पर्शे तथान्यस्य बलिपीठादिकस्य च ।
स्पर्शे कृत्वा यथापूर्वं शान्तिहोमं समाचरेत् ॥ १३४ ॥

आगन्तुकैः कुक्कुटाद्यैः स्पृष्टं चेद्धाम सर्वतः ।
प्रोक्षयेन्मन्त्रपूतेन वारिणा शान्तिमाचरेत् ॥ १३५ ॥

देवान् संस्नापये[3]देवं प्रथमा[4]वरणादिषु ।
सर्पिश्चरुतिलैर्होमो मूलेनाष्टोत्तरं शतम् ॥ १३६ ॥

खद्योतस्पर्शने देवं स्नापयेन्नवभिर्घटैः ।
पूजाकाले कवाटस्य बन्धनं चेदसङ्कुले ॥ १३७ ॥

---

1. °उद्धारे वा नवीकृते T, $P_1$, $P_2$ 2. अधि $P_2$ 3. °चैव T, $P_1$, $P_2$
4. °आवरणादिगान् T, $P_1$, $P_2$

अष्टोत्तरशतं मूलमन्त्रस्य जप इष्यते ।
सङ्कुले [1]बन्धनं नैव दोषाय भवति कचित् ॥ १३८ ॥

प्रभापीठास्त्रसंस्पर्शे बिम्बस्पर्शवदिष्यते ।
आचार्याः पूजकाश्चान्ये तथैव परिचारकाः ॥ १३९ ॥

आसनेष्वासिकां [2]भक्त्या [3]शयनं च यथातथम् ।
कुर्युः कर्मण्यधिकृता दोषो नैव [4]तदा भवेत् ॥ १४० ॥

अन्ये चेत्कुर्युरवनिं प्रोक्षयेद्गोमयाम्बुभिः ।
प्राकारे मण्डपे धाम्नि गोपुरे पाकवेश्मनि ॥ १४१ ॥

दग्धेऽग्निना समाधाय पूर्ववन्मण्डपादिकम् ।
प्रतिष्ठाप्य [5]यथाप्रोक्तं शान्तिकर्म समाचरेत् ॥ १४२ ॥

अधमोत्तममार्गेण स्नपनं शान्तिदं भवेत् ।
शान्तिहोमस्तु कर्तव्यो द्विजानां दानभोजने ॥ १४३ ॥

प्रतिमादहने चापि समाधाय यथापुरम् ।
स्नानं सहस्रकलशैः प्रतिष्ठाप्य यथाविधि ॥ १४४ ॥

वस्त्रादिदहने तस्याः प्रभादिदहने तथा ।
नवभिः कलशैः स्नानं होमादि तदनन्तरम् ॥ १४५ ॥

सुदर्शनेऽग्निना दग्धे स्नानं नवघटैर्भवेत् ।
ध्वजे विताने छत्रे च दग्धे चास्तरणादिके ॥ १४६ ॥

पुनरुत्पाद्य तत्सर्वं शान्तिहोमादिकं भवेत् ।
प्रासादाद्यवकाशानां वृद्धिश्चेत्सर्वतो भवेत् ॥ १४७ ॥

---

1. बन्धने A  2. भुक्तिं T, $P_1$, $P_2$  3. शयानं च $M_2$  4. तथा T
5. यथापूर्वं ततश्शान्तिं समाचरेत् T, $P_1$, $P_2$



यद्वा प्राच्यामुदीच्यां वा वृद्धिर्नान्यत्र शोभना ।
दक्षिणापरवृद्धिश्चेत् स्नपनं चोत्तमोत्तमम् ॥ १४८ ॥

शान्तिहोमो द्विजेन्द्राणां तर्पणं भोजनादिभिः ।
शोभना सर्वतो वृद्धिरुपपीठस्य चेष्यते ॥ १४९ ॥

प्रथमावरणं यावद्दोषस्स्याद्देवनिर्मिते ।
वर्धितं यदि पूर्वोक्तं स्नपनं शान्तिदं भवेत् ॥ १५० ॥

न ह्रासयेत्पुराक्लृप्तं धामादि न च चालयेत् ।
पौराणिकं शिरःपीठं धाम चिह्नञ्च वैष्णवम् ॥ १५१ ॥

नोद्धृत्यं पूरयित्वा वा न वृद्धिर्गोपुरादिषु ।
अल्पीयः प्राग्विमानादि दिव्यवर्गं घनैः पुनः ॥ १५२ ॥
वर्धयेच्छ्रद्धया मुख्यैर्द्रव्यैरर्चान्वयेद्गुरुः ।

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे नित्याराधनप्रायश्चित्तविधिर्नामाष्टादशोऽध्यायः ॥

## एकोनविंशोऽध्यायः ॥

### उत्सवप्रायश्चित्तनारायणबलिः ॥

श्रीभगवान् :—

नित्यं नैमित्तिकं [1]काम्यं निपतेद्युगपद्यदि ।
[2]कृत्वा नैमित्तिकं नित्यमाचार्यस्तदनन्तरम् ॥ १ ॥

गृहार्चास्नपने प्राप्ते विस्तारे सति वेश्मनि ।
तत्रैव स्नपनं कार्यं सङ्कटे तु[3] बहिर्भवेत् ॥ २ ॥

---

1. कर्म $M_1$  2. नित्यं कृत्वा तथा कुर्यान्नैमित्तिकमनन्तरम् A  3. सङ्कटेषु $M_1$

पर्वतादौ शुचौ देशे प्रपानिर्माणपूर्वकम् ।
स्नपनं देवदेवस्य कार्यं भागवतेन तत् ॥ ३ ॥

आलये [1]स्थापितं बिम्बं न कदाचिच्चतुर्मुख ।
निर्गमय्य बहिः स्नाप्यमन्तरेण तु सर्वदा ॥ ४ ॥

तीर्थावभृथवेलायां नद्यादीनां तटे भवेत् ।
अन्यथा चेच्छान्तिहोमं कुर्यात्सर्वसमृद्धिदम् ॥ ५ ॥

अङ्कुरार्पणहीने च स्नपने [2]कौतुकान्विते ।
अधिवासविहीने च कलशैः स्नपने सति ॥ ६ ॥

शान्तिहोमो विधातव्यः सर्वदोषापनुत्तये ।
सङ्कल्पितस्नानहानौ [3]स्नपनं द्विगुणं भवेत् ॥ ७ ॥

अकृते राजराष्ट्रस्य भवेद्विभवसंक्षयः ।
यजमानस्य धाम्नश्च प्रजानां च धनक्षयः ॥ ८ ॥

अकाले तु कृते स्नाने विषुवादौ यथोदिते ।
शान्तिः [4]कार्यायने चैव दक्षिणे प्रागुपक्रमे[5] ॥ ९ ॥

उत्तरे चैव पाश्चात्ये [6]उत्तमं नैव दूषणम् ।
चैत्रे च विषुवे तद्वत् क्रमादाश्वयुजेऽपि वा[7] ॥ १० ॥

स्थापितानां च कुम्भानां भेदने [8]पतने तथा ।
कालादिदोषदुष्टे च क्रिमिकेशादिदूषिते ॥ ११ ॥

[9]लङ्घितेऽशुचिसंस्पृष्टे वायसाद्यैश्च दूषिते ।
गर्हितैः श्वापदाद्यैश्च स्पृष्टे चाशुचिभिस्तथा ॥ १२ ॥

1. स्थापयेत् M, A 2. कौतुकोज्झिते T 3. द्विगुणं स्नपनं $P_1$, $P_2$
4. "कार्या अयने" इति पदच्छेदः । 5. °क्रमः T, $P_1$, $P_2$ 6. उपक्रमं A
7. च $P_1$, $P_2$ 8. च्छेदने $M_2$ 9. एषोऽर्धश्लोकः T कोशे न दृश्यते ।



पाषण्डैः प्रतिलोमैश्च तथोदक्यादिदूषिते ।
[1]कलशं तं तमुद्धृत्य स्थापयित्वापरान् पुनः ॥ १३ ॥

तद्दैवत्यान् जपेन्मन्त्रानष्टोत्तरशतावरम् ।
स्नपनं यदि तैः कुर्याच्छान्तिहोमं समाचरेत् ॥ १४ ॥

अक्रमेण समुद्धृत्य स्नपने विहिते सति ।
जपः पञ्चोपनिषदां कर्तव्यश्च यथापुरम्[2] ॥ १५ ॥

देवतामन्त्रभूभागद्रव्याणां व्यत्यये सति ।
पूर्ववन्मन्त्रजापः स्यात्प्रतिद्रव्यमनर्चिते ॥ १६ ॥

अर्घ्यादिभिर्जपस्तद्वन्महिषाजोष्ट्रसम्भवैः ।
क्षीरादिभिस्तथा द्रव्यैः स्नपने स्नापयेत्पुनः ॥ १७ ॥

समिद्भिर्मूलमन्त्रेण जुहुयात् कमलासन ।
अद्भिः पर्युषिताभिश्चेत् स्नपनं स्नापयेत्पुनः ॥ १८ ॥

[3]शान्तिहोमो मूलविद्या जपश्चाष्टोत्तरं शतम् ।
आराधनाङ्गवैकल्ये नृत्तवाद्यादिभिस्सह ॥ १९ ॥

शान्तिहोमो भवेद्द्वयां स्नपने चलने तथा ।
प्रतिमाचलने तद्वत्प्रायश्चित्तं चतुर्मुख ॥ २० ॥

स्नपने वर्तमाने तु चलने पतनेऽपि वा ।
यथापूर्वमवस्थाप्य स्नापयित्वा यथाविधि ॥ २१ ॥

शान्तिहोमश्च कर्तव्यः पीठादीनां च भञ्जने ।
सहजानां तथा हस्तपादादीनां चतुर्मुख ॥ २२ ॥

1. कलशांस्तान् समुद्धृत्य T 2. कर्तव्यस्तत्समाचरेत् $P_1$, $P_2$
3. अयं श्लोकः $P_1$, $P_2$ पन्थयोः, T कोशे चोपलभ्यते ।

भङ्गे तु[1] तेषामावाह्य कूर्चादौ तद्गतं हरिम् ।
क्रियां समापयेद्भग्ने प्रभापीठादिकं पुनः ॥ २३ ॥

समाधाय यथापूर्वं सम्प्रोक्षणविधिर्भवेत् ।
वस्तुषु स्नपनाङ्गेष्व विपर्ययं [वा] हानिरेव वा ॥ २४ ॥

यदि स्यान्मूलमन्त्रस्य जपश्चाष्टोत्तरं शतम्[2] ।
मोक्षमाणः सदा कुर्यात् स्नपनं निशि वाहनि ॥ २५ ॥

रिपुक्षयार्थी दिवसे धर्मार्थी दिनमध्यमे ।
दिनान्ते सर्वभोगार्थी प्रायश्चित्ताय[3] सर्वदा ॥ २६ ॥

बद्धप्रतिसरे बिम्बे स्नपनार्थं तु मन्त्रिणा ।
स्नपनान्तरसम्प्राप्तौ न च प्रतिसरान्तरम् ॥ २७ ॥

मण्डूकमूषिकासर्पचुचुन्दर्यादिजन्तुभिः ।
स्पृष्टे विलङ्घिते नष्टे स्थापिते कलशे तथा ॥ २८ ॥

त्यक्त्वान्यं तु तथा कृत्वा मूलमन्त्रं जपेद्गुरुः ।
स्थापितं कलशं [4]यत्तु पाषण्डैः प्रतिलोमजैः ॥ २९ ॥

आशौचवद्भिरपरैः कलशस्पर्शने सति ।
सद्रव्यं कलशं [5]हित्वा तथान्यं तत्र निक्षिपेत् ॥ ३० ॥

वाचयित्वाथ पुण्याहं शान्तिहोमं समाचरेत् ।
कर्मणि स्नपनादौ तु प्रवृत्ते देशिकोत्तमः ॥ ३१ ॥

[6]सौतकं मरणाशौचं शृणुयाच्च शुचिर्भवेत् ।
उत्सवे च[7] यथाशास्त्रचोदिते स्खलनेऽपि च[8] ॥ ३२ ॥

---

1. भङ्गेतु $M_1$ 2. °अष्टोत्तरावरः $P_1$, $P_2$ 3. प्रायश्चित्तन्तु $M_2$
4. तद्वत् T, $P_1$, $P_2$ 5. त्यक्त्वा T, $P_1$, $P_2$ 6. सूतकं T, $P_1$, $P_2$
7. तु T, $P_1$, $P_2$ 8. सति T, $P_1$, $P_2$



शान्तिस्तदोच्यते [1]ब्रह्मंस्तदेतदवधार्यताम् ।
विमानस्थापनाहीने न कुर्यादुत्सवं हरेः ॥ ३३ ॥

कुर्याद्वा ध्वजमुद्धृत्योत्सवं च क्रमेण वा ।
वायवीये याम्यकोणे विधिना शान्तिमाचरेत् ॥ ३४ ॥

संवत्सरान्तं तत्रैव ध्वजयष्टेः स्थितिर्भवेत् ।
हीननित्योत्सवे धाम्नि ध्वजारोहणपूर्वकम् ॥ ३५ ॥

नोत्सवं कारयेत्काम्यं कारिते शान्तिमाचरेत् ।
प्रमाणहीने पक्षीन्द्रे ध्वजे स्तम्भादिकेऽपि वा ॥ ३६ ॥

[2]शान्तिः कार्या तथा हीने मूषिकाद्यैश्च दूषिते ।
अशुचिद्रव्यसंस्पर्शे त्यक्त्वारोप्य ध्वजान्तरम् ॥ ३७ ॥

शान्तिहोमश्च कर्तव्यो ब्राह्मणानां च भोजनम् ।
ध्वजारोहणकर्माङ्गं ध्वजं वा स्तम्भमेव वा ॥ ३८ ॥

सकृन्नियुक्तं त्यक्तव्यं ध्वजयष्टिं परित्यजेत् ।
सकृन्नियुक्ते स्तम्भादौ भूयोऽपि विनियोजिते ॥ ३९ ॥

प्रायश्चित्तं न तत्र स्यात्स्नपनं चोत्तमोत्तमम् ।
शान्तिहोमश्च कर्तव्यो ब्राह्मणानां च भोजनम् ॥ ४० ॥

स्थापिते विहगेशाने ध्वजे [3]वातातपादिभिः ।
वर्णहानौ [4]न दोषः स्यात्समाराधनमिष्यते ॥ ४१ ॥

पतिते वातवेगेन हेतुना येन केनचित् ।
उद्धृत्य बद्ध्वा भूयोऽपि स्नपनं मध्यमाधमम्[5] ॥ ४२ ॥

---

1. ब्रह्म स्तदानीमवधार्यताम् T, $P_1$, $P_2$ 2. शान्तिहोमं तथा कुर्यात् $M_2$
3. वातादिपातिते A, $M_2$ 4. च $M_2$ 5. मध्यमोत्तमम् T, $P_1$, $P_2$

वर्णहानौ तथा [1]हीने ध्वजे च्छिन्नेऽपि वा क्वचित् ।
ध्वजान्तरं समुत्पाद्य त्यक्त्वा निपतितं ध्वजम् ॥ ४३ ॥

यष्टिं वा कल्प्यमेवान्यत्र तु कालप्रतीक्षणम् ।
विपरीतं ध्वजपटं प्रमादाद्यदि बन्धयेत् ॥ ४४ ॥

तन्मोचयित्वा यद्वान्यं बद्ध्वा स्नपनमाचरेत् ।
ध्वजस्तम्भे तु पतिते[2] भग्ने वा सुषिरेऽपि वा ॥ ४५ ॥

स्तम्भान्तरं [3]स्थापयित्वा शान्तिः स्नपनपूर्विका ।
पतने[4] भ्रमणे वापि पतिते वा यदृच्छया ॥ ४६ ॥

शान्तिहोमो भवेत्प्राग्वत् मूलमन्त्रजपस्तथा ।
पक्षीशाधिष्ठिते कुम्भे भिन्ने नष्टेऽपि वा तथा[5] ॥ ४७ ॥

अस्पृश्यैः पाणिभिः स्पृष्टे स्थाप्यं कुम्भान्तरं पुनः ।
आवाह्य तत्र विहगं कर्मशेषं [6]समापयेत् ॥ ४८ ॥

ध्वजस्तम्भे च संस्पृष्टे चण्डालाद्यैर्विगर्हितैः ।
स्तम्भान्तरमवस्थाप्य शान्तिहोमं समाचरेत् ॥ ४९ ॥

सूतकैः प्रेतकैश्चैव प्रतिलोमैस्तथाविधैः ।
स्पृष्टे प्रोक्ष्य ध्वजस्तम्भं पुण्याहोक्तिरुत्तरम् ॥ ५० ॥

सक्तन्नियोजितं त्यक्त्वा मृन्मयं पालिकादिकम् ।
अङ्कुरानर्पयेन्नो चेच्छान्तिहोमादिकं चरेत् ॥ ५१ ॥

अङ्कुरेष्वपि रक्तेषु श्यामवर्णयुतेषु वा ।
अप्ररूढेषु सर्वेषु तथा तिर्यग्गतेषु च ॥ ५२ ॥

1. भिन्ने T, $P_1$, $P_2$ 2. तथा भिन्ने T, $P_1$, $P_2$ 3. अवस्थाप्य T, $P_1$, $P_2$
4. कम्पने A, $M_2$ 5. अथवा तथा T, $P_1$, $P_2$ 6. समाचरेत् $M_1$



अस्पृश्यस्पर्शने तेषां भिन्नच्छिन्नेषु वा पुनः ।
पालिकादिषु नष्टेषु पतितेषु यथा तथा ॥ ५३ ॥

वल्मीकादिप्ररोहे च मूषिकाद्यैश्च भक्षिते ।
शान्तिहोमश्च कर्तव्यो ब्राह्मणानां च भोजनम् ॥ ५४ ॥

प्रारब्धकर्ममध्ये चेत् कर्म नैमित्तिकं पुनः ।
आपतेदर्पयेद्भूयस्तदर्थांश्चाङ्कुरान् गुरुः ॥ ५५ ॥

अर्पितेष्वङ्कुरेषु स्य दैवाद्वा यदि मानुषात् ।
कर्मलोपस्तदा त्यक्त्वा कल्पितानङ्कुरानपि ॥ ५६ ॥

शान्त्यर्थं जुहुयादग्नौ मूलमन्त्रजपस्तथा ।
बद्धप्रतिसरे बिम्बे कर्मार्थमपरं यदि ॥ ५७ ॥

अन्तरा कर्म निपतेद्बध्नीयात्कौतुकं पुनः ।
अन्तरा पतिते स्नाने समाप्ते स्नपनं पुनः ॥ ५८ ॥

पूर्वारब्धमनुष्ठेयं यथाशास्त्रं चतुर्मुख ।
ग्रामादिषु स्याच्छून्येषु न बलिर्वीथिकोत्सवः ॥ ५९ ॥

धामन्येव भवेत्कामं यदि स्यात् वीथिकोत्सवः ।
सहस्रकलशैः स्नानं प्रायश्चित्तं तदिष्यते ॥ ६० ॥

उत्सवे वर्तमाने स्यान्महावातादिना यदि ।
ग्रामादौ शिथिले कृत्वा प्रायश्चित्तं पुनर्महः ॥ ६१ ॥

[1]कार्यो न लोप्यो लोपे तु कुम्भैरष्टोत्तरैश्शतैः[2] ।
स्नपनं कारयेद्धोमो जपश्च द्विजार्चनम् ॥ ६२ ॥

1. कार्या यथोक्तविधिना $M_2$ 2. हरेः T, $P_1$, $P_2$

मुहूर्तादिक्रमे शान्तिः सर्वेषां कर्मणामपि ।
कार्या होमादिभिः पश्चात्कर्मारम्भो यथोदितः ॥ ६३ ॥

कर्मण्यधिकृते पूर्वं देशिको मूर्तिपेषु वा ।
[1]हेतोर्दैवान्मनुष्याद्वा विहितेष्वधिकारिषु ॥ ६४ ॥

[2]प्रारब्धं कर्म कर्तव्यं [3]तादृशैरपरैर्द्विजैः ।
उत्सवे विघ्निते दैवान्मानुषाद्वा यथोदिते ॥ ६५ ॥

बलिमेव क्षिपेद्वह्नि ग्रामादौ वीथिकास्वपि ।
[4]बलिप्रदाने प्रकृते कस्मिंश्चिद्दिवसे पुनः ॥ ६६ ॥

कुर्वन् बलिमतिक्रान्तं कृत्वैवं बलिमाचरेत् ।
उत्सवाङ्गेषु हीनेषु कल्पितेषु यथापुरम् ॥ ६७ ॥

उद्यानयानमृगयाजलद्रोण्यादिकर्मसु[5] ।
शान्तिः कार्या भोजनं च ब्राह्मणानां जपस्तथा ॥ ६८ ॥

हीनायां तीर्थयात्रायां पुनरुत्सवमाचरेत् ।
उत्तमोत्तममार्गेण कृत्वा स्नपनमादितः ॥ ६९ ॥

मासे यथोक्तेऽतिक्रान्ते नक्षत्रादौ यथोदिते ।
उत्सवानन्तरे [6]चापि यद्यर्वाग्वत्सराद्भवेत् ॥ ७० ॥

ऊर्ध्वं संवत्सरात्कुर्वन् शान्ति कृत्वा समाचरेत् ।
सहस्रकलशैः स्नानं शान्तिहोमं जपादिकम् ॥ ७१ ॥

---

1. दैवाद्वा मानुषाद्वापि विघ्नितेऽप्यधिकारिषु T     2. मुहूर्तातिक्रमे शान्तिः सर्वत्राऽपि भवेत्तदा । A, $M_2$ कोशयोरयमर्धश्लोकोऽधिकतया दृश्यते ।     3. तादृग्भिरपरैः T, $P_1$, $P_2$     4. बलिप्रदानेऽप्यकृते T, $P_1$, $P_2$     5. •आदिकासु च $M_2$
6. मासि T, $P_1$, $P_2$



लुप्ते पर्वोत्सवे शान्तिः स्नपनं शक्त्यपेक्षया ।
अन्येषु विष्णोर्लुप्तेषु श्रवणाद्युत्सवेषु च ॥ ७२ ॥

उत्तमोत्तममार्गेण स्नपनं तस्य निष्कृतिः ।
व्यत्यासे बलिवस्तूनां जुहुयात्सर्पिषा शतम् ॥ ७३ ॥

[1]वातातपादिसंस्पर्शे बिम्बे स्नपनमुत्तमम् ।
आचरेद्यागशालायां [2]प्रपादिषु महोत्सवे ॥ ७४ ॥

अग्नि[3]दग्धेषु तत्सर्वं समाधाय यथापुरम् ।
शान्तिहोमो द्विजेन्द्राणां भोजनं दानमेव च ॥ ७५ ॥

कुर्यात् सुदर्शनप्लोषे कुम्भैर्नवभिराप्लवः ।
कार्यो बिम्बादिदाहेऽपि तथा स्नपनमाचरेत् ॥ ७६ ॥

श्वसृगालादिभिर्यागमण्डपादौ प्रवेशने ।
संस्पर्शे पूर्ववल्लप्तानि त्यक्त्वान्यानि निधाय च ॥ ७७ ॥

शान्तिहोमो द्विजेन्द्राणां भोजनादि यथापुरम् ।
चण्डालादिप्रवेशादौ त्यक्त्वा तद्वस्तु दूषितम् ॥ ७८ ॥

उत्सवार्थानि वस्तूनि शान्तिहोमं समाचरेत् ।
उत्सवाग्नौ स्वयं शान्ते शान्तिं कुर्याद्यथाक्रमम् ॥ ७९ ॥

विषुवे चायने चैव तीर्थयात्रा न दोषकृत् ।
रात्रावपि ततोऽन्यत्र कर्तव्या चैव सा भवेत्[4] ॥ ८० ॥

प्रमादाद्यदि यात्रा स्यात् स्नपनं चोत्तमोत्तमम् ।
उत्सवे होमविच्छेदे द्विगुणं होममाचरेत् ॥ ८१ ॥

---

1. वाताद्युत्पातसंस्पृष्टे T, $P_1$, $P_2$     2. पर्वादिषु $M_2$, T     3. •दग्धे तु T
4. •रेव सा भवेत् T, $P_1$, $P_2$; अन्तेन सा भवेत् $M_2$

बिम्बे चोरादिभिर्नष्टे वर्तमाने महोत्सवे ।
कर्मार्चादिषु बिम्बेषु बिम्बं चोत्पाद्य पूर्ववत् ॥ ८२ ॥

आराधयेन्निपतिते बिम्बे यानान्महोत्सवे ।
आरोप्य पूर्ववद्यानं रथ्यासु परितो[1] नयेत् ॥ ८३ ॥

एकाधिकाशीति[2]घटैः स्नापयेच्छान्तये पुनः ।
अङ्गहानौ कौतुकस्य बिम्बमन्यन्नयेत्तथा ॥ ८४ ॥

[3]हीनाङ्गं चेत्समाधाय सद्यः सम्प्रोक्षणं चरेत् ।
स्नपनं शान्तये कुर्याद्ब्राह्मणानां च तोषणम् ॥ ८५ ॥

यानभङ्गे नयेद्देवं यानेनान्येन वीथिकाम् ।
शान्तिश्च कार्या पतनभ्रमणादौ तु सारथेः ॥ ८६ ॥

पुण्याहवाचनादीनि कार्याणि कमलासन ।
अस्पृश्या यदि यानानि वहेयुर्बिम्बमेव वा ॥ ८७ ॥

क्षालयित्वा तु यानानि[4] बिम्बं च स्नापयेद् घटैः ।
पुष्पयागो निशि भवेच्छान्तये [5]भुक्तयेऽपि वा ॥ ८८ ॥

अभावे पुष्पयागस्य स्नपनं चोत्तमोत्तमम् ।
आरभ्य तीर्थदिवसादूर्ध्वं पञ्चदिनावधि ॥ ८९ ॥

ध्वजावरोहणं कार्यं पश्चाच्चेदवरोहणम् ।
दोषः स्याद्दोषशमनं स्नपनं मध्यमोत्तमम् ॥ ९० ॥

अवरोप्य ध्वजपटं स्नपनानन्तरं पुनः ।
उद्वास्य देवतास्सर्वाः शकटाद्बलिकर्मणा ॥ ९१ ॥

---

1. ॰पतितं T, $P_1$, $P_2$ 2. ॰कुम्भैः T, $P_1$, $P_2$ 3. भिन्नाङ्गं $M_2$
4. रथादीनि $M_2$ 5. मुक्तयेऽपि वा A, $M_2$



महोत्सवान्तःपतितं कर्म वैशेषिकाह्वयम् ।
कार्यमेव न लोप्यं तल्लोपे स्नपनमाचरेत् ॥ ९२ ॥

पवित्रा[1]रोहणे प्रायश्चित्तमन्यत् [2]प्रदृश्यते ।
हीनमाने पवित्रे वा कुण्डे वा [3]मण्डलादिके ॥ ९३ ॥

अस्त्रमन्त्रं शतं जप्त्वा पूजयेदस्त्र[4]वर्धनम् ।
त्यक्त्वा पवित्रं केशादिदूषितं पुनरेव तत् ॥ ९४ ॥

कृत्वा पूर्ववदारोप्य ततश्शान्तिं समाचरेत् ।
अस्पृश्यस्पर्शने कुम्भे भिन्ने नष्टेऽपि वा पुनः ॥ ९५ ॥

कुम्भान्तरे समावाह्य मूलमन्त्रं जपेत्पुनः ।
अस्थाने स्थापितं शूलमन्यत्र प्रतिमादिकम्[5] ॥ ९६ ॥

स्थापयित्वा यथास्थानं स्नपनादि [6]समाचरेत् ।
माने न्यूनेऽधिके वापि वेद्यादीनां प्रकल्पिते ॥ ९७ ॥

शान्तिराज्याहुतिः कार्या पञ्चोपनिषदा शतम् ।
तेषामभावे च तथा शान्तिर्नयनमोक्षणम् ॥ ९८ ॥

अकृत्वा स्थापने शान्तिं कृत्वा नयनमोक्षणम् ।
तोयाधिवासाकरणे [7]प्रतिष्ठा चेन्मधुद्विषः ॥ ९९ ॥

स्नपनं शान्तिहोमश्च तद्वदेवाङ्गहानिषु ।
अनाचार्यप्रतिष्ठायां पुनःस्थापनमाचरेत् ॥ १०० ॥

आचार्यपदमारूढो [8]वैधुर्याद्यल्पदोषवान् ।
अधिकार्येव विज्ञानपारं यातो यदि स्वयम् ॥ १०१ ॥

---

1. ॰आरोपणे T, $P_1$, $P_2$ 2. प्रदर्श्यते A, T, $P_2$ 3. मण्डलेऽपि वा T, $P_1$, $P_2$
4. ॰वर्धनीम् T, $P_1$, $P_2$ 5. ॰अन्यद्वा स्थापनादिकम् A 6. यथापुरम् $M_2$
7. प्रतिष्ठायां मधुद्विषः T, $P_1$, $P_2$ 8. वैमुख्याद्यल्प॰ $M_2$

[1]ज्ञानाधिकेन देवेशे स्थापिते ज्ञानरूपिणि ।
न दोषो ज्ञानदहनः सर्वदोषान् दहेत् खलु ॥ १०२ ॥

यावत्कालं स्थितिर्बालमन्दिरे [2]प्रार्थिता पुरा ।
तावत्यतीते समये स्नपनं मधुविद्विषः ॥ १०३ ॥

कार्यं पुनश्च तत्रैव स्थितिकालं [3]प्रकल्पयेत् ।
अन्यत्र वा बालगेहे यद्वा मूलालये भवेत् ॥ १०४ ॥

कर्मार्थपीठिकायां तत् स्थापयित्वा [4]समाचरेत् ।
गोपुरे वालये यद्वा प्राकारे मण्टपेऽथवा ॥ १०५ ॥

शिथिलीसरधातुम्बीवल्मीकादिसमुद्भवे ।
उद्धृत्य तत्तत्संशोध्य देशं कृत्वा यथापुरम् ॥ १०६ ॥

स्नपनं देवदेवस्य कुर्यादुत्तममध्यमम् ।
शान्तिहोमो द्विजेन्द्राणां भोजनं दानमेव च ॥ १०७ ॥

सिद्धान्तसङ्करे जाते प्रमादात्तत्र सङ्करे ।
[5]कर्षणादिषु दोषः स्याद्राजराष्ट्रक्षयावहः ॥ १०८ ॥

**ब्रह्मोवाच :—**

[6]सिद्धान्तो नाम कः को वा भेदस्तस्य जर्नादन ।
श्रोतुमिच्छामि तत्सर्वं न रहस्यमिदं यदि ॥ १०९ ॥

**श्रीभगवान् :—**

महोपनिषदं नाम सिद्धान्तपद[7]शब्दितम् ।
मीमांसादिषु शास्त्रेषु ये सिद्धार्था मनीषिणः ॥ ११० ॥

---

1. ज्ञानाधिक्ये नवे देशे A  2. कल्पिता $M_2$  3. परीक्षयेत् T, $P_1$, $P_2$
4. समर्चयेत् T, $P_1$, $P_2$  5. 'कृत्वा सम्प्रोक्षणं पूर्वं सहस्रकलशाप्लवः' इत्यर्धश्लोकः $P_1$, $P_2$ ग्रन्थयोः T कोशे च दृश्यते ।  6. सिद्धान्तं नाम किं T, $P_1$, $P_2$
7. °संज्ञितम् A, $M_2$



तेषामन्तेऽधिकारोऽस्मिन्निति सिद्धान्त[1]संज्ञितम् ।
तच्चतुर्धा स्थितं [2]शास्त्रमृगादिवदनेकधा ॥ १११ ॥

एकैकं भिद्यते तन्त्रं शाखाभेदेन भूयसा ।
प्रथमं मन्त्रसिद्धान्तं द्वितीयं चागमाह्वयम् ॥ ११२ ॥

तृतीयं तन्त्रसिद्धान्तं तुर्यं तन्त्रान्तरं भवेत् ।
एकैव मूर्तिराराध्या प्राधान्येनेतराः पुनः ॥ ११३ ॥

देव्यः श्रियादयश्चापि सम्पूज्याः परिवारवत् ।
आयुधैश्शङ्खचक्राद्यैः श्रीवत्साद्यैश्च भूषणैः ॥ ११४ ॥

मूर्तिभिः परिवृता केवला वाम्बुजासन ।
कथ्यते यत्र तत्प्रोक्तं मन्त्रसिद्धान्तमग्रिमम् ॥ ११५ ॥

वासुदेवादयो व्यूहाश्चत्वारः साधकैरपि ।
क्रमागतैस्तुल्यकक्ष्याः पूज्यास्तत्प्रभवाव्यये ॥ ११६ ॥

कर्मणामपि संन्यासः कथ्यते यत्र चागमे ।
[3]तत्र चागमसिद्धान्तं तदुक्तं कमलासन ॥ ११७ ॥

नवानामपि मूर्तीनां प्राधान्यं यत्र कथ्यते ।
मूर्तयो द्वादशाङ्गानि तेषामेव तथापरे ॥ ११८ ॥

प्रादुर्भाव[4]गणाश्चान्ये मूर्त्यन्तरगुणा अपि ।
प्रादुर्भावान्तरयुताः [5]सदिग्देवैः सहायुधैः ॥ ११९ ॥

मूर्तिमद्भिश्च देवीभिर्लक्ष्म्यादिभिरपि स्फुटम् ।
तत्तन्त्रसिद्धान्ताह्वानं [6]चतुर्थं परमं पुनः ॥ १२० ॥

---

1. °शब्दितम् T, $P_1$, $P_2$  2. सर्वं $M_2$  3. तन्त्रमागम° T, $P_1$, $P_2$
4. °गुणा° T, $P_1$, $P_2$  5. सदिग्देवास्सहायुधाः $M_2$  6. द्वितीयं A

सौम्यसिंहादिमूर्तिष्ठ वक्त्रभेदैश्चतुर्मुख ।
[1]द्वित्रादिमुखभेदा वा मूर्तिरेकैव पूज्यते ॥ १२१ ॥

परिवारैः संवृता वा विना वा सर्वकामदा ।
[2]यत्तन्त्रान्तरसंज्ञं स्याच्चतुर्थं चतुरानन ॥ १२२ ॥

येन सिद्धान्तमार्गेण कर्षणादिक्रिया कृता ।
आदौ तेनैव सकलं नान्यसिद्धान्तवर्त्मना ॥ १२३ ॥

तन्त्रेणापि तथा येन कर्षणादिक्रिया कृता ।
तेनैव सकलं कार्यं न तन्त्रान्तरवर्त्मना ॥ १२४ ॥

तन्त्रान्तरेऽपि कथितमनुक्तं ग्राह्यमेव हि ।
सिद्धान्त[3]सङ्करो न स्यात्तन्त्रसङ्कर एव च ॥ १२५ ॥

दोषाय कल्पते राजराष्ट्रधामक्षयात्मने ।
सिद्धान्तसङ्करे जाते प्रमादात्तस्य शान्तये ॥ १२६ ॥

कृत्वा सम्प्रोक्षणं पूर्वं सहस्रकलशाप्लवः ।
कर्तव्यः, स्नपनं कुर्यात्तन्त्रसङ्करसम्भवे ॥ १२७ ॥

अन्ते महोत्सवं कुर्याद्ध्वजारोहणपूर्वकम् ।
स्थापिते पञ्चरात्रेण देवे षड्भिरथाध्वभिः ॥ १२८ ॥

प्रतिष्ठादौ कृते[4] द्रोहा[5]द्दोषः सर्वक्षयात्मकः ।
शान्तिश्च तस्य भूयोऽपि पञ्चरात्रोक्तवर्त्मना ॥ १२९ ॥

प्रतिष्ठापि[6] सहस्रेण कलशैः स्नपनं हरेः ।
महोत्सवश्च कर्तव्यो ध्वजारोहण[7]पूर्वकः ॥ १३० ॥

---

1. चित्रादि° $M_2$  2. यत्र तन्त्रान्तरं तत् स्यात् $T, P_1, P_2$  3. °सङ्करस्तत् स्यात् $A, M_2$; सङ्करस्तस्मात् $T, P_2$; सङ्करं तस्मात् $P_1$  4. प्रतिष्ठानेऽकृते $P_2$  5. मोहाद्° $T, P_1, P_2$  6. प्रतिष्ठाप्य $T, P_1, P_2$  7. ध्वजारोपण° $M_2$



एकत्र दीक्षितस्तन्त्रे सिद्धान्ते वा द्विजोत्तमः ।
क्रियां न कुर्यादन्यत्र कर्षणादि चतुर्मुख ॥ १३१ ॥

[1]आचार्यत्वमथार्त्विज्यं पूजायां मधुविद्विषः ।
तन्त्रभेदे च [2]सिद्धान्तभेदे चापि न युज्यते ॥ १३२ ॥

ब्रह्महत्यादिपापानां निष्कृतिः स्मृतिचोदिता ।
मृतानां विषशस्त्राग्निप्रायैरुग्रैश्च कर्मभिः ॥ १३३ ॥

नारायणबलिर्नाम समाराधनमुत्तमम् ।
गतिहेतुर्विना तेन गतिरन्या न विद्यते ॥ १३४ ॥

पुनर्दहनमारभ्य कर्म स्मार्तमशेषतः ।
कृत्वा सपिण्डीकरणपर्यन्तं तदनन्तरम् ॥ १३५ ॥

देवदेवं समाराध्य वक्ष्यमाणेन वर्त्मना ।
विष्ण्वालये नदीतीरे पर्वते वा वनेऽपि वा[3] ॥ १३६ ॥

अन्यत्र वा पुण्यदेशे कर्तुर्वा भवने शुभे ।
यष्टव्यं कृष्णपक्षस्य द्वादश्यामयनद्वये ॥ १३७ ॥

उपोषितः सन् पूर्वेद्युः कर्ता नियतमानसः ।
ब्राह्मणान् भगवद्भक्तान् व्रतस्वाध्यायशालिनः ॥ १३८ ॥

आमन्त्र्य मन्त्रविद् बुद्ध्वा केशवादि यथा स्वयम् ।
[4]शोधयेद्धोमयाम्भोभिः भूतले कुशविष्टरे ॥ १३९ ॥

उपवेश्य [5]वृतानेव प्राङ्मुखान् कमलासन ।
अर्घ्यादिभिः समभ्यर्च्य नामभिः केशवादिभिः ॥ १४० ॥

---

1. आचार्यः क्रमशः पूज्यः पूजायां मधुविद्विषः $M_2$  2. सिद्धान्ते तदेवापि न युज्यते $M_2$  3. विपिनेऽपि वा $M_2$  4. शोधिते $T, P_1, P_2$  5. प्रातरेव A

नमोऽन्तैर्नागवस्त्र्यादि दत्त्वा चाभ्यञ्जयेद् द्विजान् ।
स्नातानां सन्निधौ तेषां होमं चौपासनेऽनले ॥ १४१ ॥

कृत्वाग्निमुखमग्नेश्च प्राग्भागे चक्रपङ्कजे ।
स्थण्डिले कुशकूर्चे वा देवमावाहयेद्यदि ॥ १४२ ॥

पुष्पाञ्जलिः समुत्थाय नृसूक्ताद्या ऋचो जपन् ।
ओंपूर्वाभिर्व्याहृतिभिराराध्य[1] पुरुषोत्तमम् ॥ १४३ ॥

मूर्तिभेदान् केशवादीन् नामभिः स्वैरनन्तरम् ।
आवाह्याद्यर्घादिभिः षड्भिरुपचर्य पृथक् पृथक् ॥ १४४ ॥

तर्पयित्वा तिलाम्भोभिः केशवादीन् स्वनामभिः ।
उपचर्य च दीपान्तं पुरुषं पुरुषात्मना ॥ १४५ ॥

सूक्तेन केशवादींस्तु नामभिः स्वैर्यथाक्रमम् ।
अग्नौ पद्मासनासीनं ध्यात्वा परमपूरुषम् ॥ १४६ ॥

[2]आरभ्य पायसं विष्णोर्नुकमित्यृचमब्जज ।
पश्चात्परो मात्रयेति याज्यया जुहुयाद्धविः ॥ १४७ ॥

केशवाद्यैर्नामधेयैः सर्पिषा जुहुयात्ततः ।
चतुर्थ्यन्तैर्द्वादशभिर्नमोऽन्तै[3]र्ध्यानमास्थितः ॥ १४८ ॥

क्षीराज्यगुडमिश्रान्नं तेभ्य एव निवेदयेत् ।
देवस्य त्वा सवितुरिति महाविष्णोर्निवेदनम् ॥ १४९ ॥

सप्तव्याहृतिभिर्भूयो जुहुयात्सर्पिषानले ।
दर्भासनेषु भूदेवानाहृतानु[4]पवेश्य तान् ॥ १५० ॥

1. °आवाह्य T, $P_1$, $P_2$  2. आश्राव्य $M_2$  3. नामभिः T, $P_1$, $P_2$
4. °उपवेशितान् T, $P_1$, $P_2$



वस्त्रा[1]ङ्गुलीयकैश्छत्रकुण्डलोपानहादिभिः ।
यथाशक्ति समभ्यर्च्य मन्त्रेणाष्टाक्षरेण तान् ॥ १५१ ॥

तिलाज्यमिश्र[2]हव्येन तदनुज्ञानपूर्वकम् ।
जुहुयादनले हव्यं विद्यया वक्ष्यमाणया ॥ १५२ ॥

पितृभ्यस्तत्पितृभ्यश्च तत्पितृभ्यः पुनस्तथा ।
[3]मातृभ्यः पितृमातृभ्य[4]स्तत्पितृभ्यः पुनस्तथा ॥ १५३ ॥

मातामहेभ्य[5]स्तेषां ये पितरस्तेभ्य एव च ।
मातामहीभ्यो मातुश्च [6]पितृमातृभ्य एव च ॥ १५४ ॥

पितुः पितामहीभ्यश्च तथाचार्येभ्य एव च ।
[7]तत्पत्नीभ्यो गुरुभ्यश्च गुरुपत्नीभ्य एव च ॥ १५५ ॥

सखिभ्यस्तत्पुरन्ध्रीभ्यो ज्ञातिभ्यो याश्च ताः स्त्रियः ।
ताभ्योऽमात्येभ्यस्तत्स्त्रीभ्यः सर्वाभ्यः तत्स्त्रियश्च याः ॥ १५६ ॥

ताभ्यश्चेति समुच्चार्य स्वधा नम इति ब्रुवन् ।
नारायणाय स्वाहेति प्रत्येकं [8]पृथगाहुतिः ॥ १५७ ॥

अग्निशब्दं चतुर्थ्यन्तं कव्यवाहनमित्यथ ।
तदन्ते स्विष्टकृच्छब्दमनुषङ्गश्च पूर्ववत् ॥ १५८ ॥

हुत्वैवं सर्पिषा पश्चाद्द्वादशाक्षरविद्यया ।
प्रत्येकं शतमष्टौ च तथाष्टाक्षर[9]विद्यया ॥ १५९ ॥

विष्णुगायत्रिया तद्वद्ब्राह्मणान् षडसान्वितम् ।
भोजयेद्दक्षिणां दद्यात्तान् प्रणम्य प्रदक्षिणम् ॥ १६० ॥

1. °अङ्गुलीयकच्छत्र° T, $P_1$, $P_2$  2. °हस्तेन T, $P_1$, $P_2$  3. पितृभ्यः $M_2$
4. °तन्मातृभ्यः $M_2$  5. °सर्वेभ्यः $M_2$  6. मातुर्मातृभ्यः $M_2$  7. तत्पितृभ्यो $M_1$
8. प्रथमाहुतीः M ; परमाहुतिः A  9. द्वादशाक्षर° T, $P_1$, $P_2$

ताननुज्ञाप्य शिष्टान्नं यथेष्टं क्रियतामिति ।
दक्षिणेनानलं दर्भान् प्रागग्रान् शोधिते स्थले ॥ १६१ ॥

संस्तीर्य तेषु दर्भेषु बलिं दद्यात्समाहितः ।
विश्वेभ्यश्चैव देवेभ्यः साध्येभ्यस्तदनन्तरम् ॥ १६२ ॥

सर्वेभ्यश्चैव देवेभ्यो विष्णुर्नारायणस्तथा ।
सहस्रशिरसे चैव यज्ञात्मपदमेव च ॥ १६३ ॥

पुरुषं यज्ञपूर्वं च सर्वेश्वरपदं तथा ।
चतुर्थ्यन्तं समुच्चार्य नमः स्वाहेत्यनन्तरम् ॥ १६४ ॥

सर्वत्रैवानुषङ्गं च स्विष्टकृद्यजनादिकम् ।
आधेनुवरदानान्तं कृत्वा [1]प्रेतं निवेदयेत् ॥ १६५ ॥

मूर्तिषु द्वादशस्वेनं यज्ञशर्माणमाख्यया ।
निवेदयामि देवाय केशवायेत्यनुक्रमात् ॥ १६६ ॥

द्वादशभ्यो निवेद्यैवं परमान्नं निवेदयेत् ।
नारायणबलिर्ह्येष द्विजानां [2]समुदीरितः ॥ १६७ ॥

एवं यस्य कृतो दत्तो बलिर्देवार्चनात्मकः[3] ।
स याति निखिलं पापं निर्धूय ब्रह्म शाश्वतम् ॥ १६८ ॥

[4]पापानामितरेषां च बलिः पुण्यकृतामपि ।
परमात्मपदप्राप्त्यै[5] कल्पते नात्र संशयः ॥ १६९ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे उत्सवप्रायश्चित्त-नारायणबलिर्नाम एकोनविंशोऽध्यायः ॥

---

1. प्रीतं $M_1$  2. समुदाहृतः A  3. देवार्चनादिकम् A  4. पापिनामितरेषां A  5. °प्राप्तेः A, $M_2$



## विंशोऽध्यायः ॥

### हिरण्यगर्भादिविधिः ॥

**ब्रह्मा :—**

राजानस्तदमात्यो वा ये राज्यधुरि निष्ठिताः ।
भगवन् रक्षणव्यग्राः प्रजानां सततोद्यताः ॥ १ ॥

ब्रह्महत्यादिभिः पापैरभिभूता विगर्हितैः ।
कायक्लेशात्मके शास्त्रचोदिते घोरकर्मणि ॥ २ ॥

पापनिर्हरणोपाये प्रवर्तितुमनीश्वराः ।
ते कथं तानि पापानि [1]विधूय सकलान्यपि ॥ ३ ॥

कर्माधिकारिणो भूयस्सतां संसदि संमताः ।
कल्पन्ते भगवद्ध्याने तदर्चनविधावपि ॥ ४ ॥

[2]योग्याः प्रकारं तं देव ब्रूहि मह्यं यथातथम् ।
ब्रह्महत्यादिपापानामपनोदनमुत्तमम् ॥ ५ ॥

**श्रीभगवान् :—**

कायक्लेशात्मके कर्मण्यक्षमाणां महीभृताम् ।
विहितं सुकरं तेषां प्रायश्चित्तं चतुर्मुख ॥ ६ ॥

हिरण्यगर्भनामैकं कर्म प्रोक्तं तथापरम्[3] ।
तुलाभारसमाख्यं[4] तद् द्वाभ्यां निर्धूतकल्मषाः[5] ॥ ७ ॥

भगवद्ध्यानपूजादिविधौ भूयोऽधिकारिणः ।
भवन्ति कर्म द्वितयं तदशेषेण कथ्यते ॥ ८ ॥

---

1. निर्धूय T, $P_1$, $P_2$  2. अयमर्धः $P_1$ ग्रन्थे संख्यया न परिगणितः; ब्रह्महत्यादिपापानामित्युत्तरार्धस्तु समनन्तरश्लोकस्य पूर्वार्धत्वेन परिगणितः ।  3. यथापरम् $P_1$, $P_2$  4. °समाख्यातं A  5. निर्धूतकल्मषम् $P_1$, $P_2$

कर्तुं व्यवसितं कर्म वरयेद्गुरुमादितः ।
सर्वशास्त्रार्थतत्त्वज्ञं मन्त्राणां पारगं परम् ॥ ९ ॥

दयालुं सर्वभूतानामक्रोधनमलोलुपम् ।
कर्म[1]द्वयविधानज्ञमृजुं भागवतं द्विजम् ॥ १० ॥

परीक्ष्यैवंविधं यत्नादुपसङ्गम्य पार्थिवः ।
अर्थयित्वा यथान्यायमुपचर्य द्विजोत्तमम् ॥ ११ ॥

[2]कर्मारभेत पुण्येषु देशकालेषु यन्त्रितः ।
षट्सु तैष्यादिमासेषु श्रवणे त्वाष्ट्र एव वा ॥ १२ ॥

मैत्रे वाश्वयुजि ब्रह्मन् रोहिण्यां वासवेऽपि वा ।
[3] .... .... .... .... .... .... .... .... ॥ १३ ॥

पुष्ये वा सौम्यनक्षत्रे चोत्तरत्रितयेऽपि वा ।
देशे तीरे च सरितां समुद्रतटभूषु वा ॥ १४ ॥

यद्वा सर्वगुणोपेते देशे भगवदालये ।
नैमित्तिकं चेत्कर्मैतन्न कालादिपरीक्षणम् ॥ १५ ॥

मण्डपं प्रथमं कुर्यात्प्रतिष्ठा यदि बालये[4] ।
अन्यत्र वा यथोद्दिष्टे देशे शास्त्रोक्तवर्त्मना ॥ १६ ॥

सर्वालङ्कारसंयुक्तमन्तःकल्पितवेदिकम् ।
अङ्कुरानर्पयेत्पूर्वमुक्तेष्वन्यतमे दिने ॥ १७ ॥

सम्भारांस्तत्र सम्भार्य यथावस्तु यथाविधि[5] ।
एकाङ्गुलघने तुल्ये कपाले द्वे हिरण्मये ॥ १८ ॥

---

1. °त्रय° A  2. कर्मारम्भेषु $M_2$  3. अस्यार्धस्य लुप्तत्वेन चिह्नितत्वाभावात्, पुष्य इत्यर्धः १४ श्लोकस्य उत्तरार्ध एव दृश्यते $P_1$ ग्रन्थे। इतः प्रभृति $P_1$ ग्रन्थे श्लोकाः एकेनोना भवन्ति ।  4. प्रतिष्ठायामिवालये T, $P_1$, $P_2$  5. यथाविधि यथावस्तु $P_1$, $P_2$



अधरं चोत्तरं चापि कार्ये द्वाभ्यां चतुर्मुख ।
सङ्गताभ्यां प्रविश्यान्तरास्ते गर्भाशये यथा ॥ १९ ॥

कर्ता सुखं तन्निर्माय द्वयमण्डसमाकृतिम् ।
हिरण्यगर्भसंज्ञं[1] तद्यत्रायं जायते पुनः[2] ॥ २० ॥

होमपात्राणि सर्वाणि रैमयान्येव कारयेत् ।
सम्भारेषु समस्तेषु सम्भृतेषु महीपतिः ॥ २१ ॥

पूर्वेद्युर्नियतश्चोप्त[3]रोमश्मश्रुनखश्शुचिः ।
शुद्धदच्छुद्धवसनः श्वेतमाल्यानुलेपनः ॥ २२ ॥

उपोषितो घृतं प्राश्य रात्रिं नियमतत्परः ।
नीत्वा परेद्युः प्रत्यूषे स्नातो नियतमानसः ॥ २३ ॥

ऋत्विग्भिः कारयेत्कर्म गुरुणा चोदितः स्वयम् ।
वेदिमध्ये शालिभारैर्नवभिः कृतविष्टरे ॥ २४ ॥

प्रागग्रेषु च दर्भेषु स्तीर्णेष्वारोप्य रैमयम् ।
[4]कपालमधरं चोर्ध्वं तोरणादिसमर्चने ॥ २५ ॥

यथापुरं कृते नृत्तगेयवादित्रमङ्गले ।
हिरण्यगर्भमभितश्चतुर्दिक्षु भृतोदकान् ॥ २६ ॥

संस्थाप्य चतुरः कुम्भान् धान्यपीठेषु तेष्वपि ।
कुम्भेषु न्यस्तरत्नेषु वेष्टितेषु नवाम्बरैः ॥ २७ ॥

चतस्रो देवतास्स्वीयैर्नामधेयैरनुक्रमात् ।
आवाह्यः पुरुषः सत्यः प्राचीदक्षिणयोस्तथा ॥ २८ ॥

---

1. °नामैतत् $M_2$  2. यथा संजायते पुनः A; यतोऽयं जायते पुनः $M_2$
3. नियतं कृत्त° $M_2$  4. कपालं मधरं द्वारतोरणादि° T, $P_2$

वारुण्यामथ कौबेर्यामच्युतोऽनन्त एव च ।
समुदीर्यार्घ्यपाद्याद्यैर्धूपदीपावसानकैः ॥ २९ ॥

अन्नं चतुर्विधं चापि कुम्भे कुम्भे निवेदयेत् ।
पूर्वादिदिक्षु कुण्डेषु प्रतिष्ठायामिव क्रमात् ॥ ३० ॥

कलशेषु जुहुयादग्नौ समिधाज्येन च क्रमात् ।
प्रत्येकं मूलमन्त्रेण शतमष्टोत्तरं गुरुः ॥ ३१ ॥

चतुर्विधेन चान्नेन प्रत्येकं षोडशाहुतीः ।
कुर्यात्पुरुषसूक्तेन ध्यात्वा यष्टव्यदेवताम्[1] ॥ ३२ ॥

प्राप्ते मुहूर्ते भूदेवाननुज्ञाप्य गुरुः स्वयम् ।
पाणिना भूमिपं हस्ते गृहीत्वा प्रलयक्रमात् ॥ ३३ ॥

देहं संहृत्य भूपालं [2]देहमात्रावशेषितम् ।
ध्यात्वा प्रवेशयेद्गर्भं रैमयं कमलासन ॥ ३४ ॥

अधरे रैमये भागे सुखासीनं च भूमिपम् ।
छादयेदुपरिष्ठेन भागेनैतत्प्रवेशनम् ॥ ३५ ॥

घृतमिश्रैस्तिलैस्तत्त्वसंहाराहुतिमाचरेत् ।
तत्त्वोत्पादेन[3] मार्गेण चिन्तयित्वा गुरुः पुनः ॥ ३६ ॥

स्पृष्ट्वा[4] शरीरं भूपस्य सृष्टिहोमं यथापुरम् ।
कुर्यात्कुण्डेषु सर्वत्र चतुर्षु चतुरानन ॥ ३७ ॥

आनीय मन्त्रवज्जातं [5]कुण्डात्तस्मान्महीनृपम् ।
वैयाघ्रचर्मण्यारोप्य कलशैरभिषेचयेत् ॥ ३८ ॥

1. °देवताः $P_1$,$P_2$ 2. जीव° A,$M_2$ 3. तत्त्वोत्पादन° T,$P_1$,$P_2$
4. सृष्टं A, T, $P_1$, $P_2$; सृष्ट्वा $M_2$ 5. अण्डात्तस्माद्बहिर्नृपम् T, $P_1$, $P_2$



उत्तमाधममार्गेण [1]देववन्मन्त्रवित्तमः ।
तदेव मन्त्र[2]स्नपनं द्रव्यजातं च तादृशम् ॥ ३९ ॥

कर्मणानेन निर्धूतकल्मषः पुण्यकृत्तमः ।
जातो गुरुप्रसादेन गुरुमग्रे सभाजयेत् ॥ ४० ॥

सहस्रनिष्कमानेन तपनीयेन भूमिपः ।
ऋत्विजां [3]चैव सर्वेषां तावती दक्षिणा मता ॥ ४१ ॥

कर्मोपकरणं सर्वं कुर्यादाचार्यसान्नृपः ।
हैरण्यमण्डं विद्वद्भ्यो ब्राह्मणेभ्यः प्रदापयेत् ॥ ४२ ॥

एवं कृतवतस्तस्य विष्णोराराधनादिषु ।
सम्पद्यतेऽधिकारित्वं [4]द्विरेवं कर्म कुर्वतः ॥ ४३ ॥

फलं च विष्णोः सारूप्यं सायुज्यं त्रिगुणं भवेत् ।
तुलाभाराह्वयं कर्म द्वितीयं कथ्यतेऽधुना ॥ ४४ ॥

निर्माय मण्टपं प्राग्वत्तन्मध्ये यज्ञदारुजौ ।
स्तम्भौ दृढौ[5] सारवन्तौ हस्तैष्षड्भिः [6]समुच्छ्रितौ ॥ ४५ ॥

द्विहस्तपरिणाहौ द्वौ सुवृत्तौ शिल्पिकल्पितौ ।
द्विहस्तमानान्तरालौ स्थापितौ भूतले दृढम् ॥ ४६ ॥

कृत्वा तयोरुपर्येकं दारु सारवदुत्तरम्[7] ।
विस्तीर्णं हस्तमानेन तावन्मानं घनं दृढम् ॥ ४७ ॥

त्रिहस्तमायतं चैव तुलादण्डमयोमयम् ।
आयसेनैव पाशेन योजयेदुत्तरेण तु ॥ ४८ ॥

1. वेदवित्तन्त्र° T, $P_1$, $P_2$ 2. तथैव मन्त्रात् T, $P_1$, $P_2$ 3. चापि T, $P_1$, $P_2$ 4. त्रिरेवं $M_2$ 5. ऋजू $M_2$ 6. च सम्मितौ $M_2$; संभृतौ $P_2$ 7. °उत्तमम् A, $M_2$

विधायेत्थं तुलामन्यत् संभारादि यथापुरम् ।
कल्पयित्वा यथापूर्वं कर्म चोपरि [1]शाश्विकम् ॥ ४९ ॥

होमान्तं सकलं कुर्याद्यथायोगमलोपयन् ।
स्नातो नरपतिः क्षौमवसनाभरणान्वितः ॥ ५० ॥

शुचिर्ध्यायन्वासुदेवं चर्मखड्गवरं तथा ।
परिक्रम्य नमस्कृत्य देवांस्तान् पुरुषादिकान् ॥ ५१ ॥

तुलामपि तथा कृत्वा भागे तस्याश्च पश्चिमे ।
स्थित्वा प्रागाननो भूत्वा आरोहेत्पश्चिमं घटम् ॥ ५२ ॥

स्वस्तिदा[2] इत्यृचं सूक्तमधीयानं च मङ्गलम् ।
प्राच्ये घटे नृपसमं निक्षिपेद्धाटकोत्तमम् ।। ५३ ॥

चतुर्दिक्षु प्रवृत्तासु नृत्तवादित्रगीतिषु ।
अधीयानेषु विप्रेषु वेदांश्च चतुरस्तथा ॥ ५४ ॥

शान्तिहोमे च कुण्डेषु प्रवृत्ते पार्थिवः स्वयम् ।
कञ्चित्कालं घटभुवि ध्यायन् रुक्ममयं हरिम् ॥ ५५ ॥

आसित्वा गुर्वनुज्ञातः पूर्वं घटभुवस्ततः[3] ।
अवरोहेत्सुवर्णं च भूषणानि च भूपतिः ॥ ५६ ॥

भूसुरेभ्यो यथायोगं विभज्य वितरेत्ततः ।
आचार्याय शतं निष्कं मूर्तिपेभ्यश्च तत्समम् ॥ ५७ ॥

सर्वेभ्यो ये च तत्कर्मसहकारे नियोजिताः ।
तेभ्योऽपि [4]दद्यादीक्षित्वा तेषां कर्म यथायथम् ॥ ५८ ॥

1. शास्त्रतः $M_2$  2. स्वस्ति न $T, P_1, P_2$  3. स्वयम् A
4. दद्यादुद्वीक्ष्य A, T



तुलाभाराह्वयं कर्म कुर्वन्नित्थं महीपतिः ।
अन्यो वा धनवान् कश्चित् सर्वपापैः प्रमुच्यते ॥ ५९ ॥

प्रेत्य चाभिमतान् भोगानश्नुते दिवि देववत् ।
असकृत्कर्म कुर्वाणो ब्रह्मलोके महीयते ॥ ६० ॥

पापापनोदनं कर्म परलोके सुखावहम् ।
आयुर्वृद्धिकरं सर्वरोगशान्तिकरं परम् ॥ ६१ ॥

सम्पत्करं यशोवृद्धिकारणं सर्वकामदम् ।
चतुरानन कर्मान्यत् स्वर्ण[1]गर्भसमन्वितम् ॥ ६२ ॥

पुष्याभिषेचनं नाम शृणु गुह्यं सनातनम् ।
विहितं पृथिवीशानामिन्द्राद्यैरप्यनुष्ठितम् ॥ ६३ ॥

मासि तैष्ये प्रोष्ठपदे मासे चाश्वयुजे शुभे ।
श्रवणे चैव नक्षत्रे जन्मर्क्षे कर्तुरेव वा ॥ ६४ ॥

महाभिषेचनं कर्म प्रारभेत गुरुस्ततः[2] ।
पूर्वोक्तेष्वेव देशेषु कस्मिंश्चिदभिपूजिते[3] ॥ ६५ ॥

पञ्चदण्डायतां भूमिं कृत्वा वै वर्तुलाकृतिम्[4] ।
तस्यामन्तःस्थलं सम्यक् कृत्वा [5]किष्कुसमुच्छ्रितम् ॥ ६६ ॥

तोरणादि चतुर्दिक्षु स्थापयित्वा चतुर्मुख ।
अलङ्कृत्य यथापूर्वं वितानध्वजमालया ॥ ६७ ॥

तन्मध्ये कल्पयेन्मेरुं मृदङ्गसदृशाकृतिम् ।
श्लक्ष्णादि च मृदा कार्यं [6]तस्योच्छ्रायस्त्रिहस्तकः ॥ ६८ ॥

1. °गर्भादिसंयुतम् $T, P_1, P_2$  2. स्वयम् $M_2$  3. °भूषिते $M_2$
4. चैव तुलाकृतिम् $M_1$  5. निष्कसमुच्छ्रितम् $P_1, P_2$  6. तस्योर्ध्वे च $M_2$

मूले चाग्रे च विष्कम्भो हस्तमानस्तथा भवेत् ।
चतुर्दिक्षु च[1] चत्वारो भागास्तस्य यथाक्रमम् ॥ ६९ ॥

श्वेतोऽरुणस्तथा पीतः कृष्णः करुप्यश्च सर्वतः ।
रत्नैः स्वर्णैर्भूषणीयाः[2] षट् तथा कुलपर्वताः ॥ ७० ॥

पूर्वापरायताः करुप्याः हिमवांस्तदनन्तरम् ।
हेमकूटश्च निषधो नीलश्श्वेतश्च पर्वतः ॥ ७१ ॥

शतशृङ्गश्च विष्कम्भस्तेषां स्यात् षोडशाङ्गुलः ।
श्वेतश्च पिङ्गलो रक्तो नीलश्चन्द्रसमप्रभः ॥ ७२ ॥

हेमवर्णः क्रमाद्वर्णैश्चित्रयेद्धातुपांसुभिः ।
जम्बूद्वीपं लिखित्वैवं लवणोदधिवेष्टितम् ॥ ७३ ॥

प्लक्षद्वीपं लिखेद्दिक्षु समुद्रपरिवेष्टितम् ।
शाल्मल्या [3]लक्षितं द्वीपं परीतं मधुराम्बुभिः ॥ ७४ ॥

कुशं परीतमाधारैः क्रौञ्चं दधिसमृद्धिदम्[4] ।
शाकं दुग्धोदधिक्षिप्तं पुष्करं स्वच्छतोयधिम् ॥ ७५ ॥

क्रमाल्लिखित्वा सर्वेषां लोकालोकमहाचलम् ।
वप्रवत्कल्पयेत्प्राच्यां तस्यान्तरमरावतीम् ॥ ७६ ॥

पुरीमिन्द्रस्य याम्यायां नाम्ना संयमनीमपि ।
यमस्य वरुणस्यापि प्रतीच्यां नगरीं तथा ॥ ७७ ॥

विभावरीमुदीच्यान्तु पुरीं सोमस्य कल्पयेत् ।
इन्द्रादिलोकपालानां स्थाने स्थाने प्रकल्पयेत् ॥ ७८ ॥

1. चतुर्द्वारो A  2. पूरणीयाः T, $P_1$, $P_2$  3. रञ्जितं T
4. °समुद्रितम् T ; °समन्वितम् A



सैकते स्थण्डिले तत्र तानावाह्य समर्चयेत् ।
महामेरुं च तन्मूर्ध्नि वाराहीं मूर्तिमर्चयेत् ॥ ७९ ॥

मेरोरुत्तरपार्श्वे तु श्वभ्रं कृत्वा प्रमाणतः ।
अधः कपालं सौवर्णं न्यस्य तत्र समर्चयेत् ॥ ८० ॥

पुनरूर्ध्वकपालं च न्यस्य तस्योपरि क्रमात् ।
पूर्वोक्तेन विधानेन पुरोधा नियतः स्वयम् ॥ ८१ ॥

कुम्भान् षोडश सौवर्णान् षोडशप्रस्थपूरणान् ।
परितोऽण्डकपालस्य सूत्रवस्त्रादिवेष्टितान् ॥ ८२ ॥

स्थापयित्वा धान्यराशौ सापिधानानलङ्कृतान् ।
दिशमैन्द्रीं समारभ्य प्रादक्षिण्येन पूरयेत् ॥ ८३ ॥

पञ्चगव्यादिभिर्द्रव्यैः प्रणवेन प्रपूरयेत् ।
पञ्चगव्यं च पीयूषं दधि सर्पिस्तथा मधु ॥ ८४ ॥

हरिचन्दनतोयं च वारि चाक्षतसंयुतम् ।
कौङ्कुमं च तथा तोयं कर्पूरागरुवारि च ॥ ८५ ॥

कुशोदकं च रत्नाम्भः सर्वपुष्पोदकं[1] तथा ।
फलोदकं च धान्याम्भः सर्वतीर्थोदकं तथा ॥ ८६ ॥

सर्वगन्धोदकं चापि द्रव्याणां क्रम ईरितः ।
मेरोश्च [2]पश्चिमे भागे [3]कुण्डमग्नेः प्रकल्पयेत् ॥ ८७ ॥

आज्येन जुहुयादग्नौ शतमष्टोत्तरं पृथक् ।
वराहमूर्तिप्रभृतीरुपक्षिप्त्वा च देवताः ॥ ८८ ॥

1. सर्वमुष्णोदकं $M_2$  2. दक्षिणे T, $P_1$, $P_2$  3. कुण्डे चाग्नि A

अन्याश्च देवताश्शैलान् समुद्रान्विष्टपानि च ।
भूरादीनि तथा द्वीपभेदांश्चोद्दिश्य नामभिः ॥ ८९ ॥

तेषामाहूय तत्कार्यं गुरुणा सपुरोधसा ।
भूर्भुवः स्वरिति ब्रह्मन्नन्ते च जुहुयाद् घृतैः ॥ ९० ॥

अग्निं विसृज्य वितरेद्दक्षिणाश्च यथावसु ।
तदन्ते यजमानस्तु सर्वालङ्कारसंयुतः ॥ ९१ ॥

शुचिः समाहितो भूत्वा कृतकौतुकबन्धनः ।
प्रविश्य तत्र तद्धैममण्डं च प्राङ्मुखः स्वयम् ॥ ९२ ॥

प्रविश्यासीत देवेशं ध्यायन्नेव [1]सुधाकरम् ।
यज्ञमूर्तिं धरां देवीं बिभ्राणं [2]निजदंष्ट्रया ॥ ९३ ॥

एवं [3]ध्यायन्तमासीनं नृपं सोपस्क्रियं स्वयम् ।
आचार्यानुमतः कुम्भैः स्थापितैरभिषेचयेत् ॥ ९४ ॥

पञ्चगव्यादिभिर्द्रव्यैर्मन्त्रानुच्चार्य मन्त्रवित् ।
वसोः पवित्रमन्त्रेण पञ्चगव्याभिषेचनम् ॥ ९५ ॥

शं नो देवीरिति पयःस्नानं दध्नाभिषेचनम् ।
इषे त्वेति घृतेनाग्न आयाहीति तथा पुनः ॥ ९६ ॥

[4]अग्निमीळेति मधुना, मानस्तोक इति ब्रुवन् ।
हरिचन्दनतोयेन, तथैवाक्षतवारिणा ॥ ९७ ॥

इदं विष्णुरिति प्रोच्य कुङ्कुमक्षोदवारिणा ।
अहार्षं चेति मन्त्रेण तथा कर्पूरवारिणा ॥ ९८ ॥

---

1. सुखाकरम् $M_2$ 2. दंष्ट्रया स्वया $M_2$ 3. ध्यायंस्तमासीनं T
4. मधुना चाग्निमीळेति $P_1$, $P_2$



गायत्र्या स्नापयेदुर्वीपतिं रत्नाम्भसा ततः ।
चत्वारि शृङ्गेत्युच्चार्य तथा सर्वफलोदकैः ॥ ९९ ॥

सर्वं राजानमित्यादिमन्त्रमुच्चार्य मन्त्रवित् ।
सर्वधान्योदकेनैव शतमन्विति विद्यया ॥ १०० ॥

सर्वतीर्थाम्भसा स्नानमापोहिष्ठेति[1] विद्यया ।
[2]तरत्समन्दीत्युच्चार्य सर्वगन्धाभिषेचनम् ॥ १०१ ॥

निष्क्रान्तो नृपतिर्गर्भात् प्रोक्षितो मङ्गलाम्भसा ।
[3]शुद्धाम्बरधरश्शुद्धश्चाचान्तो दत्तदक्षिणः ॥ १०२ ॥

आचार्याय यथावित्तं विस्तारं रैमयं ततः ।
अण्डं विभज्य वितरेद्ब्राह्मणेभ्यश्चतुर्मुख ॥ १०३ ॥

दद्याद्वा विष्णवे सर्वमर्धं वा पादमेव वा ।
पौनःपुन्येऽभिषेकस्य मुक्तिः करतले स्थिता ॥ १०४ ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
हिरण्यगर्भादिविधिर्नाम विंशोऽध्यायः ॥

---

## एकविंशोऽध्यायः ॥

सिद्धान्तभेदपञ्चरात्राधिकारिव्यवस्थाविधिः ॥

ब्रह्मा :—

सिद्धान्तानां श्रुतो भेदश्चतुर्णां भगवन्मुखात् ।
[4]साम्प्रतं श्रोतुमिच्छामि व्यवस्थामधिकारिणाम् ॥ १ ॥

---

1. आपोहिष्ठादि° T, $P_1$, $P_2$ 2. उक्त्वा तरत्समन्दीयं T, $P_1$, $P_2$
3. शुक्लाम्बर° $M_2$ 4. इदानीं T, $P_1$, $P_2$

श्रीभगवान् :—

अहं ते नियमं तेषां [1]कथयिष्यामि शास्त्रतः ।
[2]जातेषु सर्वविप्रेषु मन्मुखात् कमलासन ॥ २ ॥

नानाचरणगोत्रेषु नानाकर्मपरेषु च ।
तेषां मध्ये महाभागा ऋषयोऽष्टसहस्रिणः ॥ ३ ॥

औपगायनपूर्वास्ते नानागोत्रा मुमुक्षवः ।
अधीयानाः कण्वशाखां तथा माध्यन्दिनाह्वयम् ॥ ४ ॥

तेषां बुद्धिः समुत्पन्ना मोक्षैकफलदायिनी ।
ते सर्वे सह सङ्गम्य ब्रह्माणं प्रोचुरव्ययम् ॥ ५ ॥

मोक्ष्यमाणा वयं ब्रह्मन् मोक्षोपाय[3]विवित्सया ।
शरणं त्वामिह प्राप्ता जन्ममृत्युजिगीषवः ॥ ६ ॥

औपगायन[4]मुख्यांस्तानुपासन्नांश्चतुर्मुख ।
इति ब्रुवाणानाहूय तदनुग्रहकाम्यया ॥ ७ ॥

पञ्चरात्रोक्तमार्गेषु मन्त्रसिद्धान्तवर्त्मना[5] ।
दीक्षयित्वा यथान्यायं चक्रवारिजमण्डले ॥ ८ ॥

आहूतान् दीक्षितान् ब्रह्मा कर्तव्यमिदमादिशत् ।
काण्वीं माध्यन्दिनीं शाखां शाखान्तर्हिते उभे ॥ ९ ॥

अधीध्वं मूलशाखे ते निषेकाद्याश्च संस्कृतीः ।
ताभ्यामेव त्वनुष्ठध्वं सोमयागादिकर्म च ॥ १० ॥

भगवद्ध्यानसहितं तत्समाराधनात्मकम् ।
कर्तव्यत्वेन वेदोक्तं इत्येवं फलवर्जितम् ॥ ११ ॥

1. कथयामि T 2. विप्रजातेषु सर्वेषु $M_2$ 3. °विधित्सया T
4. °मुख्यानां तापसानां $M_2$ 5. °मार्गतः A



[1]कर्तव्यमिति कुर्वाणैः कर्म निश्श्रेयसं परम् ।
प्राप्यतेऽनेन युष्माभिर्मन्त्रसिद्धान्तवर्त्मना ॥ १२ ॥

पञ्चकालं यथाशास्त्रं गृहे वा मन्दिरेऽपि वा ।
भगवत्पूजनं कार्यमद्यप्रभृति नान्यथा ॥ १३ ॥

यूयं भागवतास्तेन जाता भगवदर्चनात् ।
[2]भगवद्भक्तिकरणाद्वंशजाताश्चतुर्मुख ॥ १४ ॥

[3]नाम्ना भागवताः सन्तो दीक्षयित्वा यथाविधि ।
यथोक्तं कर्म कुर्वाणाः प्राप्नुवन्ति परं पदम् ॥ १५ ॥

शाखान्तरेषु ये मन्त्राः पावनाः परमर्षयः ।
तानप्यधीध्वं तैर्मन्त्रैरर्चयध्वमधोक्षजम् ॥ १६ ॥

आत्मार्थयजनं विष्णोः कल्पतेऽभ्युदयावहम्[4] ।
तथा परार्थयजनं ग्रामे वा पत्तने पुरे ॥ १७ ॥

स्वगृहे वा स्वतन्त्रे वा कार्यं भागवतैर्नरैः ।
आत्मनश्च परेषां च तन्निश्श्रेयसकृद् भवेत् ॥ १८ ॥

अभागवतवंशैस्तु दीक्षितैरपि मानवैः[5] ।
आत्मार्थमेव यजनं न परार्थं कदाचन ॥ १९ ॥

परार्थयजनं तेषां गर्हितं विप्रसत्तमाः ।
अभागवतवंश्योऽपि दीक्षितश्शास्त्रवर्त्मना ॥ २० ॥

1. कोशेषु ग्रन्थेषु चोपलभ्यमानः कृषिध्वमिति पाठोऽसाधुः ।
2. कारणाद्वंशजाश्च नो वंशजानां महात्मनाम् $M_2$ । 3. ते च भागवतास्सर्वे दीक्षयित्वा यथाविधि । $M_2$ 4. °अभ्युदयाय हि $M_1$ 5. शास्त्रवर्त्मना $M_2$

परार्थयजनं कुर्यादपि भागवताज्ञया ।
भगवानेव गोविन्दः साक्षाद्भागवतः स्मृतः ॥ २१ ॥

तं दृष्ट्वा विद्यया हीनमपि दुष्कृतकारिणम् ।
निर्गुणं गुणिनं वापि प्रत्युत्तिष्ठेत् कृताञ्जलिः ॥ २२ ॥

तानयाचत विश्वात्मा महर्षीनमितौजसः ।
युष्माभिः क्षिति[1]लोकेऽस्मिन् कार्यं भगवदर्चनम् ॥ २३ ॥

स्वार्थं परार्थमथवा कर्तव्यं मम शासनात् ।
इति ब्रुवाणस्तान् ब्रह्मा तत्रैवान्तरधीयत ॥ २४ ॥

ध्येयं [2]यत्तत् प्रवक्ष्यामि मन्त्रसिद्धान्तिनां नृणाम् ।
द्विभुजं चेद्वासुदेवं रेखाभिस्तलयोः करे ॥ २५ ॥

लाञ्छितं शंखचक्राद्यैः ध्यायेत्तद्द्विगुणैः पुनः ।
द्वाभ्यां कराभ्यां बिभ्राणं शंखचक्रे गदाम्बुजे ॥ २६ ॥

मुख्याभ्यामथवाभीतिदानं [3]कट्यवलंबनम् ।
इतोऽधिके भुजगणे बह्वायुधधरं हरिम् ॥ २७ ॥

वर्णेन श्यामसुभगमथवा धवलद्युतिम् ।
शैलादिवस्तुभिः क्लृप्तं बेरं चादिपदे स्थितम् ॥ २८ ॥

आसीनं वा शयानं वा गरुडारूढमेव वा ।
ध्यायेयुरर्चयेयुश्च त्रयीमन्त्रैस्त्रयीविदः ॥ २९ ॥

[4]ध्यायेत्स्वागमसिद्धान्ते स्थितं लम्बभुजद्वयम् ।
वासुदेवादयस्सर्वे निराकल्पा निरायुधाः ॥ ३० ॥

---

1. °लोकेषु $P_1$ 2. वस्तु T, $P_1$, $P_2$ 3. वा कमलासन $M_1$
4. ध्येयस्स्वागम° $M_2$



सितास्सिताम्बरधराश्चत्वारः समदिङ्मुखाः ।
एकविष्टरनिष्ठास्ते शयनासनवर्जिताः ॥ ३१ ॥

देवीभ्यां परिवारैश्च हीना योगासनेन च ।
समप्रधानषाड्गुण्यभाजो मन्त्रैर्बलादिभिः ॥ ३२ ॥

[1]प्रतिष्ठाप्य क्रमात्पूज्या नित्यं कमलसम्भव ।
बलिप्रदानरहिता नित्योत्सवविवर्जिताः ॥ ३३ ॥

पवित्रारोपणस्वापशयनोत्थानवर्जिताः ।
कर्तव्यत्वेन भुवने प्रासादे वा चतुर्मुख ॥ ३४ ॥

[2]काले मध्यन्दिनेऽछिद्रपञ्चकालपरायणैः ।
निराशैः कर्मसंन्यासकारिभिर्देवपूजनम् ॥ ३५ ॥

बलादिमन्त्रैरच्छिद्रपञ्चकालपरायणैः ।
एकाध्वना निषेकादिसंस्कारैश्च बलादिभिः ॥ ३६ ॥

चतुर्णां ब्राह्मणादीनां विहितं नयकर्म च ।
[3]द्वादशाक्षरविद्यैव तेषां विद्या न च त्रयी ॥ ३७ ॥

न सावित्री न मन्त्रोऽन्यः स्वाध्यायजपकर्मणोः[4] ।
बीजशक्त्यङ्गरहितमृषिच्छन्दोविवर्जितम् ॥ ३८ ॥

स्वरूपमेव मन्त्रस्य जपस्वाध्यायकर्मणोः ।
चतुर्णामपि वर्णानां संज्ञास्तेषां क्रमोदिताः ॥ ३९ ॥

[5]भगो हि द्विजमुख्यस्य संज्ञा वा विप्रवन्नृपे ।
वैश्यस्य वर्धनी संज्ञा मौद्गली वृषलस्य च ॥ ४० ॥

---

1. प्रभवाख्य° T, $P_1$, $P_2$ 2. काल्ये T, $P_1$, $P_2$ 3. द्वादशाक्षरमेतेषां विज्ञानं च त्रयी न च $M_2$ 4. °कर्मणि $M_2$ 5. विशेषो $M_2$

सर्वे समानाश्चत्वारो गोत्रप्रवरवर्जिताः ।
उत्कर्षो नापकर्षश्च जातितस्तेषु संमता ॥ ४१ ॥

फलेषु निःस्पृहाः सर्वे द्वादशाक्षरचिन्तकाः ।
[1]मोक्षेषु [2]निश्चयार्थाश्च सूतकाशौचवर्जिताः ॥ ४२ ॥

नाधिकारोऽस्ति सर्वत्र कर्षणादिषु कर्मसु ।
मोहात्तानि प्रयुञ्जानाः पतन्त्यकृतबुद्धयः ॥ ४३ ॥

राजराष्ट्रमनुष्याणां यजमानस्य सद्मनः ।
क्षयो भवति तेनैते न कुर्युः कर्षणादिकम् ॥ ४४ ॥

याचेत मन्त्रसिद्धान्ते दीक्षितं विप्रसत्तमम् ।
पूजार्थमात्मनो बिम्बप्रतिष्ठाकरणादिषु[3] ॥ ४५ ॥

सोऽपि बीजादिरहितं द्वादशाक्षरविद्यया ।
कुर्यात्प्रतिष्ठामाचार्यः पूजार्थं मन्त्रवित्तमः ॥ ४६ ॥

[4]एकायनश्चतुर्मूर्तिं प्रतिगृह्य समर्चयेत् ।
[5]अर्चनं च चतुःस्थाने वारिस्थण्डिलबिम्बवह्निषु ॥ ४७ ॥

नाधिकारोऽस्ति मन्त्रेषु बीजपिण्डपदादिषु ।
चतुर्णां मौद्गलादीनां विदुषां द्वादशाक्षरम् ॥ ४८ ॥

प्राणानामपि निर्याणे न स्पृशेन्न दहेच्छवम् ।
पुत्रपौत्रादिरहितं संत्यजेत्तं काष्ठवद्बहिः ॥ ४९ ॥

मूर्त्यन्तरार्चनं तेषां प्रत्यवायाय कल्पते ।
सिद्धान्तान्तरमार्गेण स्थापितं बिम्बमालये ॥ ५० ॥

1. मोक्षैक° T, $P_1$, $P_2$ 2. निश्चिताः सर्वे निश्चयारशाव° $M_2$, $P_2$ 3. °कर्षणादि वा $M_1$ 4. एकायनस्तु तां मूर्तिं T, $P_1$, $P_2$ 5. अभ्यर्चनं चतुःस्थाने $M_2$



अज्ञानादथवा मोहादेकायनविधानतः ।
अर्चय[1]न्नापदः सर्वा आप्नोतीह परत्र च ॥ ५१ ॥

प्रदक्षिणप्रणामादि राद्धान्तेऽन्यत्र केवलम् ।
विहितं नार्चनं कार्यं राजराष्ट्रक्षयावहम् ॥ ५२ ॥

न दीक्षा नैव देहस्य दहनादिविशोधनम् ।
नाङ्गन्यासादि सकलं नेष्टमेकायनाध्वनि ॥ ५३ ॥

एकायने प्रविष्टानां त्रैविद्यानामयं क्रमः ।
तन्त्रसिद्धान्त[2]मार्गेण सम्प्रत्याचार उच्यते ॥ ५४ ॥

चतुर्णामपि वर्णानामितरेषां च तद्भुवाम् ।
दीक्षा समैव सर्वेषामाचारस्तन्त्रवर्त्मना ॥ ५५ ॥

निषेकादिश्च संस्कारस्तेषां तन्त्रोक्तवर्त्मना ।
त्यक्त्वा त्रयीं तन्त्रमेव प्रपद्य शरणं स्थिताः ॥ ५६ ॥

सान्तरालमनुष्ठानं पञ्चकालोदितं तथा ।
यतस्तन्त्रान्तर [3]इव नृणां कमलसम्भव ॥ ५७ ॥

तत्त्वसंहारजनने न्यासश्च करदेहयोः ।
योगविष्टरक्लृप्तिश्च नव[4]पद्मप्रकल्पनम् ॥ ५८ ॥

मूर्तयोर्नवपद्मेषु तास्वधिष्ठानमध्यमे ।
[5]ता वीक्षन्ते दिशो वापि मूर्तयोऽष्टौ यथायथम् ॥ ५९ ॥

[6]यादृशी मध्यमा मूर्तिरीक्षते सेश्वरी मता ।
यां च वालोक्य पुरुषस्समाराधनकर्मणि ॥ ६० ॥

1. आपदं सर्वां T, $P_1$, $P_2$ 2. °मार्गे तु T, $P_1$, $P_2$ 3. °भुवां T, $P_1$, $P_2$ 4. सित° $M_1$ 5. तामीक्षन्ते T, $P_1$, $P_2$ 6. यां दिशं T, $P_1$, $P_2$

आस्तेऽसौ पौरुषी ज्ञेया प्राजापत्या च वासवी ।
योगविष्टरपादानां धर्मादीनां प्रकल्पने ॥ ६१ ॥

[1]आलयान्तः परिवाराणां सुपर्णीतनयस्य च ।
बलिप्रदानपीठस्य गोपुरस्य चतुर्मुख ॥ ६२ ॥

बाह्यानामपि चैतेषां प्राची स्यादैश्वरी हरित् ।
बाह्यानां परिवाराणामन्येषां परिकल्पने ॥ ६३ ॥

प्राजापत्यैव दिक् प्राची दिवसंमोहे[2] तु पौरुषी ।
प्राच्यादिकां समाहृत्य[3] परिवारप्रकल्पनम् ॥ ६४ ॥

द्विषट्काक्षरपूर्वाणां बीजशक्त्यङ्गसंयुतम् ।
ऋषिच्छन्दोविहीनश्च मन्त्राणां जप इष्यते ॥ ६५ ॥

वर्णानामितरेषां च सममाराधनक्रमः ।
नवानामपि मूर्तीनां मूर्त्यन्तरगणस्य च ॥ ६६ ॥

प्रादुर्भावगणस्यापि वर्णाः स्त्र्यव्यक्तयो मताः ।
न ध्वजारोहणं नापि मासाद्युत्सवसम्भवः ॥ ६७ ॥

केवलं शयनोत्थाने बलिहोमादिवर्जितः ।
प्रादक्षिण्येन गमनं ग्रामादेः कौतुकोत्सवः ॥ ६८ ॥

नैमित्तिकं चतुःस्थाने स्वातन्त्र्येणार्चनं हरेः ।
चक्राब्जमण्डले कुम्भे प्रतिमायां च पावके ॥ ६९ ॥

तन्त्रान्तरे च सिद्धान्ते सम्प्रत्याचार उच्यते ।
त्रिवक्त्रं वा चतुर्वक्त्रमधिकाननमेव वा ॥ ७० ॥

1. अथान्तः T,P1,P2  2. °समूहे तु पौरुषी P1,P2  3. समाश्रित्य P1,P2



योगपीठे स्थितं देवं परिवारैश्च सेवितम् ।
पिण्डमन्त्रैः कलामन्त्रैर्बीजशक्त्यङ्गसंयुतैः ॥ ७१ ॥

ऋषिच्छन्दोविहीनैश्च चत्वारो ब्राह्मणादयः ।
समर्चयेयुस्सर्वेषां निषेकाद्यखिलक्रियाः ॥ ७२ ॥

तन्त्रान्तरोक्तमार्गेण कार्याः [1]त्रय्यात्मनापि च ।
सिद्धान्तानां चतुर्णां तु साङ्कर्यं व्यसनावहम् ॥ ७३ ॥

सिद्धान्तेषु चतुर्ष्वेकं पूर्वैर्नृभिरनुष्ठितम् ।
त्यक्त्वा समाश्रयेदन्यं नरो भवति किल्बिषी ॥ ७४ ॥

तस्माज्जन्म[2]प्रभृत्येकराद्धान्तनियतो भवेत् ।
अन्यथा कुलमात्मानं सर्वं नाशयति ध्रुवम्[3] ॥ ७५ ॥

मन्त्रमण्डलकुण्डादिक्रियामुद्रोपचारकैः ।
योगं नयति यो मोहात् स्वसिद्धान्तोक्तवर्त्मना ॥ ७६ ॥

सोऽपि स्वकुलजान् [4]धर्मान् परमात्मान[5]मञ्जसा ।
नयेन्निरयमत्युग्रं पुरुषान् पुरुषाधमः ॥ ७७ ॥

निष्फला च क्रिया तस्य प्रत्युतानर्थकारणम् ।
[6]कुप्येच्च देवस्तत्कोपो राजराष्ट्रक्षयावहः ॥ ७८ ॥

कर्ता कारयिता चोभौ [7]सान्वयौ द्वौ विनश्यतः ।
न सन्निधानं च हरेर्धाम्नि हानिश्च सम्पदाम् ॥ ७९ ॥

तस्मान्न सङ्करः कार्यो राद्धान्तोदितकर्मणः ।
मन्त्रसिद्धान्तमुख्येषु चतुर्ष्वपि यथापुरम् ॥ ८० ॥

1. त्रय्युक्तवर्त्मना A; त्रय्यन्तवर्त्मना M2  2. °प्रभृत्येव कालान्त° A  3. स्वयम् A  4. सर्वान् M1,P1,P2  5. °अब्जज M2  6. अकर्मणोऽस्य तत्कोपो A  7. सान्वयं विनशिष्यतः M2; सान्ववायौ विनश्यतः T,P1,P2

अनुतिष्ठन्ति ये कर्म समाराधन[1]मच्युतम् ।
असङ्करेण [2]ते ह्येवं सम्बन्धार्हा नरोत्तमाः ॥ ८१ ॥

येऽनभिज्ञास्तु देवेशं शङ्खचक्रगदाधरम् ।
तत्त्वेन येऽपि पुरुषा महोपनिषदीरितम् ॥ ८२ ॥

अर्थं न जानन्त्यधमास्तैः सम्बन्धं [3]विवर्जयेत् ।
तस्मात्सर्वप्रयत्नेन पञ्चरात्रोदिताः क्रियाः ।
येऽनुतिष्ठन्ति तैरेव सम्बन्धोऽभ्युदयावहः ॥ ८३ ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
सिद्धान्तभेदपञ्चरात्राधिकारिव्यवस्थाविधिर्नाम एकविंशोऽध्यायः ॥

—: * :—

## द्वाविंशोऽध्यायः ॥

### मुद्रालक्षणविधिः ॥

ब्रह्मा :—

कीदृशी भगवन् मुद्रा तद्भेदा[4]श्चैव कीदृशाः ।
प्रयोजनं वा किं तस्याः कथ्यतां तदशेषतः ॥ १ ॥

श्रीभगवान् :—

अङ्गुलीरचना[5]भेदो मुद्रा यस्मात्प्रदर्शिता[6] ।
[7]हिंसकानामशेषाणां मुदं द्रावयति क्षणात् ॥ २ ॥

---

1. °उत्तमम् T, P1, P2 2. तेऽन्योन्यं T, P1, P2 ; तद्योगं M2
3. विसर्जयेत् M2 4. °चापि T, P1, P2 5. भेदाः° M2 6. प्रदर्शितात् T, P1 ; प्रदर्शिताः M2 7. साङ्गुलीनामशेषाणां मुद्रा वारयति क्षणात् A



ततो [1]मुद्रा निरसनं तेषां [2]तस्याः प्रयोजनम् ।
प्रीणनं चापि देवानां कर्मणा सापि दर्शिता ॥ ३ ॥

प्रयोक्तव्याश्च रहसि न बहिर्जनसंसदि ।
मन्त्रमण्डलमुद्राणां गुप्तिरेषा सनातनी ॥ ४ ॥

गन्धलिप्तौ करौ कृत्वा मुद्रादर्शनमाचरेत् ।
अनामिकामध्यमयोः प्रवेश्याङ्गुष्ठमायतम् ॥ ५ ॥

विधाय मुष्टिं हृदये न्यसेद्धृदयमुद्रिकाम्[3] ।
सैषा मुष्टिमधो बध्वा स्थापयित्वा च मूर्धनि ॥ ६ ॥

अङ्गुष्ठाग्रेण हननं तर्जन्या शीर्षमुद्रिका ।
ऊर्ध्वाङ्गुष्ठं दृढं मुष्टिं बद्ध्वा न्यस्येच्छिखापदे ॥ ७ ॥

शिखामुद्रेयमुदिता, वर्ममुद्रा तु कथ्यते ।
प्रवेश्याभ्यन्तराङ्गुष्ठं बद्ध्वा मुष्टिप्रवेशनम् ॥ ८ ॥

उन्नम्य किञ्चिदग्रे च विततास्तेन मुष्टिना ।
भावयेद्वर्मणो [4]बद्धं सैषा कवचमुद्रिका ॥ ९ ॥

तर्जन्याङ्गुष्ठशिरसि स्फोटयेच्चक्रवत् [5]स्मरन् ।
दिक्षु सर्वासु शेषाभिर्मुष्टिं बद्ध्वा चतुर्मुख ॥ १० ॥

सैषास्त्रमुद्रा विज्ञेया, शिखामुद्रामधोमुखीम् ।
[6]विन्यसेत्तां भ्रुवोर्मध्ये नेत्रमुद्रेयमीरिता ॥ ११ ॥

षडङ्गमुद्रास्वेतासु हस्तस्सर्वत्र दक्षिणः ।
कनिष्ठादित्रिभिर्बद्ध्वा मुष्टिं साङ्गुष्ठमुन्नताम् ॥ १२ ॥

---

1. मुदा निरसनं A, T, P1 2. सर्व° A 3. °मुद्रिका T, P1, P2
4. बन्धं T 5. क्रमात् M2, P2 6. विन्यस्यैनां M1

विधाय तर्जनीं तेन भ्रामयेदाशु चक्रवत् ।
अग्निप्राकारमुद्रेयं तयैवात्माभिरक्षणम् ॥ १३ ॥

नाभेरधस्ताद्विन्यस्य सव्यं करतलं पुनः ।
उत्तानमितरं तस्य विन्यसेदुपरीदृशी[1] ॥ १४ ॥

योगमुद्रा, करतलं सव्यं नाभेरधस्ततः ।
अवाङ्मुखं तदुपरि सव्येतरतलं पुनः ॥ १५ ॥

समाङ्गुष्ठं विरचयेद्योगसम्पुटमुद्रिका ।
योगाभ्यासेन[2] तत्त्वानां संहारोत्पतनेऽपि च ॥ १६ ॥

मुद्राद्वयमिदं ब्रह्मन् कथितं योगिनां हितम् ।
योगसम्पुट[3]मुद्रेयं मुद्रिता चटवत् कृता ॥ १७ ॥

ऊर्ध्वं स्यात्कुम्भमुद्रैषा तया स्नानं समाचरेत् ।
तर्जन्यानामिकाग्रं तु वेष्टयित्वा क्रमेण तत् ॥ १८ ॥

तथाङ्गुष्ठ[4]कनिष्ठे तु ज्ञेया संहारमुद्रिका ।
तत्त्वानां संहृतौ चैव देवतोद्वासने तथा ॥ १९ ॥

एषा मुद्रा प्रयोक्तव्या सर्वकर्मसु सर्वदा ।
संहताभिश्च तिसृभिरङ्गुलीभिश्च संहतिः ॥ २० ॥

विमुक्ततर्जनी भूयः सृष्टिमुद्रेति कीर्तिता ।
आवाहने [5]तत्त्वसृष्टौ मुद्रैषा परिकीर्तिता ॥ २१ ॥

अङ्गुष्ठतर्जनीभ्यां तु संयोगस्तत्त्वमुद्रिका ।
तत्त्वन्यसनकाले च मुद्रैषा [6]परिकीर्तिता ॥ २२ ॥

---

1. ०ईदृशम् $M_2$   2. योगाभ्यासे च $T, P_1, P_2$   3. ०मुद्रैव च्छिद्रिता $M_2$
4. ०कनिष्ठौ $P_1, P_2$   5. च सृष्टौ च A   6 समुदाहृता A



ज्ञानमुद्रापि सैवैषा स्यादज्ञानतमोपहा ।
[1]उभयोः करयोर्मध्यं मध्यमाभ्यां तु संस्पृशेत् ॥ २३ ॥

उत्तानितौ करौ कृत्वा न्यास[2]मुद्रेति कीर्तिता ।
देवात्मदेहयोर्मन्त्रे न्यासमुद्रेयमीरिता ॥ २४ ॥

अङ्गुष्ठाभ्यां तु करयोस्तर्जन्योरुभयोरपि ।
मध्यमाभ्यां स्पृशेदन्यां विस्तृतानि यथा तथा ॥ २५ ॥

जपमुद्रेति विज्ञेया जपकाले प्रदर्शयेत् ।
अङ्गुलीभिस्समस्ताभिर्दक्षिणेतरहस्तयोः ॥ २६ ॥

सम्पुटीकरणं ब्रह्ममुद्रा संशब्दिता बुधैः ।
अङ्गुष्ठे द्वे कनिष्ठे द्वे तथा स्यात् तर्जनी द्वयोः ॥ २७ ॥

सह[3]युक्ताग्रताश्लिष्टा[4] विष्णुमुद्रेति कीर्तिता ।
सा चैव श्लेषिताङ्गुष्ठा[5] समस्तेन परस्परम् ॥ २८ ॥

उभयाङ्गुष्ठमुद्रा सा रुद्रस्य कथिता तव[6] ।
श्रोत्रे पिधाय पाणिभ्यां दण्डवद्दक्षिणं करम् ॥ २९ ॥

प्रसारयेद् गुरूणां त्वभिवादनकर्मणि ।
सव्यहस्ताङ्गुलीस्सव्याः[7] कर्णे न्यस्य तथेतरम् ॥ ३० ॥

---

1. कोशेषु ग्रन्थेषु च ऊर्ध्वयोरिति पाठः । अत्र उभयोरिति पाठः सनत्कुमार-संहितायां (ऋषिरात्रे २.१८) दृष्टः साधुः ।   2. ०मुद्रा निगद्यते $T, P_1, P_2$; ०मुद्रेति कथ्यते $M_2$   3. ०युक्ताग्रगौ तच्छिष्टौ $T, P_1, P_2$; सङ्गयुक्ताग्रगाः शिष्टाः $M_2$
4. कोशेषु ग्रन्थेषु च शिष्टेति पाठः । सनत्कुमारसंहितानुसारेण (ऋषिरात्र २. ३४) श्लिष्टा इति पाठेन भाव्यम् ।   5. कोशेषु ग्रन्थेषु च शेषिता इति पाठः दृश्यते । सनत्कुमारसंहितानुसारतः (ऋषिरात्र 2. 35) श्लेषिता इति पाठेन भाव्यम् ।
6. तथा T   7. सर्वाः $M_1$

प्रसरेद्विघ्नराजस्य मुद्रा विघ्नविनाशिनी ।
अन्तस्तु तर्जनीयुग्मं संहताङ्गुष्ठकद्वयम् ॥ ३१ ॥

मुद्रा भागवती सा, स्यात्करयुग्मं तु सम्पुटे ।
कृते, वराहमुद्रा सा सर्वसिद्धिकरी शुभा ॥ ३२ ॥

गुरुपङ्क्तिक्रमे ब्रह्मन् सैषा मुद्रा प्रदर्शिता ।
अपसव्ये करतले संस्मरेद्रक्तपङ्कजम् ॥ ३३ ॥

तन्मध्ये चिन्तयेदग्निं त्रिकोणं तेजसां निधिम् ।
अवाङ्मुखं करतलं कृत्वा द्रव्योपरि न्यसेत् ॥ ३४ ॥

ज्ञेया दहनमुद्रैषा द्रव्यशुद्धिप्रदा सदा[1] ।
सव्ये करतले श्वेतपङ्कजं षोडशच्छदम् ॥ ३५ ॥

कलाषोडशसंयुक्तं[2] शशिनं पङ्कजासन ।
तन्मध्ये चिन्तयित्वा तु स्रावितं चामृतं स्मरेत् ॥ ३६ ॥

तेनामृतेन तद्भस्म क्षालितं तूत्थितं स्मरेत् ।
आप्यायनस्य मुद्रैषा कथिता कमलासन ॥ ३७ ॥

अङ्गुष्ठे द्वे कनिष्ठे द्वे तथा स्यात्तर्जनी द्वयोः ।
शिष्टं प्रसारयेद्ब्रह्मन्नङ्गुलानि करद्वये ॥ ३८ ॥

मध्यमां दक्षिणकरेऽनामिकां च तथेतरे ।
[2]संहृत्य प्रसरेच्छेषं करयोरुभयोरपि ॥ ३९ ॥

ज्ञेया सुरभिमुद्रा सा[3] यागद्रव्यविशोधनी ।
हस्ताभ्यामञ्जलिं कृत्वा ईषद्विकसितं स्फुटम् ॥ ४० ॥

---

1. °प्रदायिनी $M_2$  2. °सम्पूर्णं $M_1$  3. स्यात् $M_2$



आवाहनस्य मुद्रैषा दर्शनात्सन्निधिं भजेत्[1] ।
हृदये शिरसि द्वेऽपि(?) सम्पुटाञ्जलिरूर्ध्वगा ॥ ४१ ॥

प्रणाममुद्रा सा ज्ञेया क्षिप्रं देवप्रसादिनी ।
सा ज्ञेया वासुदेवादिमूर्तीनां कमलासन ॥ ४२ ॥

चतुर्विंशतिमूर्तीनां मीनादीनां तथैव च ।
मुद्रैषा चान्यमूर्तीनां कथिता कमलासन ॥ ४३ ॥

प्रसार्य करजान् सर्वान् मणिबन्धौ समेत्य तौ[2] ।
अन्तःप्रविश्य चाङ्गुष्ठौ तयोः पृष्ठमनुस्पृशेत् ॥ ४४ ॥

प्रसारयेत्पद्ममुद्रामासने सम्प्रदर्शयेत् ।
श्रियादीनां च सर्वासां देवीनां चतुरानन ॥ ४५ ॥

प्रोक्ता कमलमुद्रा [3]सा सर्वकामफलप्रदा ।
निबध्य दक्षिणाङ्गुष्ठं वामहस्तस्य मुष्टिगम् ॥ ४६ ॥

कृत्वा चाङ्गुष्ठतर्जन्यौ संयुक्ते प्रसृते समे ।
तिस्रस्तु [4]दक्षिणस्यान्या बध्नीयान्मुष्टिमूर्ध्वगाः ॥ ४७ ॥

शङ्खमुद्रेयमुदिता ज्ञानदा मोक्षदाचिरात् ।
मणिबन्धसमौ हस्तौ तिर्यक् सम्भ्राम्य च[5] क्रमात् ॥ ४८ ॥

पर्यायेण प्रयोक्तव्या चक्रमुद्रा महोदया ।
मुष्टिं कृत्वा तु हस्ताभ्यामङ्गुष्ठौ [6]विततावुभौ ॥ ४९ ॥

मध्यमाङ्गुलियुग्मं तु [7]ऋजुमूर्ध्वं प्रसारयेत् ।
शेषाभिरङ्गुलीभिस्तु बन्धयेयुः परस्परम् ॥ ५० ॥

---

1. सन्निधिर्भवेत् $M_2$  2. तु T  3. स्यात् $M_2$  4. दक्षिणस्यान्यां $M_2$ दक्षिणन्यासा T, $P_1$  5. चक्रवत् $M_1$  6. विनतौ $M_2$  7. दीर्घीकृत्य $M_2$

संश्लिष्टौ कूर्परौ द्वौ तु गदामुद्रेयमीरिता ।
तर्जन्यग्रं मध्यमया संस्पृशेच्चापमुद्रिकाम्[1] ॥ ५१ ॥

मुष्टिं कृत्वा वामहस्तमङ्गुष्ठमृजुमूर्ध्वतः ।
अपसव्यकरेणैव तदङ्गुष्ठं तु बन्धयेत् ॥ ५२ ॥

प्रसार्य दक्षिणाङ्गुष्ठं ज्ञेया मुसलमुद्रिका ।
कनिष्ठाङ्गुलिपूर्वं तु संहृत्याङ्गुष्ठकेन तु ॥ ५३ ॥

निबध्य तर्जनीं भूयस्तदग्रं नतमेव च ।
खड्गमुद्रा तु सा ज्ञेया सर्वदुष्टभयङ्करी ॥ ५४ ॥

हस्ताभ्यां लम्बयेद्भ्रमन्नङ्गुल्यग्रैः परस्परम् ।
बन्धयेद्वनमाला [2]सा अङ्गुष्ठौ द्वौ तु संहरेत् ॥ ५५ ॥

आखण्डलादिदेवानां मुद्रा चाञ्जलिसंज्ञिता ।
उभौ करतले पृष्ठौ संश्लिष्टौ तु कनिष्ठकौ ॥ ५६ ॥

बन्धयेत्तर्जनीयुग्मं प्रसरेत्तुण्डवत् क्रमात् ।
अङ्गुष्ठौ द्वौ पादयुग्ममधस्ताल्लम्बयेत् क्रमात् ॥ ५७ ॥

मध्यमानामिकाभ्यां तु करयोरुभयोरपि ।
पक्षवच्चालनं कुर्याज्ज्ञेया गरुडमुद्रिका ॥ ५८ ॥

कनिष्ठादित्रयं ब्रह्मन् संहृत्याङ्गुष्ठकेन च ।
निबध्य तर्जनीं भूयो विष्वक्सेनस्य मुद्रिका ॥ ५९ ॥

प्रसार्य करजान् सर्वान् विरलानूर्ध्वगामिनः ।
कृत्वा हस्तस्य चायामं तदग्रान् कुञ्चयेत्क्रमात् ॥ ६० ॥

1. धनुमुद्रिकाम् $M_1$   2. स्यात् T, $P_1$, $P_2$



फणिफणाग्रसदृशा ज्ञेयानन्तस्य मुद्रिका ।
चण्डादीनां भवेन्मुष्टिमुद्रैषा बलिमुद्रिका ॥ ६१ ॥

अङ्गुष्ठानामिकाभ्यां तु तथा स्याद्ब्रह्ममुद्रिका ।
मुष्टिमुद्रा तु मुष्टिस्स्यादङ्गुष्ठेन तु वेष्टिता ॥ ६२ ॥

ज्ञानमुद्रेति विज्ञेया सैव मुक्तकनिष्ठिका ।
गन्धमुद्रेति विज्ञेया विमुक्तानामिका च सा ॥ ६३ ॥

पुष्पमुद्रेति विज्ञेया विमुक्ता मध्यमा तथा ।
मध्यमाङ्गुष्ठशिरसि सङ्गतिर्ह्यग्रपर्वणा ॥ ६४ ॥

यज्ञोपवीतमुद्रा स्यादङ्गुष्ठेन कनिष्ठिका ।
आकल्पमुद्रिका ज्ञेया विष्णोः प्रीतिकरी शुभा ॥ ६५ ॥

संहृताङ्गुलीनां तु कृत्वा व्यतिकराङ्गुलीः ।
सहैवोर्ध्वीकृताङ्गुष्ठौ कराभ्यां धूपमुद्रिका ॥ ६६ ॥

ऊर्ध्वं तु मध्यमां कृत्वा संहृत्याङ्गुष्ठमेव च ।
तर्जन्यनामिकाभ्यां तु संहृत्य तु कनिष्ठिकाम् ॥ ६७ ॥

तेनैव वामहस्तेन दक्षिणेन कृता [1]तु या ।
दीपमुद्रेति सा प्रोक्ता देवदेवप्रियाधिका ॥ ६८ ॥

अन्येषामुपचाराणां मुद्रा [2]स्यात्सा कृताञ्जलिः ।
या चाप्यूर्ध्वकृताङ्गुष्ठा शेषाभिर्मुष्टिभिः कृता॥ ६९ ॥

सा ज्ञेया प्रतिमामुद्रा, देवदेवप्रियावहा[3] ।
उत्तानीकृत्य हस्तं च वक्रिताग्राङ्गुलिभिः क्रमात् ॥ ७० ॥

1. तथा $M_2$   2. सा स्यात् $P_1$, $P_2$   3. सा चैषा यानमुद्रिका $M_1$

अङ्गुष्ठं च पृथक्कृत्वा ज्ञेया स्वागतमुद्रिका ।
सा चैव प्रार्थनामुद्रा सा चैषा दानमुद्रिका ॥ ७१ ॥

पञ्चाङ्गुलीनामग्रं तु संयोज्य कमलासन ।
अन्वारब्धेन वामेन पाणिना दक्षिणेन च ॥ ७२ ॥

निवेद्य परमान्नादिमुद्रा सा ग्राससंज्ञिता ।
मध्यमानामिकाभ्यां त्वङ्गुष्ठाग्रेण सङ्गतिः ॥ ७३ ॥

कनिष्ठातर्जनीयुग्मं [1]दीर्घं कृत्वा यथातथा ।
तिलव्रीहियवादीनां होमकर्मणि शस्यते ॥ ७४ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे मुद्रालक्षणविधिर्नाम द्वाविंशोऽध्याय ॥

---

## त्रयोविंशोऽध्यायः ॥

### मातृकाद्यर्थवर्णनम् ॥

**ब्रह्मा :—**

संज्ञाभेदस्तु वर्णानां मन्त्रोद्धारश्च कीदृशः ।
प्रयोजनं च किं तस्य कथ्यतां तदशेषतः ॥ १ ॥

**भगवान् :—**

[2]अहं ते कथयिष्यामि शृणु [3]सर्वं यथातथम् ।
ह्रस्वदीर्घविभागेन भिन्नाः पद्मज मन्मुखात् ॥ २ ॥

अकाराद्याः स्वरा जाताः क्रमादन्येऽर्धमातृकाः ।
ककाराद्याश्च चक्रे ते न्यस्य पूज्याः परिष्कृते ॥ ३ ॥

1. दीर्घीकृत्य यथातथम् T, $P_1$, $P_2$ 2. हन्त ते $M_1$ 3. गुह्यं $M_2$



प्रशस्ते निर्जने [1]गुप्ते भूभागे [1]शोभने समे ।
हस्तद्वयेन विस्तीर्णं स्थण्डिलं चतुरश्रकम् ॥ ४ ॥

दर्पणोदरसङ्काशमुन्नतं चतुरङ्गुलैः ।
मृद्भिः [3]पिधाय सुषिरं[4] गोमयेनोपलिप्य च ॥ ५ ॥

प्रोक्ष्य चक्रं विधातव्यं षोडशारपरिष्कृतम् ।
नाभिनेमिसमायुक्तं चन्दनक्षोदरेखया ॥ ६ ॥

तन्मध्ये छन्दसामादिररभूषु स्वरास्तथा ।
स्पर्शाक्षरं नाभिमध्ये नेमिमध्ये च यादयः ॥ ७ ॥

एवं न्यस्तेषु वर्णेषु द्वादशाक्षरविद्यया ।
अर्घ्याद्यैः सकलैर्भोगैर्वर्णात्मानं समर्चयेत् ॥ ८ ॥

चक्रसंस्थितवर्णानां नामभेदः प्रदर्श्यते ।
उद्गीथश्छन्दसामादिः प्रणवस्तारकस्तथा ॥ ९ ॥

ब्रह्मा च ब्रह्मकोशश्च व्यापी चोङ्कार इत्यपि ।
नामानि प्रथितान्यष्टावकारो विष्णुरुच्यते ॥ १० ॥

ओङ्कारादिश्चाप्रमेय आकारो मधुसूदनः ।
आदिदेवो गोपनश्च स्यादिकारस्त्रिविक्रमः ॥ ११ ॥

माया बन्धुश्च रामश्च कथ्यते तदनन्तरम् ।
पञ्चबिन्दुर्महामाया वामनः स्मर्यते तथा ॥ १२ ॥

उकारो भुवनाह्वानः श्रीधरश्चोदयस्तथा ।
ऊकारश्चोर्ध्वलोकेशो हृषीकेशो [5]गुहालयः ॥ १३ ॥

1. शुद्धे $M_1$ 2. शोधिते A 3. विधाय $M_2$, $P_2$; विहाय A, $P^1$
4. सुसमं $M_2$ 5. गुहाशयः $M_2$

ऋकार ऋतधामा च पद्मनाभस्तथोच्यते ।
ॠकारः पीठनामा स्याद्योगी दामोदरस्तथा ॥ १४ ॥

ऌकारः केशवो गोप्ता [1]प्रज्ञाधारो महेश्वरः ।
ॡकारो दीर्घघोणश्च[2] नारायणसमाह्वयः ॥ १५ ॥

सम्प्रसारणनामा स्यादेकारो माधवाह्वयः ।
देवदत्तो मृगेशः स्यादैकारो [3]गोधनः स्मृतः ॥ १६ ॥

गोविन्दो वीरसेनश्च स्यादोकारश्चतुर्मुख ।
ओतदेहो वासुदेवो ब्रह्मसाधन इत्यपि ॥ १७ ॥

औकार औषधाह्वान और्वः सङ्कर्षणो मनुः ।
अंकारः कपिलाक्षश्च प्रद्युम्नो देवता स्मृतः ॥ १८ ॥

अःकारश्चानिरुद्धाह्वः कलान्त[4]स्सर्गिसंज्ञितः ।
ककारः कमलो ब्रह्मा करालश्शङ्खिनः स्मृतः ॥ १९ ॥

खकारः [5]स्वर्वदेहश्च चक्री गरुडवाहनः ।
गदध्वंसी गकारश्च गदी पञ्चात्मकः स्मृतः ॥ २० ॥

पद्मपाणिर्घकारस्तु पञ्चात्मा गजवाहनः ।
ङकारश्शार्ङ्गपाणिश्च एकदंष्ट्रः कपिध्वजः ॥ २१ ॥

वक्रतुण्डः खड्गधरश्चकारः प्रेतनायकः ।
छकारश्छलविध्वंसी स्वच्छन्दः कुण्डली स्मृतः ॥ २२ ॥

मुसली जन्महन्ताच जकारः ककुभः स्मृतः ।
झकारः सामवेदात्मा [6]झषाशी च सुवर्णभाः ॥ २३ ॥

1. प्रजाधरो $M_2$ 2. °घोषश्च $M_2$ 3. धनदः $M_2$ 4. सर्गिसंज्ञिकः $T, P_1, P_2$; स्वर्गसंज्ञिकः $M_2$ 5. सर्व° $M_2$ 6. सुवर्णो झषसंज्ञिकः A; झषांशी वसुवर्णभाः $M_2$



ञकारश्चन्द्रधवलः पाशपाणिर्भृगुः स्मृतः ।
टकारो हृदयाह्लादी खेटकी पर्वतः स्मृतः ॥ २४ ॥

ठकारः कौस्तुभो मेधी तोमरो दुस्सहः स्मृतः ।
डकारः पुण्डरीकाक्षो [1]झषो भूमिर्वनालयः ॥ २५ ॥

ढकारः पुष्पभद्रश्च दृढकर्मा प्रतर्दनः ।
णकारो वनमाली [2]स्यात्प्रचण्डस्सुमुखः स्मृतः ॥ २६ ॥

एकनेत्रस्तकारः स्याद्वैराजो [3]विजयः स्मृतः ।
थकारस्सर्वरोधश्च रसात्मा सुप्रतिष्ठितः ॥ २७ ॥

दकारो वैधरो दृष्टिरत्रिस्सत्रिपुरान्तकः ।
धकारो धनदः पुण्यः सुभगो मोहनाशनः ॥ २८ ॥

नकारो भद्रपाणिः स्याद्विभ्रशो मानुषेश्वरः ।
पकारः पापहननः पवित्रः पश्चिमाननः ॥ २९ ॥

फकारः फुल्लनयनः शिखण्डी स्याद्विक्रमणः ।
बकारो जृम्भलो ह्रस्वो मतिमान् कालनेमिजित् ॥ ३० ॥

भल्लायुधो भकारश्च सुभद्रः सूक्ष्मलोचनः ।
मकारो मन्दरो दक्षो माधवीपाटलप्रियः ॥ ३१ ॥

यकारः पुरुषात्मा स्याद्वायुश्शङ्खश्चतुर्गतिः ।
रेफोऽनलो महाज्वालो विश्वात्मा सर्वदाहकः ॥ ३२ ॥

लकारः पीतवर्णाभो महेन्द्रः पुलहः स्मृतः ।
वकारो वरुणः कुम्भः पीयूषात्मा सुधाकरः[4] ॥ ३३ ॥

1. मौसलोऽखण्डविक्रमः A 2. च शास्ता वैकुण्ठपालकः A 3. स्रग्धरः स्मृतः A 4. कोशेषु ग्रन्थेषु चोपलभ्यमानः सुधारस इति पाठो यद्यपि बोधमावहति, अथापि सुधाकर इति प्रसिद्धपदत्वेन पाठेन समीचीनेन भाव्यमित्यूह्यते ।

शकारः शुभदो लक्ष्मीः श्रीवत्सो वित्तवर्धनः ।
षकारः क्रोधरूपी स्यादुमात्मा शत्रुसूदनः ॥ ३४ ॥

पूर्णचन्द्रः कलात्मा स्यात् सकारश्शुक्लसंज्ञितः ।
द्वादशात्मा हकारः स्याद्दीप्तिमान् भास्करः स्मृतः ॥ ३५ ॥

ळकारो डुण्डुभो [1]भर्गो विष्कम्भो [2]विषमध्वनिः ।
क्षकारो गरुडोऽनन्तः कूटो नरहरिः स्मृतः ॥ ३६ ॥

अनुस्वारो ध्रुवो बिन्दुर्यष्टिश्चन्द्रार्ध उच्यते ।
स्वाहाकारो हुतान्नश्च ठेठेति[3] परिकीर्तितः ॥ ३७ ॥

नमस्कारो नतिर्वर्णसंज्ञा इत्यादयः स्मृताः ।
चक्रसंस्थितवर्णानां देवता कथ्यते क्रमात् ॥ ३८ ॥

सर्वेषामपि वर्णानामकारः कारणं यतः ।
सर्वकारणरूपत्वाद्विष्णुस्तस्याधिदेवता ॥ ३९ ॥

आकारस्य मधुद्वेषी स्यादिकारस्त्रिविक्रमः ।
ईकारो वामनो देवस्तथोकारः श्रियः पतिः ॥ ४० ॥

ऊकारस्य हृषीकेशो वर्णस्य स्यादनन्तरम् ।
पद्मनाभ ऋकारस्य देवो दामोदरो भवेत् ॥ ४१ ॥

[4]ॠकारः केशवो देवो लृकारस्य च देवता ।
नारायणोऽधिदेवः स्यात् ॡकारस्य चतुर्मुख ॥ ४२ ॥

माधवोऽनन्तरार्णस्य ह्रस्य गोविन्दो देवता भवेत् ।
ऐकारस्य तथार्णस्य स्यादोकारस्य देवता ॥ ४३ ॥

1. गर्भो $M_2$; वर्गो A 2. वृषभ° $M_2$ 3. छन्देति $M_2$ 4. ऋकारस्य स्थितः शम्भुः T,$P_1$,$P_2$



वासुदेवस्तथार्णस्य स्यादौकारस्य देवता ।
सङ्कर्षणस्तथाङ्कारो भवेत्प्रद्युम्नदैवतः ॥ ४४ ॥

अःकारस्थोऽनिरुद्धः स्याद्देवा इत्थं क्रमादचाम् ।
देवताः कथिता ब्रह्मन् हलां सम्प्रति कथ्यते ॥ ४५ ॥

ककारस्य विधिर्देवः खकारस्य सुदर्शनः ।
गकारस्य घकारस्य [1]वाणी शार्ङ्गश्च देवता ॥ ४६ ॥

ङकारस्य चकारस्य देवो नन्दक इष्यते ।
छकारस्य यमो देवो जकारस्य च देवता ॥ ४७ ॥

मुसली स्यात् [2]झकारस्तु भवेदङ्कुशदैवतः ।
ञकारस्य भृगुर्देवः टकारस्य महीधरः ॥ ४८ ॥

मेरुः कौस्तुभदैवत्यः ठकारो डस्तु पार्थिवः ।
ढकारो मातृदैवत्यो णकारो वनमालिकः ॥ ४९ ॥

तकारस्य तथा दृष्टिस्थकारो रसदैवतः ।
अत्रिर्दकारस्य भवेद्धकारस्य धनेश्वरः ॥ ५० ॥

लम्बोदरो नकारस्य पकारस्य पवित्रकः ।
शिखण्डवान् फकारस्य बकारस्य तु देवता ॥ ५१ ॥

जृम्भलो[3] भाक्षरस्य स्यात्सुभद्रो देवता तथा ।
दक्षो मकारस्य भवेद्यकारो वायुदैवतः ॥ ५२ ॥

धूमध्वजः स्याद्रेफस्य लकारस्य दिवस्पतिः ।
वकारो वरुणेशानः शकारो माधिदैवतः ॥ ५३ ॥

1. वाणीशार्ङ्गीधिदेवते $M_2$ 2. झकारस्य $M_2$ 3. जृम्भलस्तु भकारस्य $M_2$

क्रोधाक्कारः षकारः स्यात् सकारश्चन्द्रदैवतः ।
सहस्रांशुर्हकारस्य ळकारो [1]भर्गदैवतः ॥ ५४ ॥

नरसिंहः क्षकारस्य कथिताः कादिदेवताः ।
वर्णानां चक्रनिष्ठानां नामान्यपि च देवताः ॥ ५५ ॥

यो वेत्ति तस्य फलदा मन्त्रिणश्चतुरानन ।
यावतो यस्य वर्णस्य यन्नक्षत्रं विदुर्बुधाः ॥ ५६ ॥

स च [2]तावांस्तत्र वर्णाः क्रमादिह निगद्यते ।
आद्यं विना स्वरं वर्णा वाद्यावाश्वयुजौ स्मृतौ ॥ ५७ ॥

इकारस्यापि भरणी कृत्तिकात्रयमुत्तरम् ।
चतुष्टयमृकारादि रोहिण्येकम[3]थेडका ॥ ५८ ॥

रौद्रमप्येकवर्णः[4] स्यात्पुनर्वस्वोर्द्विसंमितम्[5] ।
द्वयमेव तथा [6]पौष्णमाद्यन्तं वा मतान्तरे ॥ ५९ ॥

कादिषु प्रथमं पुष्यं द्वयं सार्पं द्वयं मघा ।
एकमर्यमणं युग्मं भर्गदैवतमुच्यते ॥ ६० ॥

युग्ममेव तु सावित्रं द्वयमिन्द्राधिदैवतम् ।
एकं निष्ट्या विशाखे द्वे त्रयं मैत्रमनन्तरम् ॥ ६१ ॥

ऐन्द्रमेकं त्रयं मूलं पूर्वमाषाढमेककम् ।
आषाढमुत्तरं चैकमेकमेवाभिजिन्मतम् ॥ ६२ ॥

द्वयं वैष्णवमेकन्तु श्रविष्ठा शततारकम् ।
एकमेव त्रियंशादिवर्णस्स्यादज एकपात् ॥ ६३ ॥

1. भगदैवतः $M_2$ 2. तासां $M_2$ 3. अथेल्वली $M_2$; अथेह्रका $P_2$
4. अप्येकमेव T, $P_1$, $P_2$ 5. द्वयं मतम् T, $P_1$, $P_2$ 6. पूर्णिमाद्यन्तं T



अहिर्बुध्न्यस्त्रयो वर्णा इति वर्णेषु तारकाः ।
आदौ चतुष्टयं मेषो वर्णानामृषभस्त्रिकम् ॥ ६४ ॥

तथैव मिथुनं युग्मं कुलीरं मृगराट् तथा ।
शिष्टद्वयंशादयस्तु कन्या कुः प्रथमं तुला ॥ ६५ ॥

चवर्गो वृश्चिकश्चापः टवर्गः सद्भिरुच्यते ।
तवर्गो मकरः [1]कुम्भः पवर्गोऽन्त्यस्य यादयः ॥ ६६ ॥

नक्षत्रं यत्साधकस्य मन्त्रस्याद्यक्षरस्य यत् ।
नरनार्यादिव तयोर्योगायोगौ परीक्षयेत् ॥ ६७ ॥

चतुष्पदं लिखित्वोर्व्यां तत्राकारादि निक्षिपेत् ।
यस्मिन् पदे साधकस्य नामाद्यर्णलिपिस्तथा ॥ ६८ ॥

तत्रैव चेद्भवेन्म[2]न्त्रस्याद्यं वर्णमवस्थितम् ।
तत्सिद्धं स्याद्द्वितीये तु साध्यं विद्यादनन्तरे ॥ ६९ ॥

पदे [3]सुसिद्धं तुर्ये तु वैपरीत्याय कल्पते ।
सिद्धे सिद्धं जपाद्यैस्तु साध्ये साध्यं सुसिद्धके ॥ ७० ॥

अधीतमात्रे महते फलाय भवति ध्रुवम् ।
पदे तु वैरिणः स्याच्चेल्लिपिरध्येतृनाशनम् ॥ ७१ ॥

आनुगुण्यं परीक्षेत निमित्तानि परीक्ष्य च ।
साधकस्साधयेन्मन्त्रं देवस्य कुटिला गतिः ॥ ७२ ॥

चतुर्षु मूलमन्त्रेषु नानुगुण्यं परीक्षयेत् ।
तारमष्टाक्षरं चैव द्वादशाक्षरमेव च ॥ ७३ ॥

1. कुम्भे T 2. वर्णमन्त्रस्याद्यमवस्थितम् A 3. सिद्धं तुरीये तु T, $P_1$, $P_2$

विष्णुगायत्र्यपि तथा चत्वारः प्रथमे मताः ।
द्वात्रिंशदक्षराधिक्ये मूलमन्त्रं दशाधिके ॥ ७४ ॥

बीजमन्त्रास्समस्तेषु पूर्वे वार्धकशोभनाः ।
इतरे यौवने तद्वत् सर्वे बाल्येऽपि शोभनाः ॥ ७५ ॥

स्त्रीपुन्नपुमिति त्रैधं भजन्ते मन्त्रजातयः ।
संस्त्यानमन्त्राः स्वाहान्ता नमोऽन्तास्तु नपुंसकाः ॥ ७६ ॥

शेषाः पुरुषमन्त्राः स्युरिति त्रिविधमीरितम् ।
उच्चाटने च वश्ये च विद्वेषे क्षुद्रकर्मसु ॥ ७७ ॥

स्त्रियः प्रशस्ता अङ्लिङ्गाः कर्मस्वन्यत्र पूजिताः ।
पुंलिङ्गेषु तु [1]मन्त्रेषु दिङ्मात्रं किञ्चिदुच्यते ॥ ७८ ॥

फडन्ताः मरणाद्यर्थे शस्ता भूताद्युपद्रवे ।
हुङ्कारान्ताः प्रशस्यन्ते वौषडन्तास्तु ते पुनः ॥ ७९ ॥

आप्यायने नियुज्यन्ते धर्मकामार्थमुक्तिषु[2] ।
चतुर्थ्यन्ताः प्रशस्यन्ते ओमन्ताः सर्वसिद्धिदाः ॥ ८० ॥

सर्वमन्त्राः सर्वफला गुरुवक्त्राद्यधिश्रुताः ।
यदृच्छया श्रुतो मन्त्र[3]श्छन्नेनाथ च्छलेन वा ॥ ८१ ॥

पत्रे क्षितौ वा व्यर्थः स्यात्प्रत्युतानर्थकः स्मृतः ।
एकस्सुसाधितो मन्त्रो जपहोमादितर्पणैः ॥ ८२ ॥

स साधकस्य सर्वार्थं प्रसूते नात्र संशयः ।
सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किंचन ॥ ८३ ॥

1. सर्वेषु $M_2$  2. °मूर्तिषु $T, P_1, P_2$  3. छन्देन° $M_1$



किं पुनर्बहवो यस्य का कथा हरिरेव सः ।
कुशेषु [1]कृष्णकृत्तौ तु [2]वृस्यामेकान्तभूमिषु ॥ ८४ ॥

प्रागादिदिङ्मुखो भूत्वा न तु याम्यमुखः क्वचित् ।
उपविष्टो जपेन्मन्त्रं सपवित्रकरश्शुचिः ॥ ८५ ॥

धृतोर्ध्वपुण्ड्ररचनो नान्यां वाचमुदीरयन् ।
गुरुं प्रणम्य प्रथमं प्रणवप्रमुखं जपेत् ॥ ८६ ॥

देवतायतने नद्यां शैले सागररोधसि ।
वने वा तीर्थदेशे वा न्यग्रोधाश्वत्थयोरधः ॥ ८७ ॥

अन्यत्र वा शुचौ देशे कुटीं कृत्वारभेत सः ।
अनश्नन् वायुभक्षो वा यद्वाब्भक्षो जलाप्लुतः ॥ ८८ ॥

जीर्णपर्णाशनश्शाकभोजनो वा फलानि वा ।
पक्वानि मूलान्यथवा भुञ्जानो लवणं विना ॥ ८९ ॥

यवोष्णिकालाजदुग्धभिक्षाहारो जितेन्द्रियः ।
पूर्वं पूर्वं प्रशस्तं स्यादशनीयं[3] विशोधनन् ॥ ९० ॥

[4]मन्त्रस्य देवता तारतिथिवारेषु साधकैः ।
द्वादश्यां[5] पौर्णमास्यां वा ग्रहणे कर्म शस्यते ॥ ९१ ॥

विशेषयजनं कुर्वन् चक्राब्जे जपमाचरेत् ।
शिखी वा जटिलो वापि वल्कलाजिनकर्पटः ॥ ९२ ॥

त्रिसन्ध्यं स्नाननियतस्तैलाभ्यङ्गविवर्जितः ।
यावदुक्तं कृतयुगे मन्त्राभ्यसनमिष्यते ॥ ९३ ॥

1. कृष्णत्वचि वा $T, P_1, P_2$  2. तस्यामेकान्त° $M_2$  3. °दर्शनीयं T
4. मन्त्राधिदेवता $P_1$  5. एकादश्यां A

त्रेतादिषु त्रिषु प्रोक्तं द्विगुणं त्रिगुणं क्रमात् ।
चतुर्गुणं परं वापि ततो मन्त्रफलेच्छया ॥ ९४ ॥

सर्वसिद्धिकरो मन्त्रः सिद्धिः सिद्ध्येत् क्रियावशात् ।
क्रियाधिगम्यते शास्त्राच्छास्त्रं देशिकपूरुषात् ॥ ९५ ॥

मननं [1]सर्वसत्त्वानां त्राणं [2]संसारसागरात् ।
मननत्राणसंयोगान्मन्त्र इत्युच्यते बुधैः ॥ ९६ ॥

अथवा गोपनीयत्वाद्धेतोर्मन्त्रयते परम् ।
रप्रत्ययान्तः पुंलिङ्गस्तथायं [3]लोकवेदयोः ॥ ९७ ॥

मन्त्रेण स्थाप्यते देवो मन्त्रेणैव विसृज्यते ।
ज्ञानानां तत्परं ज्ञानं मन्त्रज्ञानं विदुर्बुधाः ॥ ९८ ॥

ऐहिकामुष्मिकं सर्वं मन्त्रेणैव प्रसिद्ध्यति ।
छन्दो[4]मन्त्राक्षरे यत्तद्दर्शनादृषिरुच्यते ॥ ९९ ॥

दर्शनं च फलस्याहुर्न पुनर्मन्त्रदर्शनात् ।
देवता मन्त्रफलदा मन्त्रेण प्रतिपादिताः ॥ १०० ॥

ब्रुवन्ति निलयं क्षेत्रं तत्त्वं [5]तत्त्वविदो विदुः ।
मन्त्राक्षराणां शुक्लादि[6]मन्त्रभेदः प्रकीर्तितः ॥ १०१ ॥

मूलमन्त्रादिमन्त्राणां साधनं शृणु साम्प्रतम् ।
विधाय [7]यागयोग्यानि पुष्पमूलफलानि च ॥ १०२ ॥

शाकादीनि तु पर्णानि वर्जयेदितराणि तु ।
गृह्णीयाद्यानि वर्ज्यानि तानि वक्ष्यामि पद्मज ॥ १०३ ॥

1. शिष्ट॰ $M_1$ 2. तु भवसागरात् $M_2$ 3. वेदलोकयोः $M_2$
4. ॰मात्राक्षरो $M_2$ 5. तत्वविभेदयोः A 6. ॰वर्ण॰ T; ॰वर्णभेदाः प्रदर्शिताः A
7. योग॰ $M_2$



उग्रगन्धान्यगन्धानि दुर्गन्धानि परित्यजेत् ।
वस्त्रार्कपर्णस्पृष्टानि पुष्पाण्याराधने हरेः ॥ १०४ ॥

उन्मत्तशाल्मलीबीजपूरधत्तूरिकाजपाः ।
बन्धूकासितकोरण्डद्रोणकन्यापराजिताः ॥ १०५ ॥

बृहत्यगस्त्यकूष्माण्डपटोल्यारग्वधैस्समाः ।
निर्गुण्डी दमयन्ती च किंशुकं पारिभद्रकम् ॥ १०६ ॥

कोशातकी प्रियालश्च तपस्वी गिरिमल्लिका ।
निम्बव्याघ्रीकरञ्जश्रीषण्डपाण्डुरपट्टिका ॥ १०७ ॥

[1]विभीतकिङ्किणीकोल्लाङ्गली शङ्खपुष्पिणी ।
नारङ्गनन्दिकावर्तवल्लिका[2]क्षीरिकादिषु ॥ १०८ ॥

पुष्पाणि वर्जनीयानि; शाकान्यपि तथा शृणु ।
शृङ्गाटं गृञ्जनं शिग्रु नालिका सुनिषण्णकम् ॥ १०९ ॥

सौभाञ्जनं रक्तबाष्पं ग्रामबाष्पं त्रिकण्टकम् ।
[3]द्रोणपत्रं लिलिङ्गां च तण्डुलीयं तपस्विनी ॥ ११० ॥

कोशातकी च वर्ज्यानि; मूलेषु त्याज्यमुच्यते ।
छत्राकं लशुनं तालं फलमूले पटोलिका ॥ १११ ॥

[4]बिम्बकूष्माण्डनारङ्गमूलानि परिवर्जयेत् ।
बिल्वोदुम्बरबोध्यर्कवटपत्रेषु भोजनम् ॥ ११२ ॥

वर्जयेत्साधको यत्नादालस्यं दीर्घचिन्तनम् ।
विवादनिद्रानिर्वेदनिग्रहानुग्रहांस्त्यजेत् ॥ ११३ ॥

1. विभतिकिङ्किण्यङ्कोल॰ T, P 2. ॰मल्लिका॰ T, $M_2$ 3. द्रोणं पाटली निम्बश्च $M_2$; द्रोणी पटोली निम्बं च तण्डुली च तपस्विनी A 4. बीजकूष्माण्ड॰ A

पद्माक्षमालां ग्रीवायां लम्बयेत्साधकश्शुचिः ।
धारयेद्धैमयं चक्रं सर्वविघ्नोपशान्तये ॥ ११४ ॥

जपकालेऽथवा चक्रशङ्खाकृतिर्यथा तथा ।
शार्ङ्गखड्गगदाकारं लाञ्छनं लाञ्छयेत्सुधीः ॥ ११५ ॥

शरीरावयवे बाह्वोर्वक्षोभुवि चतुर्मुख ।
चक्रादिपञ्चभिश्चिह्नैर्लक्षिताङ्गपरिष्कृतम् ॥ ११६ ॥

पुरुषं दूरतो दृष्ट्वा भूताद्या भयविह्वलाः ।
विद्रवन्ति तथा घोराः [1]पापा वीक्षणमात्रतः ॥ ११७ ॥

विनश्यन्ति, तथा पुण्यपुञ्जानि प्रविशन्ति च ।
प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथा ॥ ११८ ॥

अकृत्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः ।
पापैर्न लिप्यते देही चक्राद्यायुधलाञ्छितः ॥ ११९ ॥

हव्यं कव्यं च दातव्यं तस्मै [2]तद्दानमक्षयम् ।
अविधाय शिखाबन्धमकृत्वा तिलकं मृदा ॥ १२० ॥

अधारयंस्ततो दर्भान् सूत्रैरनुपवीतयन् ।
कुर्वन् कर्माणि न फलं प्राप्नुयात्पुरुषाधमः ॥ १२१ ॥

नग्नो मुक्तशिखाबन्धो वाससा चावकुण्ठितः ।
गच्छन् शयानः प्रलपन् न जपात् फलमश्नुते ॥ १२२ ॥

जपेन्मौनं समास्थाय सह सम्भाषणादिकम् ।
प्रतिलोमादिभिर्नीचैर्न कुर्यान्मन्त्रवित्तमः ॥ १२३ ॥

1. पापिष्ठाः क्षणमात्रतः T, $P_1$, $P_2$; तत्प्रद्वीक्षणमात्रतः A   2. तद्दत्तमू॰ $M_2$



व्याहरेदपि कार्यार्थं नित्यं तद्गतमानसः ।
द्वादशाक्षरमन्यं वा जपेदक्षरलक्षकम् ॥ १२४ ॥

तदर्धं जुहुयादग्नौ होमशालां प्रकल्पयेत् ।
धूमनिर्गमनोपेतां चतुरश्रां [1]मनोरमाम् ॥ १२५ ॥

तन्मध्ये कल्पयेत्कुण्डमाहुत्यनुगुणं शुभम् ।
वृत्तं वा चतुरश्रं वा मेखलात्रयसंयुतम् ॥ २२६ ॥

योनिमन्मृत्स्नया ब्रह्मन् मानं कुण्डस्य कथ्यते ।
अयुताहुतिपर्यन्ते होमे हस्तप्रमाणकम् ॥ २२७ ॥

द्विहस्तं नियुते कुण्डं त्रिहस्तं प्रयुते तथा ।
शङ्खहोमे चतुर्हस्तं महाशङ्खे तु षट्करम् ॥ २२८ ॥

वृन्दाहुतौ सप्तहस्तं महावृन्देऽष्टहस्तकम् ।
अर्बुदे नवहस्तं स्यान्न्यर्बुदे दशहस्तकम् ॥ १२९ ॥

एकादशकरं खर्वे परार्धे द्वादशायतम् ।
त्रयोदशकरं मध्येऽन्तिके तु चतुर्दश ॥ १३० ॥

पद्मे कराः पञ्चदश महापद्मे तु षोडश ।
समुद्रे विंशति[2]करं [3]महौघे द्वाविंशतिः स्मृता ॥ १३१ ॥

इतोऽधिकाहुतिविधौ चतुर्विंशतिहस्तकम् ।
प्रसङ्गादुच्यते संख्या तां क्रमेणावधारय ॥ १३२ ॥

एकं दशशतं संख्या सहस्रमयुतं तथा ।
नियुतं प्रयुतं शङ्खो महाशङ्खस्ततः परम् ॥ १३३ ॥

1. मनोहराम् A   2. ॰कराः T   3. ममौघे $M_2$

बृन्दं तथा महाबृन्दमर्बुदं न्यर्बुदं तथा ।
खर्वं परार्धं मध्यान्ते पद्मं तन्महदादिकम् ॥ १३४ ॥

पद्मोत्तरं समुद्रं स्यान्महौघं [1]चोत्तमं भवेत् ।
एकमारभ्य गणयेत् प्रयुतान्तं यथाक्रमम् ॥ १३५ ॥

स्थानात् स्थानं दशगुणं वर्धयेत्प्रयुतावधि ।
लक्षस्य नियुतं [2]संज्ञा कोटिः प्रयुत[3]मुच्यते ॥ १३६ ॥

शङ्खमारभ्य गणयेन्महौघान्तं क्रमाद्यथा ।
शतं कोटिसहस्राणां शङ्ख[4]संज्ञा निगद्यते ॥ १३७ ॥

तथैव स्यान्महाशङ्ख एवं बृन्दं प्रकीर्तितम् ।
तद्वदेव महाबृन्दमेवमेवार्बुदं स्मृतम् ॥ १३८ ॥

इत्थं न्यर्बुदमाख्यातमेवं खर्वमुदाहृतम् ।
[5]एवमेव परार्धं स्यान्मध्यमित्थं चतुर्मुख ॥ १३९ ॥

[6]एवमन्तं तथा पद्मं महापद्मं तथैव च ।
सागरप्रलयावेवं संख्या नास्ति ततः परम् ॥ १४० ॥

यत्र काष्ठं तु तच्छ्रोत्रं यत्र धूमस्तु नासिका ।
यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः ॥ १४१ ॥

यत्र सम्यक्स्थिता दर्भास्तत्र केशाः प्रकीर्तिताः ।
यत्र प्रज्वलितो वह्निर्जिह्वा तत्रैव कीर्तिता ॥ १४२ ॥

अग्निकर्णे हुतौ रोगो नासिकायां मनोव्यथा ।
चक्षुषोर्निधनं कुर्यात्केशे दारिद्र्यदं भवेत् ॥ १४३ ॥

---

1. चोत्तरं भवेत् $M_2$ 2. संख्या कोटिं T, $P_1$ 3. °मिष्यते T, $P_1$, $P_2$
4. °संख्या $P_1$, $P_2$ 5. एवमेवं $P_2$ 6. एवमेवं $M_2$



हुतं शिरसि पापं स्यात्तस्माज्जिह्वासु होमयेत् ।
समिद्भिर्याज्ञियैर्बीजैः घृतैर्गव्यैस्तथा दलैः ॥ १४४ ॥

सुमनोभिस्समिद्धेऽग्नौ जुहुयादग्निमावहेत् ।
आरण्यं मणिजं लौहं कुण्डमध्ये परिष्कृते ॥ १४५ ॥

योगासनं चाग्निमध्ये कल्पयित्वा हरिं पुनः ।
आवाहयेत्तत्र देवं होमान्तं तत्र सन्निधिम् ॥ १४६ ॥

प्रार्थयेत समाराध्य होमं कुर्याद्दिने दिने ।
आहोमकालमर्यादं रक्षेदग्निमतन्द्रितः ॥ १४७ ॥

न दहेत्परिधीन् दर्भानुपस्तीर्णानुपक्रमे ।
एवमुक्तेन मार्गेण जपतो मन्त्रमुत्तमम् ॥ १४८ ॥

साधकस्य पुनः स्वप्नाः सम्भवन्त्यविचारिताः ।
मन्त्रसिद्धिमसिद्धिं च सूचयन्तः[1] शुभाशुभम् ॥ १४९ ॥

आचार्यं प्रतिमां देवीं पूजोपकरणानि च ।
विप्रं भागवतं भूपं छत्रचामरदन्तिनः ॥ १५० ॥

सिंहासनमपां कुम्भं पूर्णं कन्यां वधूजनम् ।
दीपं शङ्खं तथा यानं श्रीवत्सं पादुकां तथा ॥ १५१ ॥

श्वेतं वस्त्रं च माल्यं च चन्दनं भूषणानि च ।
रत्नानि काहलादीनि पायसं दधि पालिकाः ॥ १५२ ॥

ताम्बूलं पुस्तकं घण्टां तण्डुलानवगाहनम् ।
समुद्रतरणं शैलारोहणं द्रुमरोहणम् ॥ १५३ ॥

---

1. सूचयन्ति $M_1$

भूमिलाभं मृदां लाभं तटकूपादिदर्शनम् ।
प्राङ्मुखोदङ्मुखो वापि यात्रां कुर्वन् स्वयं यदि ॥ १५४ ॥

विमानदर्शनं विष्णोर्दीप्तौ च शशिभास्करौ ।
[1]दीप्तमग्निं वेदघोषं सिद्धविद्याधरादिकम् ॥ १५५ ॥

देवतासमितिं चैव पश्यन् मूलफलानि च ।
अपूपादीनि भक्ष्याणि कुशयष्टिं कमण्डलुम् ॥ १५६ ॥

यज्ञोपवीतं पात्राणि स्रुक्स्रुवादीनि लोकयन् ।
अक्षमालामेवमाद्यैश्शुभैः स्वप्नैर्विनिर्दिशेत् ॥ १५७ ॥

मन्त्रसिद्धिं बहुमुखां दुःस्वप्नाश्चाप्यशोभनाः ।
कथ्यन्ते मुण्डितैस्सार्धं सम्भाषा सहवर्तनम् ॥ १५८ ॥

स्वयं मुण्डश्च बिभ्राणो जीर्णं नीलं तथाम्बरम् ।
कन्यां रक्तां तथा नीलां पुष्पमालां च मूर्धनि ॥ १५९ ॥

गर्दभारोहणं भग्नयानाधिष्ठानमब्जज ।
छिन्नच्छत्रधरो वापि महिषारोहणं तथा ॥ १६० ॥

दक्षिणाभिमुखो गच्छन्नुष्ट्रवाहाधिरोहणम् ।
दष्टश्च कपिभिर्देहे सृगालैर्वा वृकैस्तथा ॥ १६१ ॥

कर्णपादशिरश्छेदो दन्तानां पतनं तथा ।
नववस्त्रधरः पीडा भटैः पाशेन बन्धनम् ॥ १६२ ॥

[2]विधवालिङ्गनं नीचैः पाषण्डैः प्रतिलोमजैः ।
वर्तनं गोपुरादीनां पतनं शाखिनामपि ॥ १६३ ॥

1. नक्षत्राणि ग्रहादीनि ज्योत्स्नां च ध्रुवमण्डलम् । एष अर्धश्लोकः T, $P_2$, A ग्रन्थेष्वधिकतया दृश्यते ।  2. विद्यायालिङ्गनं $M_2$



तुरगारोहणं [1]भुक्तिर्बौद्धाद्यालयसेवनम् ।
मदिरापायिभिः पापरोगिभिः कितवैः सह ॥ १६४ ॥

वर्तनं दीपनिर्वापं देवानामुत्सवं तथा ।
ग्रामादिदाहोऽभक्ष्याणां फलादीनां च भक्षणम् ॥ १६५ ॥

मधूच्छिष्टं प्रतिच्छाया यात्रायुद्धोमं भटैः ।
अभ्यङ्गं तैललाभश्च मरीचं लवणं तथा ॥ १६६ ॥

लोकयन्नेवमादीनि स्वप्ने शान्तिं समाचरेत् ।
जपहोमादिभि[2]श्चित्तैकाग्रतः प्रत्ययात्तथा ॥ १६७ ॥

वक्ष्यामि साधकस्याग्रे जातानभ्युदयावहान् ।
व्योम्नि देवगणान्नेमिघोषं दुन्दुभिनिस्वनम् ॥ १६८ ॥

सिद्धैस्सम्भाषणं चापि विमानानां च दर्शनम् ।
भूतप्रेतपिशाचादिदर्शनं भूतले तथा ॥ १६९ ॥

होमकाले च सप्तार्चिस्त्रिशिखः परिदृश्यते ।
शुद्धस्फटिकसङ्काशो दक्षिणावर्तशोभितः ॥ १७० ॥

दिव्यगन्धोपलम्भश्च च्छत्रबिम्बध्वजादिकम् ।
शङ्खदुन्दुभिवीणादि वेदघोषश्रुतिं पुनः ॥ १७१ ॥

पूर्णाहुतिविधौ सिद्धिलिङ्गान्येतानि लोकयेत् ।
[3]साधकस्तानि लिङ्गानि कथयेन्न गुरुं विना ॥ १७२ ॥

होमान्ते भोजयेद्विद्वान् वैष्णवान् द्वादशापरान् ।
यावच्च मन्त्रसिद्धिः स्यात्तावदाराधयेद्धरिम् ॥ १७३ ॥

1. भुक्तं $M_2$  2. विद्वान् जाग्रतः प्रत्ययास्तथा T, $P_1$, $P_2$  3. साधकानि हि $M_2$

कामनानुगुणाकारं दार्वाद्यैः परिकल्पितम् ।
दिने दिने जपेन्मन्त्रं जुहृन्नग्नौ यथापुरम् ॥ १७४ ॥

प्रणवस्य शृणु ब्रह्मन् पुरश्चरणमुत्तमम् ।
बीजं साङ्गं समुद्धारं यथावदवधारय ॥ १७५ ॥

अप्रमेयादिमुदयं मध्ये मन्दरपश्चिमम् ।
समाहृत्य व्यवयवं त्रीन् वर्णान् वाचकं हरेः ॥ १७६ ॥

प्लुतोदात्तस्वरं ब्रह्मन् चक्रमध्ये प्रतिष्ठितम् ।
उद्धरेद्बीजमस्याद्यं प्रतीकं दण्डशेखरम् ॥ १७७ ॥

वैष्णवं दण्डयेत्त्वेषा[1] शक्तिः सर्वत्र कीर्तिता ।
बीजशक्त्यङ्गहीना ये मन्त्राः स्युस्ते निरर्थकाः ॥ १७८ ॥

तस्मात्साङ्गं बीजयुक्तं शक्तियुक्तं फलप्रदम् ।
बीजं शक्तिश्च कथिता श्रूयतामङ्ग जातयः ॥ १७९ ॥

ऋषिर्ब्रह्मास्य च्छन्दस्तु देवी गायत्रमुच्यते ।
प्रतिपाद्यः परो देवः परमात्मा स देवता ॥ १८० ॥

बुद्धिस्तत्त्वं परं व्योम क्षेत्रं वर्णस्सितच्छविः ।
ज्ञानं बलं तथा वीर्यमैश्वर्यं तेजसा सह ॥ १८१ ॥

शक्तिरेते चतुर्थ्यन्ता नमः स्वाहा वषट् तथा ।
हुं फट् वौषट् क्रमादेतदवसानाश्शुभावहाः ॥ १८२ ॥

अङ्गानि हृदयाद्येषु षट्सु स्थानेषु मन्त्रिणा ।
प्रयोज्यानि [2]प्रयुक्तेषु मन्त्रः साङ्गः कृतो भवेत् ॥ १८३ ॥

1. °वैषा T, $P_1$, $P_2$  2. प्रवृत्तेषु $M_1$ ; प्रयोगेषु $M_2$



देहे करतले चैव स्थानेषु द्वादशस्वपि ।
द्वादशाक्षरविन्यासः प्रणवः स्फटिकप्रभः ॥ १८४ ॥

न्यासे नमोऽन्तः स्वाहान्तो जपपूजाहुतिष्वपि ।
वश्ये चाकर्षणविधौ उच्चाटे हुङ्कृतिर्भवेत् ॥ १८५ ॥

मारणे फट्कृतिर्ज्ञेया स्तम्भविद्वेषमोहने ।
नतिं विनाङ्गमन्यः स्यात् धर्मादौ नतिरेव सा ॥ १८६ ॥

शाकयावकभैक्षाशी[1] जपेल्लक्षत्रयं शुचिः ।
तदर्धं तर्पणे सङ्ख्या तदर्धं होमकर्मणि ॥ १८७ ॥

होमान्ते सिद्धयस्तस्य जायन्ते [2]यावदीप्सितम् ।
ऐहिकामुष्मिकं सर्वं प्रणवाल्लभ्यते [3]फलम् ॥ १८८ ॥

प्रणवान्न परो मन्त्रः कश्चिदस्ति चतुर्मुख ।
शान्तिपुष्ट्यभिचारेषु किमन्यैः सिद्धिवर्णनैः ॥ १८९ ॥

अन्त्यकाले च मां ध्यात्वा व्याहरन् प्रणवाक्षरम् ।
[4]योगाभ्यासोक्तविधिना जीवमारोहयेद्धृदि ॥ १९० ॥

भ्रुवोर्मध्ये ततो जीवं ततो ब्रह्मबिलं ततः ।
उच्चरन् प्रणवं [5]भित्त्वा बिलं ब्रह्मणि लीयते ॥ १९१ ॥

यावत्प्राणविनिर्मोकमभ्यसेत्[6] प्रणवाक्षरम् ।
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ॥ १९२ ॥

प्रोक्तः प्रणवकल्पस्ते समासेन चतुर्मुख ।

इति श्री पञ्चरात्रे महोपनिषदि पाद्मे
तन्त्रे चर्यापादे मातृकाद्यर्थवर्णनं नाम त्रयोविंशोऽध्यायः ॥

1. °भैक्ष्याशी T  2. यावदीप्सिताः A, T, $P_1$, $P_2$; यद्यदीप्सिताः $M_2$
3. अखिलम् T, $P_1$, $P_2$  4. योगाभ्यासेन T, $P_1$  5. छित्वा बिम्बं $M_2$
6. °अभ्यस्येत् $P_2$

## चतुर्विंशोऽध्यायः ॥

### द्वादशाक्षरकल्पः ।

श्रीभगवान्—

द्वादशाक्षरमन्त्रस्य शृणु कल्पं चतुर्मुख ।
मातृकाचक्रमभ्यर्च्य द्वादशार्णं समुद्धरेत् ॥ १ ॥

[1]प्रणवं परमात्मानं भद्रपाणिमनन्तरम् ।
विष्णुं दक्षं चोतदेहं सुभद्रं गदिनं सुधाम् ॥ २ ॥

विष्णुशीर्षं त्रयं पश्चाद्विजयं सम्प्रसारणम् ।
वरुणं चादिदेवान्तं शुक्लं भुवनशीर्षकम् ॥ ३ ॥

अत्रिं माधवनामान्तं पीयूषं मधुसूदनम् ।
वायुं तथाऽप्रमेयान्तमेवमुद्धारण क्रमः[2] ॥ ४ ॥

बीजमस्य द्वादशात्मा दण्डशीर्षे उदाहृतः ।
क्रुद्धो महांश्च वीरश्च द्युसहस्रं च तेजसा ॥ ५ ॥

उत्क्रान्ताष्षडिमे शब्दाश्चतुर्थ्यन्ता स्वधान्तकाः[3] ।
अङ्गानि हृदयादौ स्युः स्थाने बीजाक्षराणि च[4] ॥ ६ ॥

परस्य वासुदेवस्य बीजाङ्गं समुदाहृतम् ।
दीप्तिमानूर्ध्वलोकान्तो बीजं दण्डशिरस्ततः[5] ॥ ७ ॥

[6]दीप्तिमान् कुम्भसंयोगो मधुसूदनमस्तकः ।
स एव वामनशिरा हृषीकेशशिरस्तथा ॥ ८ ॥

[7]वीरसेनशिराश्चापि कल्क्यस्तोयमनन्तरः ।
षष्ठमौर्वशिरः प्रोक्तमङ्गानि क्रमशः पुनः ॥ ९ ॥

---

1. प्रणम्य $M_1$ 2. °तुद्धारणे विद्धिः$M_1$ 3. षडन्तकाः $M_2$ 4. वा $P_1$,$P_2$
5. स्मृतम् T,$P_1$,$P_2$ 6. दीप्तिमत्कुम्भ° $M_2$ 7. देवदत्त° $M_2$



[1]नत्यन्तं दण्डशिरसः सर्वे विभवपूर्वकाः[2] ।
वासुदेवे प्रयोक्तव्या हृदयादिषु षट्स्वपि ॥ १० ॥

व्यूहपूर्वे तु [3]बीजं स्याद्विष्णुः कुण्डादि पूर्ववत् ।
अङ्गं यद्वा द्वादशार्णाः [4]पूर्वेषां हृदयादयः ॥ ११ ॥

षण्णामर्णाः षडपरे तुन्दगुह्यभुजोरवः ।
[5]जानु पादमिति स्थानेष्वेते योज्याः क्रमाद्बुधैः ॥ १२ ॥

ऋषिश्च देवता चोभे वासुदेवः स्मृतस्त्रिषु ।
छन्दश्च देवी गायत्री वर्णः श्वेतश्चतुर्मुख ॥ १३ ॥

तत्त्वं बुद्धिः परं व्योम क्षेत्रं मन्त्रस्य शब्दितम् ।
प्रत्यक्षरमृषिश्छन्दो देवता वर्णविस्तरः ॥ १४ ॥

तत्त्वं क्षेत्रं क्रमात्सर्वमुच्यते द्वादशस्वपि ।
परमेष्ठी सनन्दश्च सनकश्च प्रजापतिः ॥ १५ ॥

भृगुः सनत्कुमारश्च पुलस्त्यः पुलहः क्रतुः ।
मरीचिरत्र्यङ्गिरसौ कथिता ऋषयः क्रमात् ॥ १६ ॥

छन्दांसि दैवी गायत्री [6]मस्तकं तु प्रजापतिः ।
त्रिष्टुप् पङ्क्तिश्च बृहती विराट् बष्टश्रिवृत्सकः ॥ १७ ॥

उष्णिक् च श्रीरिति ब्रह्मन् वर्णेषु द्वादशस्वपि ।
विष्ण्वाद्या मासपा देवास्तत्त्वानि कथयामि ते ॥ १८ ॥

चिज्जीवः प्रकृतिर्बुद्धिर्मनः सत्त्वादयो गुणाः ।
व्योमाग्निमरुतश्चापि वर्णानां तत्त्वमीरितम् ॥ १९ ॥

---

1. सत्यन्तं$P_1$,$P_2$ 2. °पूर्वके T,$P_1$ 3. बिम्बं T,$P_1$,$P_2$ 4. पूर्वे षट् T,$P_1$,$P_2$ 5. जङ्घा T,$P_1$,$P_2$ 6. बस्तः क्षेत्रं $P_1$,$P_2$

क्षेत्राणि परमव्योम वायुरग्निर्जलं तथा ।
सत्यं तपो जनश्चैव महः स्वर्गो[1] भुवस्तथा ॥ २० ॥

भूमिः पातालमेतानि क्रमेण कथितानि ते ।
आम्नादिधामा श्रेयांसं [2]गोपनान्तं सदण्डकम् ॥ २१ ॥

नत्यन्तं पापहननं विष्ण्वन्तं [3]वह्निमत्परम् ।
शङ्खमाद्यक्षरं परं कमलं मधुसूदनम् ॥ २२ ॥

पुलहे चापरं विघ्ननायकं पीतसूदनौ ।
एकनेत्रं मन्दरं च विष्ण्वन्तं भद्रहस्तकम् ॥ २३ ॥

सम्प्रसारणमूर्धानमुद्धरेन्मन्त्रवित्तमः ।
अग्निप्राकारमन्त्रोऽयं कथितः कमलासन ॥ २४ ॥

दुर्गागणपतिस्ताक्ष्यः क्षेत्रपालपदानि तु ।
चतुर्थ्यन्तानि नत्यन्तप्रणवादीनि मन्त्रिणा ॥ २५ ॥

कोणदिक्षु प्रयुज्येरन्नारभ्याग्नेर्दिशं क्रमात् ।
भाष्यं च द्वादशार्णस्य प्रवक्ष्यामि यथातथम् ॥ २६ ॥

ओमित्युक्तं परं ब्रह्म सुखरूपं ध्रुवं स्थिरम् ।
व्यापित्वात्तस्य वाच्यस्य वाचकं सर्वगं स्मृतम् ॥ २७ ॥

पुरुषार्थ[4]परैस्सर्वैः सुरासुरमहर्षिभिः ।
नम्यते देव एवैकः स एवैकः परायणम् ॥ २८ ॥

आदौ सृजति भूतानि भूतानुग्रहकाम्यया ।
परिपालनमप्येष करोति बहुमूर्तिभिः ॥ २९ ॥

1. तत्वं $M_2$ 2. साङ्गोपाङ्गं $M_1$ 3. भानुमान् परम् T, $P_1$, $P_2$
4. °फलैः T



विश्रमार्थं च भूतानां संहरत्यखिलं जगत् ।
गतिर्गतिमतामन्या वासुदेवान्न विद्यते ॥ ३० ॥

संहरत्यात्मभूतानि पुनः सृजति मायया ।
देवे जाग्रति जागर्ति सुप्ते स्वपिति चाखिलम् ॥ ३१ ॥

चराचरमिदं [1]कृत्स्नं भूतग्रामं चतुर्विधम् ।
द्वादशाक्षर[2]वाच्योऽसौ तस्य माहात्म्यमाश्रितः ॥ ३२ ॥

ब्रह्मभूयं गतो ब्रह्मा देवभूयं च देवताः ।
ऋषयश्च मरीच्याद्या मुनयस्सनकादयः ॥ ३३ ॥

मन्त्रमाहात्म्यमाश्रित्य जग्मुः पदमनुत्तमम् ।
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ॥ ३४ ॥

न कदापि निवर्तन्ते द्वादशाक्षरचिन्तकाः ।
किं तस्य यज्ञैः किं तीर्थैः किं विश्राणनकर्मभिः ॥ ३५ ॥

किं व्रतैर्यस्य मन्त्रोऽसौ द्वादशाक्षरलक्षणः ।
सर्वयत्नेन पुरुषस्तन्मन्त्रनिरतो[3] भवेत् ॥ ३६ ॥

संसारभयभीरूणां मोक्षैकफलकामिनाम् ।
मुक्तये परमोपायो मन्त्रोऽयं द्वादशाक्षरः ॥ ३७ ॥

देवदानवगन्धर्वयक्षविद्याधरादयः ।
प्रणमन्ति महात्मानं द्वादशाक्षरचिन्तकम् ॥ ३८ ॥

यस्य राष्ट्रे महीपस्य [4]मन्त्रिणः सन्ति निर्भयाः ।
तद्राष्ट्रे धनधान्यादि समृद्धं वर्धतेऽधिकम् ॥ ३९ ॥

1. ब्रह्मन् A 2. °वाच्योऽयं A 3. °नियतो A
4. मन्त्री वसति निर्भयः T, $P_1$, $P_2$

भूतानि च पलायन्ते ग्रहाश्च न भयङ्कराः ।
राष्ट्राद्राजपुराद्राज्ञः सकाशाच्च निपीडिताः ॥ ४० ॥

न फलं शक्यते वक्तुं कार्त्स्न्येन कमलासन ।
चतुर्मुखमुखैस्सर्वैर्दिव्यैर्वर्षशतैरपि ॥ ४१ ॥

शरीरशुद्धये पूर्वं पुरश्चरणमाचरेत् ।
शरीरमन्त्रसंस्कारः पुरश्चरणमिष्यते ॥ ४२ ॥

ब्राह्मणांस्तन्मयान् पूर्वमाहूय द्वादशावरान् ।
भोजयित्वा ततश्चक्रमण्डले देवमर्चयेत् ॥ ४३ ॥

विज्ञाप्य देशिकः पूर्वमनुज्ञातः सहायवान् ।
आश्रमे यत्र मुनिभिः पूर्वमाचरितं [1]तपः ॥ ४४ ॥

सिद्धमन्त्रफले तत्र वासुदेवनिकेतने ।
पश्चिमद्वारि वान्यत्र पूर्वोक्तस्थानभूमिषु ॥ ४५ ॥

स्थानेऽभिरुचिते पुष्पसमित्कुशफलोदकैः ।
समुपेते यथोक्तानां सम्पन्नाभिमताशनः ॥ ४६ ॥

भिक्षान्नभोक्ता भक्तानां तन्मयानां गृहेषु वा ।
ब्रह्मचारी गृहस्थो वा साधयेत् द्वादशाक्षरम् ॥ ४७ ॥

वैखानसो वा नियतस्तपस्यभिरतश्शुचिः ।
भिक्षान्नभुग्ब्रह्मचारी शाककन्दफलाशनः ॥ ४८ ॥

गृहस्थश्चेत् स्वयं [2]पक्वं पुत्रैर्वा भार्ययापि वा ।
शिष्येण वा पाचितान्नं निवेद्य हरयेऽग्रतः ॥ ४९ ॥

1. तथा $M_2$; ततः A  2. पाकं A, $P_2$



वैश्वदेवादिकर्मान्ते भोजयित्वाऽतिथीनपि ।
शिष्यं भार्यां तथा पुत्रं तोषयित्वा यथातथम् ॥ ५० ॥

स्वयं भुञ्जीत विधिवत्पश्चादन्नमकुत्सयन् ।
पुत्रदारसमायुक्तो जपेद्वैखानसश्शुचिः ॥ ५१ ॥

वियुक्तः पुत्रदाराद्यैरथवा नियतस्थितः ।
[1]अक्लसैव स्वयं पक्वमन्नमद्यान्मिताशनः ॥ ५२ ॥

सर्वेषां कायशुध्द्यर्थमादौ चान्द्रायणं चरेत् ।
पादोदकं पञ्चगव्यं ब्रह्मकूर्चजलं तथा ॥ ५३ ॥

पीत्वा कायविशुध्द्यर्थं पुरश्चरणमाचरेत् ।
आरम्भः कर्मणां मासि मार्गशीर्षेऽथ[2] शोभने ॥ ५४ ॥

चैत्रे मासि सिते पक्षे ब्रह्मन्नेकादशीतिथौ ।
उपोष्य पूर्वं चक्राब्जे प्रतिमायामथापि वा ॥ ५५ ॥

कूर्चे वा स्थण्डिले वापि यथाभिरुचिते पदे ।
द्वादश्यां होमपर्यन्तमर्चयित्वा जनार्दनम् ॥ ५६ ॥

पुष्पैः पत्रैर्ब्रह्मचर्यनिरतो देशकालवित् ।
सङ्कल्प्य कालनियमं व्रतादिनियमं तथा ॥ ५७ ॥

नित्यं त्रिषवणस्नानमधश्शयनमेव च ।
शयनं वा कुशे पर्णे मृगचर्मणि वाऽब्जज ॥ ५८ ॥

सङ्कल्प्य माषं तैलं च क्षारं च [3]लवणं तथा ।
[4]तिलान्नभोजनं कांस्ये दिवा स्वापादि वर्जयेत् ॥ ५९ ॥

1. अन्तः स्वैरम् $M_2$  2. ॰अह्नि $M_2$  3. लवणमेव च T, $P_1$, $P_2$
4. कीलालं T, $P_1$, $P_2$

देहशुद्धिं पुरा कृत्वा मन्त्रजापोऽक्षमालया ।
आद्यन्तयोर्बीज[1]युक्तं तथैव प्रणवान्वितम् ॥ ६० ॥

जपकाले जपेन्मन्त्रं न द्रुतं न विलम्बितम् ।
लक्ष्यीकृत्याच्युतं ध्यायेत्तद[2]धीनमनोगतिः ॥ ६१ ॥

ध्यानं वक्ष्यामि सर्वाघनाशनं कमलासन ।
चतुर्भुजमुदाराङ्गं सर्वलक्षणलक्षितम् ॥ ६२ ॥

शुद्धस्फटिक[3]सङ्काशमयुतेन्दुसमप्रभम् ।
चारुहासं सुताम्रोष्ठं कर्णान्तायतलोचनम् ॥ ६३ ॥

निर्धूतपद्मरागाभं दन्तच्छविसुशोभितम् ।
महोरस्कं महाबाहुं प्रसन्नेन्दुनिभाननम् ॥ ६४ ॥

सुभ्रूललाटं सुमुखं घनकुञ्चितमूर्धजम् ।
तटिच्छतसहस्राभं पीतनिर्मलवाससम् ॥ ६५ ॥

पाणिपादतलाम्भोजं पुण्डरीकायतेक्षणम् ।
श्रीवत्साङ्कं किरीटादिसर्वाभरणभूषितम् ॥ ६६ ॥

पद्मचक्रगदाशङ्खधारिणं कौस्तुभोरसम् ।
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम् ॥ ६७ ॥

शेषाहिभोगे विपुले सुखासीनं चतुर्मुख ।
श्रीभूमिसहितं देवं ललाटे श्वेतमृत्स्नया ॥ ६८ ॥

धृतोर्ध्वपुण्ड्रतिलकं मण्डितं चण्डभानुभिः ।
नियुतैरयुतैश्चन्द्रैः विद्युत्कालाग्निकोटिभिः ॥ ६९ ॥

1. °युतं T,$P_1$,$P_2$    2. तद्ध्यान° A    3. °वर्णाभम्° T,$P_1$,$P_2$



समवेतैरिवैकत्र तेजःपुञ्जैर्विसर्पिभिः ।
भ्राजमानं दुरालोकं देहमण्डलनिर्गतैः ॥ ७० ॥

भासयन्तं जगत्सर्वं ध्यायेत् प्रक्षीणकल्मषः ।
आराध्य देवं सन्ध्यायामपरस्यां यथाविधि ॥ ७१ ॥

विसृज्य पुनरुत्थाय धौतपादकरश्शुचिः ।
आचम्य वाग्यतो मन्त्रं जपेत् सम्यक् समाहितः ॥ ७२ ॥

यावद्ब्राह्ममुहूर्तस्य प्रादुर्भावस्ततः परम् ।
स्नात्वा यथोक्तं सन्ध्यायामनुष्ठाय [1]विधिं क्रमात् ॥ ७३ ॥

आराध्य देवमर्घ्याद्यैरुपचारैर्यथोदितैः ।
जपेन्मन्त्रं शरीरस्य स्थितियुक्तैः फलादिभिः ॥ ७४ ॥

द्वादशार्णं [2]जपेदेवं विशुद्धेनान्तरात्मना ।
लक्षं द्वादश तस्यार्धं तर्पणं वारिभिः स्मृतम् ॥ ७५ ॥

तदर्धं जुहुयादग्नौ साधकस्समिदादिभिः ।
चतुर्विंशतिलक्षेण मन्त्रजापेन किङ्कराः ॥ ७६ ॥

सिद्धविद्याधराः सर्वे पाताले दिवि वा भुवि ।
यथाभिरुचिते देशे दुष्प्रापे साधकं द्विजम् ॥ ७७ ॥

नयन्तः तत्र नियतं सेवन्ते परिचारिणः ।
षट्त्रिंशल्लक्षजापेन देवभूयं समश्नुते ॥ ७८ ॥

अशीतिलक्षजापेन होमैस्तावन्मितैर्वसेत् ।
महर्लोके सुखं शश्वत्तत्रत्यैरभिपूजितः[3] ॥ ७९ ॥

1. यथाविधि T,$P_1$,$P_2$    2. जपेन्मन्त्रं $M_2$    3. स्यात्सुरपूजितः $M_1$

कोटिलक्षेण जापेन प्राप्नुयादणिमादिकान् ।
गुणान् जनाह्वये लोके वसेत्तत्स्थैः सुपूजितः ॥ ८० ॥

[1]महार्बुदशतेनैव जपहोमैस्तथा वसेत् ।
तपोलोके महापद्मजपहोमेन तावता ॥ ८१ ॥

सत्ये वसति देवेशं श्रीभूमिसहितं हरिम् ।
दृष्ट्वा निरामयस्तत्र वसेत्तल्लोकवासिभिः[2] ॥ ८२ ॥

[3]महौघैश्शतजापेन तावदाहुतिसंख्यया ।
साक्षात्कुर्वन् वासुदेवं तन्मयो [4]भवति ध्रुवम् ॥ ८३ ॥

किमेभिर्बहुभिः प्रोक्तैः पदं यद्यदभीप्सितम् ।
तत्तदाप्नोति पुरुषः समाराधनकर्मभिः ॥ ८४ ॥

वश्याकर्षणमुख्यानि जपहोमादिकर्मभिः ।
फलानि चित्ररूपाणि दर्शयेत्साधकः स्वयम् ॥ ८५ ॥

पाताले दिवि वा भूमौ ये भोगा भुवि दुर्लभाः ।
तानवाप्नोति पुरुषः पुरुषोत्तमपूजया[5] ॥ ८६ ॥

कामोपभोगवैमुख्यं मन्त्रिणः कार्यमुच्यते ।
मोक्षैकफलदं धाम दक्षिणद्वारमुत्तमम् ॥ ८७ ॥

सिद्धायतनमासाद्य तत्र दैवं चतुर्विधम् ।
मनुष्यनिर्मितं चार्षं दैवं रूपं मधुद्विषः ॥ ८८ ॥

स्वयंव्यक्तं समाराध्य मोक्षकामः समाहितः ।
सालोक्यादिचतुर्भेदां मुक्तिमाप्नोत्यसंशयम् ॥ ८९ ॥

1. महावृन्द॰ T, $P_1$, $P_2$; ब्रह्मा बृन्दशतेनैव $M_2$ 2. ॰भाक् शुचिः $M_1$
3. महाहोमैश्च A 4. वसति $M_1$ 5. ॰विद्यया T



सालोक्यं मानुषादार्षात् सामीप्यं देवनिर्मितात् ।
सारूप्यं [1]तुल्यमाप्नोति स्वयंव्यक्तादनुक्रमात् ॥ ९० ॥

प्रासाद[2]द्वारि चाध्माते शङ्खे तस्य महाध्वनिः ।
श्रूयते यत्र तं देशं वैष्णवं मानुषालये ॥ ९१ ॥

ततो द्विगुणमार्षे तु त्रिगुणं देवनिर्मिते ।
चतुर्गुणं स्वयंव्यक्ते देशे ऋद्धिरनुक्रमात् ॥ ९२ ॥

ब्रह्मचर्यपरो भूत्वा कुशशायी जितेन्द्रियः ।
मुमुक्षमाणस्तन्मन्त्रं लक्षजापेन सिद्ध्यति ॥ ९३ ॥

युञ्जीत[3] योगविधिना हृदयाम्बुरुहासने ।
कर्णिकायां सुखासीनं शुद्धस्फटिकवर्चसम् ॥ ९४ ॥

चतुर्भुजमुदाराङ्गं ज्योतिर्मण्डलमध्यगम् ।
अङ्गुष्ठमात्रं पुरुषं ध्यात्वा भोगैर्यथाक्रमम् ॥ ९५ ॥

अभ्यर्चयेन्निर्मलेन मनसा सुसमाहितः ।
योगाभ्यासबलेनैव गुणोत्कर्षः प्रजायते ॥ ९६ ॥

चन्द्रार्काग्निमयं बीजं रविमण्डलसन्निभम् ।
ततः[4] सूक्ष्मतरं बिम्बं राजमुद्गसमप्रभम् ॥ ९७ ॥

तं सर्वमन्त्रानाक्रम्य स्थितं विद्याद्विचक्षणः ।
ततस्तु राजिकाबीजप्रमाणं चिन्तयेत् क्रमात् ॥ ९८ ॥

उत्पादक्रमथान्याभिर्यस्यान्ते नाद आश्रितः ।
तं विलीय समुत्पन्नमश्ववालप्रमाणकम् ॥ ९९ ॥

1. दिव्य॰ A 2. ॰द्वारपार्श्वे तु A 3. योगं विधिवत् $M_2$ 4. तत्तद् $M_2$

यस्य गच्छति तद्व्योम्नि व्योम चागच्छते हृदि ।
ततो विचिन्तयेत्सूक्ष्ममश्ववालप्रमाणकम् ॥ १०० ॥

ब्रह्मनाडीमनेनाशु[1] पश्यति ध्यानसेवनात् ।
ततोऽङ्गरोममात्रं तु बीजजालं समन्ततः ॥ १०१ ॥

ध्यायेन्नियममास्थाय ब्रह्मनाडीप्रकाशकम् ।
एवं ध्यायन्निमं पिण्डं परिपक्वं परित्यजेत् ॥ १०२ ॥

परिज्ञाय पुरा पिण्डं पाकलक्षणमुत्तमम् ।
निरुद्धसन्धिमात्रं च कृत्वा देहसमीरणम् ॥ १०३ ॥

मुक्त्वा तद्ब्रह्मरन्ध्रेण उत्क्रान्तिकरणेन च ।
ध्यात्वा परित्यजेद्देहं नित्याभ्यासरतो यदि ॥ १०४ ॥

स ब्रह्म परमभ्येति वासुदेवाख्यमव्ययम् ।
तिले तैलं घृते सर्पिः क्षीरे क्षीरं जले जलम् ॥ १०५ ॥

तद्वन्न भेदो गृह्येत जीवात्मपरमात्मनोः ।
तप्तलोहे यथा तोयं [2]लीनं नैव प्रजायते ॥ १०६ ॥

अग्निदग्धानि बीजानि न रोहन्ति यथा पुनः ।
तद्वन्न जायते भूयो जीवात्मा कमलासन ॥ १०७ ॥

सारूप्यं भगवद्रूपप्राप्तिः सद्भिरुदाहृता[3] ।
सामीप्यं सन्निधौ सेवा देवस्य परिचर्यया ॥ १०८ ॥

सालोक्यं च तदाख्यातं लोके वैकुण्ठसंज्ञिते[4] ।
तदीये नित्यवासोऽयं पुनरावृत्तिवर्जिते ॥ १०९ ॥

1. °अनेनापि $M_1$ 2. क्षीणं $M_2$ 3. °उदीरिता $M_2$ 4. °संज्ञिके $M_1$



ब्रह्मा :—

श्रोतुमिच्छामि भगवन् देहपातस्य लक्षणम् ।
संक्षेपतस्तु भगवन् वायोर्गतिनिरोधनम् ॥ ११० ॥

श्रीभगवान् :—

युक्ताहारविहारस्य क्रियासक्तस्य पद्मज ।
युक्तस्वप्नावबोधस्य योगयुक्तस्य सर्वदा ॥ १११ ॥

निवर्तते सदा शब्दो हृद्गतो दुन्दुभिस्वनः ।
स्पर्शं न शीतं नात्युष्णं विजानाति त्वगिन्द्रियम् ॥ ११२ ॥

भ्रुवोर्मध्ये यदा ज्योतिर्द्वादशान्ते व्यवस्थितम् ।
प्रत्यस्तमेति वै शीघ्रं न चोदयति वै पुनः ॥ ११३ ॥

न जानाति समाधिस्थो हार्दमब्जं यदन्तरे ।
परिशुष्यति गात्रस्थं शोणितं श्लेष्मलक्षणम् ॥ ११४ ॥

न वेत्ति[1] पार्थिवं गन्धं न[2] बाह्याभ्यन्तरे तथा ।
पिण्डस्तदा[3] प्रबोद्धव्यः कालेनैव चिरेण तु ॥ ११५ ॥

पृथिव्यां संस्थितं चैव धारणायां समाहितः ।
न वेत्ति शब्दं प्रागुक्तं पञ्चमात् पञ्चमे क्षणे ॥ ११६ ॥

स्थितस्समेधा बाह्ये तु शीतोष्णे न च विन्दति ।
पतेद्दिनचतुष्केण पिण्डं तत्कलितेक्षणः ॥ ११७ ॥

रूपध्यानं[4] समासाद्य पूर्वोक्तविधिना यदि ।
न भाति हृदयाकाशे बहिर्वा ज्योतिषां पतिः ॥ ११८ ॥

पिण्डपातो ह्यवश्यं स्यात् ज्ञातवारिष्टैः पुरोदितैः ।
तृतीयेऽह्नि चतुर्वक्त्र सर्वमेतत्तदा क्षणे ॥ ११९ ॥

1. व्योम्नि $M_1$ 2. स $M_1$ 3. तथा $M_1$ 4. °स्थानं $M_1$

समाधौ यदि वायव्ये योगी सम्यक् प्रवर्तते ।
स वेत्ति परमाह्लादं तृषितः परिकम्पते ॥ १२० ॥

दिनद्वयेन पिण्डस्य पातोऽस्य द्वितयक्षणे ।
स्थितो गगनभागे तु प्रागुक्तविधिना [1]यदि ॥ १२१ ॥

न वेत्ति विधिना गन्धं [2]न बाह्ये च[3] शुभाशुभम् ।
तत्रैवैकदिने वाथ लक्षणे प्रथमे क्षणे ॥ १२२ ॥

ध्यात्वैवं[4] विधिना सम्यग्योगी ध्यानैकमानसः[5] ।
मयि [6]संस्थापितमना व्याहरन् द्वादशाक्षरम् ॥ १२३ ॥

स्वयमुत्क्रमते पिण्डाद्यायाद्योगनिकेतनम् ।
शेषासने सुखासीनं वैकुण्ठे मणिमण्डपे ॥ १२४ ॥

अष्टबाहुं विशालाक्षमष्टायुधधरं हरिम् ।
श्रीभूमिसहितं देवं सर्वाभरणभूषितम् ॥ १२५ ॥

चतुर्भुजं वा वामेन हस्तेनालिङ्ग्य पङ्क(द्म ?)जाम् ।
अष्टौ वारस्त्रियस्तस्य वालव्यजनपाणयः ॥ १२६ ॥

तिष्ठन्ति परितः पश्चाच्छङ्खाद्यायुधधारिणः ।
सेवन्ते पुरुषास्तस्माद्बहिस्तिष्ठन्ति मूर्तयः ॥ १२७ ॥

[7]चतुर्विंशतिसंख्याकास्ततो मीनादिमूर्तयः ।
पक्षीन्द्रविष्वक्सेनाभ्यां कुमुदादिगणैस्तथा ॥ १२८ ॥

महाभागवतास्तत्र द्वादशाक्षरचिन्तकाः ।
सेवन्ते मण्डपे नित्यं पुनरावृत्तिवर्जिताः ॥ १२९ ॥

---

1. यतः $M_1$ 2. तद्बाह्ये $P_1$ 3. तु $P_1$,$P_2$ 4. °एव $P_1$,$P_2$
5. °आस्थितः T 6. सन्नार्पितमना $P_1$, $P_2$; सन्नार्पितमना व्याहर्षं $M_2$
7. अयमर्धः $P_1$, $P_2$ ग्रन्थयोर्नोपलभ्यते ।



इह यत्कर्म कुर्वाणा विष्णोराराधनात्मकम् ।
मुच्यन्ते योगमास्थाय पुरुषाः परमं पदम् ॥ १३० ॥

प्राप्यापि तत्तत्कुर्वाणाः सेवन्ते पुरुषोत्तमम् ।
अथवा पिण्डपतनं विज्ञाय प्रागुदीरितैः ॥ १३१ ॥

निमित्तैरैहिकैर्भोगैस्त्यजन्तः पृथिवीक्षितः ।
पिण्डान्तरमुपायेन विशन्ति कमलासन ॥ १३२ ॥

येन तं कथयाम्यद्य श्रूयतां सादरं वचः ।
परपिण्डं नवं शुद्धं मध्यमे वयसि स्थितम् ॥ १३३ ॥

सर्वलक्षणसंयुक्तं[1] पापरोगबहिष्कृतम् ।
ब्राह्मणस्य शरीरं वा बाहुजस्याथवा तनुम् ॥ १३४ ॥

ऊर्ध्ववक्त्रं दीर्घपादमेकान्ते शाययेच्छवम् ।
तत्पादपार्श्वे शायीत बद्ध्वा योगासनं ततः ॥ १३५ ॥

अभ्यस्येद्योगमेकाग्रो यथापूर्वं चतुर्मुख ।
सजीवं नाभिचक्रस्थं भ्रमन्तं भास्करप्रभम् ॥ १३६ ॥

हंसाकारं वलक्षाभमिडया पिङ्गलेन वा ।
हंसरूपं समास्थाय निर्गतं नासिकापुटात् ॥ १३७ ॥

खगवद्याति गगनं सार्धं प्राणसमीरणैः ।
तालं हस्तावधिं दण्डं क्रोशं योजनमेव च ॥ १३८ ॥

गत्वा गत्वा निवर्तन्ते योजनानि चतुर्मुख ।
नासिकापुटरन्ध्रेण नाभिचक्रं प्रवेशयेत् ॥ १३९ ॥

---

1. °सम्पन्नं T, $P_1$, $P_2$

अभ्यस्य नित्यमनिशं योगी योगमतन्द्रितः ।
निर्गमय्य स्वकाद्देहात् नासिकारन्ध्रवर्त्मना ॥ १४० ॥

आत्मानं परकीयेन नासिकाबिलवर्त्मना ।
परपिण्डं स्वदेहस्य विनिपाते प्रवेशयेत् ॥ १४१ ॥

नाभिचक्रं प्रविश्याथ नाडीषु विचरेत्सुखम् ।
सर्वत्र योगी तत्रस्थो युञ्जानः पूर्ववत्सदा ॥ १४२ ॥

द्रढिम्ने तत्र वपुषः तत्र स्थित्वा चिरं सुखम् ।
[1]तस्यापि पातमालोच्य पिण्डेऽन्यत्र [2]निवेशयेत् ॥ १४३ ॥

इत्येतत्कथितं ब्रह्मन् परपिण्डप्रवेशनम् ।
सिद्धये मूलमन्त्रस्य समासात् कथितन्तव ॥ १४४ ॥

मूलमन्त्र इति प्रोक्तः साक्षाद्देवस्य वाचकः ।
प्रसूऽयंतेमन्त्रलतां[3] प्रसूतिमणिमादिकाम् ॥ १४५ ॥

किं पुनर्धर्मकामार्थी सिद्धिं कमलसम्भव !
नासाध्यमस्ति मन्त्रेण द्वादशाक्षररूपिणा ॥ १४६ ॥

सर्वलोकेषु सर्वत्र सत्यमेतद्ब्रवीमि ते ।
नास्मात्परतरो मन्त्रो विद्यते सर्वकामदः ॥ १४७ ॥

रहस्यमेतत्कथितं मन्त्रमाहात्म्यमक्षयम् ।
अयमेवाष्टमूर्तीनामधिकश्चतुरक्षरैः ॥ १४८ ॥

अमुना षोडशार्णेन चतुर्विंशतिमूर्तयः ।
आराधनीया भोगश्चेल्लभ्यते दुर्लभो महान् ॥ १४९ ॥

1. तत्रापि $M_2$   2. नियोजयेत् $M_2$   3. ०रतां T



मन्त्रं तन्त्रं यथापूर्वमुद्धृत्य द्वादशाक्षरम् ।
अक्षराणि च चत्वारि वर्णचक्रात्समुद्धरेत् ॥ १५० ॥

[1]गुहालये परिक्रान्तं भास्करं दण्डशेखरम् ।
द्विषट्काक्षरवच्चाङ्गमस्यापि चतुरानन ॥ १५१ ॥

मूर्तिष्वष्टासु यो [2]ध्याता ऋषिर्मन्त्रस्य निश्चितः ।
छन्दश्च देवी गायत्रं वासुदेवोऽधिदैवतम् ॥ १५२ ॥

अधिकार्णसमष्टेः स्याद्वर्णः स्फटिकसन्निभः ।
क्षेत्रं च परमव्योम तत्त्वधीः पूर्वमीरिता ॥ १५३ ॥

शिष्टार्णकानां [3]द्युमणिर्वासुदेवो नृकेसरी ।
मनोभवश्चतुर्णां स्यादधिदैवतकल्पना ॥ १५४ ॥

जपेन्नमोऽन्तं पूजायामुभयोर्होमकर्मणि ।
स्वाहायां विरमेद्वौषडन्तमाप्यायने तथा ॥ १५५ ॥

मारणे तु फडन्तं स्यादेवमन्यत्र योजयेत् ।
न्यासो मूर्ध्नि ललाटे च दृशोः श्रवसि च क्रमात् ॥ १५६ ॥

नासिकापुटयोर्वक्त्रे[4] गलकूपे तथा हृदि ।
नाभिदेशे रहस्ये च तथोर्वोर्जङ्घयोरपि ॥ १५७ ॥

कार्यानुरूपं सृष्ट्यादिन्यसनं सर्वकर्मसु ।
आराधनं सर्वसिद्धिकारणं तच्च कथ्यते ॥ १५८ ॥

तेजसां निधिमष्टारं सुदर्शनमनुत्तमम् ।
चिन्तयित्वा चतुर्वक्त्रं पूर्वस्यां दिशि वेधसम् ॥ १५९ ॥

1. एवं क्रमेण विन्यस्य $M_2$   2. ध्यायेत् A   3. व्यूहस्य $M_1$
4. मध्ये $M_2$

सङ्कर्षणं दक्षिणस्यां प्रद्युम्नं दिशि चाप्पतेः ।
अनिरुद्धमुदीचीने कोणदिक्षु श्रियादयः ॥ १६० ॥

देव्यश्चतस्रो मध्ये च वासुदेवं जगद्गुरुम् ।
अर्घ्यादिभिस्समाराध्य मन्त्रं षोडशलक्षकम् ॥ १६१ ॥

जपन् हुत्वाग्निमुदकैस्तर्पयित्वा यथाविधि ।
एवं प्रसाधितो मन्त्रः पुरुषार्थांश्चतुर्विधान् ॥ १६२ ॥

साधयेत्पुरुषार्थेषु यो येनावाप्तुमिष्यते ।
[1]स सर्वोऽवाप्यते ब्रह्मन् किमन्यैरतिविस्तरैः ॥ १६३ ॥

यदि ब्रह्मपदे ब्रह्मन्नभिलाषः प्रवर्तते ।
ब्राह्मीं मूर्तिं यजेतासौ ध्यात्वानन्यमनोगतिः ॥ १६४ ॥

ग्रीष्मे मासि स्थितो भूम्यां पादाङ्गुष्ठेन पद्मज ।
पादमन्यं समुद्धृत्य बाहू चोत्क्षिप्य निश्चलः ॥ १६५ ॥

वर्षासु पर्णशालायां बहिश्शरदि शैशिरे ।
हेमन्ते त्रिषु चैतेषु वसन्तेऽग्निषु पञ्चसु ॥ १६६ ॥

मध्यस्थो मन्त्रजापः स्यादित्थं स्यात्प्रतिहायनम् ।
उपांशुप्रवरोऽव्यक्तान्मानसः प्रवरस्ततः ॥ १६७ ॥

[2]विघ्नन्ति देवतास्तस्य तपःकर्म सुदुश्चरम् ।
पदहानिं समाशङ्क्य गन्धर्वप्रमुखैस्तथा[3] ॥ १६८ ॥

अप्सरोभिर्विलोभ्यैनं नृत्तवादित्रगीतिभिः ।
तस्मात् स्थिरमतिर्भूत्वा जपन् सिद्धिमवाप्नुयात् ॥ १६९ ॥

1. स सर्वः प्राप्यते $M_2$ 2. निघ्नन्ति $M_1$ 3. तदा $P_1$,$P_2$



प्रत्यक्षं याति भगवान् त्रिविष्टपपतिः स्वयम् ।
ब्रह्मत्वं वा [1]ततोऽन्यद्वा प्रयच्छति महत्[2] फलम् ॥ १७० ॥

मूर्तीनामितरासां च पदं यद्यभिलष्यते ।
मूर्तिं तां तामभिध्यायन् जपेन्मन्त्रं च पूर्ववत् ॥ १७१ ॥

लभते तत्प्रसादेन स्वं स्वं पदमनुत्तमम् ।
मन्त्रेणानेन मुख्येन साधकः साधयेत्फलम् ॥ १७२ ॥

ऐहिकामुष्मिकं तत्तन्नात्र कार्या विचारणा ।
ब्राह्मणः क्षत्रियो वापि वैश्यो वा जपमाचरेत् ॥ १७३ ॥
जपेऽधिकारो नान्यस्य मन्त्रराट् [3]स्वयमुत्तमः ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
द्वादशाक्षरकल्पो नाम चतुर्विंशोऽध्यायः ॥

—: * :—

## पञ्चविंशोऽध्यायः ॥

### श्रीमदष्टाक्षरमन्त्रवैभवः ॥

ब्रह्मा :—

अष्टाक्षरस्य मन्त्रस्य महिमानमनुत्तमम् ।
शुश्रूषितमथ च्छन्दोविशेषं सर्षिदैवतम् ॥ १ ॥

फलं [4]तन्मन्त्रजापस्य रूपं वा कीदृशं मतम् ।
देवता साधनं चापि मदनुग्रहकाम्यया ॥ २ ॥

1. तदन्यद्वा T,$P_1$,$P_2$ 2 फलं महत् $P_1$,$P_2$ 3. अयमुत्तमः $M_2$
4. किं T,$P_1$

भगवान् :—

ब्रूहि सर्वमशेषेण मह्यं शुश्रूषवेऽच्युत ।
अष्टाक्षरस्य मन्त्रस्य फलानि न हि शक्यते ॥ ३ ॥

वक्तुं वर्षशतेनापि तेषां दिङ्मात्रमुच्यते ।
धर्मार्थकाममोक्षाणामेकान्तफलदं शुभम् ॥ ४ ॥

सिद्धयो बहुधा जप्तुर्मन्त्रं चोदितसंख्यया ।
अचिन्तनीयो महिमा देवस्येव मधुद्विषः ॥ ५ ॥

शुचौ विविक्ते विजने सर्वदोषविवर्जिते ।
वर्णचक्रं समालिख्य भूमावर्घ्यादिसाधनैः ॥ ६ ॥

अभ्यर्च्य च यथान्यायं ततो वर्णान् समुद्धरेत् ।
[1]उद्गीथमादौ विन्नेशः प्रयोज्यस्तदनन्तरम् ॥ ७ ॥

ब्रह्मसाधनसंयुक्तो मन्दरः स्यादनन्तरम् ।
आदिदेवो व्रतो भद्रबाहुः पश्चादुदीरितः ॥ ८ ॥

वह्निर्गोपनसंवीतः श्वसनो विष्णुशीर्षकः ।
वनमाली ततो योज्यो मधुसूदनसंयुतः ॥ ९ ॥

प्रणवादिशिरो वायुरिति वर्णाः [2]क्रमोदिताः ।
बीजं विष्णुरनुस्वारः सामर्थ्यं कथितं पुनः ॥ १० ॥

अङ्गानि षट् द्विषटकस्य मन्त्रस्येव विदुर्बुधाः ।
छन्दश्च देवी गायत्री[3] अन्तर्यामी मुनिः स्मृतः ॥ ११ ॥

---

1. गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिरेव च ।
त्रिष्टुप्च जगती चेति विराडिति तथैव च । अयं श्लोकः A, $M_2$ कोशयोरधिको दृश्यते । 2. वर्णक्रमोदितः $P_1$, $P_2$ 3. गायत्रमन्तर्यामी $P_1$,$P_2$



देवो नारायणः साक्षाद्दैवतं क्षेत्रमीरितम् ।
[1]परमं व्योम बुद्धिः स्यात्तत्त्वं वर्णस्सितस्तथा ॥ १२ ॥

प्रत्यक्षरमृषिर्ब्रह्मन् गौतमः प्रथमः स्मृतः ।
भरद्वाजो विश्वामित्रो जमदग्निरनन्तरम् ॥ १३ ॥

वसिष्ठः काश्यपः पश्चादत्रिः [2]कुम्भसमुद्भवः ।
छन्दांसि गायत्र्यादीनि विराडवसितानि च ॥ १४ ॥

धरो ध्रुवश्च सोमश्च आपश्चाग्निर्जलाधिपः ।
प्रत्यूषश्च प्रभातश्च देवाः प्रत्यक्षरं तथा ॥ १५ ॥

आकाशं परमं क्षेत्रमक्षरस्यावसानतः ।
सत्यादिलोकाः सप्त स्युः प्रातिलोम्येन भूमयः ॥ १६ ॥

अक्षराणां पृथिव्यन्ताः सप्तानां सप्त पद्मज ।
अग्निर्भूर्वायुराकाशः[3] सूर्यो द्यौरथ चन्द्रमाः ॥ १७ ॥

नक्षत्राणि तथा राशिरेते तत्त्वान्यनुक्रमात् ।
निरुक्तमस्य मन्त्रस्य कथयामि यथातथम् ॥ १८ ॥

[4]आपः क्लीबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।
[5]ओकारवर्णव्यत्यासः स्यादुकारस्तु[6] पद्मज ॥ १९ ॥

[7]मकारवर्णव्यत्यासो [8]वकारस्याप्ययन्त्विदम् ।
अन्तर्बहिश्च तत्सर्वं व्याप्नोति तदुदीर्यते ॥ २० ॥

---

1. परमव्योम T,$P_1$,$P_2$ 2. स्यात् कुम्भसंभवः T,$P_1$,$P_2$ 3. आकाशं T,$P_1$,$P_2$ 4. आपः क्लीबश्च तौ व्याप्तौ A; अविः क्लीबन्तो व्याह्यर्थः T,$P_1$,$P_2$ 5. ओङ्कार° $P_2$ 6. °उकारस्य T,$P_2$ 7. मकारमस्मिन् व्यत्यासः A 8. रकारस्य° A; पकारस्य° $M_2$

अथवा तन्तुसन्तानवृत्तेर्वाथ भविष्यति ।
टेश्च लोपो वकारस्य प्रसारणमतः परम् ॥ २१ ॥

पूर्वत्वं चोपसर्गेण स्यादन्तश्चाद्गुणः कृतः ।
यस्मिन्नोतमिदं सर्वं तदेवमभिधीयते ॥ २२ ॥

अवते रक्षणार्थत्वादटिल्लोपे च वर्तते ।
वकारस्योपधायाश्च द्वयोरूठागमः स्मृतः ॥ २३ ॥

गुणे च रूपं यत्सर्वं त्रायते तत्परं पदम् ।
अभिधेयमिति प्रोक्ता निरुक्तिः प्रणवस्य सा ॥ २४ ॥

नम्यते [1]देव एवैकस्तेषामेकं परायणम् ।
नरो देवः परस्स्रष्टा सर्गादौ पाथसामथ ॥ २५ ॥

तस्मान्नाराणि पाथांसि तान्येवायनमुच्यते ।
देवस्य हेतोश्चामुष्मान्नारायणसमाह्वयः ॥ २६ ॥

नारा वायनमावासः पुरुषस्य मधुद्विषः ।
अण्प्रत्ययः प्रकृत्यर्थे ततो वाससमाह्वयः ॥ २७ ॥

एवं मन्त्रमिमं लब्ध्वा सम्यग्गुरुमुखात्ततः ।
गुरुशुश्रूषणपरः सर्वमन्त्राणि साधयेत् ॥ २८ ॥

ब्रह्मचर्ये स्थितो मौनी मेध्याहाराशनो व्रती ।
अशनीयानि मेध्यानि वक्ष्यामि शृणु तान्यपि ॥ २९ ॥

पयोयावकशाकाम्बुफलमूलानि सक्तवः ।
आद्यं कुशोदकं मेध्यं दधि भिक्षान्नमेव च ॥ ३० ॥

---

1. देवता वैकः $M_2$



साधने मन्त्रजापस्य शृणु कालं यथोदितम्[1] ।
मार्गशीर्षे शुभे मासि द्वादश्यां चन्द्रवर्धने ॥ ३१ ॥

आराध्य परया भक्त्या नारायणमनन्यधीः ।
चक्राब्जमण्डले देवं ध्यायेदेवं समाहितः ॥ ३२ ॥

चतुर्बाहुमुदाराङ्गं चक्राद्यायुधसेवितम् ।
कालमेघप्रतीकाशं पद्मपत्रायतेक्षणम् ॥ ३३ ॥

पीताम्बरधरं सौम्यं प्रसन्नेन्दुनिभाननम् ।
चारुहासं सुताम्रोष्ठं रत्नोज्ज्वलितकुण्डलम् ॥ ३४ ॥

सुभ्रूललाटसुमुखं सर्वाभरणभूषितम् ।
ललाटे तिलकं सौम्यं दीपवत् श्वेतमृत्स्नया[2] ॥ ३५ ॥

स्फुरत्कटककेयूरहारकौस्तुभभूषितम् ।
स्फुरद्भास्करवर्णाभं शोभितं वनमालया ॥ ३६ ॥

प्रद्योतनसहस्राभभूषणैरपि [3]मण्डितम् ।
दिव्य[4]चन्दनलिप्ताङ्गं दिव्यमालाविभूषितम् ॥ ३७ ॥

श्रीभूमिभ्यां [5]सुखासीनं स्वर्णसिंहासने शुभे ।
ध्यात्वैवं देवदेवेशं मन्त्रजापपरो भवेत् ॥ ३८ ॥

सुखासीनो यथाकालं शुचिर्भूत्वा समाहितः ।
मन्त्रं जपेज्जगन्नाथं समाराध्य दिने दिने ॥ ३९ ॥

जपेल्लक्षाष्टकं प्रोक्तं तदर्धं [6]जलतर्पणम् ।
तदर्धं जुहुयादग्नौ ततस्सिद्ध्यति मन्त्रराट् ॥ ४० ॥

---

1. यथोचितम् $M_2$ 2. धृतोर्ध्वपुण्ड्रतिलकं मण्डितं चण्डभानुना । अयमर्धः $P_1$,$P_2$ ग्रन्थयोरुपलभ्यते । 3. भूषितम् T, $P_1$, $P_2$ 4. ०गन्धानुलिप्ताङ्गं $M_2$
5. सहासीनं T 6. तिलतर्पणम् T, $P_1$, $P_2$

अथ संसाधिते मन्त्रे स्वप्ने जागरणे तथा ।
सिद्धिलिङ्गानि मन्त्रस्य मन्त्री पश्यति सन्ततम् ॥ ४१ ॥

ततस्सिद्धेन मन्त्रेण साधयेद्धर्ममुत्तमम् ।
अथ मन्त्रवरात्[1] धर्मसाधनं योऽभिवाञ्छति ॥ ४२ ॥

यः पितॄणां च सर्वेषां तर्पणं मन्त्रवित्तमः ।
ऋणत्रयाद्विनिर्मुक्तिं सर्वस्मादभिवाञ्छति ॥ ४३ ॥

उपोष्य स शुचिर्भूत्वा [2]कुम्भे चक्राब्जमण्डले ।
आवाह्य देवमाराध्य सम्यगर्घ्यादिसाधनैः ॥ ४४ ॥

गोहिरण्यादिभिर्द्रव्यैस्तिलैश्चैव कुशोदकैः ।
दत्तैर्मन्त्रजपैर्युक्तः प्रापयेल्लोकमक्षयम् ॥ ४५ ॥

पितॄन् मन्त्रप्रसादेन नरकस्थानपि क्षणात् ।
अतोऽन्यस्लुप्तपिण्डानां पितॄणां तृप्तिकारणम् ॥ ४६ ॥

विधिं वक्ष्यामि कल्याणं चतुर्वक्त्र यथातथम् ।
उपोष्य मन्त्रवित्पूर्वं पूर्वेद्युः सुसमाहितः ॥ ४७ ॥

पञ्चम्यां माघमासस्य मण्डलं चक्रपङ्कजम् ।
अर्चयित्वा ततस्तस्य मध्ये देवं जगद्गुरुम् ॥ ४८ ॥

यजेत कृसरान्नेन होमं तेनैव कल्पयेत् ।
समिदाज्यतिलैश्चापि[3] मन्त्रेणाष्टोत्तरं शतम् ॥ ४९ ॥

पित्रादिनाम सङ्कीर्त्य तारयेति पदान्वितम् ।
प्राचीनावीतिको भूत्वा होमान्ते दक्षिणामुखः ॥ ५० ॥

1. इहामुत्र परं $M_1$  2. कुर्यात् $M_2$  3. °तिलेनापि $P_1, P_2$



दक्षिणाग्रान् कुशान् भूमावास्तीर्य ध्यानमास्थितः ।
ध्यात्वा नारयणं देवं तर्पयेच्च तिलोदकैः ॥ ५१ ॥

तदक्षयं जलं दत्तं पितॄणां तृप्तिमावहेत् ।
तर्पयित्वा सदाचारान् ब्राह्मणान् भगवन्मयान् ॥ ५२ ॥

भोजयेत् षड्रसोपेतं भोजनं द्वादशावरान् ।
दद्यात्तेभ्यस्तिलान्वस्त्रान् गोहिरण्यादिकं ततः ॥ ५३ ॥

ततस्सव्ये भुजे न्यस्य ब्रह्मसूत्रं समाहितः ।
अग्रे भगवतो दर्भान् दक्षिणाग्रान् धरातले ॥ ५४ ॥

आस्तीर्य साग्रान् सुसमानासीनो दक्षिणामुखः ।
पात्रस्थमन्नं दधि च तिलांश्च बदरीफलम् ॥ ५५ ॥

कबलीकृत्य तान् पिण्डान् समान् मन्त्रमुदीरयन्[1] ।
मधुवातेति तिसृभिर्ऋग्भिर्बर्हिषि निक्षिपेत् । ५६ ॥

[2]गोत्रनाम समुच्चार्य पितॄणां सेचनं जलैः ।
पिण्डान् पितृभ्यो मातृभ्यो भ्रातृभ्यो गुरवे तथा ॥ ५७ ॥

आचार्याय तथान्येभ्यो बन्धुभ्यो ध्यानमास्थितः ।
अवसेचनपूर्वं तु मन्त्रेणानेन मन्त्रवित् ॥ ५८ ॥

पिण्डान् दद्यादभिध्यायन् देवं नारायणं हरिम् ।
[3]अवनेजनं प्रकुर्वीत पुनरेव विचक्षणः ॥ ५९ ॥

एवं विधाय विधिवदृणान्मुक्तश्च तत्क्षणात् ।
विमानं दिव्यमारुह्य याति ब्रह्म सनातनम् ॥ ६० ॥

1. उदीरयेत् $P_1, P_2$  2. $M_1$ कोशेऽयमर्धो नोपलभ्यते  3. आसेचनं $T, P_1$

उपवासान् बहुविधानक्षमः कर्तुमञ्जसा ।
देवं चक्राब्जमध्यस्थं यजेतार्घ्यादिसाधनैः ॥ ६१ ॥

सिद्धेनानेन [1]मनुना नैवेद्यैश्च चतुर्विधैः ।
हुत्वा घृतेन ज्वलने समिधाष्टोत्तरं शतम् ॥ ६२ ॥

तन्मयान् भोजयेद्विप्रान् दद्याच्च विभवोचितम् ।
इष्ट्वैवं देवदेवेशं व्रतस्थो नियतेन्द्रियः ॥ ६३ ॥

चान्द्रायणं पराकञ्च कृच्छ्रं सान्तपनं तथा ।
संवत्सरोपवासं च तथैकादश्युपोषितम् ॥ ६४ ॥

कृष्णाष्टम्यां श्रावणे च जयन्त्यादिव्रतेष्वपि ।
[2]एकैकस्योपवासस्य यदुक्तं फलमुत्तमम् ॥ ६५ ॥

तत्तच्छतगुणं[3] विद्यात्फलं पूजाविधेरपि ।
यज्ञकर्मफलाकाङ्क्षी तत्तत्फलमवाप्नुयात् ॥ ६६ ॥

तीर्थाभिगमनस्यापि फलं सप्ताहपूजनात् ।
पवित्रारोहणेनापि[4] व्रतादिपरिपूरणे ॥ ६७ ॥

स्नपने चोत्सवे पञ्चकालाभिगमने तथा ।
गोपुरालय[5]सालादिनिर्माणे प्रतिमासु च ॥ ६८ ॥

क्षेत्रारामतटाकादिप्रदाने च मधुद्विषः ।
घृतदीपप्रदाने च यत् फलं तत्सहस्रधा ॥ ६९ ॥

फलत्याराधनाद्विष्णोर्नात्र कार्या विचारणा ।
संक्रान्तौ मण्डले कुम्भे ज्वलने च मधुद्विषम् ॥ ७० ॥

---

1. मन्त्रेण T,$P_1$,$P_2$  2. एकादश्युपवासस्य A,$P_2$  3. ततश्चतु॰णं $M_2$
4. ॰आरोपणे वापि A  5. ॰शालादि॰ A



आवाह्य पूजयेद्देवं परमान्नैश्चतुर्विधैः ।
जुहुयान्मनुनानेन ज्वलनेऽष्टोत्तरं शतम् ॥ ७१ ॥

तन्मयान् भोजयेत्प्रीत्या[1] दद्याच्चैव यथावसु ।
यस्य यस्य च धर्मस्य फलं यद्यदुदीरितम् ॥ ७२ ॥

तस्य तस्य फलं तत्तन्मन्त्राच्छतगुणं भवेत् ।
अयने चोत्तरे कुम्भे वह्नौ चक्राब्जमण्डले ॥ ७३ ॥

सोपवासश्शुचिर्भूत्वा समावाह्य जगद्गुरुम् ।
यजेत [2]पूर्ववत्पश्चाद्धोमं पूर्ववदाचरेत् ॥ ७४ ॥

अथार्थसाधनं मन्त्रमभिवाञ्छति चेन्नरः ।
भद्रकं मण्डलं कृत्वा तस्मिन्नाराध्य मन्त्रवित् ॥ ७५ ॥

तिलैर्बिल्वैस्तथा[3]चेध्मैर्निम्बपुष्पैश्च तण्डुलैः ।
चम्पकैर्मल्लिकाभिश्च मालत्या करवीरजैः ॥ ७६ ॥

नन्द्यावर्तैर्यूथिकाभिः प्रत्येकं शतसंख्यया ।
[4]जुहोत विद्यया विद्वान् सप्ताहं चतुरानन ॥ ७७ ॥

धनमक्षयमाप्नोति मन्त्रस्यास्य प्रभावतः ।
चन्दनं कुङ्कुमं कोष्ठं रोचनालक्तकं तथा ॥ ७८ ॥

घनसारं मृगमदं पिष्ट्वा तत्क्षोदवारिणा ।
धनदं विलिखेद्भूमौ सप्तरात्रमनन्यधीः[5] ॥ ७९ ॥

यजेत गन्धप्रमुखैर्निवेद्य च गुलौदनम् ।
पादेनाक्रम्य हृदयं धनदस्य जपेत्ततः ॥ ८० ॥

---

1. शक्त्या T; भक्त्या A,$P_1$  2. पूर्ववद्देवं $M_2$  3. पद्मैः T,$P_1$,$P_2$
4. जुहुयात् T,$P_1$,$P_2$  5. जितेन्द्रियः A

अयुतं नियुतं वापि मन्त्रराजं जितेन्द्रियः ।
ध्यात्वा नारायणं देवं तदन्ते मन्त्रवित्तमः ॥ ८१ ॥

साक्षात्करोति धनदं [1]तस्मै च धनमक्षयम् ।
प्रयच्छति धनाध्यक्षैरानीतं [2]स्वाश्रयात् क्षणात् ॥ ८२ ॥

माणिभद्रादिभिर्मन्त्रैः प्रभावेन चतुर्मुख ।
सप्ताहमथवा [3]ध्यानं कृत्वा भद्रकमण्डले ॥ ८३ ॥

हुत्वाहुतिं[4] तदन्ते च कुर्याद्ब्राह्मणतर्पणम् ।
ध्यात्वा नारायणं देवमात्मानं साधकोत्तमः ॥ ८४ ॥

पश्यन् महीतलं शुद्धमप्रहाराद्बहिः स्थितः ।
भवन्ति [5]चास्य निधयः प्रत्यक्षा बहवस्तथा ॥ ८५ ॥

अञ्जनाञ्जितचक्षुर्वा मन्त्रेणानेन मन्त्रवित् ।
निधीन् पश्यति दुष्प्रापानभीष्टांस्तत्क्षणादसौ ॥ ८६ ॥

भद्रके मण्डले पूर्वमिष्ट्वा देवं जनार्दनम् ।
यज्ञदारुं वृषस्कन्धे बध्द्वा तस्मिन् हलं पुनः ॥ ८७ ॥

कर्षयेद्भूतलं शुद्धं सितासु मणिकाञ्चनम् ।
महदाप्नोत्यभिप्रेतमथवा कमलासन ॥ ८८ ॥

वल्मीकस्य तथाभ्यर्णे कृत्वा भद्रकमण्डलम् ।
यजेत पूर्ववद्देवमन्ते वल्मीकभूमिषु ॥ ८९ ॥

नालिकेरजलैस्सार्धं पिष्टं नागबलिं क्षिपेत् ।
खात्वा वल्मीकधिष्ण्यन्तं तत्र पश्येन्महद्धनम् ॥ ९० ॥

---

1. तथैव T,$P_1$,$P_2$ 2. स्वेच्छया $M_2$ 3. यागं T,$P_1$,$P_2$
4. हुती: T,$P_1$,$P_2$ 5. चान्य A



खनित्रं क्षालयित्वा तु निशायामधिवासयेत् ।
मण्डले स्वस्तिके देवमिष्ट्वा हुत्वा तथाहुतीः ॥ ९१ ॥

अष्टोत्तरशतं भूयः [1]प्रातर्निक्षिप्य भूतले ।
शुचौ खनेत् खनित्रेण लभते सुमहद्धनम् ॥ ९२ ॥

[2]साधितं पारदं कृत्वा हस्ते जप्त्वा मनुं पुनः ।
नियुतं प्रयुतं वापि यथाशक्ति समाहितः ॥ ९३ ॥

तद्द्रवस्पर्शमात्रेण सर्वं काञ्चनतामियात् ।
पाषाणमथवा लोष्टमग्नितप्तं न संशयः ॥ ९४ ॥

औषधानि च सर्वाणि रसयुक्तानि पद्मज ।
लोहसंस्पर्शयुक्तानि सुवते कनकं महत् ॥ ९५ ॥

इत्थं धनवतां कामसमुद्रान्तः कः प्रवर्तते ।
तत्प्राप्तये विधायाब्जमण्डलं तत्र संस्मरेत् ॥ ९६ ॥

मन्त्रेशमर्चयित्वाग्रे यथापूर्वमनन्यधीः ।
जुहुयाच्च यथोक्तेन मार्गेण दिनसप्तकम् ॥ ९७ ॥

पद्मरागरुचं देवं स्मृत्वा मन्त्रं जपेत्सुधीः ।
पूर्वोक्तसंख्यया स्त्रीणां भोगं [3]चेच्छति दुर्लभम् ॥ ९८ ॥

चिन्तयित्वा फलं होमकर्मण्यवसिते ततः ।
अभीष्टसाधकं सर्वाः प्रार्थयन्ते वरस्त्रियः ॥ ९९ ॥

यावज्जीवं न त्यजन्ति कामार्ता मन्त्रवित्तमम् ।
कन्याकामः फलैः पक्वैः पुष्पैर्लाजै र्दिने दिने ॥ १०० ॥

---

1. घृतं निक्षिप्य $M_2$ 2. पारदं परशुं $M_1$ 3. चेतसि A

सहस्रं जुहुयाद्देवमाराध्य गरुडध्वजम् ।
लभते कन्यकामिष्टां तदन्ते न विचारणा ॥ १०१ ॥

यन्त्रं वश्यकरं वक्ष्ये श्रूयतां तद्यथातथम् ।
[1]भूर्जपत्रे लिखेच्चक्रमष्टारं रोचनादिकैः ॥ १०२ ॥

चन्दनद्वयकाश्मीरशशिकस्तूरिकान्वितैः ।
हेमसूच्या लिखेदेतैर्गन्धद्रव्यैस्तथापरैः ॥ १०३ ॥

[2]नाभिनेमियुतं चक्रमष्टारं ज्वालयान्वितम् ।
अष्टस्वरेषु विलिखेदक्षराण्यष्ट पद्मज ॥ १०४ ॥

प्रादक्षिण्येन विस्पष्टं ह्रीङ्कारं मध्यमे पदे ।
साध्यनामापि तत्रैव सोङ्कारं तदनन्तरम् ॥ १०५ ॥

हुङ्कारं नाभिवलये दिक्ष्वष्टासु समर्पयेत् ।
[3]ह्रीङ्कारं [4]नेमिवलये वशीकरणमक्षरम् ॥ १०६ ॥

तथैवाशासु सर्वासु वशं कुरु पदान्वितम् ।
तस्मिन्नावाह्य देवेशमिष्ट्वा मन्त्रं जपे[5]त्ततः ॥ १०७ ॥

अष्टोत्तरसहस्रं तु जुहुया[6]त्तावदाहुतीः ।
गुलिकां बिभ्रतस्तस्य वश्यं सर्वमनन्तरम् ॥ १०८ ॥

अथवा पादयोः पांसून् रक्तचन्दनमिश्रितान् ।
आदाय पुरुषाकारं स्त्रीरूपं वा यथेप्सितम् ॥ १०९ ॥

कृत्वा प्रतिकृतिं तस्मि[7]न्नात्मानं संस्मरेद्धरिम् ।
ताडयेन्मूलमनुना रक्तैस्तु हयमारजैः ॥ ११० ॥

---

1. अयमर्धः T, P कोशे ग्रन्थे चोपलभ्यते । 2. नेमि शुभं $M_1$
3. श्रीङ्कारं $M_1$ 4. नाभिवलये $M_1$ 5. बुधः $T, P_1, P_2$ 6. यादहुतीस्ततः $T, P_1, P_2$ 7. न्यस्यात्मानं स्मरेद्धरिम् $T, P_2$



प्रत्यहं मन्त्र[1]जापः स्यादष्टोत्तरसहस्रकम् ।
वश्या नारी [2]पुमान्वापि सप्ताहान्ते जपाद्भवेत् ॥ १११ ॥

यावज्जीवं धनैर्दत्तैरात्मना वा यथेप्सितम् ।
तिलतण्डुलदूर्वाणामयुताहुतिभिः क्रमात् ॥ ११२ ॥

ब्राह्मणक्षत्रियविशो वश्या मन्त्रप्रभावतः ।
अपामार्गसमिद्भिर्वा होमाद्वै[3]श्यान्वशं नयेत् ॥ ११३ ॥

औदुम्बरसमिद्भिर्वा पलाशसमिधापि वा ।
होमेन ब्राह्मणा [4]वश्याः पुर्वोक्ताहुतिसंख्यया ॥ ११४ ॥

त्रिभिर्मधुरसैः सिक्तैरपामार्गसमिच्छतैः ।
दशभिर्जुहुयादग्नौ राजा वश्यः क्षणाद्भवेत् ॥ ११५ ॥

अश्वत्थैः खादिरैर्वापि वशीकरणमीरितम् ।
वटवृक्षसमित्सङ्घैर्वैश्यास्सर्वे वशीकृताः ॥ ११६ ॥

शूद्रस्तु प्लक्षसमिधामाहुत्या स्ववशः क्षणात् ।
गन्धद्रव्यसमायुक्तमृत्स्नया तिलकं दधत् ॥ ११७ ॥

दृष्टमात्रेण जनतां वशं नयति मन्त्रवित् ।
ध्यात्वा करतले चन्द्रं तन्मध्ये विष्ठितं हरिम् ॥ ११८ ॥

सुखासीनं पुण्डरीककर्णिकायां सितप्रभम् ।
ध्यायन् करतलस्पर्शैः सर्वं वश्यं क्षणाद्भवेत् ॥ ११९ ॥

भक्ष्यं भोज्यं तथा पेयं फलं वा पुष्पमेव वा ।
स्पृष्ट्वा सहस्रजापेन [5]दत्तं [6]सर्वं वशं नयेत् ॥ १२० ॥

---

1. मन्त्रजापः प्रत्यहं $M_1$ 2. क्रमाद्वापि $M_1$ 3. द्वर्णान्वशं $T, P_1, P_2$
4. वैश्याः $T, P_1, P_2$ 5. दत्वा A 6. सर्वान् $T, P_1, P_2$

आकर्षणविधिं वक्ष्ये तं ब्रह्मन्नवधारय ।
भूर्जपत्रे लिखेच्चक्रमष्टारं पूर्ववर्त्मना ॥ १२१ ॥

गन्धद्रव्यैर्लिखेन्मन्त्रं हेमसूच्या विचक्षणः ।
वेष्टये[1]द्दुरुक्मसूत्रेण तद्यन्त्रमभिमन्त्रितम् ॥ १२२ ॥

शिखिपिञ्छपुटे न्यस्तं भावयित्वा जपेत्ततः ।
तन्नामसंयुतं मन्त्रं कुद्धयन्नाकर्षयेति च ॥ १२३ ॥

युक्तं सहस्रं सप्ताहं जपेत्प्रतिदिनं सुधीः ।
आत्मानं गरुडारूढं सायुधाष्टभुजं हरिम् ॥ १२४ ॥

बन्धूकपुष्पसदृशं भावयित्वा जितेन्द्रियः ।
वामोत्सङ्गे हरेर्देवीं निषण्णां कामविह्वलाम् ॥ १२५ ॥

पाशाङ्कुशधरां लक्ष्मीं ध्यात्वा च तदनन्तरम् ।
नृपं बध्द्वा गले पाशैः ताडयित्वाङ्कुशादिभिः ॥ १२६ ॥

आयुधैः पृष्ठतो मन्त्रमाकर्षयपदान्वितम् ।
जप्त्वायुतं सप्तदिनं योजनानां शते स्थितम् ॥ १२७ ॥

अपि भूपं नयत्याशु साधको मन्त्रतेजसा ।
अनेन महता युक्ताः स्वयमेवागता नृपाः ॥ १२८ ॥

वश्या भवन्ति कृत्वैवं विप्रादीनपि चानयेत् ।
योषिदाकर्षणे [3]चापि कृत्वैवं कर्म मन्त्रवित् ॥ १२९ ॥

पञ्चबाणेषुभिर्विद्धां सर्वाङ्गेषु स्त्रियं स्मरेत् ।
पाशबद्धां तथैवान्यैरायुधैस्ताडितां भृशम् ॥ १३० ॥

1. दुक्त T,P1,P2  2. कृद्धं आकर्षयेति च A  3. वापि M2



[1]क्षिप्रमेकां नयेन्नारीं सप्ताहाच्छरवेगवत् ।
दूरस्थितामपि तथा राज्ञो वा महिषीमपि ॥ १३१ ॥

सा सन्निधत्ते कामार्ता मदविह्वललोचना ।
समृद्धार्थात्मना वापि धनैर्वापि यथेप्सितैः ॥ १३२ ॥

साधकं तोषयत्येषा मन्त्रजापाद्यथोदितात् ।
मृतनारीकपाले वा रोचनाद्येन वस्तुना ॥ १३३ ॥

पूर्ववच्चक्रमालिख्य तन्मध्येऽभीष्टयोषितः ।
लिखित्वा नामधेयं तत्कपाले ज्वलने पुनः ॥ १३४ ॥

तापयित्वा जपेन्मन्त्रं सप्ताहं पूर्वसङ्ख्यया ।
ततस्सिध्यति नारी सा दूरस्थापि यथेप्सिता ॥ १३५ ॥

यक्षाणा[2]मथ यक्षीणां साधनं शृणु कथ्यते ।
[3]वटवृक्षे कुटीं कृत्वा तत्र चक्राब्जमण्डले ॥ १३६ ॥

आराध्य देवं जुहुयाद्वटवृक्षसमिच्छतैः ।
दशभिः प्रत्यहं मन्त्री सप्ताहे परिनिष्ठिते ॥ १३७ ॥

पूर्वमेव वटे यक्षं यक्षीं वा कुङ्कुमादिभिः ।
लिखित्वा कर्म तत्सर्वं कुर्यादभिमुखे स्वयम् ॥ १३८ ॥

सप्तमेऽह्नि वटे रात्रौ कम्पितेऽभीतवत् स्थितः ।
गुग्गुलुं घृतमिश्रं च धूपयेन्मन्त्रवित्तमः ॥ १३९ ॥

वटाभिमुखमुत्थाय यक्षीं वा यक्षमेव वा ।
साक्षात्करोति तां तं वा याचेताभीष्टमुत्तमम् ॥ १४० ॥

1. मेवानयेन्नारीं T,P1,P2  2. मपि T,P1,P2  3. बिल्व A

मातृत्वं वा स्वसृत्वं वा भ्रातृत्वं वा यथातथम् ।
पितृत्वं वाथ भार्यात्वमीप्सितं सर्वमाप्नुयात् ॥ १४१ ॥

प्रयच्छति यथायोगं यक्षी यक्षश्च मन्त्रिणे ।
माता चेन्मातृवद्रक्षेत्पिता चेत् पितृवत्तथा ॥ १४२ ॥

एवं भ्रात्रादयोऽप्यन्ये यथास्वत्राणतत्पराः ।
विद्याधरवशीकारे विधानमपरं शृणु ॥ १४३ ॥

अशोकवृक्षमूलोर्व्यां कुर्यात्[1]पूजादि पूर्ववत् ।
विद्याधरेण यच्छक्यं कर्तुमस्यापि तद्भवेत् ॥ १४४ ॥

अन्येषां देवयोनीनामेवं कुर्याद्यथाविधि ।
ते ते सर्वं प्रयच्छन्ति मन्त्रतुष्टा यथातथम् ॥ १४५ ॥

पातालसाधनं चापि शृणु गुह्यं यथातथम् ।
होमावसानं पूजादि कर्म कृत्वा यथोदितम् ॥ १४६ ॥

बिलद्वारसमीपे तु लक्षमष्टाक्षरं जपेत् ।
क्षीरवृक्षशमीदूर्वातिलाद्यानामनन्यधीः ॥ १४७ ॥

प्रत्येकमयुतं होमं कुर्याद्वै साधकोत्तमः ।
निर्गच्छति बिलात्तस्मात्कामार्ता कन्यका स्वयम् ॥ १४८ ॥

सहस्रपरिवारेण सार्धमायतलोचना ।
गृहीत्वा मन्त्रिणं स्वेषु मन्दिरेषु यथासुखम् ॥ १४९ ॥

रमते दिव्यभोगैस्सा विचित्रैरतिमानुषैः ।
पातालद्वारपार्श्वे तु कारयेद्यागमण्डपम् ॥ १५० ॥

1. पूजां तु $M_1$



ध्वजतोरणसंयुक्तं द्वारकुम्भोपशोभितम् ।
चक्राब्जं वर्तयेत्तत्र ध्यात्वा नारायणं प्रभुम् ॥ १५१ ॥

यजेत पूर्ववद्धोमं कृत्वा पूर्वोक्तसंख्यया ।
अष्टलक्षं मिताहारो जितेन्द्रियो अनन्यधीः ॥ १५२ ॥

तत्क्षणादेव नागेन्द्रकन्यका मन्त्रिणः पुरः ।
स्थिता मनोभववशा सहस्रैः [1]परिवारिताः ॥ १५३ ॥

आत्मतुल्याभिरन्याभिः कन्यकाभिर्वशीकृताः ।
गृहीत्वा मन्त्रिणं ताश्च नागालयपुरोत्तमे ॥ १५४ ॥

प्रविश्य विविधैर्भोगैर्वशीकुर्वन्ति मन्त्रिणम् ।
पीत्वा रसायनं चापि यावदाभूतसंप्लवम् ॥ १५५ ॥

रमते भीरुभिस्सार्धं दिवि देवपतिर्यथा ।
खड्गसाधनमाश्चर्यं [2]वक्ष्यते तद्यथातथम् ॥ १५६ ॥

देहजं लोहितं मन्त्री श्मशानाङ्गारमिश्रितम् ।
पेषयित्वा [3]लिपेत्खड्गं चतुस्तालायतं शुभम् ॥ १५७ ॥

श्मशानदेशे तन्मूलं स्पृष्ट्वा मन्त्रं जपेत्सुधीः ।
निशीथे निर्जने तावद्यावज्ज्वालां विमुञ्चति ॥ १५८ ॥

ज्वालाभिरस्य शोभन्ते दिशो दश चतुर्मुख ।
नानाविधानि भूतानि भवन्ति भयहेतवः ॥ १५९ ॥

अभीतो निश्चलो मन्त्रं जपेदेवं समाहितः ।
स्फुरन्तं पाणिना खड्गं गृहीत्वा दृढमुष्टिना ॥ १६० ॥

1. परिवारकैः $M_1$ 2. शृणु वक्ष्यामि तद्यथा T, $P_1$, $P_2$
3. लिखेत् $P_1$, $P_2$

मन्त्रं जपन्नभो याति यत्र विद्याधरादयः ।
विद्यामहिम्ना तेषां स राजा भवति मन्त्रवित् ॥ १६१ ॥

यक्षराक्षसदैत्यानां जेता मर्त्येषु किं पुनः ।
खड्गहस्तः सदा मन्त्रं जपन् याति त्रिविष्टपम् ॥ १६२ ॥

तत्रापि भोगमतुलं लभते चाप्सरोगणैः ।
खड्गं [1]वाथ समादाय पर्णैः पिप्पलसम्भवैः ॥ १६३ ॥

अन्तर्हितं विधायाशु नियुतं जपमाचरेत् ।
समिदाज्यैस्तथा बीजैर्जुहुयादयुतावरम् ॥ १६४ ॥

नररक्तं गजमदं पित्तमार्क्षं विमिश्रितम् ।
राजावर्तेन तैः खड्गं विलिप्याराधयेद्धरिम् ॥ १६५ ॥

तस्मिन् पूर्वोक्तमार्गेण खड्गं स्पृष्ट्वा जपः स्मृतः ।
अष्टोत्तरसहस्रेण पश्चात्तापादिसम्भवः ॥ १६६ ॥

तापे स्यादधमा सिद्धिर्मध्यमा धूमजन्मनि ।
उत्तमा ज्वलने दृष्टे पश्चात् खड्गधरः स्वयम् ॥ १६७ ॥

चरेदभीप्सितान् लोकान् भोगांश्चाप्नोति पुष्कलान् ।
शङ्खशुक्त्युदरे मन्त्रं लिखेद् गोरोचनाम्बुभिः ॥ १६८ ॥

जपेन्मन्त्रवरं स्पृष्ट्वा यावज्ज्वालावलोकनम् ।
समुत्थिता च तन्मध्ये कन्या सर्ववरप्रदा ॥ १६९ ॥

तिलकं चाक्षमालां च गुलिकाञ्जनपादुकाः ।
दिव्यौषधं रसेन्द्रश्च कपालस्थं रसाञ्जनम् ॥ १७० ॥

1. वाऽऽयसमादाय T, $P_1$, $P_2$



ददाति सर्वं सा कन्या मन्त्रिणे मन्त्रवैभवात् ।
तिलकं बिभ्रतस्तस्य नरनारीमृगादिकम् ॥ १७१ ॥

स्मृतिमात्रेण पुरतो दृष्टं भवति तद् ध्रुवम् ।
तयाक्षमालया जप्तः पुरश्चरणवर्जितः ॥ १७२ ॥

मन्त्रो यथेप्सितान् कामान् तस्मै शीघ्रं प्रयच्छति ।
निधाय गुलिकामास्ये निर्भयः सर्वविष्टपे ॥ १७३ ॥

चरत्येष यथाकामं दीर्घमायुश्च विन्दति ।
अञ्जनेनाक्तनयनः स्याददृश्यः सुरासुरैः ॥ १७४ ॥

पादुकास्पर्शमात्रेण चारयत्यनले जले ।
दूरं वा गमयेच्छीघ्रं यं यं देशमभीप्सति ॥ १७५ ॥

दिव्यौषधेन भुक्तेन दुर्व्याधिर्नश्यति क्षणात् ।
[1]अचिकित्स्योऽपि कुष्ठादिर्नात्र कार्या विचारणा ॥ १७६ ॥

पाषाणादि रसेन्द्रेण स्पृष्टमग्नौ प्रतापितम् ।
हिरण्यं भवति ब्रह्मन् पीत्वा चापि रसायनम् ॥ १७७ ॥

बलवानपि तेजस्वी बलीपलितवर्जितः ।
[2]कपालाग्नौ च निक्षिप्य शत्रुमूर्धनि निक्षिपेत् ॥ १७८ ॥

[3]उच्छ्वासितो वा म्रियते सान्वयायसुहृज्जनः ।
दर्शयन्निन्द्रजालं चेन्मायां देवीं लिखेद्भुवि ॥ १७९ ॥

कृष्णां चतुर्भुजां सौम्यां सर्वाभरणभूषिताम् ।
सर्वाङ्गसुन्दरीं मन्त्री पूजयित्वा जपेत्ततः ॥ १८० ॥

1. अचिकित्सो विकुष्ठादि T  2. कपाले चाश्मा कपाले वाश्मा $P_1$, $P_2$
3. उद्वासितो वा T, $P_1$, $P_2$

अयुतं नियुतं वापि मन्त्रमष्टाक्षराह्वयम्[1] ।
[2]सिद्धिः करस्था सा देवी चतुरङ्गबलं महत् ॥ १८१ ॥

भूमौ व्योम्नि बलं सर्वमुद्यतादायुधमद्भुतम् ।
दर्शयित्वाशु मन्त्रेण मन्त्रिणे मन्त्रसिद्धिदा ॥ १८२ ॥

त्रैलोक्यमपि सर्वं सा प्रदर्शयति तोषिता ।
गुलिका कथ्यते ब्रह्मन्निर्माणमधुनोच्यते[3] ॥ १८३ ॥

मनश्शिला तथा कुष्ठं हरितालं च कुङ्कुमम् ।
गोरोचनाश्च चक्राङ्गं[4] सर्वं पिष्ट्वा मधुत्रिकैः ॥ १८४ ॥

कृत्वा च गुलिकां चक्रपद्ममध्ये निवेशयेत् ।
एकादशीनिशायां वा यजेत हरिमव्ययम् ॥ १८५ ॥

द्वादश्यामर्चयित्वा च[5] जपेन्मन्त्रं यथापुरम् ।
होममग्नौ प्रकुर्वीत सहस्रं सर्पिषा ततः ॥ १८६ ॥

सिद्धेयं गुलिका [6]सर्वं साधयेत् साधकस्य हि ।
वेतालसाधनं [7]ब्रह्मन् कथयामि यथातथम् ॥ १८७ ॥

ब्राह्मणं क्षत्रियं वापि युवानं निर्व्रणं मृतम् ।
तत्क्षणादेव सङ्गृह्य शून्यागारे निवेशयेत् ॥ १८८ ॥

क्षालयित्वा मलं सर्वं चक्रपद्मे निवेश्य तम् ।
हृदयं तस्य चाक्रम्य पादेन ध्यानमास्थितः ॥ १८९ ॥

जपेन्मन्त्रं दिवारात्रं निशीथे कम्पते शवः ।
निर्भयस्ताडयेद्देहं सिद्धार्थैरभिमन्त्रितैः ॥ १९० ॥

---

1. मष्टाक्षरान्वितम् $T, P_1, P_2$ 2. सिद्धा पदं ते देवी T; सिद्धा तदन्ते सा देवी $P_1, P_2$ 3. तन्निर्माणं मयोच्यते $M_2$ 4. सर्वाङ्गं $M_2$ 5. सः $M_2$; तु $T, P_1, P_2$ 6. सद्यस्साधयेत्सर्वमीप्सितम् $M_2$ 7. चापि $M_2$



कम्पमानं शरीरं तदुत्थायाग्रेऽवतिष्ठते ।
किं करोमीति च ततो मन्त्रिणं सम्पुटाञ्जलिः ॥ १९१ ॥

ब्रुवाणो मन्त्रिणे तस्मै प्रयच्छति यथेप्सितम् ।
[1]खड्गमिष्टं तथा दिव्यमौषधं च रसायनम् ॥ १९२ ॥

गुलिकां पादुके [2]सिद्धं रसं वेणुपुटे स्थितम् ।
पादलेपं चाक्षसूत्रमन्यद्वा दुर्लभं नृभिः ॥ १९३ ॥

पादलेपेन गमनमाकाशेषु[3] सुमन्त्रिणः ।
खड्गेन शत्रुसैन्यानां वधः केसरिणामपि ॥ १९४ ॥

दिव्यौषधानां सर्वेषां फलं पूर्वमुदीरितम् ।
आमयानामपस्मारमुखानां शान्तये विधिः ॥ १९५ ॥

भूभागे शल्यरहिते कृत्वा मण्टपमादितः ।
निर्व्रणान् लक्षणोपेतान् कलशान् पञ्चविंशतिम् ॥ १९६ ॥

पूरितान् द्रोणमात्रेण सर्पिराद्येन वस्तुना ।
ससूत्रान् सकुशांश्चैव सापिधानान् सवस्त्रकान् ॥ १९७ ॥

द्वारकुम्भांश्चतुर्दिक्षु तोरणानि च कल्पयेत् ।
प्रत्येकं कलशान् [4]सर्वान् मन्त्रेणैवाभिमन्त्रयेत् ॥ १९८ ॥

अष्टाक्षरेण प्रत्येकमष्टोत्तरशतावरम् ।
निशाम्बुना चन्दनेन श्वेतदूर्वाङ्कुरेण च ॥ १९९ ॥

भूर्जपत्रोदरे पद्ममष्टपत्रं सकर्णिकम् ।
नाभिनेमियुतं चक्रमष्टारं कमलाद्बहिः ॥ २०० ॥

---

1. खड्गमुष्टिं $T, P_1, P_2$ 2. सिद्धिं $M_2$ T. 3. °माकाशादिषु मन्त्रिणः $T, P_1, P_2$ 4. तत्तन्मन्त्रेणैवा° $M_1$

प्रणवं कर्णिकादेशे साध्यनाम च मध्यतः ।
अष्टाक्षराण्यष्टदले नाभौ स्पर्शाक्षरं लिखेत् ॥ २०१ ॥

[1]नेमिक्षेत्रे यकारादीनष्टारेषु स्वरान् पुनः ।
महामायाभिसंयुक्तं भास्करं दण्डशेखरम् ॥ २०२ ॥

नेमिभागे क्रमाद्दिक्षु विदिक्षु चतुरानन ।
कृत्वैवं सितसूत्रेण परिवेष्ट्य निरन्तरम् ॥ २०३ ॥

गुलिकां तण्डुलद्रोणमध्यस्थे कलशे क्षिपेत्[2] ।
आवाह्य हृदयात्तस्मिन् [3]मन्त्रेशं चक्रपङ्कजे ॥ २०४ ॥

चन्दनाद्यैस्सितैर्वस्त्रैः पुष्पैरन्यैश्च तादृशैः ।
शाल्योदनेन च हरिं यजेत सुसमाहितः ॥ २०५ ॥

पूर्णेन्दुमण्डलान्तःस्थमुद्गिरन्तं सुधारसम् ।
शशाङ्कशतसङ्काशं ध्यात्वा नारायणं हरिम् ॥ २०६ ॥

शान्तिं प्रयच्छ महतीमित्यन्ते समुदीरयेत् ।
शशिनो दिशि वृत्तेऽथ कुण्डे श्रीराज्यतण्डुलैः ॥ २०७ ॥

[4]गुग्गुलुं क्षौद्रबीजांश्च सप्ताहं होममाचरेत् ।
पूर्वोक्तसंख्यया कुम्भैः [5]स्थापितैरामयाविनम् ॥ २०८ ॥

स्नापयेन्मूलमन्त्रेण ध्यायेच्चैव जनार्दनम् ।
पूर्णेन्दुशतसङ्काशं स्यन्दमानं सुधारसम् ॥ २०९ ॥

तदीयपादकमलात् सर्वतो व्याधिपीडितम् ।
प्रविश्य ब्रह्मरन्ध्रेण प्लावयन्तमनन्यधीः ॥ २१० ॥

---

1. नाभि $T, P_1, P_2$ 2. न्यसेत् $M_1$ 3. मध्ये चक्रं च पङ्कजम् $M_2$
4. कुङ्कुमक्षौदनिम्बैश्च A 5. स्थापितैरामयान्वितम् M,T ; स्थापितं चामयाविनम् $P_1, P_2$



ध्यात्वा जपेन्मूलविद्यां मन्त्रविद् व्याधिपीडितम्[1] ।
उत्थापयति तन्मूर्ध्नि न्यस्य तां गुलिकामथः[2] ॥ २११ ॥

अपस्मारादयस्सर्वे शाम्यन्ति मनुतेजसा ।
अथादाय च मृत्पात्रं पैत्तलं वाथ काष्ठजम् ॥ २१२ ॥

तस्मिन्निक्षिप्य पीयूषं दधिसर्पिस्समन्वितम् ।
ओदनं चैत्यवृक्षादिमूले भूतबलिं [3]क्षिपेत् ॥ २१३ ॥

भोजयेद्ब्राह्मणानन्ते दद्यात्तेभ्यो यथावसु ।
[4]पौष्टिं वक्ष्यामि ते कर्म मण्डपादि यथापुरम् ॥ २१४ ॥

भूर्जपत्रे लिखेद्यन्त्रं प्राग्वत्पद्मादिसंयुतम् ।
श्रीभूमिमन्त्रं च लिखेत्केसरेषु दलेषु च ॥ २१५ ॥

गुलिकां वेष्टितां रक्तसूत्रैर्मधुघटे क्षिपेत् ।
विद्रुमाभं च मन्त्रेशं समावाह्य च [5]सर्वगम् ॥ २१६ ॥

सौम्याशायां पद्मकुण्डं कलशान् रक्तवाससः ।
वस्तु सर्वं यथोक्तं तद्युक्तं स्यात् सति सम्भवे ॥ २१७ ॥

बलिकर्म च कर्तव्यं कर्मान्ते कमलासन ।
महती [6]वृष्टिरेव स्यात् कृते कर्मणि शान्तिके ॥ २१८ ॥

आयुष्कामस्तु दूर्वाभिर्घृताक्ताभिर्यथोदितम्[7] ।
जुहुयान्मण्डपादीनां विधानं पूर्ववर्त्मना ॥ २१९ ॥

कर्मान्ते कलशैः स्नानं साध्यस्य कमलासन ।
एवं कृते यथाशास्त्रं आयुर्विन्दति पुष्कलम् ॥ २२० ॥

---

1. आधिपीडितम् T 2. मथ $T, P_1, P_2$ 3. हरेत् $M_1$ 4. पौष्टिकं वक्ष्यते कर्म $M_2$ 5. सर्वदा $M_2$ 6. पुष्टि $T, P_1, P_2$ 7. यथोदितामिति पाठेऽर्थबोधो न जायते । अतो यथोदितमिति पाठेन भाव्यम् ।

आरोग्यकामस्सावित्रे मण्डले हरिमर्चयेत् ।
रुक्माभं विद्ययाऽर्घ्यादिसाधनैरुक्तवर्त्मना ॥ २२१ ॥

पूर्ववज्जपहोमादि होमो गुग्गुलुवस्तुभिः ।
जपान्ते प्रणमेन्नित्यमङ्गैरष्टाभिरात्मवान् ॥ २२२ ॥

यावदायुष्यमारोग्यं लभते मन्त्रवैभवात् ।
[1]ज्वरितस्य भवेच्छान्तिरमृताचूतपल्लवैः ॥ २२३ ॥

पूर्वोक्तेन विधानेन सर्वमन्यद्यथोदितम् ।
ज्वरशान्तिर्भवेदन्ते विद्यावीर्यप्रभावतः ॥ २२४ ॥

चन्दनादिद्रुमैर्लौहैर्यद्वा प्रतिकृतिः कृता ।
पूजिता पूर्ववत्सर्वान् कामानाशु प्रयच्छति ॥ २२५ ॥

होमश्च कर्मानुगुणैर्द्रव्यैः स्यात्कमलासन ।
अश्वत्थं मन्दवारेषु स्पृष्ट्वा दक्षिणपाणिना ॥ २२६ ॥

जपतो नापमृत्युः स्यात्पूर्वमीरितसंख्यया ।
घृतमिश्रं वचाचूर्णं यद्वा ब्राह्मीं घृताप्लुताम् ॥ २२७ ॥

ज्योतिष्मतीरसं वापि स्पृष्ट्वा लक्षं जपन् पिबेत् ।
मुहूर्ते शोभने प्राप्ते वाक्सिद्धिस्तस्य निश्चिता ॥ २२८ ॥

औदुम्बरेऽथवा [2]पात्रे कपिलाज्यं चतुष्पलम् ।
मिश्रं श्वेतवचाचूर्णं यद्वा चन्द्रेमघायुते ॥ २२९ ॥

पुण्ये[3] सारस्वते योगे श्वेतवर्णं चतुर्भुजम् ।
श्वेतपद्मे सुखासीनं चन्द्रमण्डलमध्यगम् ॥ २३० ॥

1. ज्वलितस्य T 2. पत्रे T 3. पूर्णे $M_2$



इष्ट्वा देवं गोघृतेन जुहुयाच्च यथाविधि ।
स्पृशन् स्रुचं स्रुवं पश्चाल्लभते वाचमुत्तमाम् ॥ २३१ ॥

अष्टबाहुं चन्द्रनिभमात्मानं शेषविष्टरे ।
सुखासीनं भावयित्वा [1]कौपीनं प्रतिवादिनम् ॥ २३२ ।

पिधाय जिह्वां हृदयं मुसलेन शिरोऽङ्कुशैः ।
ताडयेद्गदया पृष्ठं पाशैर्बद्ध्वा कलेबरम् ॥ २३३ ॥

तस्यैव जिह्वामध्ये च माहेन्द्रं दण्डशेखरम् ।
विन्यस्य स्तम्भयेद्वाचमेवं ध्यायन्विचक्षणः ॥ २३४ ॥

आत्मनो वादिनश्चैव मध्ये यवनिका भवेत् ।
मन्त्रं शतगुणं जप्त्वा वादी वाचं समुत्सृजेत् ॥ २३५ ॥

सद्यः परस्यापजयो विजयश्चात्मनो भवेत् ।
स्तम्भने नैव दोषः स्याद्बाह्यश्चेत्प्रतिवादिनः ॥ २३६ ॥

ब्रह्मवर्चसकामश्चेत् [2]समिधो ब्रह्मवृक्षजाः ।
श्वेतपङ्कजहोमो वा राज्यकामस्य मन्त्रिणः ॥ २३७ ॥

समिधो [3]रक्तवर्णाः स्युर्बिल्वपुष्पाणि पद्मज ।
[4]लक्ष्मीं सुमनसो वापि यद्वा बोधिसमुद्भवाम् ॥ २३८ ॥

चन्द्रमण्डलमध्यस्थं श्वेतपङ्कजविष्टरे ।
स्थितं द्विहस्तं सुभगं बालभूषणभूषितम् ॥ २३९ ॥

बालावस्थं प्रसन्नेन्दुवर्चसं नीलकुन्तलम् ।
राजतं पात्रमन्नेन पायसेन प्रपूरितम् ॥ २४० ॥

1. कोपिनं T. P. 2. समिद्भिर्ब्रह्मवृक्षजैः $M_1$ 3. -पद्माः स्युः A
4. लक्ष्मीमिति पाठःसाधीयान् ।

बिभ्राणं वामहस्तेन दध्यन्नकबलं पुनः ।
[1]दधानमितरेणापि ध्यात्वा देवं समाहितः ॥ २४१ ॥

अन्नेन जुहुयादग्नौ बह्वन्नं[2] समवाप्नुयात् ।
गोकामो गोमयैः क्षीरैस्तदीयैर्होममाचरेत् ॥ २४२ ॥

लभते धेनुकं सद्यो मन्त्रविन्मन्त्रवैभवात् ।
भूमिकामो मृदा होमं दुर्लभां लभते भुवम् ॥ २४३ ॥

फलैर्बिल्वसमुद्भूतैर्होमाद्राष्ट्रसमुद्भवः ।
वस्त्रकामस्सुमनसां कालजानां चतुर्मुख ॥ २४४ ॥

सितासितादिवर्णानां होमान्नियुतसंख्यया ।
नानाविधानि वस्त्राणि लभते नात्र संशयः ॥ २४५ ॥

यद्यत्कामयते मन्त्री धान्यजातमनेकधा ।
तत्तद्धोमेन तत्सर्वं लभते मन्त्रवैभवात् ॥ २४६ ॥

[1]मन्त्राक्षरैर्मन्त्रितं बीजमुप्तं बहुफलं भवेत् ।
पुत्रकामो हविष्याशी समाराध्य जगद्गुरुम् ॥ २४७ ॥

चक्राब्जमण्डले कुम्भस्थापनादि विधाय च ।
यथापूर्वं पायसान्नं होमान्ते स्थापितैर्घटैः ॥ २४८ ॥

अभिषिच्य तदम्भांसि पाययेत् स्त्रियमागताम् ।
सा पुत्रान् लभते त्विष्टान् बहून्विद्याविचक्षणान् ॥ २४९ ॥

इष्ट्वा नारायणं देवं चक्राब्जे प्रोक्तवर्त्मना ।
अनुग्रहे निग्रहे च सर्वेषां शक्तिमान् भवेत् ॥ २५० ॥

1. इतरेण धारयन्तं $M_2$  2. -न्नत्वमवाप्नुयात् T, $P_1$, $P_2$
3. मन्त्राभिमन्त्रितं T, $P_1$, $P_2$



कम्पने वसुधादीनां पर्वतानां च भेदने ।
शोषणे वा समुद्राणां सर्पाणां स्तम्भनेऽपि च ॥ २५१ ॥

सर्गस्थितिविनाशानामपि कर्ता यथा हरिः ।
ध्यानाच्च देवदेवस्य जपान्मन्त्रस्य च क्षणात् ॥ २५२ ॥

नश्यन्ति भूतवेतालप्रमुखानि चतुर्मुख ।
दुष्टसत्वानि मन्त्रस्य प्रभावान्नात्र संशयः ॥ २५३ ॥

विष[1]दष्टमवस्थाप्य ध्यात्वा च गरुडध्व[2]जम् ।
देवं विद्यां समुच्चार्य तीक्ष्णतुण्डेन ताडयेत् ॥ २५४ ॥

गरुडस्य च पक्षाभ्यां विषदष्टस्य मूर्धनि ।
एवं ध्यात्वा विषं सर्वं व्यपोह्योत्थापयेन्मृतम् ॥ २५५ ॥

भुक्तं विषेण संसृष्टमन्नं बीजं फलं तथा ।
जरयेद्विद्यया सद्यः सर्वदोषं च नाशयेत् ॥ २५६ ॥

अक्षयश्चाभिवृद्धिश्च धनस्य यदि काङ्क्षतः ।
संस्पृश्य विद्यया सर्वं निक्षिपेद्बहुजस्तया ॥ २५७ ॥

बन्धूककुसुमप्रख्यमात्मानं भगवन्मयम् ।
ध्यायन् यायात्सभां तत्र क्रुद्धश्शाम्यति भूमिपः ॥ २२८ ॥

अनुक्तास्सिद्धयः सर्वाः सिध्यन्त्यत्यन्तविस्तृताः ।
शास्त्रे मन्त्र[3]प्रभावेन देवभूयं प्रपद्यते ॥ २५९ ॥

वृष्टिकामो बहिश्शालां पूर्वोक्तविधिना कृताम् ।
चक्राब्जमण्डलादीनि कृत्वा कर्माणि पूर्ववत् ॥ २६० ॥

1. दुष्ट $M_1$  2. गरुडसंस्थितम् $M_1$  3. प्रसादेन $M_1$

सप्ताहमाज्यसिक्ताभिः समिद्भिर्जुहुयात्सुधीः ।
वैतसीभिः प्रतिदिनं नियुतायुतसंख्यया ॥ २६१ ॥

वृष्टिर्भवति तद्राष्ट्रे तद्देशे वा दिनत्रये ।
मरीचिक्षुण्णसंमिश्रैः सर्षपैः राजसर्षपैः ॥ २६२ ॥

पूर्वोक्तसंख्यया होमादतिवृष्टिश्च शाम्यति ।
देवतादिपदप्रेप्सुर्विद्यया लोकमीप्सितम् ॥ २६३ ॥

[1]स्वर्गाद्यभीष्ट[2]लोकस्य महिमानुगुणैर्जपैः ।
लभते तत्तदाश्चर्यं फलं नैवात्र संशयः ॥ २६४ ॥

चिन्तारत्नं तथैवान्यमणिमादिगुणं [3]पदम् ।
लिप्सुर्मन्त्रजपैः कोटिसंख्यैः प्राप्नोति मन्त्रवित् ॥ २६५ ॥

मन्त्राधिदैवतं देवं द्रष्टुकामो जितेन्द्रियः ।
षण्मासान्मन्त्रमनिशं जपेत् तध्यानमास्थितः ॥ २६६ ॥

आगत्य देवदेवेशः प्रत्यक्षो भवति क्षणात् ।
वरांश्च दुर्लभांस्तस्मै प्रददाति यथेप्सितान् ॥ २६७ ॥

मन्त्रिणे मन्त्रमाहात्म्यादचिरेण चतुर्मुख ।
मन्त्रान्तराणां या सिद्धिः कल्पे समीरिता ॥ २६८ ॥

सापि प्रसिध्येदस्यैव सकला वीर्यवत्तया ।
षडङ्गानि च वेदाश्च मन्त्राश्चान्ये परश्शताः ॥ २६९ ॥

अन्यच्च वाङ्मयं सर्वं मन्त्रेऽस्मिन् सुसमाहितम् ।
अपुनर्भवलिप्सूनां गतिरष्टाक्षरं मतम् ॥ २७० ॥

1. स्वर्गादेरिष्ट $M_2$ 2. लोके $M_1$ 3. परम् T, $P_1$, $P_2$



जन्मन्यस्मिन्नतीते वा यदेनः सञ्चितं महत् ।
तन्मन्त्रजापमात्रेण प्रलयं याति निश्चयम् ॥ २७१ ॥

म्रियमाणश्शुचिर्भूत्वा मन्त्रमेतदुदीरयन् ।
प्राप्नोति वैष्णवं स्थानं दुष्प्राप[1]मविनश्वरम् ॥ २७२ ॥

किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिः श्रुतैः ।
यस्यैषा वशमापन्ना विद्या सर्वार्थसाधनी ॥ २७३ ॥

ये मन्त्रमाहात्म्यमिदं शृण्वन्ति च पठन्ति च ।
तेषामपि फलान्याहुः पूर्वोक्तानि मनीषिणः ॥ २७४ ॥

चतुर्मुखश्चतुर्वक्त्रैः फलान्यस्य प्रदर्शयन् ।
नान्तं जगाम विस्तीर्णं संक्षेपोऽयमुदीरितः ॥ २७५ ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
श्रीमदष्टाक्षरमन्त्रवैभवो नाम पञ्चविंशोऽध्यायः ॥

—: * :—

## षड्विंशोऽध्यायः ॥

### विष्णुगायत्र्यादिमन्त्रोद्धारः ॥

श्रीभगवान्—

गायत्रीं वैष्णवीं ब्रह्मंश्चतुर्विंशत्यक्षरात्मिकाम् ।
शृणु वक्ष्यामि परमं रहस्यं कथ्यतेऽधुना ॥ १ ॥

मातृकाचक्रमभ्यर्च्य छन्दसामादिमुद्धरेत् ।
आदिदेवशिरश्चात्र विघ्नेशं तदनन्तरम् ॥ २ ॥

1. मविनाशनम् T, $P_1$, $P_2$

वह्न्यन्तं गोपनं पद्मशाखं[1] विष्णुशिरः [2]स्मृतम् ।
सुमुखं गोपनयुत[3]मन्यच्च मरुदादिमत् ॥ ३ ॥

[4]मायाश्रितं सुधाधाम [5]वैधरोऽन्वक् च मन्दरम् ।
विष्णुशीर्षो भास्करोऽथ माधवाधिष्ठितः क्रमात् ॥ ४ ॥

आदिदेवसमाक्रान्तः कुम्भशुक्रोदयावहौ ।
वैधरो देवतान्तश्च पीयूषरुचिराशिराः ॥ ५ ॥

अनिलः प्रणवाद्यन्तो महामायाशिराः क्रमात् ।
धनदोऽनु ततो दक्षो विष्णुमूर्धाऽथ भास्करः ॥ ६ ॥

मायाशिराश्च वैराजो विष्ण्वन्तो भद्रपाणियुक् ।
ओतदेहः परः कुम्भः त्रिविक्रमपरः स्मृतः ॥ ७ ॥

क्रोधनं वनमाल्यन्तं तद्द्वयं भुवनावधि ।
विसर्गः पापहन्ता च वह्निश्चाद्यर्णसंयुतः ॥ ८ ॥

चकारश्चोतदेहश्च द्वौ दृष्टि[6]र्विष्णुमूर्धगः ।
दरश्च गोपनश्चोभौ विजयोर्णस्समुद्धृतः ॥ ९ ॥

छन्दश्च देवी गायत्रमृषिर्ब्रह्माधिदैवतम् ।
विष्णुषडङ्गानि तथा [7]क्रुद्धोल्कादीनि पद्मज ॥ १० ॥

मूर्धादिपादपर्यन्तमक्षरन्यसनं मतम् ।
मूर्ध्नि फाले नयनयोर्नासिकापुटयोस्तथा ॥ ११ ॥

श्रोत्रयोरास्यगलयोर्हृदये बाहुमूलयोः ।
न्यासः कूर्परयोश्चैव तथैव मणिबन्धयोः ॥ १२ ॥

1. पश्चाच्छङ्खं T, $P_1$, $P_2$ 2. तथा A 3. अन्वक् च $M_2$
4. मायायुतं $M_2$ 5. विजयान्वक् $M_2$ 6. वृष्टिः $M_2$ 7. क्रुद्धोल्कादीनि T



हस्तयोः कुक्षिमध्ये च गुह्ये चोर्वोश्च जङ्घयोः ।
पादयोश्च क्रमादेवं न्यासः प्रोक्तश्चतुर्मुख ॥ १३ ॥

पीतं रक्तं च धूम्राभं श्वेतं कृष्णं च लोहितम् ।
वलक्षं पीतकं रक्तं श्यामं शङ्खनिभं तथा ॥ १४ ॥

पाटलं स्फटिकाभं च पीतं रजतसन्निभम् ।
चन्द्रदीधितिसङ्काशं पद्मकिञ्जल्कसन्निभम् ॥ १५ ॥

ताराभं बन्धुजीवाभं नक्षत्राभं च पाटलम् ।
जपाकुसुमसङ्काशं तप्तजाम्बूनदप्रभम् ॥ १६ ॥

रविप्रभं च[1] वर्णानां वर्णभेदः प्रदर्शितः ।
कालमेघनिभं सौम्यं चतुर्बाहुं किरीटिनम् ॥ १७ ॥

शङ्खचक्रगदापाणिं गरुडारूढमच्युतम् ।
एवं ध्यात्वाऽर्चयेद्देवं प्रातःकाले समाहितः ॥ १८ ॥

स्फटिकोपलसङ्काशं गरुडारूढविग्रहम् ।
मध्यन्दिनेऽर्चयित्वा तमाचरेज्जपमात्मवान् ॥ १९ ॥

प्रदोषेषु चतुर्हस्तं वैनतेयोपरिस्थितम् ।
श्यामलं पुण्डरीकाक्षं ध्यायन्मन्त्रमुदीरयेत् ॥ २० ॥

[2]कुर्वंस्त्रिषवणस्नानं व्रतस्थः संयतेन्द्रियः ।
चतुर्विंशतिलक्षेण मन्त्रजापेन सिध्यति ॥ २१ ॥

मन्त्रवित्साधको वारितर्पणं होमकर्म च ।
कुर्वन्नाप्नोति सकलां सिद्धिमिष्टां सुदुर्लभाम् ॥ २२ ॥

1. चाक्षराणां $P_1$ 2. कुर्यात् $P_2$

गोमूत्रयावकाहारो जपेल्लक्षमतन्द्रितः ।
पातकेभ्यो महद्भ्योऽपि मुच्यते नात्र संशयः ॥ २३ ॥

ब्रह्मकूर्चं पिबन् लक्षत्रयं मन्त्रं जपन् सुधीः ।
तत्समेभ्यः पातकेभ्यो [1]विमुक्तो मन्त्रवित्तमः ॥ २४ ॥

ब्रह्मादिदेवताः सर्वा निनीषुर्वशमात्मनः ।
अणिमादि फलं प्रेप्सुः तथैवाकर्षणोद्यतः ॥ २५ ॥

वशीकारे च सर्वेषां पातालगमने तथा ।
गन्धर्वयक्षप्रमुखान् प्रमुखानात्मनः सदा ॥ २६ ॥

चिकीर्षुरष्टाक्षरवदनुतिष्ठेच्चतुर्मुख ।
सकृदुच्चारयन्मन्त्रं विष्णुगायत्रिसंज्ञितम् ॥ २७ ॥

[2]वेदानामसकृत्सर्वशाखाध्ययनपुण्यभाक् ।
केशकीटादिदुष्टानि हवींषि ध्यानमास्थितः ॥ २८ ॥

स्पृष्ट्वा जपेन्मन्त्रमिदं सद्यश्शुद्धानि पद्मज ।
चतुर्णां मूलमन्त्राणां फलमेतेन सिध्यति ॥ २९ ॥

श्रीकरं मन्त्रमपरं वक्ष्ये सर्वार्थसाधनम् ।
अष्टाक्षरं चतुर्वक्त्रै रहस्यं परमं शृणु ॥ ३० ॥

[3]वर्णचक्रं लिखित्वादौ [4]सम्यगभ्यर्च्य तत्पुनः ।
उद्धरेच्छ्रीकराष्टार्णं मन्त्रं मन्त्रप्रभाववित् ॥ ३१ ॥

आदौ समुद्धरेत्तारमुदयं तदनन्तरम् ।
द्विरेकनेत्रमायान्तं क्रोधनं कौस्तुभाक्षरम् ॥ ३२ ॥

1. मुच्यते $M_2$ 2. उदीरयन् सकृत् A 3. चक्रं लिखित्वा भूम्यादौ A, $M_2$ 4. समभ्यर्च्य ततः पुनः T, $P_1$, $P_2$



विष्णुशीर्षं ततो लक्ष्मीमनकं तदनन्तरम् ।
महामायायुतं पद्ममप्रमेयमनन्तरम् ॥ ३३ ॥

अग्निमादिं चतुर्वक्त्र ठठेति [1]श्रीकराह्वयम् ।
बीजमस्य प्रवक्ष्यामि यथातत्त्वमुदीर्यते ॥ ३४ ॥

दीप्तिमाननलः पद्मबिन्दुरर्धेन्दुनिष्ठितः ।
बीजमङ्गानि षट् चापि क्रुद्धोल्कादीनि पूर्ववत् ॥ ३५ ॥

छन्दश्च देवी गायत्रं ऋषिरस्य प्रजापतिः ।
देवता देवदेवेशः प्रत्यर्णं पूर्ववत् स्मृतः ॥ ३६ ॥

ऋषिश्छन्दो दैवतं च ध्यानं सम्प्रति कथ्यते ।
कल्पकानोकहच्छायामाश्रित्य सुखशीतलाम् ॥ ३७ ॥

गरुडस्य चतुर्बाहोस्सर्वालङ्कारधारिणः ।
स्कन्धदेशे सुखासीनमष्टबाहुं किरीटिनम् ॥ ३८ ॥

कुन्देन्दुधवलं सौम्यं सर्वाकल्पपरिष्कृतम् ।
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम् ॥ ३९ ॥

पीताम्बरधरं नीलकुन्तलैरुपशोभितम् ।
चक्रं च मुसलं बाणमङ्कुशं दधतं भुजैः ॥ ४० ॥

चतुर्भिर्दक्षिणैरन्यैः शङ्खं कौमोदकीं तथा ।
शार्ङ्गं पाशं च कल्याणैः प्रसन्नेन्दुनिभाननम् ॥ ४१ ॥

गरुडोऽपि च हस्ताभ्यामुभाभ्यां पादपङ्कजे ।
देवस्य धारयन् कुम्भं पूर्णं पीयूषवारिणा ॥ ४२ ॥

1. श्रीधरा $M_2$

इतराभ्यां च [1]बाहुभ्यां स्पृशन्नास्ते स्थितं तथा ।
श्रियं च वामोरुतले रुक्माभां क्षौमवाससीम् ॥ ४३ ॥

दिव्यगन्धविलिप्ताङ्गां सर्वाकल्पपरिष्कृताम् ।
सुभ्रूललाटमकुटां कर्णविश्रान्तलोचनाम् ॥ ४४ ॥

लावण्यामृततोयेन वर्षन्तीमिव सर्वतः ।
पाशाङ्कुशधरां लक्ष्मीं कन्दर्पशरपीडिताम् ॥ ४५ ॥

ध्यात्वैवं पूजयित्वा तु व्रतस्थस्संयतेन्द्रियः ।
द्वादशाहं जपेन्मन्त्रं ध्यात्वा पार्श्वे निषिद्धयम् ॥ ४६ ॥

ऊर्ध्वबाहुर्जले तिष्ठन्नुरोदघ्ने समाहितः ।
आदित्याभिमुखो मन्त्री जुहुयाच्च समिच्छतम् ॥ ४७ ॥

बिल्वोद्भवैस्तथा लक्ष्मीं कुसुमैः पायसोदनैः ।
शुद्धोदनै[2]र्घृताक्तैश्च अष्टोत्तरसहस्रकम् ॥ ४८ ॥

एवं कृते विधानेन पुष्टिरुत्पद्यतेऽचला ।
पौष्टिकादि च पूर्वोक्तं फलं पूर्वोक्तसंख्यया ॥ ४९ ॥

शान्तिकं पौष्टिकं कर्म मन्त्रेणानेन साधयेत् ।
लक्ष्मीनारायणाह्वानं मन्त्रं परमदुर्लभम् ॥ ५० ॥

तस्योद्धारं प्रवक्ष्यामि शृणु वर्णक्रमेण तम् ।
उद्गीथं मनुजेशानं विष्णुं मन्दरपोतवत्[3] ॥ ५१ ॥

[4]सूक्ष्मदङ्मुख्यमपरं गदिनं कुम्भमर्पितम् ।
आद्यन्तं विजयं दत्तं माहेन्द्रं चाप्रमेयकम् ॥ ५२ ॥

1. हस्ताभ्यां T,P₁,P₂ 2. घृताक्तैश्च M₁ 3. मेव तत् T,P₁,P₂
4. सूक्तीन्दु T,P₁,P₂



गरुडं दक्षमपरं महामायां विनायकम् ।
आदिदेवं ततो वह्निं गोपनं च चतुर्गतिम् ॥ ५३ ॥

आद्यं प्रचण्डमाकारं शङ्खमादिं ठठेति च ।
उद्धृत्य षोडशार्णं तं मन्त्रबीजं च कथ्यते ॥ ५४ ॥

द्युमणिं बिन्दुमपरं वामनं बिन्दुमुद्धरेत् ।
अङ्गानि पूर्वमुक्तानि छन्दो गायत्रमुच्यते ॥ ५५ ॥

विद्धि शुक्रो मुनिर्देवो लक्ष्मीनारायणः स्मृतः ।
जपष्षोडशलक्षं तु तदर्धं वारितर्पणम् ॥ ५६ ॥

होमस्तदर्धो मन्त्रस्य फलान्याहुर्यथाक्रमम् ।
सङ्कर्षणादिमूर्तीनां तिसृणां मनुरुच्यते ॥ ५७ ॥

आदितः पूर्ववत् सप्तवर्णानामानुपूर्वशः ।
उद्धारश्शिष्टवर्णानां ब्रह्मन् सम्प्रति कथ्यते ॥ ५८ ॥

दीप्तिमान्वह्निरौर्वश्च ध्रुवशुक्रस्तथादिमान् ।
बिन्दुः प्रजापतिश्चाद्यो वह्निरुग्रो मुखं ततः ॥ ५९ ॥

सुमुखं गोपनयुतं वायुराद्यं ठठान्तिमम् ।
द्वादशार्णात्मको मन्त्रो बीजमङ्गं च पूर्ववत् ॥ ६० ॥

छन्दश्च देवी गायत्रं ऋषिः स्यान्नीललोहितः ।
देवः सङ्कर्षणो वर्णो देवतातत्त्वनिर्णयः ॥ ६१ ॥

द्वादशाक्षरवज्ज्ञेयः पुरश्चरणमीरितम् ।
फलानि पूर्वमुक्तानि वाक्सिद्धिर्महती भवेत् ॥ ६२ ॥

ज्ञानं च महदाप्नोति यच्चान्यदधिकाङ्क्षितम्[1] ।
तत्सर्वमचिरादेव सिध्येन्मन्त्रप्रभावतः ॥ ६३ ॥

शङ्खगोक्षीरधवलं चतुर्बाहुं किरीटिनम् ।
वसानं [2]वासःक्षौमं च पूर्णचन्द्रनिभाननम् ॥ ६४ ॥

मुक्ताभूयिष्ठमाकल्पं सौवर्णमतिशोभनम् ।
दधानं मुख्यहस्तेन ज्ञानमुद्रासमन्वितम् ॥ ६५ ॥

पुस्तकं वामहस्तेन बिभ्राणं भुजयोर्द्वयोः ।
[3]ऊर्ध्वयोः स्फाटिकं शङ्खमक्षमालां यथातथम् ॥ ६६ ॥

धवलैः कालजैः पुष्पैःशोभितं वनमालया ।
श्वेतपद्मे सुखासीनमेवं ध्यायीत मन्त्रवित् ॥ ६७ ॥

ध्यायतो [4]बुद्धिरमला भवेद् ज्ञानं च पुष्कलम् ।
शान्तिकं पौष्टिकं कर्म कुर्यादेतेन पद्मज ॥ ६८ ॥

बहुना किं प्रलापेन द्विषट्काक्षरवत्फलम् ।
सर्वमाप्नोति मनुना साधकः कमलासन ॥ ६९ ॥

प्रद्युम्नमन्त्रमधुना सर्वकामफलप्रदम् ।
ब्रवीमि तस्य चोद्धारः कथ्यतेऽक्षरशःक्रमात् ॥ ७० ॥

आदितः सप्तवर्णानामुद्धारः पूर्वमीरितः ।
अस्यासाधारणार्णानां सम्प्रत्युद्धार उच्यते ॥ ७१ ॥

पाप्मानमनलं विष्णुमन्त्रं वायुमुकारवत् ।
मन्दरं भद्रपाणिं च मधुसूदनमारुतौ ॥ ७२ ॥

---

1. -दभिकांक्षितम् T 2. वसनं क्षौमं $T, P_1, P_2$ 3. स्फाटिकीं दक्षिणे हस्तेऽक्षमालां A 4. -रतुला $T, P_1, P_2$



आग्नेयी दश चैकं चाप्यर्णस्संहनन मतम् ।
अनुस्वारपरो विष्णुर्बीज[1]मङ्गानि पूर्ववत् ॥ ७३ ॥

ऋषिः सनत्कुमारस्याच्छन्दो गायत्रमुच्यते ।
प्रद्युम्नो देवता मन्त्रः साधनं फलमेव च ॥ ७४ ॥

पूर्वोक्तं मन्त्रमपरमनिरुद्धमतः परम् ।
शृणु ब्रह्मन्यथापूर्वं सप्तार्णानामनुक्रमात् ॥ ७५ ॥

उद्धारः परिशिष्टानामर्णानां कथ्यतेऽधुना ।
प्रणवाद्यो भद्रहस्तो माया सप्तार्चिरेव च ॥ ७६ ॥

उदयौ द्वौ च सुभगौ गोपनो वायुरादिमान् ।
बीजमस्याप्रमेयश्च विसर्गश्चावसानतः ॥ ७७ ॥

ऋषिश्च सनकश्छन्दः पूर्ववद्देवता तथा ।
अनिरुद्धो द्वादशार्णः क्रमेण समुदीरितः ॥ ७८ ॥

यथापुरं षडङ्गानि साधनं फलमेव च ।
चतुर्विंशतिमूर्तीनां समाख्या द्वादशादिभिः ॥ ७९ ॥

प्रसिद्धास्ताश्चतुर्थ्यन्ताः सप्ताक्षरपुरस्कृताः ।
मन्त्रबीजानि चैतेषां आद्यर्णाः प्रणवादयः ॥ ८० ॥

बिन्दुशीर्षाश्चतुर्व्यूहनाम्ना उद्धार ईरितः ।
अष्टानामितरासां च मूर्तीनां च समाह्वयाः ॥ ८१ ॥

चतुर्थ्यन्तास्सप्त[2]वर्णा पूर्वा मन्त्राः समीरिताः ।
नृसिंहोऽधोक्षजश्चोभावच्युतः पुरुषोत्तमः ॥ ८२ ॥

---

1. मङ्गश्च $T, P_1, P_2$ 2. वर्णपूर्वाः T

जनार्दनस्तथोपेन्द्रो हरिः कृष्ण उदीरितः ।
बीजान्याद्यक्षराण्येषां अङ्गानि च यथापुरम् ॥ ८३ ॥

छन्दश्च देवी गायत्रं देवता च चतुर्मुख ।
ऋषयो मूर्तयस्तास्ताः पुरश्चर्या च पूर्ववत् ॥ ८४ ॥

उक्तमेवफलं चैषामैहिकामुष्मिकात्मकम् ।
इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
विष्णुगायत्र्यादिमन्त्रोद्धारो नाम षड्विंशोऽध्यायः ॥

—: * :—

## सप्तविंशोऽध्यायः ॥

### मत्स्यादि मूर्तिमन्त्रकथनम् ॥

श्रीभगवान् :—

मत्स्यादिदशमूर्तीनामवतारक्रमान्मनुः ।
उच्यते पूर्ववच्चक्रमक्षराणां समालिखेत् ॥ १ ॥

साधारणान् गृहीत्वाऽर्णान् यथापूर्वं चतुर्मुख ।
असाधारणरूपं [1]तत्सम्प्रत्युध्द्रियते क्रमात् ॥ २ ॥

स्पर्शान्तमाद्यं विजयं चन्द्रमन्वक्चतुर्गतिम् ।
आदिमग्निं हृषीकेशं पवित्रं मधुसूदनम् ॥ ३ ॥

[2]श्वसनं चाप्रमेयं च द्वादशार्णाः समीरिताः ।
माधवं पुरुषात्मानं हृषीकेशं च [3]बिन्दुमत् ॥ ४ ॥

1. च $M_1$ 2. श्वसनादयः बिन्दुमदन्ताश्शब्दाः पुल्लिङ्गप्रथमान्ताः $M_2$ ग्रन्थे दृश्यते । 3. बिन्दुमान् $M_2$



बीजमङ्गेषु यद्रूपमसाधारणमुच्यते ।
स्पर्शान्तमादिं सर्वत्र षट्सु चाद्यश्च बिन्दुमान् ॥ ५ ॥

आदिदेवं महामायां हृषीकेशं च गोपनम् ।
विष्णुमौर्वीं षडङ्गेषु मध्यमार्णं क्रमोदितम् ॥ ६ ॥

उद्धृत्यैवं प्रयोक्तव्यं ऋषिरस्य मनुः स्मृतः ।
छन्दश्च देवी गायत्रं मत्स्यरूपः परः पुमान् ॥ ७ ॥

देवता रूपरहितः पञ्चार्णो वा मनुः स्मृतः ।
बीजं तदङ्गानि तथा साधनं च यथापुरम् ॥ ८ ॥

मूर्तेरनन्तरायास्तु मन्वर्णोद्धारणं शृणु ।
असाधारणरूपस्य स्पर्शनादि गुहालयम् ॥ ९ ॥

अनलं मन्दरं विष्णुं पूर्ववद् द्वादशाक्षरम् ।
बीजोद्धारः क्रोडरूपी भूधरश्च गुहालयः ॥ १० ॥

सानुस्वारो बीजमेतत् षडङ्गानि चतुर्मुख ।
ऋषिरेतस्य दूर्वासाश्छन्दः पूर्ववदिष्यते ॥ ११ ॥

देवता कमठाकारो देवः सम्प्रत्यनन्तरम् ।
वराहवपुषो मन्त्रं वर्णचक्रात् समुद्धरेत् ॥ १२ ॥

वरुणो विष्णुरनलश्चादिदेवश्च भास्करः ।
गोपनः पुरुषात्मा च विष्णुरेते समुध्दृताः ॥ १३ ॥

अस्याऽसाधारणा वर्णाः प्रोक्तास्साधारणाः पुरा ।
एकादशाक्षरात्माय बीजं सम्प्रति कथ्यते ॥ १४ ॥

सूक्ष्मदृग्बिन्दुपर्यन्तः षट्चाचामङ्गपद्धतिः ।
बीजमेव मुनिश्शङ्करश्छन्दो गायत्रमीरितम् ॥ १५ ॥

नारायणो देवतास्य नत्यन्तश्च षडक्षरः ।
यद्वा पूर्ववदेवाङ्गं बीजं च कमलासन ॥ १६ ॥

त्रयोदशार्णानुद्धृत्य पूर्वोक्तान् व्याहृतित्रयम् ।
उद्धरेत्पतिशब्दं चतुर्थ्यन्तमनन्तरम् ॥ १७ ॥

भूमेः पतित्वमाशास्ये मे देहि तदनन्तरम् ।
दापयेति ठठान्तः स्याद्द्वात्रिंशद्वर्णसन्ततिः ॥ १८ ॥

छन्दोऽनुष्टुप् ऋषिः पूर्वो देवता सा चतुर्मुख ।
बीजमुक्तं तदङ्गानि भङ्क्त्वा मन्त्रं प्रकल्पयेत् ॥ १९ ॥

वर्णान् कनकसङ्काशान्न्यसेदङ्गेषु पूर्ववत् ।
ध्यात्वा षोडशलक्षाणि जपेन्मन्त्रमतन्द्रितः ॥ २० ॥

उर्वरायाः पतिस्सद्यो भवेन्मन्त्रप्रभावतः ।
पातालगमनादीनि फलान्यस्यापि पद्मज ॥ २१ ॥

चतुष्षष्ट्यर्णसंघातो मालामन्त्रः प्रदृश्यते ।
त्रयोदशार्णाः प्रथममेकदंष्ट्रपदं ततः ॥ २२ ॥

चतुर्थ्यन्तं तथा मेघपदं द्विः प्रोच्य च क्रमात् ।
उल्कावर्णपदद्वन्द्वं चतुर्थ्यन्तं ततःपरम् ॥ २३ ॥

छन्दोमयःप्रत्ययान्तं सम्बुध्यन्तमुदीरयेत् ।
द्विर्लोडन्तो दहिर्वाच्यो हन्तिश्च मथिरेव च ॥ २४ ॥

पचिश्च महदाद्यन्तं भौमेति पदयोर्युगम् ।
हुं द्विरुच्चार्यारिशिरःस्वं तथैव [खनिं] पुनः ॥ २५ ॥



लोडन्तमायमा[1]ग्नीयीमिति मन्त्रपदस्थितिः ।
बीजमुक्तं [2]तदङ्गानि भङ्क्त्वा मन्त्रं प्रयोजयेत् ॥ २६ ॥

जामदग्न्यो [3]मुनिः प्रोक्तश्छन्दोऽतिच्छन्द[4] ईरितः ।
देवता देवदेवेशः स्थूलघोणवपुः स्मृतः ॥ २७ ॥

लक्षं जपेदिमं मन्त्रं [5]भूमिकामश्चतुर्मुख ।
मृत्स्नया जुहुयात्तावद्यावदाप्नोति मेदिनीम् ॥ २८ ॥

अष्टाक्षरमनोस्तुल्यफलोऽयं मनुरीरितः ।
[6]उल्कावर्णं चतुर्थ्यन्तमक्षरस्यावसानतः ॥ २९ ॥

चतुष्षष्टिप्रभेदस्य मन्त्रस्य नृहरेर्मया ।
न विस्तारः कथयितुं शक्यते बोद्धुमेव वा ॥ ३० ॥

तस्मात् त्रिचतुरो भेदाः कथ्यन्ते कमलासन ।
वर्णचक्रादयोद्धारः सम्प्रत्येकाक्षरात्मनः ॥ ३१ ॥

मन्त्रस्य कथ्यते ब्रह्मन् ब्रह्मकोशपुरस्कृतः ।
नृसिंहकर्षणो बिन्दुरित्येकाक्षरमीरितम् ॥ ३२ ॥

एतदेव भवेच्छन्दो देवी गायत्रमुच्यते ।
देवो मुनिश्च दुर्वासा नृसिंहो देवता मता ॥ ३३ ॥

वर्णश्च पाटलो लक्षत्रयं जप्यं विपश्चिता ।
जिगीषुणा चतुर्वर्गफलमन्यच्च काङ्क्षितम् ॥ ३४ ॥

त्र्यक्षरश्च नत्यन्तमेतदेवाङ्गमप्यतः ।
अष्टाक्षरात्मनोऽस्यैव मन्त्रस्योद्धारणं क्रमात् ॥ ३५ ॥

---

1. आग्नेयी T,P; अग्नायीमङ्गगति M 2. तथा $P_1$,$P_2$ 3. ऋषिः T,P
4. अधिच्छन्दईरितः T 5. भूमीप्सुश्च T,P 6. T कोशे $P_1$,$P_2$ ग्रन्थयोरधिकतया दृश्यते ।

प्रणवो नतिरन्वक्च विघ्नेशो मधुसूदनः ।
अनलश्चादिरिन्दुश्च रामोऽनुस्वार एव च ॥ ३६ ॥

गोपतिर्गोपनश्शङ्खो विष्णुरष्टाक्षरः स्मृतः ।
बीजमुक्तं तदङ्गानि मुनिर्व्यासोऽन्यदीरितम् ॥ ३७ ॥

जपसंख्या फलान्यस्य तथैव कमलासन ।
सप्ताक्षरं च नत्यन्तमन्यत् प्रणववर्जितम् ॥ ३८ ॥

बीजादि पूर्ववत् सर्वं पञ्चाङ्गो जप एव च ।
साधारणाः सप्तवर्णाः पञ्चासाधारणास्तथा ॥ ३९ ॥

पूर्वोक्तद्वादशार्णात्मा शङ्खोदरसमाह्वयः ।
यथापूर्वं षडङ्गानि बीजं चैव यथापुरम् ॥ ४० ॥

प्रत्यक्षरं लक्षजपो होमस्तर्पणमेव च ।
पुरुषार्थस्य सर्वस्य साधकस्साध्वनुष्ठितः ॥ ४१ ॥

मन्त्रो नृसिंहवपुषो द्वात्रिंशार्णात्मकोऽपरः ।
वक्ष्यते तस्य वर्णानामुद्धारः संप्रदर्श्यते ॥ ४२ ॥

छन्दसामादिरुदयो गदी वह्निरचां मुखम् ।
यष्टिः कुम्भो महामाया ज्वलनो वैष्णवस्तथा ॥ ४३ ॥

स्पर्शान्तं द्विरचामादि द्वादशात्मा च गोपनः ।
[1]पर्जन्यो बिन्दुरुग्रात्मा[2] प्रचण्डश्चोदयस्तथा ॥ ४४ ॥

मन्दरो जन्महन्ता च पीयूषात्मा स वैष्णवः ।
[3]महेन्द्रो वाङ्मुखं पद्मपाणिर्विजयसंज्ञितः ॥ ४५ ॥

1. पञ्चास्यो $M_1$ 2. रुद्रात्मा $M_1$ 3. इन्द्रचापमुखं भद्रपाणि $M_1$



अर्धचन्द्राकृतिश्शुक्रः प्रणवादिर्विभावसुः ।
वरुणश्चाप्रमेयश्च वैराजो ब्रह्मसाधनः ॥ ४६ ॥

स्पर्शान्तमुदयं स्पर्शद्वितीयं विष्णुदैवतम् ।
[1]माधवं भद्रपाणिश्च पद्मनाभः कलात्मकः ॥ ४७ ॥

त्रिविक्रमो ध्रुवः पूषा स्वरादिर्मन्दरः स्मृतः ।
भल्लायुधो महामाया क्रोधरूपी च वैष्णवः ॥ ४८ ॥

वनमाली स्वरादिश्च माधवः[2] सूक्ष्मलोचनः ।
अप्रमेयो[वै]धरश्च[3] ज्वलनोङ्कारसंयुतः ॥ ४९ ॥

द्विर्मन्दरः पद्मनाभो विजयश्च चतुर्भुज ।
उदयो मन्दरशिराः पदमेतदनन्तरम् ॥ ५० ॥

वर्णानिसु[4] समीकृत्य [5]नमाम्यहमुदीरयेत ।
विराडृषिरनुष्टुप् च च्छन्दो नरहरिः स्मृतः ॥ ५१ ॥

देवता बीजमस्योक्तं मन्त्रं भङ्क्त्वाऽङ्गकल्पना ।
न्यासश्चाङ्गेषु पूर्वोक्तक्रमेण कमलासन ॥ ५२ ॥

[6]ध्यायेत् स्फटिकवर्णाभं जपसंख्या च पूर्ववत् ।
मन्त्रोऽयं नारसिंहस्य सकलापन्निवारणः ॥ ५३ ॥

समस्तसम्पज्जननो वाच्यो नैव च कस्यचित् ।
उच्यते नरसिंहस्य मालामन्त्रश्चतुर्मुख ॥ ५४ ॥

अधिकं सप्तदशभिर्वर्णैरर्णशतत्रयम्[7] ।
प्रथमं छन्दसामादिर्नतिश्च तदनन्तरम् ॥ ५५ ॥

1. मायावी $M_1$ 2. मायावी $M_1$ 3. वैष्णवश्च $M_2$ 4. वर्णानिमान् समीकृत्य $M_1$ 5. जपेल्लक्षत्रयं बुधः $M_2$ 6. ध्येयः स्फटिकवर्णाभः $M_2$ 7. द्वयम् $M_1$

चतुर्थ्यन्तं पदं वाच्यं नारसिंहेति मन्त्रिणा ।
तदेव च महत्पूर्वं [1]देवदानवपूर्वकम् ॥ ५६ ॥

शोणितेतिपदं पश्चाद्विश्वपूर्वं नखोत्तरम् ।
पदमेकं चतुर्थ्यन्तं [2]नमोऽन्तं समुदीरयेत् ॥ ५७ ॥

पच ग्रहेति च पदं शुषिर्ण्यन्तः समुद्धृतः ।
ग्रंक्षि णिजन्तो हन्तिंच सन्तिलोड्धमोदयः ॥ ५८ ॥

हुं फट् तदन्तरं प्रोच्य तथा [3]कलिपदं ततः ।
चरेति च लुपेत्युक्त्वा क्षरेति तदनन्तरम् ॥ ५९ ॥

ह्रां ह्रौं खर चिरं चैव द्रूंन्ह्यों ज्वलनमेव च ।
ज्वलिश्शुचिर्द्रेविस्फेटिर्ण्यन्ता लोण्मध्यमोदयः ॥ ६० ॥

भिदिच्छिदिस्तं विकरो लोण्मध्यमशिरास्ततः ।
[4]हिसिमृज्भ्यां णिजन्ताभ्यां लोण्मध्यममुदीरयेत् ॥ ६१ ॥

[आं]पूर्वो नयतिर्लोटि हुम्फडन्तमुदीरितम् ।
द्रवद्रवेति च ततो विपूर्वं तद्द्वयं पुनः ॥ ६२ ॥

पातालान्तं सर्वशब्दं वासिनामिति पश्चिमम् ।
हृदयादीनि कथयेत् कृषिर्ण्यन्तश्च मध्यमे ॥ ६३ ॥

आङ्पूर्वो विद्विषिर्ण्यन्तो लोटि सम्बुद्धिशीर्षकम् ।
भगवत्पदमुच्चार्य नारायणपदं ततः ॥ ६४ ॥

वासुदेवहृषीकेशपदद्वितयमीरयेत् ।
दानवादि[र्ले]डन्तश्च जहि राक्षसपूर्वकम् ॥ ६५ ॥

1. दैत्य $M_1$ 2. नमोऽस्तु $M_1$ 3. बल $M_2$ 4. हिति(सि?) मद्भ्यां निजन्ताभ्यां T



अन्तकेति पदं पश्चादुक्त्वा कौमोदकी धनुः[1] ।
धरेति[2] गरुडादिं च ध्वजान्तं प[द]मब्जज ॥ ६६ ॥

त्रिपूर्वधामन्नित्येतन्नतिरस्त्विति ते पदम् ।
त्वां प्रपन्नोऽस्मीति पठेदेवमुच्चार्यते मनुः ॥ ६७ ॥

बीजमुक्तं षडङ्गानि प्रोच्यन्ते पदशोऽधुना ।
प्रणवादिश्च [3]नत्यन्तश्च चतुर्थ्यन्तश्च विग्रहः ॥ ६८ ॥

पुरुषादिमुखादिश्च नरसिंहपदं तथा ।
वज्रशब्दं द्विरुच्चार्य क्रमाच्च नखविग्रहौ ॥ ६९ ॥

वज्रेति नखदंष्ट्रेति चोक्त्वाऽऽयुधपदं ततः ।
महानरपदं सिंहपर्यन्तं षष्ठमीरितम् ॥ ७० ॥

अनिरुद्धो मुनिश्छन्दस्त्वतिपूर्वं च देवता ।
नृसिंहरूपी भगवान् इति सर्वमुदीरयन् ॥ ७१ ॥

बिलद्वारि जपेन्मन्त्री षोडश प्रयतः स्थितः ।
लक्षाणि सद्यः पातालवासिनः कुरुते वशे ॥ ७२ ॥

लोकान्तरगतानां च वशीकारक्षमो भवेत् ।
एतावन्ति फला[4] न्यन्येरयभिधातुं न शक्यते ॥ ७३ ॥

अतोऽन्यं नारसिंहस्य मन्त्रं सर्वार्थसाधकम् ।
चतुश्शताक्षरं तस्य समुद्धारः प्रदर्श्यते ॥ ७४ ॥

आदावुद्गीथमुद्धृत्य [5]नत्यन्तं ब्रह्मसाधनम् ।
भल्लायुधं गदध्वंसं वारुणं विजयं तथा ॥ ७५ ॥

1. मनुः M; तथा T,A 2. ठठेति $M_1$ 3. सत्यन्तश्च P 4. फलान्यन्यैरभिधातुं $M_1$ 5. सत्यन्तः P

माधवं भद्रहस्तं च [1]पावकं श्वेतदीधितिम् ।
विक्रमं सध्रुवं ब्रह्मन् भास्करं मधुविद्विषम् ॥ ७६ ॥

मारुतं माधवं ब्रह्मन् धनदं मधुसूदनम् ।
श्वसनं वारुणं जन्महन्तारमृतधारकम् ॥ ७७ ॥

द्विरदं सर्वदेहं स्याद्वैधरं तदनन्तरम् ।
अचामादिं सध्रुवञ्च क्रोधरूपमधोक्षजम् ॥ ७८ ॥

स पर्वतं हुतवहमावृतं मधुविद्विषम् ।
दरं [2]सचन्द्रं फुल्लं च माध[वं] [3]नगवारिणम् ॥ ७९ ॥

सविक्रमं च कमलं पर्वतं पाशपाणिनम् ।
[4]सबन्धुं कमलं पद्म बिन्दुमस्तकभूषितम् ॥ ८० ॥

सुमुखं चाग्निशिरसं करालं मृगवल्लभम् ।
क्षपाकरं तथायान्तं यामिनीनाथमब्जज ॥ ८१ ॥

हृदयाह्लादमाकारं चतुर्गतिमनन्तरम् ।
नृहरिं भुवनं सूक्ष्मलोचनं रामशीर्षकम् ॥ ८२ ॥

विजयं पाटलं भानुं सूदनं सुमुखं तथा ।
[5]यान्तं तच्छिरसं पश्चाद्वारुणं गजवाहनम् ॥ ८३ ॥

वासुदेवं तथा [6]क्रोधरूपमाकारमारुतौ ।
वैधरं सूदनं भद्रहस्तं वारुणमैन्दवम् ॥ ८४ ॥

[7]पूर्णेन्दुनामकमथ मधुसूदनसंज्ञकम्[8] ।
[9]वत्सोतदेहं सुमुखं विक्रमं विजयाभिधम् ॥ ८५ ॥

---

1. वामनं $M_2$ 2. सचक्रं $M_2$ 3. नगवारुणम् $M_1$ 4. सबिन्दुं T
5. मायान्तं शिरसः पश्चात् दारुणं खगवाहनम् $M_2$ 6. क्रोडरूप 7. एष अर्धश्लोकः
T कोशे$P_1$,$P_2$ ग्रन्थयोश्च न दृश्यते । 8. संज्ञितम् $M_2$ 9. वस्त्रोतदेहं $M_2$



दृष्टिविक्रमपाशान्तसुभगार्पितविघ्नराट् ।
तद्द्वितीयमचामादिद्वितयं श्वसनं तथा ॥ ८६ ॥

माधवं सध्रुवं भानुमान्तं माधवभास्करौ ।
रामं भल्लायुधं पद्मान्तकं स्यात्सुधारसम् ॥ ८७ ॥

भद्रहस्तमचामादि भान्तमान्तरसूदनौ ।
भद्र वसुं श्वेतरुचिं विक्रमं सद्ध्रुवं तथा ॥ ८८ ॥

मार्ताण्डं [1]माधवं भानुं गोपनन्नान्तमाधरौ ।
यान्तं स श्रीधरं चोग्रं वसुं वारुण[2]गोघनौ ॥ ८९ ॥

कुशेशयं माधवं च सुमुखं कौस्तुभं तथा ।
विघ्नेशं गोपनं ब्रह्मन् रोहिताश्वं सगोपनम् ॥ ९० ॥

श्वसनं सुमुखं पश्चाद्वरुणं मधुविद्विषम् ।
दाक्षायणीशमुदयं वैधरं माधवं ततः ॥ ९१ ॥

अमृतं [3]वैधरमचां द्वितीयं मान्तमब्जज ।
ओतदेहं तथा दृष्टिं [4]यान्तमाकारमक्षरम् ॥ ९२ ॥

वक्रतुण्डं गन्धवहं [5]विष्टरं विजयं तथा ।
अमृतं विक्रमपरं श्रीवत्सं वरुणार्पितम् ॥ ९३ ॥

यान्तं [6]गुहालयं [7]नान्तं षान्तं च मधुसूदनम् ।
[8]सध्रुवं द्रुहिणं क्रोधं पावकं सुमुखं पुनः ॥ ९४ ॥

सपश्चिमं पद्मनाभं वैधरं च चतुर्मुख ।
पवमानं सभुवनं [9]भान्तं कुञ्जरगोपनौ ॥ ९५ ॥

---

1. मदनं $M_1$ 2. गोपनौ A 3. वैधरं पश्चात् द्वितीयं A 4. वान्तमा-
कारमक्षमम् A ; स्वान्तमाकारमक्षयम् $M_2$ 5. विष्टपं $M_1$ 6. गुणालयं-
भान्त्रं $M_2$ 7. णान्तं T 8. सवर्णं $M_2$ 9. हान्तं $M_2$

भद्रहस्तं [1]सरामं च यान्तं स्याच्छ्रीधरं तथा ।
भद्रं च धनदं पापहननं जयमन्दरौ ॥ ९६ ॥

विघ्नेशं सूदनं भल्लं भास्करं स्याच्चतुर्गतिम् ।
शुभदं वामनपरमुग्रं वसुशिरस्तथा ॥ ९७ ॥

प्रद्योतनं तथा यान्तमृतधामोग्रवामनौ ।
कमलं माधवपरं सरसीरुहसम्भव ॥ ९८ ॥

[2]वान्तं च शुभदं दण्डं खर्वं खड्गधरं पुनः ।
सरोजमृतधामानं कत्तृतीयं च वैधरम् ॥ ९९ ॥

अर्चां द्वितीयं धनदं बहुलं सौरमान्तरौ ।
नासिक्यं च समुर्चाय हुंफट्शीर्षाणि योजयेत् ॥ १०० ॥

त्रयोदशानि बीजानि हुम्फडन्तानि योजयेत् ।
[3]बीजाक्षरेषु प्रत्येकं हुंफट्कारमुदीरयेत् ॥ १०१ ॥

द्वादशाङ्गविदां प्रोच्यं भास्करं सगुहालयम् ।
नासिक्यं नृहरिं चौर्वं चन्द्रार्धं [4]यान्तमौषधम् ॥ १०२ ॥

सद्ध्रुवं मारुतं चौर्वी[5] सदण्डं च क्षपाकरम् ।
समरं[6]सद्ध्रुवं भानुमौर्वं नासिक्यमब्जज ॥ १०३ ॥

प्रद्योतनं सभुवनमर्धेन्दुं सान्तमेव च ।
साग्निं सवामनं सार्धं चन्द्रं चैव सरोरुहम् ॥ १०४ ॥

वासवं वामनपरं सध्रुवं [7]कत्तृतीयकम् ।
माहेन्द्रमौर्वं नासिक्यं [8]माधवं द्विरदाननम् ॥ १०५ ॥

---

1. वराहं $M_1$,$P_1$ 2. लान्तं T 3. बीजाक्षराणि $M_2$ 4. धान्त $M_2$
5. चौर्वं $M_1$ 6. समनुं $M_1$ 7. सतृतीयकम् $M_2$ 8. माघरं $M_2$; माठरं $M_1$



सुभद्रं[1] श्रीधरं भद्रहस्तं गारुडमेव च ।
चित्रभानुं शशिधरं पीयूषं वसुशीर्षकम् ॥ १०६ ॥

मारुतं भद्रहस्तं च विजयं वसुसूदनौ ।
प्रचण्डं बन्धुसहितं वक्रतुण्डं गुहालयम् ॥ १०७ ॥

[2]सुमुखार्णं च सप्तार्चिं दैरं चन्द्रमसां मुखम् ।
अपामधिपतिं चाग्निं जृम्भलं द्विरदाननम् ॥ १०८ ॥

धनदं वरुणं मायां भान्तं स्याद्ब्रह्मसाधनम् ।
पन्नगं सुमुखं पापहननं [3]वान्तमब्जज ॥ १०९ ॥

अमृतं विक्रमयुतं वैधरं धूलिकेतनम् ।
गोपनं सद्ध्रुवं [4]चन्द्रं सार्धेन्दुं भास्करं वसुम् ॥ ११० ॥

सपश्चिमं हुतवहं मतिमद्वासवं ततः ।
पाटकं सर्वरोधं स्यात् कुञ्जरं मन्दरद्वयम् ॥ १११ ॥

लक्ष्मीं [5]सविजयं चाग्निं हृषीकेशं चतुर्मुखं ।
भद्रहस्तं मानुषेशं सूदनं हरिमन्दिरम् ॥ ११२ ॥

शङ्खं कलानिधिमपां नाथं वसुमधुद्विषौ ।
[6]पश्चिमं विजयं चाग्निं सुभद्रं पुरुषात्मकम् ॥ ११३ ॥

कलानिध्योश्च युगलं वारुणं वसुशीर्षकम् ।
वैधरं मधुविद्वेषी[7] माधवीं मधुविद्विषम् ॥ ११४ ॥

अर्धचन्द्रं हुतवहमनन्तं च द्विरुद्धरेत् ।
सान्तं सविक्रमं [8]सेन्द्रं बिन्दुमस्तकभूषितम् ॥ ११५ ॥

---

1. सुभगं $M_1$ 2. सुमुखान्तं $M_2$ 3. नान्त $M_2$ 4. चान्द्रं $M_2$
5. सविजयां $M_2$ 6. पचमं $M_1$ 7. चापि $M_1$ 8. सिन्धुं A; बन्धुं $M_2$

दश पञ्च च बीजानि हुम्फडन्तानि पूर्ववत् ।
मन्दरं विक्रमवशं[1] ऐन्द्रं त्रैविक्रमं तथा ॥ ११६ ॥

खड्गहस्तं सरामं च वासवं सहविक्रमम् ।
वैधरं चोर्ध्वलोकेशं श्रीबीजं चानुनासिकम् ॥ ११७ ॥

ओतदेहं सयष्टिं च अचामादिं सयष्टिकम् ।
अचां द्वितीयमर्धेन्दुं कपिलं सज्ञिणं तथा ॥ ११८ ॥

[2]माठरं गोपनं दण्डं माठरं पञ्चबिन्दुकम् ।
नासिक्यं भास्करं वीरसेनं यष्टिं च भास्करम् ॥ ११९ ॥

ओतदेहं सयष्टिं च [3]पतनं चौर्वनासिकौ ।
[4]रोहिताश्वं च कलशं विक्रमं कमलासन ॥ १२० ॥

वासुदेवं सहृदयाह्लादनं बन्धु[5]मस्तकम् ।
शुक्लं सहस्रकिरणमैन्दवं चाग्निमस्तकम् ॥ १२१ ॥

[6]वैरिश्वं बन्धुसाहितं पावकं सुमुखं तथा ।
पञ्चमं [7]त्वृतधामानं ककुभाह्वमनन्तरम् ॥ १२२ ॥

सवारुणं [8]सुरपतिं सबन्धुं विजयं तथा ।
लक्ष्मीं मधुद्विषमथो एकदंष्ट्रगतिं पुनः ॥ १२३ ॥

अग्निशीर्षं द्वितीयं च झषं [9]पञ्चान्तकं मतम् ।
द्रुहिणं [10]चोदयं ब्रह्मन् वासवं वामनं [11]ततः ॥ १२४ ॥

---

1. परं $M_1$ 2. माधरम् $M_2$ 3. तापनं चौर्वनासिका $M_2$ 4. लोहिताक्षं च कमलं $M_2$ 5. बिन्दु $M_1$ 6. वैरिं च T 7. कृतधामानं T 8. वसुपतिं $M_1$ 9. पञ्चात्मकं मतम् T 10. चोदनं $M_2$ 11. तथा $M_2$



शुभदं पश्चिममचां द्वितीयं कमलासन ।
द्वितीय सध्रुवं चाब्जयोनिं[1] श्रीधरपङ्कजे ॥ १२५ ॥

श्रीवत्समजं विजयं राममस्तकमन्दरम् ।
उदयं शुकशत्रुं च विजयं ब्रह्मसाधनम् ॥ १२६ ॥

मन्दरं यान्तधनदं यान्तं चन्द्रघंटं वसुम् ।
भल्लायुधं हृषीकेशमेकनेत्रं घनं पुनः ॥ २२७ ॥

सबन्धुमन्दरं दृष्टियुगलं चाग्निशीर्षकम् ।
भद्रं चतुर्गतिमथो फणीन्द्रं यान्तसूदनौ ॥ १२८ ॥

नृहरिं कलानिधिमचामादिं [2]यान्तं मधुद्विषम् ।
[3]कत्तृतीयं गदध्वंसं विघ्नेशं नरवाहनम् ॥ १२९ ॥

अमृतं वसुनामानं धरित्रींमधुसूदनम् ।
कमलं विक्रमपरं [4]यान्तं वामनहस्तकम् ॥ १३० ॥

नान्तं [5]गुणालयं चैव णान्तं डान्तमधुद्विषम् ।
पश्चिमं चैन्दवमथो भान्तार्पितसगोपनम् ॥ १३१ ॥

[6]धनदं चोतवपुषं भद्रं दक्षं च सूदनम् ।
वैधरं चैन्दिरमचां द्वितीयं कमलासन ॥ १३२ ॥

त्रिविक्रमं भद्रकरं महामायाङ्कितं वसुम् ।
मृगेशं वरुणं चैव वैराजं पञ्चबिन्दुकम् ॥ १३३ ॥

क्षपाकरं कञ्जभवं ततः स्याद्विघ्ननायकम् ।
सदृष्टिं वैधरं देवदत्तं कुम्भं चतुर्मुख ॥ १३४ ॥

---

1. योनिस्स्याच्छशिपङ्कजे $M_2$ 2. धान्तं $M_2$ 3. तत्तृतीयं तु गन्धर्वं $M_1$ 4. धान्तं $M_1$ 5. गुहालयं $M_1$ 6. अनलं $M_1$

[1]गतं सत्कृतधामाह्वं मार्ताण्डं [2]पाशहस्तकम् ।
समाधवं स्याद्विजयं गोपनं [3]विषमध्वनिम् ॥ १३५ ॥

सरसीरुहं सोर्ध्वलोकं सरसीरुहसम्भव ।
पद्मां स मन्दराकारौ प्रचण्डझषसंमितौ ॥ १३६ ॥

[4]वैधरं वरुणं रामं भूधरं वह्निमस्तकम् ।
जृम्भलं ऋतधामा च स्यातां भास्करमन्दरौ ॥ १३७ ॥

[5]आद्यन्तं यान्तमाकारं गारुडं हिमदीधितिम् ।
ओङ्कारादिं शशिधरं [6]सविष्णुं वरुणं वसुम् ॥ १३८ ॥

[7]सुधारसं प्रचण्डाग्निं भवे[8]द्दतमनन्तरम् ।
क्रोधरूपं सरामं च गदं च ऋतधामकम् ॥ १३९ ॥

गोपतिं वारुणपतिं विक्रमं यादसां पतिम् ।
मधुद्विषं हुतवहं प्रचण्डं यामिनीपतिम् ॥ १४० ॥

सुधारसं [9]वसुयुतं जन्मध्वंसमपां पतिम् ।
यान्तं सुधारसं बन्धुं द्विद्विराकारमिन्दिराम् ॥ १४१ ॥

द्विरदं पापहननं मधुसूदनमब्जज ।
विजयाकार [10]गर्भाश्च आकार[11]विधुमाधराः ॥ १४२ ॥

पावकं पीतवर्णाभं ब्रह्मसाधनमब्जज ।
[12]भद्रविक्रमतोयेशमाकारेन्दुसविक्रमाः ॥ १४३ ॥

---

1. गदं $M_1$ 2. वामहस्तकम् $M_2$ 3. विषय $M_1$ 4. वैराजं A
5. अमृतं $M_2$ 6. विष्णुं वरुणमस्तकम् $M_2$ 7. सुधासमं प्रवर्णाङ्कं $M_2$
8. द्रुत $M_2$ 9. बन्धुयुतं $M_2$; वसुयुतं T 10. भर्गाश्च $M_1$
11. विधुमोधराः T; विधमादराः $M_2$ 12. सुखदं विक्रमतोयेशं $M_2$



[1]इभाकारं ततो द्युम्नभास्करगभूतवैधराः ।
मारुताकारभद्राश्च [2]मान्ताकारमहोत्पलाः ॥ १४४ ॥

उग्रात्मवसुवायव्यसूदना विधिरब्जज ।
[3]उग्रशीर्षकमारुत्यौ पश्चिपद्युतिमैन्दवम् ॥ १४५ ॥

वामनं वैधरं सूक्ष्मलोचनं [4]कत्तृतीयकम् ।
कुम्भं भद्रकरं चापि माधवीं भास्करं मधु ॥ १४६ ॥

सूदनं त्रिदशाहारं विक्रमं चोग्ररूपकम् ।
प्रचण्डमोतदेहं च शुभदं [5]वित्तवर्धनम् ॥ १४७ ॥

पावकं सुमुखं भद्रहस्तं वैराजमक्षरम् ।
कुम्भं सुदर्शनं चैव कपिलाक्षं चतुर्मुख ॥ १४८ ॥

द्विःप्रपन्नोऽस्मीति पदं समुच्चार्य पितामह ।
ब्रह्मकोशं पुरस्कृत्य नृहरिं चानलं तथा ॥ १४९ ॥

ब्रह्मसाधननासिक्यौ बीजं प्रोक्तमतःपरम्[6] ।
[7]निगमादिं सुभद्रं च पाटलं सध्रुवं तथा ॥ १५० ॥

मन्त्रस्य शक्तिमुध्दृत्य छन्दसामादिमुद्धरेत् ।
गारुडं मधुहन्तारं नासिक्यं विजयं वसुम् ॥ १५१ ॥

सपद्मनाभं मायां च सूक्ष्मदङ्माधवं[8] घटम् ।
भद्रहस्तं वैधरं च श्रीधरं चाग्निविक्रमौ ॥ १५२ ॥

वैराजं भास्करं यान्तं मधुशत्रुसमीरणौ ।
मन्दरं [9]माठरमचां द्वितीयं विघ्नपावकौ ॥ १५३ ॥

---

1. गुहाकारं A, $M_2$ 2. प्रान्ता A 3. उग्रपावक $M_1$ 4. तत्तृतीयकम् $M_1$ 5. वित्तदर्शनम् T, $M_2$ 6. मनन्तरम् $M_1$ 7. निगमादीन् $M_1$
8. माधरं $M_1$ 9. माधवमचां A

कलानिधिं सबन्धुं च सार्धचन्द्रं [1]त्विषां पतिम् ।
सूदनं शङ्खमपरं [2]कत्तृतीयं चतुर्मुख ॥ १५४ ॥

[3]सान्तं [4]वसुयुतं चैव द्विरुच्चार्य चतुर्मुख ।
हुम्फडन्तं च नत्यन्तं हृन्मन्त्रं परिकीर्तितम् ॥ १५५ ॥

वेदादिं पन्नगं पञ्चबिन्दुभूषितमस्तकम् ।
नासिक्यं भद्रहस्तं च मधुद्वेषिं वसुं तथा ॥ १५६ ॥

ऐन्दवं विक्रमपरं नासिक्यं भास्करं घटम् ।
सबन्धुं कमलं पद्मनाभं वामनहस्तकम्[5] ॥ १५७ ॥

पुण्डरीकं सबन्धुं च वैराजं वैधरं ततः ।
गोधनं विजयं मान्तं वैधरं मधुसूदनम् ॥ १५८ ॥

मानुषं चामृतं भद्रकरं गोपनपद्मजौ ।
सगोपनं दरं चैव माधरं [6]कत्तृतीयकम् ॥ १५९ ॥

ऋतं च सैन्धवं बन्धुं सद्ध्रुवं [7]माठरं त्वचाम् ।
द्वितीयं पुरुषं ब्रह्मन् माधवीं माधरं पुनः ॥ १६० ॥

भृगुं खड्गकरं चैव द्विरुच्चार्यमतः परम् ।
हुम्फडन्तं शिरोमन्त्रं ठठ इत्यवसानकम् ॥ १६१ ॥

वेदादिमुरगं षष्ठं अचामर्घेन्दुमैन्दवम् ।
फुल्लनेत्रं समुवनं गर्हितं [8]भूधरात्मकम् ॥ १६२ ॥

कुम्भं सविक्रमं पद्मं खेटकीं कलशं त्वचाम् ।
तृतीयं [9]कमलं पञ्चबिन्दुं सुमुखमब्जज ॥ १६३ ॥

---

1. द्विषांपतिम् T  2. तत्तृतीयं $M_1$  3. चान्तं $M_1$  4. वायुसुतं A, $M_2$  5. मस्तकम् $M_2$  6. तत्तृतीयकम् $M_1$  7. माधरं $M_2$  8. भूसुरात्मकम् A, $M_2$  9. कलशं $M_2$



यान्तं च शिरसामब्जयोनिमेणेशमैन्दवम् ।
स्वाहाधरं शशिधरं मुखं [1]भूधरसूदनौ ॥ १६४ ॥

चतुर्गतिं शतानन्दं वासुदेवं सपश्चिमम् ।
कलानिधिं सरामं च यष्टिं भास्करगोपनौ ॥ १६५ ॥

चतुर्गतिं [2]खर्वदेहं सूदनं भानुविक्रमौ ।
[3]द्विरसेन्दुं हुम्फडन्तं शिखामन्त्रमुदीरितम् ॥ १६६ ॥

देवानां दास [4]वचसा अन्ते संयोज्य मन्त्रवित् ।
ओङ्कारं नृहरिं वीरसेनं नासिक्यमैन्दवम् ॥ १६७ ॥

माठरं यामिनीनाथमृतधाम सदर्भितम् ।
आखण्डलेशं सर्वेशमाकारं [5]कत्तृतीयकम् ॥ १६८ ॥

द्विरदं विक्रमपरं बहुलं घटविक्रमौ ।
अम्भोरुहं चोतदेहं हृदयाह्लादविक्रमौ ॥ १६९ ॥

कलानिधिं सुभद्रान्तं सुमुखान्तं समाधवम् ।
चान्तं शशधरं देवदत्तं चान्तं सकुम्भकम् ॥ १७० ॥

ऐन्द्रं च कुञ्जरमुखं पीयूषद्युतिविक्रमौ ।
सयष्टिं द्विमणिं चादिदेवं यान्तं हिमालयम् ॥ १७१ ॥

सदण्डं गरुडं बन्धुं पश्चिमं च द्विरुद्धरेत् ।
हुम्फडन्तं च कवचं हुंफट्शीर्षं प्रकीर्तितम् ॥ १७२ ॥

आगमादिं नरहरिं चौर्वं नासिक्यमब्जज ।
वैधरं गोपनं णान्तं मारुत्यं [6]माधवं मधु ॥ १७३ ॥

---

1. धवं $M_1$  2. खड्गदेहम् $M_2$  3. द्विरभ्यसेत् हुंफडन्तं शिरोमन्त्रमुदीरितम् T, $P_1$, $P_2$  4. वचनमन्ते T.  5. तत्तृतीयकम् $M_1$  6. वैधरं $M_2$

सूदनं भद्रहस्तं च पीयूषं सरसीरुहम् ।
गोपनं पुलहं चैव सूदनं मारुतं वसुम् ॥ १७४ ॥

कूटं [1]फुल्लायुधमचां षष्ठं वैराजमेव च ।
[2]कत्तृतीयं पद्मनाभं भास्करं मधुविद्विषम् ॥ १७५ ॥

दृष्टिं सवामनं भद्रहस्तं साम्निं समुद्धरेत् ।
भास्करं भद्रहस्तं च तद्द्विरुच्चार्य मन्त्रवित ॥ १७६ ॥

पश्चिमं वक्रतुण्डं च मन्दरं सुप्रतिष्ठितम् ।
तानुदीर्याथ मन्त्रज्ञः सुभद्रं चैन्दवं पुनः ॥ १७७ ॥

सदक्षं वामनशिरा अम्भोरुहनिकेतन ।
अम्भोरुहं सभुवनं पावकं भुवनं तथा ॥ १७८ ॥

नृहरिं पापहननं विक्रमं विजयं पुनः ।
वैरिञ्चं [3]वामनं दक्षमौग्रं दक्षं चतुर्मुख ॥ १७९ ॥

[4]गुहालयं सविजयमग्निशीर्षं[5] च मारुतम् ।
[6]एणेशं मन्दरं भानुं सूदनं विघ्ननायकम् ॥ १८० ॥

यान्तं ताराधिपं मायां सद्ध्रुव माठरं तथा ।
मधुद्विषं [7]मारुतं च हुम्फडस्त्रं प्रकीर्तितम् ॥ १८१ ॥

अस्त्रशब्दं चतुर्थ्यन्तं फडन्तं च समुद्धरेत् ।
उद्गीथं नृहरिं सर्गमन्धरं माठरं त्वचाम् ॥ १८२ ॥

द्वितीयं पश्चिमं पद्मनाभं चादिसमन्वितम् ।
खड्गहस्तं च सुमुखं [8]पुण्डरीकाक्षमम्बुजम् ॥ १८३ ॥

---

1. मल्लायुध $M_1$   2. तत्तृतीयं $M_1$   3. वासवं $M_1$   4. गुणालयं $M_1$
5. महिशीर्षं $M_1$   6. कोणेशं $M_1$   7. माधवं $M_2$   8. मेदिन्याः पदमम्बुजम् $T, P_2$; पतिमम्बुजम् $M_2$



सगोपनं सुरपतिं गोपनं खद्वितीयकम् ।
भद्रहस्तं सरामं च वासवं ब्रह्मसाधनम् ॥ १८४ ॥

खड्गहस्तं गजमुखं सूदनं च चतुर्गतिम् ।
अचामादिं गजमुखमौषधं नान्तमब्जज ॥ १८५ ॥

माधवीं मारुतं यान्तमाधरं पश्चिमं तथा ।
सबन्धु सप्रचण्डं चाप्येणेशं पाटलाप्रियम् ॥ १८६ ॥

मार्ताण्डं मधुविद्वेषिं भद्रं स्याद्धतधामकम् ।
दाक्षायणीशं रामं स्यादनुस्वारं चतुर्मुख ॥ १८७ ॥

दिवाकरं चादिदेवं दरं वैधरगोपनौ ।
पावकं पुरुषात्मानं द्विरुक्तं कमलासन ॥ १८८ ॥

हुम्फडन्तं च नेत्राभ्यां वौषट्कारं प्रयुज्य च ।
एवं न्यस्य विधानज्ञो विष्कम्भान्तं सदण्डकम् ॥ १८९ ॥

दिवाकरसहस्राभं हृदयार्णं षडुद्धरेत् ।
उत्पलं कुमुदं रक्तजपाबन्धूककिंशुकम् ॥ १९० ॥

पाटलं हृदयादीनां वर्णष्षण्णां क्रमाद्भवेत् ।
रक्षामन्त्रं प्रवक्ष्यामि छन्दसामादिमुद्धरेत् ॥ १९१ ॥

विघ्नेशं पद्मनाभं स्याद्द्विजराजं सविक्रमम् ।
सदण्डं च समार्ताण्डं बहुलं सगुहालयम् ॥ १९२ ॥

पश्चिमं वामनपरं प्रचण्डं हरिणं भवेत् ।
भल्लायुधं गदध्वंसं लान्तं भद्रकरं तथा ॥ १९३ ॥

अचामादिं दिनमणिं माधवौ सौरमक्षरम् ।
एणेशं धनदं दक्षं वसुशीर्षं च सूदनम् ॥ १९४ ॥

घनाद्यक्षं तथा दक्षं पावकं मस्तकस्थितम् ।
[1]षान्तं सविक्रमं खान्तं हान्तं स्यात्कपिलं पुनः ॥ १९५ ॥

द्विरदास्यं बन्धुपरं [2]माधवीं यान्तशीर्षकम् ।
वासुदेवं खड्गधरं चतुर्गतिमनन्तरम् ॥ १९६ ॥

मुखं सवैधरं ब्रह्मन् माठरं तद् द्विरुद्धरेत् ।
पवित्रमप्रमेयं स्यात्तुण्डं चादिसमन्दरम् ॥ १९७ ॥

सर्वरोधं द्विरुच्चार्य कमलं सविलोचनम् ।
यथापुरं सदण्डं च सूदनं यान्तमारुतौ ॥ १९८ ॥

द्विर्वक्त्रव्यं सुभद्रं च विक्रमं विघ्नवैधरौ ।
तद्विरुद्धच्छलध्वंसी बन्धुविघ्नं सवैधरम् ॥ १९९ ॥

[3]ऐन्दिरं चोतदेहं च उग्रं मान्तं चतुर्मुख ।
अत्रिं चाग्निं मधुद्वेषिममृतं धूलिकेतनम् ॥ २०० ॥

तार्क्ष्यं सङ्कर्षणं दण्डं तद्द्विरुच्चार्य पद्मज ।
मार्ताण्डमूर्ध्वनासिक्यं तदुदीर्यमतः परम् ॥ २०१ ॥

पावकं चौर्वशिरसं सदण्डं गोपनं तथा ।
गदध्वंसं छलध्वंसं तदुदीर्य जयंतथा ॥ २०२ ॥

वैराजं यान्तशिरसं शुक्लं वैराजपावकौ ।
जृम्भलं समता ब्रह्मन् माठरं दक्षसंज्ञितम् ॥ २०३ ॥

प्रचण्डं माधवं चैव कलशं बन्धुशीर्षकम् ।
कमलां वारुणं यान्तं हृषीकेशं च पश्चिमम् ॥ २०४ ॥

---

1. यान्तं $M_2$ 2. माधवं $M_2$ 3. एणेशं A
विजयं उदयं चैव वैराजं भुवनं तथा ॥ २०२ ॥
एष अर्धश्लोकः $M_1$ कोश एवोपलभ्यते ।



[1]मायाजितं प्रचण्डं च माधवं च ठठान्तिमम् ।
बीजमङ्गानि चोक्तानि दुर्वासा ऋषिरुच्यते ॥ २०५ ॥

छन्दोऽ[2]नुष्टुब् देवता च महानरहरिर्हरिः ।
[3]मालामन्त्रे [4]त्रिवर्णाः स्युः शुक्लपीतसितासिताः[5] ॥ २०६ ॥

तत्त्वं च परमव्योम सकलीकरणं तथा ।
विकलीकरणं चैव मन्त्रस्याप्यायनं भवेत् ॥ २०७ ॥

मोचनं चैव इत्येते कथिताः कमलासन ।
चतुष्षष्टिविधे मन्त्रे नारसिंहे महानयम् ॥ २०८ ॥

नृसिंहो व्योमचक्राख्यः पातालाख्यश्च सूरिभिः ।
ध्यायेन्मृत्युभये कृत्याप्रवेशे युधि विद्विषाम् ॥ २०९ ॥

उच्चाटने संहनने भूतानामपनोदने ।
आख्यायते ध्यानमस्य स्मृतं सवितृमण्डले ॥ २१० ॥

मध्ये विकस्वरे शुभ्रे पङ्कजे विष्टरोदरे ।
आसीनं षोडशमुखं भुजैस्तद्द्विगुणैर्युतम् ॥ २११ ॥

आयुधैश्शङ्खचक्राद्यैर्दुर्दर्शैं रश्मिमालिभिः ।
परचक्रप्रतिक्षेपे दुष्करेष्वन्यकर्मसु ॥ २१२ ॥

**ब्रह्मोवाच :—**

द्वादशाङ्गानि यो वेत्ति मन्त्रं सोऽर्हति वेदितुम् ।
इत्युक्तं भगवन् भूयो जिज्ञासा तेषु वर्तते ॥ २१३ ॥

---

1. मायाङ्कितं $M_2$; मायाविनं $M_1$ 2. बस्तं T,P,$P_1$ 3. मूलमन्त्रे $M_2$
4. ऽत्रवर्णाः $M_1$ 5. सितारुणाः $M_2$

श्री भगवान् :—

बीजं शक्तिस्तथैवाङ्गं हृदयादि [1]च षड्विधम् ।
ऋषिश्छन्दो देवता च वर्णोद्दीपनमेव च ॥ २१४ ॥

आप्यायनं मोचनं च सकलीकरणं तथा ।
विकलीकरणं चैव द्वादशैतानि पद्मज ॥ २१५ ॥

तेषां स्वरूपं वक्ष्यामि क्रमात्तदवधार्यताम् ।
मन्त्रस्य प्रकृतिर्बीजमक्षरं तत्समुध्दृतम् ॥ २१६ ॥

आत्मा मन्त्रस्य सा शक्तिर्यथा[2] मन्त्रफलप्रदा ।
हृदयादीनि मन्त्रस्य षडङ्गानि पितामह ॥ २१७ ॥

देवस्येव मुखादीनि एषु मन्त्रः प्रतिष्ठितः ।
ऋषिः फलस्य द्रष्टा स्याच्छन्दस्तदभिधीयते ॥ २१८ ॥

अक्षराणामियत्ता या देवता वाच्यमुच्यते ।
रूपभेदश्च शुक्लादिर्वर्णाः कमलसम्भव ॥ २१९ ॥

सम्पुटीकरणं रेफलकाराभ्यां तु दीपनम् ।
यथोदिताक्षरैस्सर्वैः संस्कारश्शोषणादिभिः ॥ २२० ॥

मन्त्रस्य देववत् प्रोक्तं यत्तदाप्यायनं बुधैः ।
मन्त्रस्य मोचनं [3]नाम प्रयोगः स्तम्भनादिषु ॥ २२१ ॥

मन्त्राक्षराणां प्रत्येकं सम्पुटीकरणं स्मृतम् ।
सकलीकरणं विद्धि प्रणवेन चतुर्मुख ॥ २२२ ॥

वौषट्कारवषट्कारहुङ्कारैः पृथगीरितैः ।
देवतानामभीष्टानां सन्निधिर्यः [4]पुटादिषु ॥ २२३ ॥

1. चतुर्विधम् $M_1$ 2. अमुत्र $M_1$ 3. तावत् $M_1$
4. पटादिषु $M_1$



प्रार्थ्यते [1]स चतुर्वक्त्र विकलीकरणाह्वयः ।
एतान्येव प्रयुञ्जीत विद्ययोराद्ययोरपि ॥ २२४ ॥

एकादशाक्षरो मन्त्रो वामनस्य प्रदर्श्यते ।
पूर्वोदितास्सप्तवर्णा विशेषः समुदीर्यते ॥ २२५ ॥

पीयूषमादिदेवं च मन्दरं चादिमुद्धरेत् ।
विश्वेशं गोपनं वायुमाद्यं चेति चतुर्मुख ॥ २२६ ॥

बीजं शिरस्यूर्ध्वलोको यष्टिश्चेति चतुर्गतिम् ।
अङ्गानि षट् फलादीनि स्वरान्तान्यानुपूर्वशः ॥ २२७ ॥

सानुस्वाराणि योज्यानि काश्यपो मुनिरिष्यते[2] ।
छन्दश्च दैवं गायत्रं वामनो देवता पुनः ॥ २२८ ॥

लक्षाण्येकादश जपेद्धोमे च जलतर्पणे ।
ततस्सिध्यति मन्त्रोऽयं पुरुषार्थचतुष्टयम् ॥ २२९ ॥

फलमन्यच्च यच्चेष्टमष्टाक्षरवदीरितम् ।
ओमादि नति पूर्वाणि [3]चत्वार्याद्यानि पूर्ववत् ॥ २३० ॥

सप्ताक्षरस्य मन्त्रस्य साधनं च यथापुरम् ।
सप्तलक्षजपादुक्तं फलमाप्नोति मन्त्रवित् ॥ १३१ ॥

गृहीत्वार्णान् सप्त पूर्वान् वैराजोऽ[4]ग्निस्त्रिविक्रमः ।
यादसांपतिं मायां च स्पर्शादिरनलोन्मुखम् ॥ २३२ ॥

स्पर्शान्तिश्चादिदेवश्च शङ्खो विष्णुरितीरितः ।
द्वादशार्णात्मको मन्त्रस्तदेव कमलासन ॥ २३३ ॥

1. च T 2. रुच्यते $M_1$ 3. चत्वार्यङ्गानि $M_1$ 4. अत्रिः A

त्रिविक्रमस्य बीजं च भास्करो विष्णुरेव च ।
अर्धचन्द्राकृति[1]श्चेति तदेवाङ्गं च षड्विधम् ॥ २३४ ॥

ऋषिश्च देवता छन्दः पूर्वोक्तान्येव साधनम् ।
पूर्ववत्फलमस्यापि राज्यादि प्राप्तिरिष्यते ॥ २३५ ॥

[2]नत्वेकं शक्यते वक्तुमानन्त्यात्फलसम्पदाम् ।
रामस्य जामदग्न्यस्य मन्त्रोद्धारश्चतुर्मुख ॥ २३६ ॥

गृहीत्वा पूर्ववत्सप्त वर्णान् साधारणांस्ततः ।
असाधारणवर्णानां क्रमादुद्धारणं शृणु ॥ २३७ ॥

जन्महन्ता गोपनश्च [3]माधवी विष्णु[4]रन्वतः ।
[5]दृष्टिश्चादिगति भद्रपाणिर्वायुश्च गोपनः ॥ २३८ ॥

चतुर्गतिः स्वरादिश्च वह्निराकार एव च ।
मन्दरश्चादिदेवश्च श्वसनो विष्णुरब्जज ॥ २३९ ॥

हुम्फडन्त इति प्रोक्तो मन्त्रः सप्तदशाक्षरः ।
अनलः प्रणवादिश्च सयष्टिर्बीजमीरितम् ॥ २४० ॥

एतदेवाङ्गमावृत्तं षट्क्रत्वो [6]गार्ग्यदर्शनः ।
छन्दश्च दैवं गायत्रं जामदग्न्योऽस्य देवता ॥ २४१ ॥

जपेद्विंशतिलक्षाणि ततस्सर्वार्थसाधनः[7] ।
दशाक्षरोऽथवा मन्त्रो जामदग्न्यपदं विना ॥ २४२ ॥

बीजादि सर्वं पूर्वोक्तं मन्त्रश्शत्रुक्षयावहः ।
मन्त्रो रामावतारस्य ब्रह्मन् दाशरथेर्वरः ॥ २४३ ॥

1. श्वेते देवताङ्गं च $M_2$   2. नैकैकं $M_1$   3. मायावी $M_1$   4. रन्वितः $M_1$
5. श्वादिगदी भद्र   6. गादि T, ; मार्गि A   7. साधनम् $M_1$



कथ्यते भरतादीनां तद्देवीनामनुक्रमात् ।
द्वादशाक्षरमारभ्य मन्त्रं तदनु पद्मज ॥ २४४ ॥

चतुर्मूर्तिमयायेति पदमुच्चार्य मन्त्रवित् ।
अभिरामशरीरेति चतुर्थ्यन्तमुदीरयेत् ॥ २४५ ॥

रामेति तद्विभक्त्यन्तं ठठेति तदनन्तरम् ।
द्वात्रिंशदक्षरात्माऽयं मनुरुक्तश्चतुर्मुख ॥ २४६ ॥

बीजमस्यानलो विष्णुः सानुस्वरः कथितस्स्मृतः ।
अङ्गानि षट् च तद्बीजमकारादिक्रमाद्भवेत् ॥ २४७ ॥

अपरं राममन्त्रं ते कथयामि चतुर्मुख ।
प्रथमं प्रणवं प्रोच्य [1]पद्मबिन्दुं सयष्टिकम् ॥ २४८ ॥

चतुर्थ्यन्तं चतुर्मूर्तिपदमुक्त्वा ततः परम् ।
[2]चतुर्गतिमयायेति शरशार्ङ्गभृदन्वतः ॥ २४९ ॥

चतुर्थ्यन्तं [3]शरत्पूर्वमिन्दीवरपदं तथा ।
त्विषेति च पदं पश्चात्प्रयोज्यं भगवत्पदम् ॥ २५० ॥

चतुर्थ्यन्तं समुच्चार्यमभिरामपदं ततः ।
शरीरायेति च प्रोच्य रामायेति पदं तथा ॥ २५१ ॥

नत्यन्तमिति मन्त्रस्य पदोद्धारः प्रदर्शितः ।
बीजं तदङ्गषट्कं च तदृषिश्च शरभः स्मृतः ॥ २५२ ॥

छन्दश्च पूर्ववद्देवो रामात्मा भगवान् हरिः ।
जपेदक्षरलक्षं तु ततस्सिध्यति मन्त्रराट् ॥ २५३ ॥

1. पद्म बीजं $M_1$   2. चतुर्वेद $M_2$   3. शिरः पूर्व $M_1$

फलं चाभीष्टमचिराल्लभते दुर्लभं महत् ।
मातृकाचक्रविन्यस्ता[1]न्र्णषण्डान् सुमन्त्रितान् ॥ २५४ ॥

अभ्यर्च्य कुसुमैस्तस्मिन्नुद्धरेत् भगवन्मयः ।
अतोऽन्य[2]मन्त्रसंघातं [3]मालामन्त्रं यथातथम् ॥ २५५ ॥

वक्ष्यामि सम्प्रति ब्रह्मन् यथावदवधार्यताम् ।
आदौ नादं सप्तवर्णं वसुं मधुनिषूदनम् ॥ २५६ ॥

स्पर्शान्तं गोपनं शङ्खं मुखं विष्णुं जयं तथा ।
अचां पञ्चममाहेन्द्रौ [4]नादादिं घटविक्रमान् ॥ २५७ ॥

[5]शंखिनं शिखिनं दक्षं करालं वसु[6]निष्ठितम् ।
[7]हान्तं मधुद्विषं ब्रह्मन् धूलिकेतनमादिमम् ॥ २५८ ॥

नान्तयान्तौ सदक्षाह्वौ पश्चिमोदयमक्षरम् ।
[8]अत्रिं रमाधरं [9]क्रोधरूपिणं चानलाह्वयम् ॥ २५९ ॥

अचां द्वितीयं पवनं कलशं बिन्दुमस्तकम् ।
उग्रात्मसुमुखौ स्यातां यादोनाथमृगाधिपौ ॥ २६० ॥

दिनेशमादिं नासिक्यं शशाङ्कं मधुविद्विषम् ।
वैराजं माधवीं भद्रकरं माधवमब्जज ॥ २६१ ॥

वक्रतुण्डमचामादिं विजयोदयसंज्ञितम् ।
[10]पञ्चान्तकं तथा यान्तं मस्तकस्थं जयं पुनः ॥ २६२ ॥

[11]राममन्दरशंखः स्युर्गोपनं पवनं मुखम् ।
आदिभल्लायुधौ रामवसुगोपनपाटलौ ॥ २६३ ॥

---

1. न्वर्ण $M_1$ 2. मर्ण $M_1$ 3. मूल $M_1$ 4. नादादीन् $M_1$; 5. शङ्खिनां शङ्खिनम् $M_2$ 6. गोपनम् $M_1$ 7. भान्तं A,$M_2$ 8. अग्निं $M_1$ 9. तोयरूपिणम् $M_1$ 10. पञ्चात्मकं A 11. रामं T



[1]श्रीवत्समादिमनलं वामनाग्निं मधुद्विषम् ।
चतुर्गतिं खड्गधरमेकदृक्वैधरं तथा ॥ २६४ ॥

[2]दक्षं चाग्निं हृषीकेशं विजयद्वयमन्वतः ।
यान्तं तच्छिरसं पश्चात्पवनं मृगवल्लभम् ॥ २६५ ॥

ऋक्षेशमेकनयनं दरगोपनविघ्नराट् ।
[3]बन्धुयान्तौ च भुवनं वैधरौ पुण्यभास्करौ ॥ २६६ ॥

श्वसनं दक्षभुवनौ चक्रविघ्नेशसप्तमम् ।
[4]अचां [5]कारणमेणेशंकलात्मा वसुविक्रमाः ॥ २६७ ॥

करालगोपनौ पापहननौ विक्रमं तथा ।
माहेन्द्रकुम्भावनलो मधुसूदनभास्करौ ॥ २६८ ॥

यान्तगोपनसप्तार्चिर्मधुसूदनमारुताः ।
प्रचण्डगोपनौ खड्गधरश्रीधरवैजयाः ॥ २६९ ॥

पीयूषगोपनौ[6] पद्मश्रीधरौ वनमालिनौ ।
मेधपश्चात्मद्विरदकमलामधुविद्विषः ॥ २७० ॥

पीतो मृगेशपवनगोपनाश्शुक्लश्रीधराः ।
[7]पावकस्थानगोविन्दवैराजदरवैधराः ॥ २७१ ॥

मधुसूदनविघ्नेशसुधारससमाह्वयाः ।
ब्रह्मसाधनसप्तार्चिर्गतिर्भास्कर[8]सप्तमाः ॥ २७२ ॥

अचामादिं धरो वेधाः ब्रह्मसाधनखेटकी ।
अग्निश्च कपिलं ब्रह्मन् भल्लायुधसविक्रमम् ॥ २७३ ॥

---

1. श्रीवत्सं चादि $M_1$ 2. मन्दरश्च हृषीकेशं A 3. बिन्दु $M_1$ 4. ककारचात्मेणेशं $M_2$ 5. ककारमर्णोंशं $M_1$ 6. रोधनौ $M_1$ 7. पवनस्थान $M_1$ 8. सत्तमा $M_1$

विघ्नेशं वैधरं प्रेतनायकं रामशीर्षकम् ।
भद्रपाणिं तथादृक् च सरसीरुहसम्भव ॥ २७४ ॥

दक्षादि देवहुतभुक् चतुर्गतिमनन्तरम् ।
[1]श्रीवत्सवासुदेवौ द्वौ क्रोधरूपसमीरणौ ॥ २७५ ॥

[2]करालं च ऋतं भद्रपाणिं वैराजमारुतौ ।
पश्चिमं वसुकर्म[3] च विक्रमं दृष्टिगोपनौ ॥ २७६ ॥

विघ्नेशच्छलविध्वंसमाधवा वैधरात्मकम् ।
जलजं पापहन्तारं हुतभुक्कमलं घटम् ॥ २७७ ॥

वक्रतुण्डं तथा द्युम्नं द्विरदाननविक्रमम् ।
भान्तमग्निं चोतदेहं वक्रतुण्डं चतुर्गतिम् ॥ २७८ ॥

पश्चिमाननयान्तौ च ओतदेहसमन्वितौ ।
वैराजद्वितयं दक्षं गोपनं नासिकोद्भवम् ॥ २७९ ॥

गदध्वंसं च कपिलमत्रिं मधुनिषूदनम् ।
यान्तं चतुर्गतिं शुक्लं वारुणाग्निसमीरणाः ॥ २८० ॥

एकदन्तमेकदृष्टिं बहुलं मधुविद्विषम् ।
[4]प्रचण्ड विक्रमं वक्रतुण्डं च सगुहालयम् ॥ २८१ ॥

सुमुखं हुतभुक् शङ्खमनलं मधुविद्विषम् ।
यष्टिं दक्षं तथाकारं नासिक्यं धूलिकेतनम् ॥ २८२ ॥

ध्रुवं माहेन्द्रमाकारमर्घांशुं कुम्भगोपनौ ।
सद्ध्रुवं जन्महन्तारं [5]वारुणं पुलहं तथा[6] ॥ २८३ ॥

1. वासुदेवादौ $M_1$ वासुदेवाद्यौ T 2. कारणं $M_2$ 3. भद्रं $M_1$
4. अयमर्धोऽनन्तर श्लोकपूर्वार्धश्च A, M, T, कोशेषु नोपलब्धौ । 5. वरुणं $M_1$
6, ततः $M_1$



मुसलीकुम्भमाकारं पीतवायुधनप्रदाः ।
श्रीधरं भद्रहस्तं च [1]हरिं स्वाहामयावहम् ॥ २८४ ॥

हुम्फडन्तं नवैतानि बीजानि कमलोद्भव ।
पद्मपाणिं पद्मनाभं वनमालां त्रिविक्रमम् ॥ २८५ ॥

श्रीवत्सं [2]शंखिभुवनं भद्रहस्तास्सविक्रमाः ।
अग्निं मृगेशं वरुणं वैराजं बन्धुमस्तकम् ॥ २८६ ॥

दरं ताक्ष्यं तथा चादिदेवं शुक्लं श्रियःपतिम् ।
वसुगोपनशीतांशुभुवनानलवारुणाः ॥ २८७ ॥

मृगेशविजयाकारविष्कम्भाश्शुक्लविक्रमौ ।
दृक्पुण्यमादिदेवं च [3]भास्करं ऋतधामकम् ॥ २८८ ॥

सूक्ष्मदृक्शङ्खदक्षौ च वैधरोऽग्निश्चतुर्गतिः ।
पश्चिमं त्रितदक्षादि अग्निवायुसरोरुहाः ॥ २८९ ॥

ऋतधामा जयागोपा पश्चिमा शुक्लमब्जज ।
भानुगोपनसप्तार्चिर्भल्लायुधगुहालयाः ॥ २९० ॥

वैराजककुभौ कुम्भहव्यवाट् कपिलाह्वयाः ।
वैधरं भास्करं पापहननं वक्रतुण्डकम् ॥ २९१ ॥

गदिनं ऋतधामानं भास्करं सुमुखं तथा ।
कुम्भविक्रमजन्माह्व पद्मनाभस्सदेवराट् ॥ २९२ ॥

सुभद्रशङ्खदक्षाह्वमोतदेहोऽथ भास्करः ।
पवनं पापहननं गोपनौ विजयो दरः ॥ २९३ ॥

1. नृहरिं $M_1$ 2. शङ्खभुवनं $M_1$ 3. प्रभाकर सविक्रमौ $M_2$

उदयं पीतकमलं मधुसूदनविघ्नराट् ।
माहेन्द्रशुभदौ [1]वह्निगोधनौ कुम्भविक्रमौ ॥ २९४ ॥

अग्निरत्रिः [2]कुम्भधरौ लक्ष्मी खर्वाश्चतुर्मुख ।
शुक्लोदयं तथा दृष्टिश्श्रीवत्सं वसुशीर्षकम् ॥ २९५ ॥

विघ्नेशशुभदौ स्यातां सरसीरुहसम्भव ।
मधुसूदनः शार्ङ्गपाणिः पञ्चान्तक विद्धि पुनः ॥ २९६ ॥

[3]और्वदक्षौ तदेहाश्च दृष्टिं सरसिजं तथा ।
वामनो धनदो यान्तः सुभगाग्निवनस्रजः ॥ २९७ ॥

रामपुण्याग्निगरुडविक्रमौ जयविक्रमौ ।
सुभगोऽग्निरादिदेवः कुञ्जरेण मुखाक्षरः ॥ २९८ ॥

करालं कपिलं पापहननं पवनात्मजम् ।
श्रीधरं दृष्टिधनदं पञ्चबिन्दुं सविघ्नराट् ॥ २९९ ॥

शुभोतदेहावुमात्मा चतुर्गतिमचां मुखम् ।
शैलद्वयं द्वादशात्मा गोपनश्शुक्लपश्चिमौ ॥ ३०० ॥

श्रीधरस्सुमुखो भूमिरनलः पञ्चबिन्दुकः ।
[4]करालाग्निं महामाया सुभगो बन्धुरन्ततः ॥ ३०१ ॥

वैराजं विक्रमं पापहनन बन्धुमस्तकम् ।
प्रचण्डं पुण्डरीकाक्षं वासुदेवं [5]जयं वसुम् ॥ ३०२ ॥

सूक्ष्मदृक्कुम्भवरुण पश्चिमाननमाधराः ।
उमात्म मृगदक्षाह्वा गोपना धनदः कुटः ॥ ३०३ ॥

1. गोपनौ $M_1$ 2. पुण्यधनौ श्रीश्च दृष्टिः M 3. ओतदक्षोतदेहाश्च $M_2$ 4. करालाग्निं $M_1$ 5. च दृग्वसुम् $M_1$



दक्षः पुण्योदयश्शुक्लो शुभदृष्टिर्विनायकः ।
वैधरो मधुहन्ता च मन्दरं ब्रह्मसाधनम् ॥ ३०४ ॥

अत्रिरग्निः पवित्राह्वा वैधरौ[1] स्पर्शपश्चिमः ।
भद्रादि देवभल्लाह्वामुग्रभूमिं मधुद्विषम् ॥ ३०५ ॥

एकदृग्दक्षविघ्नेशमाधवामृगवल्लभाः ।
भास्करं देवदत्तं च भानुं बन्धुं सुभद्रकम् ॥ ३०६ ॥

गदध्वंसं तथा कुम्भं द्विरदं पश्चिमाननम् ।
और्वाग्नि भुवनावुग्रयष्टिर्वेधाः श्रियःपतिः ॥ ३०७ ॥

अग्निं रमाधरं द्विश्च अग्निकूटविगर्हितम् ।
तथा भद्रमधुद्वेषि दृष्टिगोपनमस्तकान् ॥ ३०८ ॥

वैराज दक्षकमलगोपना बिन्दु पक्षिराट् ।
मनुं भुवाग्निमाकारं बिन्दुचन्द्रमधुद्विषः ॥ ३०९ ॥

[2]नासिक्यमादिरत्रिश्च बन्धुमन्दरविष्टपाः ।
वैराजरेफशङ्खाह्वमाधवावादिविघ्नराट् ॥ ३१० ॥

मृगेशकमलौ दक्षं गुह्यमम्भोरुहासन ।
जयोऽग्निर्वायुरेणेशमुखो गरुडवाहनः ॥ ३११ ॥

बन्धुपीत पवित्राह्वा मधुसूदनवैजयाः ।
गोपनो भार्गवाकारशुक्लोदयहुताशनाः ॥ ३१२ ॥

पीतोतदेहकमलविघ्नविक्रममाधवाः ।
गोपनं [3]सोमबन्धुश्च करिगोपनयष्टयः ॥ ३१३ ॥

1. वैराजस्पर्शपञ्चमः $M_2$ 2. नासिक्यं बन्धुरत्रिश्च $M_2$ 3. साम $M_2$

दिनेशमृतधामाह्वा दृष्टिशङ्खमधुद्विषः ।
विघ्नवायू तथा गोपकमलौ शत्रुदाहकः ॥ ३१४ ॥

[1]षान्तश खौ मधोर्हन्ता पद्मक्रोधाम्निमारुताः ।
आदिश्चक्री सुबन्धुश्च पीतस्सर्वपुरान्तकः ॥ ३१५ ॥

उदयोरन्तरामौ वै राजते पवनाम्रयः ।
आदिः खर्वतनुर्बन्धुपीतपद्ममधुद्विषः ॥ ३१६ ॥

पाटलं पश्चिमं पद्मनाभं वैश्वरमाधवौ ।
भल्लायुधं गदी कुम्भवैराजमृगवल्लभा ॥ ३१७ ॥

श्रीवत्समग्निमीकारं कुम्भं पीतद्वयं तथा ।
सुभद्रगोपनौ शङ्खमन्दरौ [2]दिनकृत्तथा ॥ ३१८ ॥

अचां चतुर्दशं जन्म शशाङ्कमृगवल्लभाः ।
हुताशगोपदक्षाह्वा माधव्यश्च गुह्यालयः ॥ ३१९ ॥

वैराजयुगसप्तार्चिर्दरदेवहुतान्तिमाः ।
अनलो यष्टिसहितो बीजमस्य समीरितम् ॥ ३२० ॥

शरभङ्गऋषिस्तस्य वरिवं छन्द ईरितः ।
जपो लक्षत्रयस्तस्मिन् चतुश्शतमिताक्षरे ॥ ३२१ ॥

पुंसो रामावतारस्य परस्य परमात्मनः ।
चतुश्शतार्णरूपोऽयं मालामन्त्रस्समुद्धृतः ॥ ३२२ ॥

यथापुरं पुरश्चर्या सिद्धिश्चैव यथापुरम् ।
अन्येषां भरतादीनां इतरव्यूहनामभिः ॥ ३२३ ॥

1. दान्त शङ्खौ T; यान्त शङ्खौ $M_1$,$M_2$ 2. नतिकृत्तथा $M_1$



आत्मशीर्षैश्चतुर्थ्यन्तैर्नामानि सहितानि च ।
चतुर्थ्यन्तानि वाच्यानि मन्त्ररूपाणि पद्मज ॥ ३२४ ॥

[1]बीजान्याद्यक्षराण्येव सानुस्वाराणि योजयेत् ।
सीतादीनां च देवीनां चतुर्थ्यन्तास्समाह्वयाः ॥ ३२५ ॥

[2]मन्त्रषष्ठेति पर्यन्तो बीजान्याद्यक्षराणि च ।
श्रीमन्त्रवत् पुरश्चर्या तद्वच्च फलसम्भवः ॥ ३२६ ॥

रामस्य बलभद्रस्य मनुस्सम्प्रति कथ्यते ।
सप्तार्णं पदमुच्चार्य ततः पश्चादुदीरयेत् ॥ ३२७ ॥

रामायेति चतुर्थ्यन्तं बलभद्रपदं तथा ।
बीजमस्योच्यते ब्रह्मन् जृम्भलम्पुलहं तथा ॥ ३२८ ॥

सानुस्वारो हृषीकेशः पैङ्गलः स्यादृषिः स्मृतः ।
छन्दः पूर्ववदेव स्याद्देवता मुसलायुधः ॥ ३२९ ॥

रामः कमलपत्राक्षो बीजमेवाङ्गपद्धतिः ।
लक्षाण्यक्षरसंख्यानि [3]भवेन्मन्त्रस्य सिद्धये ॥ ३३० ॥

फलमिष्टमवाप्नोति पातालगमनादिकम् ।
चतुर्वर्गफलावाप्तेः फलमस्य [4]करे स्थितम् ॥ ३३१ ॥

यादवस्याथ कृष्णस्य मन्त्रस्सम्प्रति कथ्यते ।
उद्गीथमुच्चार्य मुखे स्पर्शादि तदनन्तरम् ॥ ३३२ ॥

ऋतधामा ततः पश्चात्क्रोधरूपमनन्तरम् ।
वनमालिनमाकारं श्वसनं विष्णुमस्तकम् ॥ ३३३ ॥

1. बीजाद्यान्यक्षराण्येव T,$M_2$ 2. मन्त्रेषुठठेतिं $M_1$ 3. जपे $M_1$
4. पदे $M_1$

नत्यन्तमिति षड्वर्णो मन्त्रस्य कथिता मया ।
बीजं कमलमाद्यं स्यात्सप्तार्चिस्तदनन्तरम् ॥ ३३४ ॥

और्वः पश्चात्सयष्टिः स्यादेतेनैवाङ्गकल्पना ।
सनकोऽस्य भवेद्द्रष्टा छन्दो गायत्रमुच्यते ॥ ३३५ ॥

देवता भगवान् कृष्णः पुरश्चर्या च पूर्ववत् ।
फलानि पूर्वमुक्तानि नानन्त्यादुच्यते पुनः ॥ ३३६ ॥

गोवर्धनाख्यमन्त्रस्य वर्णोद्धारः प्रदर्श्यते ।
वेदादिं पूर्वमुच्चार्य प्रथमे स्पर्शपञ्चके ॥ ३३७ ॥

तृतीयां यादिषु तथा स्वरेषु च चतुर्मुख ।
सद्भ्रुवं गदिनं ब्रह्मसाधनं च सुधारसम् ॥ ३३८ ॥

आदिं सप्तार्चिषं पुण्यं मकरं तदनन्तरम् ।
भद्रबाहुं द्वितीयं च श्वसनं मुखमन्वतः ॥ ३३९ ॥

नत्यन्तमेवमुद्धारः कथितो नववर्णकः ।
मन्त्रस्तदेव बीजादिसाधनं फलमीरितम् ॥ ३४० ॥

गोपालमन्त्रस्योद्धारः कथ्यते कमलासन ।
छन्दसामादिमुच्चार्य तृतीयं [1]स्पर्शसंज्ञितम् ॥ ३४१ ॥

ओतदेहं पवित्रं च वामनं ककुभं ततः ।
[2]अनिरुद्धं विघ्नराजमकारं यादसाम्पतिम् ॥ ३४२ ॥

आद्यं [पु]लहमावृत्तं स्पर्शोपान्तं च गोपनम् ।
प्रभञ्जनं स्वरेष्वादिं ठठान्तो मनुरीरितः ॥ ३४३ ॥

1. स्पर्शसंज्ञकम् $M_1$ 2. अप्रमेयं $M_1$



बीजं तृतीयं स्पर्शानां पीतं तुर्यमचामतः ।
नासिक्यमङ्गानि पुनर्गोपनं खड्गसंज्ञितम्[1] ॥ ३४४ ॥

मुख्यं स्पर्शादिमनलं गोपनं [2]स्पर्शनं तथा ।
आद्यं ठठान्तं प्रथमं तदेवाङ्गमनन्तरम् ॥ ३४५ ॥

विपूर्वमधिकं पश्चादङ्गं त्रैलोक्यपूर्वकम् ।
रक्षणेति चतुर्थ्यन्तं तद्विभक्त्यन्तमन्वतः ॥ ३४६ ॥

असुराद्यन्तकपरं पदं सर्वाद्यनन्तरम् ।
ग्रहं निवारणायेति हुम्फडन्तमितीरितम् ॥ ३४७ ॥

मन्त्रस्य नारदो द्रष्टा विराट् छन्दश्च देवता ।
कृष्णावतारो भगवान् जपस्थानं पुरोदितम् ॥ ३४८ ॥

[3]सहस्रशः प्रतिस्थानं जपः प्रोक्तश्चतुर्मुख ।
जपात् सिध्यति मन्त्रोऽयं साधयत्यखिलं फलम् ॥ ३४९ ॥

आश्चर्यमपरं मन्त्रं वक्ष्यामि कमलासन ।
उच्चार्य प्रणवं पूर्वं माधरं तदनन्तरम् ॥ ३५० ॥

चतुर्थ्यन्तमुदीर्याथ तद्विभक्त्यन्तमद्भुतम् ।
भोगेश्वरपदं तद्वत्तद्वच्चक्रीपदं ततः ॥ ३५१ ॥

सुवर्णादिध्वजान्तं च पदं तादृग्विभक्तिकम् ।
पीतादिवासश्शब्दान्तं वासुदेवपदं[4] ततः ॥ ३५२ ॥

तद्विभक्तिशिरो योज्यं नत्यन्तो मनुरुद्धृतः ।
पूर्वमङ्गानि योज्यानि पूर्ववन्नातिरिच्यते ॥ ३५३ ॥

1. संज्ञकम् $M_1$ 2. श्वसनं $M_1$ 3. सहस्रांशः $M_1$ 4. परं T

ऋषिश्छन्दो देवता च पूर्ववत्फलमेव च ।
धर्मार्थकाममोक्षादि नेह भूयः प्रतन्यते ॥ ३५४ ॥

मालामन्त्रं तावदर्णं देवस्य मधुविद्विषः ।
कृष्णावताररूपस्य चतुर्वर्गफलप्रदम् ॥ ३५५ ॥

उद्धरामि यथातत्त्वं यथावदवधार्यताम् ।
निगमादिद्विषट्कार्णं सरोजमृतधामकम् ॥ ३५६ ॥

क्रोधं प्रचण्डं मधुभिच्छङ्खकुम्भ[ऋ]तान्विताः ।
क्रोधश्चण्डकमः कुम्भशं खा[म्रि] मधुसूदनाः ॥ ३५७ ॥

दरश्रीवत्स एणेश क्रोधसूक्ष्नमतः परम् ।
वासुदेवो गदी पापहननं च चतुर्गतिम् ॥ ३५८ ॥

अग्निबिन्दुर्विरिञ्चादि देवःश्शङ्खमचां मुखम् ।
पवित्रमग्निमधुभिद्भद्रपाणिद्वयं पुनः ॥ ३५९ ॥

वैधरं पश्चिमवसुं दक्षेन्दुभुवनात्मकम् ।
सूक्ष्मचक्षुर्गतिस्सोमः कुम्भाग्निस्सगुहालयौ ॥ ३६० ॥

पवित्रगोपनौ वायुं पश्चिमाग्निं मधुद्विषः ।
वैराजमाधवीविघ्नः सारङ्गासि धराः परः ॥ ३६१ ॥

बन्धुवैराजहुतभुक् पश्चात्मद्विरदाननः ।
गोपनः शङ्खदिनकृद्दत्तवैधरमारुताः ॥ ३६२ ॥

अब्जोतदेहावद्रिश्च यान्तभद्रत्रिविक्रमाः ।
माहेन्द्रशङ्खमधुभिन्मारुताः [1]ककुभाह्वयाः ॥ ३६३ ॥

1. शार्ङ्गपाणयः $M_1$



भृगुगोपनविघ्नेशजन्महन्त्रेणसंहिताः ।
मारुतो गोपनो वायुरिन्दुभास्करमैन्दवम् ॥ ३६४ ॥

ऋतं लक्ष्मीं महामायां क्रोधाग्निवरुणाह्वयाः ।
अत्रिर्विघ्नद्वयं शङ्खो द्विरदः सूक्ष्मलोचनः ॥ ३६५ ॥

श्रियःपतिं तथा जन्महन्तारं वक्रतुण्डकम् ।
हुताशचण्डमधुभिद्धरशुक्लदिनेश्वराः ॥ ३६६ ॥

कालात्मा प्रतिमाकारजयपावकभद्रकाः ।
उदैकश्चक्षुरमृतं विक्रमा विधिपावकौ ॥ ३६७ ॥

दक्षो विधिश्चिन्तधामा दक्षगोपनमब्जज ।
शङ्खनादिं गदध्वंसं माहेन्द्रं पञ्चबिन्दुकम् ॥ ३६८ ॥

सध्द्रुतं चेन्दिराबीजं पुष्टिबीजं ततः परम् ।
कामबीजं पाशबीजं श्रीवत्सं बिन्दुमस्तकम् ॥ ३६९ ॥

चक्र[1] खड्गधरो ब्रह्मा पद्मनाभोऽथ पश्चिमः ।
वैधरं[2] दक्षकमल श्रीधराः पीतवामनौ ॥ ३७० ॥

इन्दिरा पापहनना गोपना वित्तवर्धनाः ।
मधुसूदननासिक्यकुशेशय रमाधराः ॥ ३७१ ॥

श्रीवत्सद्वंद्वबहुल[3]वित्तेशमधुविद्विषः ।
कपिध्वजो गदी यान्तदक्षश्रीधरचन्द्रमाः ॥ ३७२ ॥

पीतादिदेवश्शीतांशुर्मायाकमलमब्जज ।
[4]मनुर्दक्षोतदेहौ च दृष्टिः शङ्खघटाह्वयः ॥ ३७३ ॥

1. छत्री $M_1$ 2. वैराज $P_2$ 3. विघ्नेश $M_1$

मायाकरालमीकारचण्डार्णवसुमस्तकम् ।
नादार्दिं पश्चिमं पद्मनाभं वैराजविक्रमौ ॥ ३७४ ॥

पावकं चोर्ध्वलोकेशं पश्चिमं चाप्रमेयकम् ।
खर्वविक्रममाहेन्द्रभल्लायुधसुधारसाः ॥ ३७५ ॥

विघ्नमन्दरविघ्नेशमाधवी सुप्रतिष्ठिताः ।
कुम्भोदरामशुभदपीयूषाग्निगुह्यालयाः ॥ ३७६ ॥

पश्चिमाननविघ्नेश माया मन्दराश्मकाः ।
वसुमूर्धमहेन्द्रादि देवाः कपिलसंयुताः ॥ ३७७ ॥

जृम्भलो यान्तसुभगहुताशधनदाः परः ।
गोविन्दविघ्न भुवनविधिः पश्चिमसंज्ञिताः ॥ ३७८ ॥

सप्तार्चिः पीतवर्णाभं देवरो मतिमांस्तथा ।
शङ्खगोपनवैराज श्रीधरो धनदाभिधः ॥ ३७९ ॥

मधुद्विट्कुञ्जमुखश्चतुर्गतिसपन्नगाः ।
भद्रहस्तो मधुद्वेषी गदध्वंसी द्वयान्वितः ॥ ३८० ॥

भद्रपाणिस्तथा पुण्यं सरसीरुहसम्भव ।
सुधारसो वसुर्भूमिर्गोधनाख्यमतः परम् ॥ ३८१ ॥

करालबन्धुविघ्नेशौ पञ्चबिन्दु[1]शुभाह्वयाः ।
मधुहन्ता तथा ब्रह्मा मायाविघ्नश्चवामनाः ॥ ३८२ ॥

यान्तं[2]माधवपीयूषवैराजाः पञ्चबिन्दुकम् ।
शशाङ्ककमलौ भद्रपाणिदृग्वैधरान्विताः ॥ ३८३ ॥

1. गुहाह्वयः M 2. माधर $M_1$



एणेशकुम्भ [1]दृक् स श्री श्रीधराश्चान्तयादिकाः ।
गदी च ऋतधामा च दिनकृद्वरुणो मृगः ॥ ३८४ ॥

वैराजं मधुहन्तारं [2]विष्ण्वाभं भद्रसाधनम् ।
मानुषेशं तथा दक्षं मधुसूदनवैधरौ ॥ ३८५ ॥

ऋक्षेशभुवनौ यान्तं मधुशत्रुहिमालयाः ।
उदयोऽग्निपवित्रं च बन्धु श्रीमधुविद्विषः ॥ ३८६ ॥

वक्रतुण्डविरिञ्चौ द्वौ हृषीकेशशुभाभिधौ ।
[3]भान्तादिदेवसुमुखौ पुण्डरीकविदर्भितौ ॥ ३८७ ॥

पूर्णचन्द्रं [4]सरामं च वैधरं मोहनाशनम् ।
पीयूषरामदृक् शङ्खमधुशत्रुधनाधिपाः ॥ ३८८ ॥

स्वाहाधरं वैधरं च गोविन्दं विजयाभिधम् ।
श्वसनो दृष्टिमधुभिद्धेरम्ब मकरालयाः ॥ ३८९ ॥

कुशेशयमधुद्वेषी पीतमाधवमारुताः ।
अर्चां द्वितीयं नृहरिं वसुमस्तकमब्जज ॥ ३९० ॥

सूक्ष्मदृक् सोर्ध्वलोकेशवैराजमधुविद्विषः ।
पापहन्ता तथा सोमदक्षाकर विदर्भितौ ॥ ३९१ ॥

अर्चां द्वितीयमनलं [5]कमलामृतवैजयाः ।
द्वयंबन्धुं तथा दक्षं सन्धवाग्निस्त्रिविक्रमम् ॥ ३९२ ॥

स्वयम्भूर्जन्म[6]हन्ता च पीयूषाग्निमधुद्विषः ।
दृष्टिविक्रमयान्तौ च कुम्भबन्धुं चतुर्मुख ॥ ३९३ ॥

1. विजयमधुश्री श्रीयथोयकम् $M_1$ 2. ब्रह्मविष्णुसुसाधनम् $M_1$
3. ह्रान्तादि $M_2$ 4. समारं च $M_2$; माधरं च A 5. कमलामृत-वैजयाः T, P 6. हर्ता $M_1$

अग्निमारुतमाकारभद्रहस्तास्सविक्रमाः ।
वक्रतुण्डानिलौ विघ्नदृग् दिनेशद्वयं तथा ॥ ३९४ ॥

कुञ्जरास्यं पश्चिमास्यं वक्रतुण्डं तथाक्षरम् ।
मन्दरः स्पर्शरोधश्च गदी च ऋतधा रविः ॥ ३९५ ॥

प्रचण्डपिण्डमाकारमधुभिद्वरुणाभिधम् ।
अचामेकादशं लक्ष्मीमुध्दृत्य कमलासन ॥ ३९६ ॥

समीर[1]कलशौ बन्धुसुभगौ मकरालयम् ।
सकविं पाण्डररुचिं मारुताभृतविक्रमाः ॥ ३९७ ॥

एकादशान्तमधुद्विट् शुक्लशङ्खेन्दवस्तथा ।
फुल्ललोचनमाकारखेटकी मारुताभिधः ॥ ३९८ ॥

सुभद्रवसुविघ्नेशवैधराः प्रेतनायकाः ।
सरामविघ्नदृग्दक्षमधुसूदनमन्वतः ॥ ३९९ ॥

यान्तवायुधनाध्यक्षरमाधरगणाधिपाः ।
भुजङ्गहुतभुक्पुण्यदक्षद्विपसुगोपनाः ॥ ४०० ॥

सुभगो मन्दरद्वन्द्वमग्निभद्रकराह्वयम् ।
बन्धुमस्तकपश्चान्ता विष्कम्भ[2]द्युम्नभद्रकाः ॥ ४०१ ॥

विक्रमो दक्षहुतभुक् ब्रह्मसाधनमब्जज ।
वक्रतुण्डधरौ शुक्लकुम्भाग्निद्विरदाननाः ॥ ४०२ ॥

मधुसूदन पश्चान्त पश्चिमा[ऋ]तमन्दराः ।
वैधरोऽग्निशिराश्शङ्खशुक्लकुम्भवपुश्शिराः ॥ ४०३ ॥

1. कमलौ $M_2$ 2. द्विरदाननाः T. $P_2$



सूक्ष्मदृक् चोर्ध्वविजयवरुणावित्तवर्धनाः ।
यष्टिं सरोरुहं यान्तं पश्चिमाग्निः समन्दराः ॥ ४०४ ॥

द्युमणिस्सध्रुवं शुक्लं वरुणोदरमन्वतः ।
ओतदेहं तथा दक्ष वक्रतुण्डं करालकम् ॥ ४०५ ॥

अग्निरेणेश श्रीवत्सकुम्भाग्निसहपश्चिमौ ।
ऋतं भल्लायुधं गोप पाशपाणिर्जनार्दनाः ॥ ४०६ ॥

[1]अग्निं श्रीवत्समनलं वायुं शुक्लं जलाशयम् ।
वसुं मधुद्विषं चन्द्रं श्रीधराग्निं चतुर्मुख ॥ ४०७ ॥

सम्प्रसारणवैराजवसुशुक्लमधुद्विषः ।
वैधरो भद्रचण्डांशुश्वसनौ दक्षश्रीधरौ ॥ ४०८ ॥

चक्री समन्दरमचां पञ्चमं कमलोद्भव ।
उदयं विघ्ननयनावादि खड्गधरारमा ॥ ४०९ ॥

वैराजपद्महुग्भुक्पञ्चबिन्दुर्धनाधिपाः ।
[2]अग्निरुग्रात्ममधुभिद् हृदयाह्लादमक्षरम् ॥ ४१० ॥

गदध्वंसं श्रियःकान्तं वनस्रक् तत्समीरणः ।
कुम्भविक्रमपश्चान्त ऋतभास्करवैजयाः ॥ ४११ ॥

भुवनोऽमृतवैराजवसुभल्लकरालकाः ।
वैराजजन्महन्तारं द्विरदः कुम्भवैजयाः ॥ ४१२ ॥

स्वशिरोग्निं तथा शुक्लपीतकुम्भास्तु [3]धामनि ।
नाथं रमाधरं [4]विघ्न मायाश्चैव सरोरुहम् ॥ ४१३ ॥

1. अग्निं $M_2$ 2. अनिरुद्धात्म $M_2$ 3. स्स यामिनी T,$P_2$
4. विष्णुं $M_1$

हुताशकपिला[क्षौ]द्रौ पश्चिमव्रतधानिलौ ।
छलध्वंसी पवित्राह्वा हृषीकेश[1]हुताशनौ ॥ ४१४ ॥

कान्तादि पीतफणभृद्दक्षवामनमस्तकान् ।
हैरम्बोऽग्नि मधुद्वेषी शुभदोदरमैन्दवम् ॥ ४१५ ॥

पाटलद्वन्द्वमोंकार चण्डांशुं कपिलाक्षरम् ।
[2]कमलोऽग्नि सभुव[नं] दक्षगोपनयष्टिकाः ॥ ४१६ ॥

हुताशताक्ष्र्यमधुभिन्नासिक्यं चतुरानन ।
श्रीबीजं च गदध्वंसं पीतौवं ध्रुवमादिमत् ॥ ४१७ ॥

पाटलो बन्धुविजय वैराजमृगवल्लभाः ।
ककुभो माधववरं ठठान्तो मनुरीरितः ॥ ४१८ ॥

नारदोऽस्य मुनिर्द्रष्टा वरिवं छन्द ईरितम् ।
देवता देवदेवेशः कृष्णः कमलसम्भव ॥ ४१९ ॥

अङ्गानि पूर्ववचास्य पुरश्चर्या च पूर्ववत् ।
जातिपुष्पैर्बिल्वफलैः[3] समिद्भिर्होममाचरेत् ॥ ४२० ॥

छायायां बिल्ववृक्षस्य जपहोमादिक भवेत् ।
अणिमादिकमैश्वर्यं पुरुषार्थचतुष्टयम् ॥ ४२१ ॥
फलं ददाति मन्त्रोऽयं मन्त्रविद्भिः सुसाधितः ।

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे चर्यापादे
मत्स्यादिमूर्तिमन्त्रकथनं नाम सप्तविंशोऽध्यायः ॥

---

1. हुताशनम् T,$P_1$,$P_2$ 2. कमलो भुवनं दक्षं गोपनायनयष्टिका: $M_2$
3. पुष्पैः $M_2$



# अष्टाविंशोऽध्यायः ।

## यज्ञमूर्त्यादि मन्त्रोद्धारः ।

भगवान् :—

हे ब्रह्मन् यज्ञवपुषमन्त्रः सम्प्रति कथ्यसे ।
महाफलं प्रोच्यमान[1]मिमं त्वमवधारय ॥ १ ॥

आत्मने इति पर्यन्तमष्टाक्षरवदुद्धरेत् ।
कालाग्यनलमध्यं च विग्रहान्तं पदं ततः ॥ २ ॥

चतुर्थ्यन्तं मूर्तिशीर्षं यज्ञादिपरमन्वतः ।
तद्विभक्त्यन्तमपरं ठठान्तं मनुरीरितः ॥ ३ ॥

बीजमस्यानलं मुख्यमनुस्वारान्तमुद्धरेत् ।
अङ्गानि चानलादीनि षड्भारान्तान्यनुक्रमात् ॥ ४ ॥

सानुस्वाराणि योज्यानि [2]कतुद्रष्टा विराट् पुनः ।
छन्दश्च यज्ञमूर्त्यात्मा देवता भगवान् हरिः ॥ ५ ॥

लक्षत्रयं जपः कार्यो मन्त्रस्यास्य प्रसाधने ।
फलं प्रसूते धर्मादिपुरुषार्थचतुष्टयम् ॥ ६ ॥

अन्नाधिपतिमन्त्रस्य [3]प्रभावो रूपमेवच ।
कथ्यते सम्प्रति ब्रह्मन् न वाच्यं यस्य कस्यचित् ॥ ७ ॥

प्रणवादिर्मनुस्सर्वो विशेषस्तूच्यतेऽधुना ।
मुख्यमर्णं भद्रपार्णिं द्विरुक्तं तदनन्तरम् ॥ ८ ॥

आदि देवं धनपतिं मायामुद्धृत्य पश्चिमम् ।
विष्णुं विजयनामानमाद्यं वायुमनन्तरम् ॥ ९ ॥

---

1. मिह $M_1$ 2. मन्त्रद्रष्टा $M_1$ 3. प्रभावं इति T,$P_1$,$P_2$ कोशग्रन्थेषु पाठः

देवदत्तं च दक्षादिमाद्यं दक्षं पुनस्तदा ।
आदिदेवं मनुष्येशं द्विरुक्तं मुख्यमन्वतः ॥ १० ॥

मन्दरं पापहननमृतवा वैष्णवाक्षरम् ।
शङ्खमादिमचामन्वक् द्विःप्रोक्तं प्रेतनायकम् ॥ ११ ॥

प्रणवादिं ठठेत्यन्तमिति मन्त्रश्चतुर्मुख ।
बीजमस्य प्रवक्ष्यामि द्वादशात्मानमुद्धरेत् ॥ १२ ॥

ज्वलनं वामनं [1]बिन्दुमेतदेवाङ्गमुच्यते ।
आकारादिक्रमाद्दीर्घस्वरभक्तिर्विशेषकृत् ॥ १३ ॥

अस्त्रे विशेषो विष्णुश्च विसर्गश्च समीरितः ।
व्यासो द्रष्टास्य मन्त्रस्य छन्दस्तु बृहती तथा ॥ १४ ॥

देवतान्नपतिः प्रोक्तो मन्त्रस्यास्य चतुर्मुख ।
अन्यथा शृणु वक्ष्यामि बह्वन्नफलदं शुभम् ॥ १५ ॥

नत्यन्तं प्रणवं पूर्वं वरुणं च त्रिविक्रमम् ।
क्रोधरूपं प्रचण्डं च विष्णुं वरुणमन्वतः ॥ १६ ॥

माधवं पूर्णचन्द्रं च [2]पीयूषात्मानमेव च ।
आदिं वैश्वानरं मुख्यं पवित्रं प्रणवादि च ॥ १७ ॥

एकनेत्रमकारश्च श्वसनं माधवं ततः ।
मन्दरं प्रणवाद्यं च दीप्तिमन्तं चतुर्मुख ॥ १८ ॥

गोपानं जृम्भलं विष्णुं माहेन्द्रं गोपनं ततः ।
वायुमाद्यं ठठान्तश्च वर्णोद्धार इतीरितः ॥ १९ ॥

1. बीज $M_1$ 2. पीयूषाकारमेव च $M_1$



बीजमङ्गानि पूर्वोक्तमृषिरस्य पराशरः ।
छन्दश्च देवी गायत्र देवतान्नपतिर्भवेत् ॥ २० ॥

पूर्णेन्दुबिम्बमध्यस्थे सितपद्मे विकस्वरे ।
आसीनं धवलाकारं नीलकुञ्चितमूर्धजम् ॥ २१ ॥

दुकूल क्षौमवसनं बालयोग्य विभूषणम् ।
कलधौतमयं पात्रं पायसान्नेन पूरितम् ॥ २२ ॥

बिभ्राणं दक्षिणेहस्ते दध्योदनमथेतरे ।
ध्यायेत् लक्षत्रयं धीमान् जपेत्तद्गतमानसः ॥ २३ ॥

अन्नेन जुहुयाच्चाग्नौ नियतं मन्त्रवित्तमः ।
बह्वन्नत्वमवाप्नोति सर्वमिष्टं लभेत च ॥ २४ ॥

शक्तीशमन्त्रमधुना कथयामि चतुर्मुख ।
आदितः सप्तवर्णानामुद्धारः पूर्वमीरितः ॥ २५ ॥

क्रोधनं हृदयाह्लादं भुवनं भास्करं ततः ।
गुह्यालयमनुस्वारं रविमग्निं च मारुतम् ॥ २६ ॥

[1]सयष्टिं पीतमाद्यर्णं कमलं क्रोधरूपिणम् ।
माधवीं पञ्चबिन्दुश्च हननं चाप्रमेयकम् ॥ २७ ॥

वैराजमप्रमेयश्च पुरुषात्मा च माधवः ।
नारायणं चतुर्थ्यन्तं ठठेति मनुरीरितः ॥ २८ ॥

अंशुमान् वीतिहोत्रश्च वामनो बिन्दुमस्तकः ।
[2]अङ्गं च बीजं पूर्वोक्तमृषिश्चापि पराशरः ॥ २९ ॥

1. २७, २८ श्लोकद्वयमिदं A,T कोशयोः $P_1$,$P_2$ पन्ययोरुपलभ्यम् ।
2. अब्जज T

छन्दश्च देवी गायत्रं शक्तीशो देवता तथा ।
जपेत् द्वादशलक्षं [1]तु प्राप्नुयात् सर्वमीप्सितम् ॥ ३० ॥

कालनेमिमनुर्ब्रह्मन् कथ्यते सर्वसाधकः ।
आद्यर्णाः पूर्ववत्सप्त पीयूषात्मा त्रिविक्रमः ॥ ३१ ॥

उग्रदेहः प्रचण्डश्च विष्णुः कलशमाधवौ ।
कमलं गोपनयुतं माहेन्द्रं विष्णुमस्तकम् ॥ ३२ ॥

विघ्नेशं [2]देवदत्तं च [3]दक्षं मायापरिष्कृतम् ।
पतङ्गामृतधामानं वैधरं च चतुर्गतिम् ॥ ३३ ॥

आद्यं सुधारसं माया [4]अत्रिर्गोपनहव्यवाट् ।
आद्यं सुमुखमाद्यं[5] च श्वसनं चाप्रमेयकम् ॥ ३४ ॥

हुम्फडन्तं ठठपरं मनुरेवं समुद्धृतः ।
बीजं वक्ष्ये दिनकरं भुवनं यष्टिमस्तकम् ॥ ३५ ॥

क्रुद्धादि पूर्ववच्चाङ्गं नारदो मन्त्रदर्शनः ।
छन्दो विराड्देवता च कालनेमिश्चतुर्मुख ॥ ३६ ॥

जपसंख्या फलं चापि द्विषट्काक्षरवद्भवेत् ।
त्रैलोक्यमोहनं मन्त्रं कथयामि यथातथम् ॥ ३७ ॥

उद्गीथं कमलं पीतं वामनं [6]बिन्दुमस्तकम् ।
एकाक्षरो मनुरयं देवताङ्गमनुक्रमात् ॥ ३८ ॥

षड्भिर्युतमचामाद्यैः सानुस्वारं प्रयोजयेत् ।
ऋषिर्वृद्धमनुश्छन्दो दैवं गायत्रमीरितम् ॥ ३९ ॥

---

1. तत् $M_1$  2. देवदेवश्च A  3. दक्षमाया T,P  4. मन्त्र A
5. माकारं A  6. ध्रुव $M_1$



त्रैलोक्यमोहनो देवो देवता जपतर्पणम् ।
होमश्च फलमप्यस्य निधिस्थानोपलम्भनम् ॥ ४० ॥

जपन् भूयस्तथा सर्वं दुर्लभं फलमश्नुते ।
षोडशार्णो मनुर्ब्रह्मन् त्रिलोकीमोहनात्मकः ॥ ४१ ॥

उच्यते पूर्ववत्सप्त वर्णानाद्यान् समुद्धरेत् ।
त्रैलोक्यमोहनपदं[1] चतुर्थ्यन्तं ततः परम् ॥ ४२ ॥

तद्विभक्तिपदं[2] विष्णुपदं स्वाहान्तमुद्धरेत् ।
मनुरेषस्स एवाङ्गं बीजं पूर्ववदीरितम् ॥ ४३ ॥

मुनिः पुलस्त्यश्छन्दश्च पूर्ववद्देवता तथा ।
जपसंख्या फलं चैव मूलमन्त्रवदिष्यते ॥ ४४ ॥

मन्त्रो नवाक्षरश्चान्यस्त्रिलोकीमोहनात्मकः ।
त्रैलोक्यमोहनपदं चतुर्थ्यन्तं नमस्तथा ॥ ४५ ॥

बीजमङ्गमयं चैव सर्वकामफलप्रदम् ।
निगमादिं चतुर्थ्यन्तं पदं त्रैलोक्यमोहनम् ॥ ४६ ॥

अंशुमालिनमग्निं च पञ्चबिन्दुं सयष्टिकम् ।
शङ्खिनं पुलहं पञ्चबिन्दुयष्टिसमन्वितम् ॥ ४७ ॥

तद्बीजं च द्विरभ्यस्य नतिश्च तदनन्तरम् ।
द्वादशार्णात्मको मन्त्रस्त्रिलोकीमोहनात्मकः ॥ ४८ ॥

प्रत्यक्षरं लक्षजपो द्वादशाक्षरवत्फलम् ।
कामकामेश्वरी नाम मन्त्रः सर्वफलप्रदः ॥ ४९ ॥

---

1. मिंद $M_1$  2. परं $M_1$

उद्गीथं पूर्वमुच्चार्य भास्करं ज्वलनं ततः ।
महामायां यष्टियुतामित्येकाक्षरमुद्धरेत् ॥ ५० ॥

एतदेवाङ्गमुदितं शौनको मुनिरुच्यते ।
छन्दश्च देवी गायत्रं देवता पुरुषोत्तमः ॥ ५१ ॥

लक्षमेकं जपेन्मन्त्री सर्वकामानवाप्नुयात् ।
शङ्खकुन्देन्दुधवलं चतुर्बाहुं किरीटिनम् ॥ ५२ ॥

गरुडारूढमारोप्य देवीं वामोरुविष्टरे ।
दाडिमीकुसुमप्रख्यां सर्वाकल्पपरिष्कृताम् ॥ ५३ ॥

पाशाङ्कुशधरां लक्ष्मीं कामविह्वललोचनाम् ।
कामकामेश्वरीमेवं ध्यायेदेकाग्रमानसः ॥ ५४ ॥

त्रैलोक्यमोहनं नाम मनुस्सम्प्रति कथ्यते ।
ब्रह्मकोशमुदीर्यादौ नत्यन्तं तदनन्तरम् ॥ ५५ ॥

पदानि सम्बुध्यन्तानि क्रमेणोद्धारयेत् सुधीः ।
पुरुषाद्युत्तमपदं रूपमप्रतिमेति च ॥ ५६ ॥

लक्ष्म्यादि च निवासान्तां सकला[दिं]जगत्पदम् ।
क्षोभणान्तं च सर्वादिपदं स्त्रीहृदयावधि ॥ ५७ ॥

विदारणशिरश्चापि त्रयादि भुवनावधि ।
उन्मादकरपर्यन्तं सुरासुरपदं ततः ॥ ५८ ॥

मनुजेति समुच्चार्य सुन्दरीजनमन्वतः ।
मनांसीति समुच्चार्य तापयेति चतुर्मुख ॥ ५९ ॥

दीपयेति पदं पश्चाच्छोषयेति च मारय ।
स्तम्भय द्रावयाकर्षपर्यन्तं च क्रियापदम् ॥ ६० ॥



द्विर्वक्तव्यं [1]ततो ब्रह्मन् परमं सुभगावधि ।
सम्बुध्यन्तं च सौभाग्यं करोति च पदं ततः ॥ ६१ ॥

सर्वकामपदं प्रोच्य पदं चामुकमित्यतः ।
हनेति द्विःसमुच्चार्य चक्रेण गदयेति च ॥ ६२ ॥

खड्गेन सर्वबाणैश्च द्विर्भिन्देति पठेत्ततः ।
पाशेनेति ततो बन्ध बन्धेति च पदद्वयम् ॥ ६३ ॥

अङ्कुशेनेति सम्प्रोच्य ताडयेति द्विरभ्यसेत् ।
[2]कुर्विति द्विः समुच्चार्य किं तिष्ठ पदमन्वतः ॥ ६४ ॥

तावद्यावत्पदे प्रोच्य समीहितपदं ततः ।
मे सिद्धिर्भवतूच्चार्य मे हुम्फडिति शीर्षकम् ॥ ६५ ॥

इत्येष मालामन्त्रस्य समुद्धारः प्रदर्शितः ।
निगमादिरनन्तं च और्वश्चन्द्रार्धशेखरम् ॥ ६६ ॥

बीजमेवं समुध्दृत्य षडङ्गानि मनुः पुनः ।
षोढा विभज्य कर्तव्या ऋषिः स्यान्नलकूबरः ॥ ६७ ॥

छन्दोऽतिच्छन्दनामास्य देवता पुरुषोत्तमः ।
[3]ध्यायेत्तमेव पुरुषं साधयेन्मन्त्रवित्तमः ॥ ६८ ॥

अष्टबाहुं विशालाक्षं गरुडारूढमच्युतम् ।
अकलङ्कशशिप्रख्यं पूर्णेन्दुसदृशाननम् ॥ ६९ ॥

सुभ्रूललाटमकुटं लावण्यामृतसागरम् ।
पीतकौशेयवसनं कपोलामृष्टकुण्डलम् ॥ ७० ॥

---

1. तथा ब्रह्मन् प्रथमं $M_2$ 2. कुर्वन्ति $T, P_1, P_2$ 3. ध्यात्वा तमेव $M_2$

चक्रं च मुसलं बाणमङ्कुशं दक्षिणे भुजे ।
शङ्खं कौमोदकीं शार्ङ्गं पाशं वामेषु बिभ्रतम् ॥ ७१ ॥

सर्वलक्षणसम्पूर्णं सर्वाङ्गरूपपरिष्कृतम् ।
दिव्यचन्दनलिप्ताङ्गं [1]दिव्यस्रग्दामविभूषितम् ॥ ७२ ॥

देव्योऽष्टौ परितस्तस्य बालव्यजनपाणयः ।
वीजयन्ति सदा देवं कामविह्वललोचनाः ॥ ७३ ॥

एताभ्यो बहिरष्टौ च दिक्षु चक्रादि धारिणः ।
पुरुषा देवदेवेशं प्रणिपत्य बहिः स्थिताः ॥ ७४ ॥

एवं सपरिवारं तं ध्यात्वा देवं समाहितः ।
सप्ताहं मन्त्रजापेन वश्या मनुजयोषितः ॥ ७५ ॥

दिवसेषु च तावत्सु पुनर्यक्षादियोषितः ।
तिष्ठन्ति संमुखा सर्वा मन्मथाविष्टचेतसः ॥ ७६ ॥

भजन्ति मन्त्रिणं मन्त्र [2]वैभवान्मोहयन्ति च ।
[3]जपी भूयस्तथा कामान् सर्वान्विन्दन्त्यसंशयम्[4] ॥ ७७ ॥

किं पुनर्बहुनोक्तेन देवः प्रत्यक्षतामियात् ।
शान्तिः पुष्टिश्च धर्मश्च कामार्थौ मोक्ष एव च ॥ ७८ ॥

पातालाकाशगमनमन्तर्धानमदृश्यताम् ।
निधानं [5]बलिसिद्धिश्च खननं चौषधं तथा ॥ ७९ ॥

पादुकां गुलिकां चापि रसायनमनुत्तमम् ।
[6]अक्षसूत्रं दरं खड्गं तथा वेतालसाधनम् ॥ ८० ॥

1. स्रग्वस्त्रदाम भूषितम् $M_2$  2. प्रभावान्मोह A, M  3. जपन् भूयः तदा $M_2$  4. संशयः $T, P_1, P_2$  5. बलसिद्धिं च $M_2$  6. अक्षसूत्रधरं $M_2$



फलानि दुर्लभान्येवं सिध्यन्ति मनुवैभवात् ।
प्रत्येकं न प्रदर्श्यन्ते ग्रन्थविस्तरभीरुभिः ॥ ८१ ॥

फलानां दिगियं प्रोक्ता दुर्लभानां चतुर्मुख ।
त्रैलोक्यमोहनाख्यस्य कामकामेश्वरस्य च ॥ ८२ ॥

एकाक्षरमुखस्योक्तं फलं मन्त्रस्य पद्मज ।
मन्त्रं यज्ञवराहस्य वक्ष्यामि कमलासन ॥ ८३ ॥

गृहीत्वा पूर्ववत् सर्ववर्णानाद्याननुक्रमात् ।
स्पर्शान्तं भास्करं चाद्यं [1]कलशं प्रणवादि च ॥ ८४ ॥

अनलं चादिदेवान्तं भास्करं मधुसूदनम् ।
श्वसनं वर्णमाद्यं च ओषधीशमचां मुखम् ॥ ८५ ॥

वह्निं प्रचेतसं मुख्यं मारुतं प्रणवादि च ।
मुसलिं चन्द्रधवलमचामादिमनन्तरम् ॥ ८६ ॥

श्रीवत्समादिमनलं महामायाग्निगोपनम् ।
दरं विष्णुं खड्गधरं विजयं श्रीधरं तथा ॥ ८७ ॥

पीयूषरूपममलं माधवं वैधरं तथा ।
आदिं पवित्रदृष्टिं च प्रणवादि [2]विभूषितम् ॥ ८८ ॥

श्वसनं चाप्रमेयं च कलात्मा विष्णुमस्तकः ।
वरुणं दहनाक्रान्तं वैधरं माधवाक्षरम् ॥ ८९ ॥

वरुणं चादिवर्णं च तथैवोग्रात्मसंमितम् ।
अनलं माधवोपेतं मन्दरं प्रथमं मरुत् ॥ ९० ॥

1. कमलं $M_2$  2. सगोपनम् $M_1$

मधुसूदनविक्रान्तं पवनं श्वेतरोचिषम् ।
वरुणं वीतिहोत्रं च सुभद्रं च गुहालयम् ॥ ९१ ॥

वैराजमादि देवान्तं विजयं मन्दरं तथा ।
भद्रपाणिं मृगेशं च वैधरं यष्टिमस्तकम् ॥ ९२ ॥

उग्रात्मा पर्वतं चादिं ऋतधामपरिष्कृतम् ।
विघ्नेशं मारुतं चक्रनेत्र शुक्लशिरस्तथा ॥ ९३ ॥

सुभद्रं चोर्ध्वलोकेशं नाभिपङ्कजसम्भव ।
माधवीमप्रमेयं च वनमाली झषस्तथा ॥ ९४ ॥

माहेन्द्रं गोपनयुतं मारुतं प्रथमस्वरम् ।
भल्लायुधं हृषीकेशं सुभद्रं भुवनं वसुम् ॥ ९५ ॥

प्रचेतसं कलात्मानममृतं सविसर्गकम् ।
पवित्रमादिं वैराजं मुख्यं पवनमाधवौ ॥ ९६ ॥

सुभद्रमौर्वं दक्षं च मुखद्विपदमीरयेत् ।
शशाङ्कद्विरदं[1] वह्निं भुवनं द्विपदं पठेत् ॥ ९७ ॥

अर्चां द्वितीयं दृष्टिं च मायां [2]कलशमादिशत् ।
[3]हव्यवाड्गोपनयुतं भास्करं मधुसूदनम् ॥ ९८ ॥

प्रभञ्जनमकारं च सूक्ष्मदृग्भुवनं तथा ।
माधवीं रामसहितं पश्चिमाननमादिमत् ॥ ९९ ॥

एकनेत्रमिकारं च विजयं कलशं [4]तथा ।
मन्दरं देवदत्तं च वैधरं विष्णुमस्तकम् ॥ १०० ॥

---

1. भुवनं $M_1$ 2. कमळमादिमम् A 3. विवस्वान् $M_2$
4. ध्रुवम् $M_1$



द्विर्ब्रूयात् गोपनाक्रान्तं पश्चिमाननमादिमत् ।
प्रभञ्जनमकारं च ठठान्तो मनुरीरितः ॥ १०१ ॥

सूक्ष्मदृग्भुवनं सर्गं बीजमेतत्समुद्धृतम् ।
मन्त्रं षोढा विभज्याङ्गकल्पना काश्यपो मुनिः ॥ १०२ ॥

छन्दो विराट् [1]स्तोमघोणी देवता कमलासन ।
जपो लक्षद्विषट्कं स्यात्फलं सर्वं यथापुरम् ॥ १०३ ॥

दरोदरनृसिंहस्य मनुस्सम्प्रति कथ्यते ।
ओङ्कारं पूर्वमुध्दृत्य कमलं शत्रुदाहकम् ॥ १०४ ॥

गुहालयं सयष्टिं च गोपतिं भुवनं ध्रुवम् ।
फुल्ललोचनमाद्यं च हृदयाह्लादनं तथा ॥ १०५ ॥

भद्रपाणिं स्वरादिं च ज्वलनं चादिमं तथा ।
ओषधीशमिकारं च यष्टिं भास्करगोपनौ ॥ १०६ ॥

श्वसनं च नतिर्मन्त्रो नारसिंह उदीरितः ।
अयमेव मनुर्बीजं छन्दो गायत्रमीरितम् ॥ १०७ ॥

देवता नृहरिर्द्रष्टा कपिलो ध्यानमुच्यते ।
दरोदरे सुखासीनं शतपत्रे विकस्वरे ॥ १०८ ॥

तप्तजाम्बूनदनिभं चतुर्बाहुमुदायुधम् ।
पर्यङ्कबन्धसुभगं प्रसारितभुजद्वयम् । १०९ ॥

जानुनोरुपरिष्टाच्च सर्वाकल्पपरिष्कृतम् ।
व्यात्तानन त्रिनयनं नखदम्भोलिभीषणम् ॥ ११० ॥

---

1. स्तोमपाणी T; दीर्घघोणी सोमऋषिः कमलासन $M_2$

सिंहस्यार्धं नरस्यार्धं मेघगम्भीरगर्जितम् ।
एवं ध्यात्वा जपेदष्टलक्षं मन्त्री समाहितः ॥ १११ ॥

सावित्रे मण्डले देवमासीनं सर्वकामदम् ।
ध्यायेल्लभेत धर्मादि पुरुषार्थचतुष्टयम् ॥ ११२ ॥

बहुनात्र किमुक्तेन सर्वान् कामानवाप्नुयात् ।
चतुर्णां पुरुषादीनां मनुः सम्प्रति कथ्यते ॥ ११३ ॥

प्रणवादीन् सप्तवर्णान् समुद्धृत्य [1]यथापुरम् ।
स्वं स्वं नाम चतुर्थ्यन्तं मन्त्रानेषां प्रकल्पयेत् ॥ ११४ ॥

तेषां बीजानि वक्ष्यामि [2]वर्णोद्धारैः क्रमादहम् ।
[3]विगतांशुर्गोपनयुत्तस्सदण्डः पुरुषात्मनः ॥ ११५ ॥

मार्ताण्डः पञ्चबिन्दुश्च [4]सेन्दुः सत्यः स कथ्यते ।
वैराजं पावकं पञ्चबिन्दुं नासिक्यमेव च ॥ ११६ ॥

त्रयीतनुं हृषीकेशं यष्टिं चानन्तनामनि ।
ऋषिश्छन्दो देवता च फलमष्टाक्षरे तथा[5] ॥ ११७ ॥

हयग्रीवस्य मन्त्रस्य वर्णोद्धारः प्रदर्श्यते ।
सप्तवर्णान् समुध्दृत्य विजयं बहुलं ततः ॥ ११८ ॥

[6]कालात्मा चैकदृग्वह्निं गोपतिं विष्णुमस्तकम् ।
श्वसनं प्रणवादिं च लक्ष्मीं बिन्दुमनन्तरम् ॥ ११९ ॥

ज्वलनं गोवनयुतं[7] शशाङ्कं माधवं तथा ।
स्वाहान्तमश्वशिरसः कथितः षोडशाक्षरः ॥ १२० ॥

---

1. तथा $M_2$ 2. वर्णोद्धरक्रमात् $M_1$ 3. शीतांशुः A 4. सेन्द्रः $M_1$
5. यथा $M_1$ 6. कलात्मा A,$M_2$ 7. प्रणवादिं च $M_1$



स एव बीजमङ्गानि क्रुद्धोल्कादि यथापुरम् ।
ऋषिर्बृहस्पतिर्ह्यस्य छन्दो गायत्रमुच्यते ॥ १२१ ॥

देवो हयशिरानाम देवता कमलासन ।
दशलक्षं जपेन्मन्त्रं महद्ज्ञानमवाप्नुयात् ॥ १२२ ॥

ओङ्कारपूर्वं नत्यन्तं चतुर्थी देवता क्रमात् ।
ठठान्तो मन्त्रराजोऽयं दशाक्षरविदर्भितः ॥ १२३ ॥

[1]बीजानि पूर्ववत्सर्वं [2]कर्तव्यं कमलासन ।
अतोऽन्यं वाजिशिरसो मालामन्त्रं ब्रवीमि ते ॥ १२४ ॥

[3]अर्णस्सप्तकमुद्धृत्य पदं हयशिरास्तथा ।
चतुर्थ्यन्तं सर्वविद्यालयेति पदमन्वतः ॥ १२५ ॥

[4]सकलामरशब्दादिगुरवे पदमुद्धरेत् ।
समस्त प्रतिशब्दादि [5]हन्तानन्त्येत्यनन्तरम् ॥ १२६ ॥

वीर्यं तेजः पदं पश्चाज्ज्ञानैश्वर्यपदं ततः ।
[6]शक्तिश्चैव बलं चैव सर्वाद्यावासमन्वतः ॥ १२७ ॥

तद्विभक्ति ततः पश्चात्परमात्मपदं ततः ।
चतुर्थ्यन्तं वासुदेवशब्दस्ताद्दग्विभक्तिकः ॥ १२८ ॥

ज्ञानज्ञेयपदं तद्वद्व्यक्ताव्यक्तपराय च ।
सर्वदुष्टासुरं प्रोच्य दुरितं [7]व्रजिनं तथा ॥ १२९ ॥

प्रमाथि तद्विभक्त्यन्तं तत्सद्रुचिरपूर्वकम् ।
पदं च तुरगायेति ज्ञानमुच्चार्य मूर्तये ॥ १३० ॥

---

1. बीजादि $M_1$ 2. स्मर्तव्यं $M_2$ 3. वर्ण $M_1$ 4. सकलामल $M_2$
5. वान्तानत्येत्यनन्तरम् T 6. शक्तिशब्दचतुर्थ्यन्तः सर्वन्यास समन्वितः A,$M_2$
7. पूजनं $M_1$

इति चोच्चार्य तस्यानु सहस्रं कोटिमन्वतः ।
पदं च विद्यादिनिकरं मुञ्च गच्छ पदे ततः ॥ १३१ ॥

स्फोटिर्विजृम्भिलोडन्तं द्विर्वक्तव्यं च तिङ्पदम् ।
सर्वादितेजोमध्यं च निध्यन्तं च पदत्रयम् ॥ १३२ ॥

चतुर्थ्यन्तं समुच्चार्य निर्धूतपदमन्वतः ।
[1]विकीर्णपदमुच्चार्य प्राक् प्रदीप्तपदं ततः ॥ १३३ ॥

केसरं च [2]कटं शब्दं कलापपद्मन्वतः ।
प्रदीप्तसूर्यमंशुं च प्रतीकाशपदं तथा ॥ १३४ ॥

भास्कराकारशब्दं च ऊर्ध्वमूर्ध्वजमन्वतः ।
शङ्खनाभमताङ्घ्रिश्च प्रसरत्वातदीप्तिमान् ॥ १३५ ॥

द्रवत्कनकमुच्चार्य पिङ्गलायतमाननम् ।
महास्वर समाकारं विशुद्धदशनं ततः ॥ १३६ ॥

पद्धतिं निर्गतां चोक्त्वा विराजितपदं तथा ।
लोकत्रयद्रवद्दीप्तपदं चामीकरादिमत् ॥ १३७ ॥

पिङ्गलायतमुच्चार्य विस्फारितपदं पठेत् ।
लोचनादिमहाशब्दं विभिषणपदान्वितम् ॥ १३८ ॥

नासिकापुटमद्रीन्द्रशिखराकारसंयुतम् ।
रुचिरं पदमुच्चार्य विकुञ्चितपदं तथा ॥ १३९ ॥

महाश्रवणसंयुक्तं श्रेयसेति पठेत्पदम् ।
तच्छब्दं च चतुर्थ्यन्तं दुष्टवरवाननन्तरम् ॥ १४० ॥

1. विदीर्ण $M_2$ 2. सटा T.



भिन्द्धिच्छिन्द्धिस्तथा मारिमर्दिस्त्रासिश्चघातवः ।
लोडन्ताद्धिः समुच्चार्य स्वौं वौमिति पदद्वयम् ॥ १४१ ॥

ध्वंसि हन्ति तथा ध्मापि हन्ति ग्राहि च ताडय ।
पचिर्मन्दिश्च ते एते लोडन्ताद्धिः कृतास्तथा ॥ १४२ ॥

परविद्यापदं प्रोच्यच्छिन्द्धिर्ण्यन्तः प्रयुज्यताम् ।
अमीत्युक्त्वा तथा नारी लोण्मध्यमशिराः स्मृतः ॥ १४३ ॥

एह्येहि भगवन् शब्दं वज्रशब्दमनन्तरम् ।
अङ्कुशेनेति तदनु प्रोच्य चाकर्षयेति च ॥ १४४ ॥

हृदयाद्यादिरक्तस्याद्युक्तिपूर्वजनेति च ।
जिह्वादि निलयं प्रोच्य बडवानलमन्वतः ॥ १४५ ॥

सग्बुध्यन्तं विश्वमूर्ति सौमनस्यमनन्तरम् ।
भगवन्निति वक्तव्यमोङ्कारं हृदयं ततः ॥ १४६ ॥

सदा [1]यद्ब्रह्मसदनादात्मेति च पदं पुनः ।
चिद्घनादि चतुर्थ्यन्तं भगवत्पदमीरयेत् ॥ १४७ ॥

ठठान्तमुद्धरेदेवं हयग्रीवं चतुर्मुख ।
पूर्वोक्तमेवास्य बीजं पूर्ववच्चाङ्गपद्धतिः ॥ १४८ ।

व्यासो मुनिर्हयग्रीवो देवता छन्द उत्कृतिः ।
ध्यायन् हयशिरोवक्त्रादद्वान्तं फेनमुल्बणम् ॥ १४९ ॥

पिबन्निव सुधीर्मन्त्रराजं[2] मन्त्रविदुच्चरेत् ।
अयुतं नियुतं वापि [3]जपेन्मन्त्रस्यसिद्धये ॥ १५० ॥

1. सद्ब्रह्म सदसदात्मेति $M_1$ 2. जालं $M_1$ 3. जपोमन्त्रस्य सिद्धिदः $M_2$

विद्यापारमवाप्नोति वागीशत्वं च पद्मज ।
व्याख्यातृत्वं च कर्तृत्वं शास्त्राणां बहुवर्त्मनाम् ॥ १५१ ॥

सकृदुग्रहणमात्रेण विद्याः सर्वाः प्रतिष्ठिताः ।
[1]अविस्मृतिश्च तासु स्यात्पुरुषार्थचतुष्टये ॥ १५२ ॥

नासाध्यं किञ्चिदस्यास्ति दीर्घमायुश्च विन्दति ।
षण्णां मुकुन्दमुख्यानां मनुः सम्प्रति कथ्यते ॥ १५३ ॥

सप्तार्णान् पूर्वमुच्चार्य नामधेयानि षट् तथा ।
चतुर्थ्यन्तानि योज्यानि शिष्टार्णानेवमुद्धरेत् ॥ १५४ ॥

जीमूतमर्दिं नासिक्ये वरुणं प्रणवादि च ।
सबिन्दुं भास्करं रेफं पञ्चबिन्दुं सयष्टिकम् ॥ १५५ ॥

ठठान्तं च मुकुन्दस्य मनुरेवं समुद्धृतः ।
*भास्करं पावकं पञ्चबिन्दुर्यष्टिसमन्वितः ॥ १५६ ॥

अक्षरं च द्विरभ्यस्येन्मार्ताण्डं च [2]गुहालयम् ।
सानुस्वारं द्विरभ्यस्येद्विष्णुशब्दमनन्तरम् ॥ १५७ ॥

चतुर्थ्यन्तं ठठान्तश्च बभ्रोर्मनुरुदीरितः ।
पर्वतं भुवनं भानुमूर्ध्वलोकेशनासिके ॥ १५८ ॥

भास्करं पावकं पञ्चबिन्दुं नासिक्यमुद्धरेत् ।
फट्कारं च हुतान्तं च मनुश्चैवं वृषाकपेः ॥ १५९ ॥

शुभदं पावकं चैव पञ्चबिन्दुं [3]सदर्थकम् ।
अक्षरं तद् द्विरुच्चार्य ठठान्तो मन्त्र ईरितः ॥ १६० ॥

---

1. अविस्मृतिश्च नास्यस्यात्पुरुः $M_2$ * A,T कोशमोः $P,P_2$ यन्थयोश्चाय- मध्ये उपलभ्यते । 2. गुहालयम् $M_1$ 3. सदण्डकम् $M_1$



शौरेस्तथापरं वक्ष्ये दाशार्हं मनुमब्जज ।
सवितारं बृहद्भानुं सयष्टिं पञ्चबिन्दुकम् ॥ १६१ ॥

हुतान्तश्च मनुः प्रोक्तो वैकुण्ठमनुरुच्यते ।
परमात्मा चतुर्थ्यन्तं वरुणं प्रथमं स्वरम् ॥ १६२ ॥

नासिक्यं कुम्भमाकारमर्धेन्दुं भास्करं ततः ।
हृषीकेशानुस्वारं नारायणपदं ततः ॥ १६३ ॥

चतुर्थ्यन्तं ठठान्तं च वैकुण्ठमनुरीरितः ।
ऋषिश्छन्दो देवता च बीजमङ्गानि षट् तथा ॥ १६४ ॥

अष्टाक्षरवदेतेषां फलानि च चतुर्मुख ।
अथापराजितं मन्त्रं वक्ष्यामि कमलासन ॥ १६५ ॥

निगमादीन् सप्तवर्णान् गृहीत्वादौ यथापुरम् ।
चतुर्थ्यन्तानन्तपूर्वमन्तःशब्दं समुद्धरेत् ॥ १६६ ॥

सहस्रादि च शीर्षान्तं तद्विभक्तिपदं पुनः ।
तत्सुगन्धं तथा क्षीरसमुदार्णवपदान्वितम् ॥ १६७ ॥

[1]शायिनेति पदं प्रोच्य शेषभोगपदं तथा[2] ।
पर्यङ्केति चतुर्थ्यन्तं तद्विभक्तिश्च वाहनम् ॥ १६८ ॥

[3]गरुडादिपदं पश्चाद्वासुदेवपदं ततः ।
तद्विभक्तिश्च नत्यन्तं वासः पीतादि तादृशम् ॥ १६९ ॥

---

1. शायिन्निति $M_1$ 2. पुनः $M_1$
3. कर्णिका कोटरपदं निवासित पदं तथा ।
श्रियादि निलयं पश्चात घृतपाणिद्वये पदम् । अ कोशेऽयं श्लोकः १६९ तमस्य स्थाने उपलभ्यते ।

सम्पूर्वं कर्षणपदं सम्बुध्यन्तमनन्तरम् ।
प्रद्युम्नाद्यनिरुद्धं च तद्विभक्तिपदं स्मृतम् ॥ १७० ॥

[1]मायादिशीर्षं सम्बुद्धौ वराहं तद्वदिष्यते ।
नृसिंहवामनपदे त्रिविक्रममनन्तरम् ॥ १७१ ॥

रामशब्दं त्रिरुच्चार्य कृष्णेति पदमुद्धरेत् ।
वरप्रदेति नत्यन्तमस्तीत्यन्वक्क्रियापदम् ॥ १७२ ॥

[2]ते च शब्दं चतुर्थ्यन्तमसुरेति पदं ततः ।
दैत्ययक्षपदे चोक्त्वा राक्षसेति पदं ततः ॥ १७३ ॥

भूतं पिशाचं सिद्धं च योगिनी ढाकिनीति च ।
ब्रह्मादिराक्षसपदं विनायकपदं ततः ॥ १७४ ॥

पूतनारेवतीस्कन्ध पुरोगम समुद्धृतिः ।
ग्रहादीनि च नक्षत्रग्रहानित्यप्यनुक्रमात् ॥ १७५ ॥

अन्यां चेति महत्पूर्वं गृहानिति पठेत्पदम् ।
हनिं दहिं पचिं चैव मथिद्यन्तं शबन्वितम् ॥ १७६ ॥

अनिभिद्धिः पथीश्चैव पतिस्यन्तं समन्वितम् ।
आख्यातं द्विः समुच्चार्य गृहाणेति तथैव च ॥ १७७ ॥

आविशध्वंसिरपरा द्रुह्यन्तलोट्पराः ।
चत्वारो धातवो मन्त्रे द्विर्वक्तव्याश्चतुर्मुख ॥ १७८ ॥

चक्रं गदां चवज्रं च तृतीयान्तमुदीरयेत् ।
भस्मीकुर्वित्यनुक्रम्य बाहुं सम्बुद्धिशीर्षकम् ॥ १७९ ॥

1. हयादिशीर्ष $M_1$    2. देव $M_1$



सहस्रारपदं सर्वं मुख्य प्रहरणायुधम् ।
जयेति विजयेति द्वे पदे द्विः प्रोच्य पद्मज ॥ १८० ॥

अनन्त[1]मपरा पूर्वं जितं प्रतिहतं तथा ।
नञ् पूर्वं नेतृपर्यन्तं सहस्रादिपदं ततः ॥ १८१ ॥

प्रज्वलिर्ज्वलिरित्येते लोडन्ते द्विः [2]समुद्धरेत् ।
विश्वरूपं समुध्दृत्य मधुसूदनमन्वतः ॥ १८२ ॥

महापुरुषवैकुण्ठनारायणपदं ततः ।
पद्मादि नाभिपर्यन्तं हृषीकेशपदं ततः ॥ १८३ ॥

सर्वमुक्त्वा तथाभूतं वशीकरणमुद्धरेत् ।
शङ्खचक्रगदामुक्त्वा धरेति तदनन्तरम् ॥ १८४ ॥

उध्दृत्य सर्वभूतं च नमस्कृतपदं तथा ।
सर्वमन्वङ्नागपदं प्रमर्दन पदान्वितम् ॥ १८५ ॥

सर्वं प्रपठ्यानुपूर्व्यादसुरोत्साधनं[3] ततः ।
सर्वदेवमनुक्रम्य महेश्वरमुदीरयेत् ॥ १८६ ॥

सर्वं ग्रहं समुच्चार्य निवारणपदं तथा ।
यन्त्रमन्यच्च[4] सर्वादि प्रभञ्जनपदं ततः ॥ १८७ ॥

सर्वदुःखप्रशमनं सर्वज्वरविनाशनम्[5] ।
सर्वबन्धमनुक्रम्य विमोक्षणपदं तथा ॥ १८८ ॥

दुःस्वप्नमध्यं सर्वाधि [6]विनाशनमनुद्धरेत् ।
नमस्कृतान्तं सर्वादिभूतमध्यं पदत्रयम् ॥ १८९ ॥

1. मपरान् T    2. समुच्चरेत् $M_2$    3. त्सादनं $M_1$    4. यन्त्रमध्यं च $M_1$    5. निवारणम् $M_1$    6. विनाशनं समुद्धरेत् $M_1$

पदद्वयं पूर्ववत् स्यादपकर्षणमाचरेत् ।
जनार्दनेति सम्बुद्धौ नमश्चास्त्विति ते पदम् ॥ १९० ॥

अप्रमेयमनुस्वारसहितं बीजमीरितम् ।
मन्त्रं षोढा विभज्याङ्गमृषिः प्रद्युम्न उच्यते ॥ १९१ ॥

छन्दोऽतिच्छन्द एतस्य विश्वरूपश्च देवता ।
साधयेन्मन्त्रविन्मन्त्रमष्टाक्षरसमाधिना ॥ १९२ ॥

अपराजितमन्त्रेण नासाध्यं विद्यते फलम् ।
वश्यमुच्चाटनं चैव तथा मारणकर्म च ॥ १९३ ॥

कृत्यादिभूतदोषाणां निवारणमनन्तरम्[1] ।
फलानि लिप्सुस्सर्वाणि मन्त्रमेनं समाश्रयेत् ॥ १९४ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मतन्त्रे चर्यापादे
यज्ञमूर्त्यादि मन्त्रोद्धारो नामऽष्टाविंशोऽध्यायः ॥

—: * :—

## एकोनत्रिंशोऽध्यायः ॥

### परिवारमन्त्रवर्णनम् ॥

**श्री भगवान् :—**

देवीनां च श्रियादीनां [2]मन्त्रविष्टरकल्पनम् ।
मन्त्रांश्च परिवाराणां प्रथमावरणादिषु ॥ १ ॥

अनुक्रमेण वक्ष्यामि यथा [3]तदवधारय ।
छन्दसामादिराद्यर्णं तुर्यमग्नेरनन्तरम् ॥ २ ॥

1. मनुत्तमम् T, $P_1$, $P_2$ 2. मन्त्रान् विष्टरकल्पनम् T, $P_1$, $P_2$
3. वदवधारय $M_1$



अग्निं च महतीं मायामनुस्वारं च पश्चिमम् ।
एकाक्षरो मनुर्ब्रह्मन् श्रियस्सर्वफलप्रदः ॥ ३ ॥

ऋषिर्मङ्कणकः प्रोक्तश्छन्दो गायत्रमुच्यते ।
श्रीरस्य देवताङ्गानि स्वेनुरूपेण कल्पयेत् ॥ ४ ॥

बिल्वानोकहमूले तु लक्षजापेन साधयेत् ।
समिद्भिश्च तदीयाभिः जुहुयाल्लक्षसंख्यया ॥ ५ ॥

श्रीपुष्पैः पायसान्नैश्च जुहुयादुक्त संख्यया ।
श्रियमाप्नोति महतीं श्रीकामो नात्र संशयः ॥ ६ ॥

प्रणवादिचतुर्थ्यन्तं नाम नत्यन्तमीरितम् ।
चतुरक्षरमन्त्रोऽयमपरं श्रीसमारूतम् ॥ ७ ॥

ऋषिरस्य धनाध्यक्षः छन्दः श्रीर्देवता तथा ।
प्रत्यक्षरं जपेल्लक्षं साधको मन्त्रसिद्धये[1] ॥ ८ ॥

[2]प्राग्वच्च बीजमङ्गानि फलमप्यस्य पूर्ववत् ।
निगमादिं भद्रहस्तं हैरम्बं [3]मन्दराधिपम् ॥ ९ ॥

शुभदं दहनं मायां मारुतं माधवं तथा ।
सप्ताक्षरोऽयं श्रीमन्त्रः सर्वमन्यद्यथापुरम् ॥ १० ॥

गृहीत्वैकाक्षरं पूर्वं भानुमग्निं[4] च वामनम् ।
भल्वायुधं च माहेन्द्रं हृषीकेशं सयष्टिकम् ॥ ११ ॥

शशाङ्कमौर्वं नासिक्यं सुभद्रं गदिनं परम् ।
जलाधिदैवमाद्यर्णं वैराजं गोधनं धरम् ॥ १२ ॥

1. विद्धये $M_1$ 2. प्रागुक्तं $M_1$ 3. मन्दराधिधम् $M_2$
4. सूर्यं च $M_2$

पुलहं कमलं शक्रं दाहकं पाटलप्रियम् ।
गोधनं कमलं [1]चित्रभानुं मायाविभूषितम् ॥ १३ ॥

प्रभञ्जनं मृगेशं च स्वाहायां विरमेत्ततः ।
षोडशाक्षरमन्त्रोऽयं श्रियः कमलसम्भव ॥ १४ ॥

ओङ्कारपूर्वं नत्यन्तं कमलं मन्दरं तथा ।
माहेन्द्रं वरुणं चादिदेवं चन्द्रं त्रिविक्रमम् ॥ १५ ॥

विघ्नेशं पद्मबिन्दुं च हुतान्तं त्विदमीरितम् ।
पूर्ववत्सर्वं बीजादि[2] परिग्राह्यं चतुर्मुख ॥ १६ ॥

[3]इत्युद्धृतो मनुश्चान्यः श्रियः कमलसम्भव ।
उध्दृत्य पूर्वमुद्गीथं श्रीवत्समनलं तथा ॥ १७ ॥

वामनं यष्टिशिरसं[4] दिनेशं यान्तमब्जज ।
पद्मबिन्दुं सयष्टिं च शुभदं वसुमस्तकम् ॥ १८ ॥

महामायाङ्कितं दण्डं ठठ इत्यवसानकम् ।
मङ्क्षणोऽस्य ऋषिश्छन्दो गायत्री श्रीश्च देवता ॥ १९ ॥

जपेल्लक्षत्रयं मन्त्रं बिल्वारण्येऽथ साधयेत् ।
वश्याकर्षणभूलाभ[5]खनिरत्नादिसिद्धयः ॥ २० ॥

ध्यानमस्य प्रवक्ष्यामि श्रियो माहेन्द्रमण्डले ।
आसीनायाः परिजनानि[6]न्द्रादीनर्चयेत्क्रमात् ॥ २१ ॥

1. मायां $M_1$ 2. बीजादि पूर्वं तत्सर्वं $M_1$
3. पूर्वोक्तां श्चतुरो वर्णान् गृहीत्वा तदनन्तरम् ।
देवानां दानवचनं हुमन्तं तदनन्तरन् । T,P
4. सहितं $M_2$ 5. धन $M_2$ 6. दुर्गादीन् A



चतुर्थ्यन्तं स्वनामोक्त्वा नत्यन्तं मन्त्रमब्जज ।
मण्डले तत्र [1]पद्मस्य पूर्वादिषु दलेषुच ॥ २२ ॥

वासुदेवादयो व्यूहाश्चत्वारो दिक्ष्ववस्थिताः ।
तेषां नाम चतुर्थ्यन्तं नत्यन्तं प्रणवान्वितम् ॥ २३ ॥

गुल्गुलुश्च करण्डश्च दमकश्शललस्तथा ।
कोणवर्णेषु संस्थाप्य मन्त्रांस्तन्नामपूर्वकम् ॥ २४ ॥

रतिस्सरस्वती भूमिः प्रीतिः कीर्तिश्चतुर्मुख ।
शान्तिः पुष्टिश्च तुष्टिश्च श्रियोधस्ताच्च शक्तयः ॥ २५ ॥

नामानि तासां मनवो यथापूर्वमुदीरिताः ।
पार्श्वे च दक्षिणे तस्याः श्रियः[2] पद्मनिधिः [3]स्थितः ॥ २६ ॥

वामे शङ्खनिधिर्नाम तयोर्मन्त्रो यथापुरम् ।
धनदो माणिभद्रश्च जृम्भलो नलकूबरः ॥ २७ ॥

पूर्णभद्रश्चलेन्द्रश्च कलिसृक् शिबिकुण्डलः ।
पूर्वादिदिक्षु भविनामेतेषां मनुरुच्यते ॥ २८ ॥

निगमादिं सुभद्रं च एकदन्तं सयष्टिकम् ।
धनदस्य मनुःप्रोक्तो नाम नत्यन्तमेव च ॥ २९ ॥

भल्लायुधं पद्मनाभं पद्मबिन्दुं सदण्डकम् ।
नलकूबरमन्त्रश्च कथितः कमलोद्भव ॥ ३० ॥

ककुभं पद्मनाभं च नासिक्यं जृम्भलो मनुः ।
स्पर्शान्तं पुलहंश्चोर्ध्वलोकेशं तदनन्तरम् ॥ ३१ ॥

1. अब्जस्य T 2. स्थिताः $M_1$ ; 3. श्रियः $M_1$

माणिभद्रस्य [1]सदृशो मनुः सर्वार्थसाधकः ।
पश्चिमं पीतवर्णाभं भुवनं यष्टिमस्तकम् ॥ ३२ ॥

पूर्णभद्रस्य कथितो मनुरेवं चतुर्मुख ।
[2]वक्रतुण्डमकारं च पुलहं भुवनं पुनः ॥ ३३ ॥

नासिक्यं मनुरेतस्मिन् शिबिकुण्डलनामनि ।
ब्रह्माणमादिंपुलहं गुहालयसयष्टिकम् ॥ ३४ ॥

उद्धारश्च मनोरेवं कथितः कलिमालिनः ।
वक्रतुण्डं पीतवर्णं हृषीकेशं च तद्भ्रुवम् ॥ ३५ ॥

चरेन्द्रमन्त्रः कथितः पूर्वादिषु यथाक्रमम् ।
मन्दरं पुलहं चैव [3]गुणालयसयष्टिकम् ॥ ३६ ॥

महेन्द्रस्य मनुः प्रोक्तः सुभगः पुलहोदयः ।
धनाध्यक्षस्य मन्त्रोऽयं कथितः कमलासन ॥ ३७ ॥

पार्श्वे च दक्षिणे पूज्याः श्रियः परिजनाः स्थिताः ।
खड्गदामोदरं चैव महामायां सबिन्दुकम् ॥ ३८ ॥

चिन्तारत्नस्य कथितो मनुः पूर्वदलाश्रयः ।
श्रीवत्समग्निं भुवनं सदण्डं च चतुर्मुख ॥ ३९ ॥

कथितश्च [4]बलामन्त्रस्ताक्ष्यस्थाने समर्चनम् ।
इन्द्रादयोलोकपालास्स्वाशासु परितस्थिताः ॥ ४० ॥

तृतीयावरणे चापि बलाकी वनमालिनी ।
विभीषी शाङ्करी चैव दिक्षुपूर्वादिषु स्थिताः ॥ ४१ ॥

1. कथितो A 2. वक्रतुण्डं च भुवनं $T, P_1, P_2$ 3. गुहालय विदर्मितम् $T, P_1, P_2$ 4. कमलामन्त्रः T; शबलामन्त्रः $M_2$



सकञ्चुका वेत्रहस्ता मन्त्रास्तासां समाह्वयाः ।
विष्वक्सेनपदे पुष्पधारिणीमर्चयेत्ततः ॥ ४२ ॥

कल्पकं पारिजातं च हरिचन्दनभूरुहम् ।
सन्तानमन्दरौ चैव द्वारभूषु निवेशयेत् ॥ ४३ ॥

बिल्वं च सरसीं चैव शतपत्रसमाकुलाम् ।
श्रियं परिगतां [1]पक्षिसङ्घातकलनिस्वनाम् ॥ ४४ ॥

परिवारान् प्रकल्प्यैवं तत्तन्नामभिरर्चयेत् ।
चतुर्थ्यन्तैर्नति परैः प्रणवप्रमुखैस्तथा ॥ ४५ ॥

मालामन्त्रं प्रवक्ष्यामि श्रियः कमलसम्भव ।
उद्गीथमुक्त्वा प्रथमं नतिश्च तदनन्तरम् ॥ ४६ ॥

उक्त्वा भगवती शब्दं च श्रीचतुर्थ्यन्तमन्वतः ।
धीरापदं च सम्बुद्धौ श्रीपूर्वं निलयस्तथा ॥ ४७ ॥

आकारपूर्वं भरणं शतमण्डितमन्नतः ।
शरीरेति च सम्बुद्धिः पदान्येवं समुद्धरेत् ॥ ४८ ॥

भास्करं चानलं पञ्चबिन्दुं चन्द्रार्धशेखरम् ।
कलात्मानं विसर्गान्तं बीजमेतद् द्विरुच्चरेत्[2] ॥ ४९ ॥

द्विरुच्चार्यं [3]भरपदं पापशब्दादनन्तरम् ।
अलक्ष्मीमिति वक्तव्यं नाशयेति द्विरीरयेत् ॥ ५० ॥

भास्करं [4]पावकं पञ्चविन्दुं यष्टिमनन्तरम् ।
[5]त्रिरभ्यसेत्तथा सप्तजन्म पूर्वार्जितं तथा ॥ ५१ ॥

1. पक्षी संघातालिकुलनिस्वनाम् $M_2$ 2. समुद्धरेत् $T, P_1, P_2$ 3. हरपदं $M_1$ 4. चानलं $T, P_1, P_2$ 5. द्विरभ्यस्ये T

अखिलं प्रोच्य दारिद्यं पदं दूरात्तथा पदम् ।
[1]उत्सारयेति द्विःप्रोच्य चन्द्रमादिविसर्गितम्[2] ॥ ५२ ॥

त्रिस्त्रिःप्रोच्यं त्वद्भक्तजनशब्दमनन्तरम् ।
वसुं नियोजयेत्युक्त्वा धारयेतिपदं पुनः ॥ ५३ ॥

पूरयेति द्विरुच्चार्य पदमम्भोरुहासन ।
प्रपन्नलोकं ह्रीङ्कारं त्रिरुच्चार्य हयं गजम् ॥ ५४ ॥

विविधं पशुमुच्चार्य निचयं तदनन्तरम् ।
दासीदासं परिजनं तदन्तं द्विर्विलोकय । ५५ ॥

मां च सौम्येति चेत्युक्त्वा अवलोकनसंयुतम् ।
लक्ष्मीमग्निं विक्रमं च श्रीधरं यष्टिमस्तकम् ॥ ५६ ॥

त्रिरुच्चार्य [3]यजेति द्विर्भवतीति च पद्मज ।
सुरासुरेत्यनुपदं[4] सिद्धगन्धर्वराक्षसम् ॥ ५७ ॥

यक्षविद्याधरपदं निखिलं जन्तुशब्दकम् ।
मनोभिरिति चाकाङ्क्ष्य समागममनन्तरम् ॥ ५८ ॥

प्रियेति सम्बुद्धिपदं भास्करं सगुहालयम् ।
सार्धचन्द्रमिदं बीजं त्रिरुच्चार्य परादिते ॥ ५९ ॥

वरं विविधमुच्चार्य सितमालाम्बरं तथा ।
धारिणीति समुच्चार्य निखिलं रोचिषं वसु ॥ ६० ॥

निचया भवती पद्मा सम्बुद्धौ तत्त्रयं पदम् ।
श्रीपदं चापि नत्यन्तमस्त्वित्येतत् क्रियापदम् ॥ ६१ ॥

1. उत्सादयेति $M_1$ 2. विसर्जितम् $M_2$; विसर्जनम् T 3. जयेति $M_1$
4. गुणंः T, $P_1$, $P_2$



युष्मच्छब्दं चतुर्थ्यन्तं ठठान्तो मनुरीरितः ।
पूर्ववद्बीजमस्यापि मन्त्रं भङ्क्त्वाङ्गकल्पना ॥ ६२ ॥

छन्दोऽतिच्छन्दमेतस्य देवता श्रीधनाधिपः ।
द्रष्टा फलं जपं चास्य द्विषट्काक्षरवत् फलम् ॥ ६३ ॥

अधुना[1] वसुधामन्त्रं प्रवक्ष्यामि चतुर्मुख ।
ब्रह्मकोशं मुखं तस्य श्रीवत्सं ज्वलनं तथा ॥ ६४ ॥

वामनं [2]माधवं देवदत्तं श्रीबीजमेव च ।
कमलं बहुलं पञ्चबिन्दुं सुभगमन्वतः ॥ ६५ ॥

भद्रहस्तं विधातारमनलं वामनं तथा ।
सुभगं गोपनयुतं विघ्नेशं च समीरणम् ॥ ६६ ॥

करालमग्निमीकारं ठठान्तं षोडशाक्षरम् ।
[3]तारादिवसुमध्यं च ठठान्तं हृदयादिषु ॥ ६७ ॥

[4]योजयेच्च नमस्कारपदं [5]श्रीपदमन्वतः ।
[6]तथा सौम्यौ च सम्बुद्धौ समयेतिपदद्वयम् ॥ ६८ ॥

अभयंकरि[7] चेत्युक्त्वा महाशब्दमनन्तरम् ।
टावन्तस्समयावन्तः[8] सम्बुद्धौ च [9]ढढावधि ॥ ६९ ॥

ध्वान्तमेति तथा पूर्वं गच्छेति पदमन्वतः ।
द्विर्वक्तव्यं पदद्वन्द्वं [10]भगपूर्वावधीति च ॥ ७० ॥

1. वसुधायामनुर्ब्रह्मन् वक्ष्यामि श्रूयतां त्वया $M_2$ 2. मास्तं $M_1$ 3. ताराधिपसमध्यं तं $M_1$ 4. अङ्गेषु योजयेन्मन्त्रं नमस्कार पदं शृणु $M_1$, $P_2$ 5. शृणु स याचितः T 6. सा माया च तथा सौम्या सम्बुद्धौ तत्पदद्वयम् $M_1$, $P_2$ 7. स भयंकरि $M_1$, $P_1$, $P_2$ 8. शब्दः $M_1$, $P_2$ 9. ठठाविधि $M_2$, $P_1$ 10. भगपूर्वं नतीति च $M_2$; A.

वसुशब्दं देहि [1]शीर्षं ठान्तं तेनचाह्वयेत् ।
देवीं च वसुधां ध्यायेत्तप्तहाटकरोचिषम् ॥ ७१ ॥

सिंहासनस्थामाकल्पैरनेकैर्भूषितां सदा ।
गृहीतदाडिमीनालवामहस्तां तथेतरे ॥ ७२ ॥

हस्ते दधानां सुभगं चिन्तारत्नं चतुर्मुख ।
पूर्णं नानाविधैरत्नैः कुम्भं [2]चोर्ध्वमुखं स्थितम् ॥ ७३ ॥

दक्षिणे चरणाङ्गुष्ठे पश्चिमामरभूरुहम् ।
पार्श्वयोरुभयोश्चापि वालव्यजनपाणिभिः ॥ ७४ ॥

अन्याभिश्शुक्लताम्बूल धारिणीभिश्च सेविताम् ।
शङ्खपद्मनिधी चापि वमन्तौ विपुलं धनम् ॥ ७५ ॥

परस्परमुखप्रेक्षौ परिवारौ स्थितौ पुनः ।
अनुक्त परिवाराश्च ग्राह्याः श्रीमनुवर्त्मना ॥ ७६ ॥

समुद्रगायाः सरितः स्रोतसि प्राङ्मुखःस्थितः ।
स्तनदघ्ने जपेल्लक्षं मन्त्रसिद्धौ समाहितः ॥ ७७ ॥

वैशाखे मासि शुक्ले च पक्षे मासर्क्षपश्चिमे ।
व्रतं समापयेच्चक्रे पुजयेच्च महानिशि ॥ ७८ ॥

मल्लिकावकुलैश्चान्यैः सुगन्धैः कालजैश्शुभैः ।
गोघृतैश्च तिलैरन्यैर्यथाभिलषितैरलम् ॥ ७९ ॥

तर्पणं मन्त्रजापं च नित्यमेतत् समाचरेत् ।
एवमाचरतः सम्यङ्मन्त्रिणो यावदायुषम् ॥ ८० ॥

1. शीर्षं $M_1$ 2. चाधोमुखं $M_2$



वसति श्रीर्गृहे तस्य सप्तजन्मसु निश्चला ।
मनुं धरण्या वक्ष्यामि साधनं च यथातथम् ॥ ८१ ॥

छन्दसामादिमुध्दृत्य सूक्ष्मदृक् पुलई तथा ।
हृषीकेशं विसर्गान्तं मनुरेकाक्षरः स्मृतः ॥ ८२ ॥

गोपनं पद्मबिन्दुश्च ऊर्ध्वलोकेशमन्वतः ।
वीरसेनं कलान्तं च सङ्कर्षणसमाह्वयम् ॥ ८३ ॥

सबिन्दुं गतिसन्तानं[1] कल्पयेद्हृदयादिषु ।
पैठकोऽस्य मुनिश्छन्दो दैवं गायत्रमीरितम् ॥ ८४ ॥

देवता धरणीदेवी जपेल्लक्षमतन्द्रितः ।
मनुर्धरण्याः सप्तार्णः कथ्यते कमलासन ॥ ८५ ॥

धनदं पावकं चादिं सुमुखं गोधनं ह्वयम् ।
नरयन्तमेवं [2]सप्तार्णो धरण्याः[3] सम्प्रदर्शितः ॥ ८६ ॥

मनुश्चतुस्त्रिंशद्वर्णः कथ्यते कमलोद्भव ।
आदाय चादौ सप्तार्णान् कुम्भमादिमवामनुः ॥ ८७ ॥

शशाङ्कमादिं भुवनं सुभगं दत्तसंज्ञितम् ।
सुभद्रमूर्ध्वलोकेशं विजयं विष्णुशीर्षकम् ॥ ८८ ॥

मोहनाशं तथाकारं वैराजं चाग्निविक्रमम् ।
भल्लायुधं च माहेन्द्रं हृषीकेशं विदर्भितम् ॥ ८९ ॥

सानुस्वारं च कमलं पावकं सगुहालयम् ।
नासिक्यं त्रिदशाहारं त्रिविक्रमसमाह्वयम् ॥ ९० ॥

1. अङ्गसन्तानं M. 2. पद्मार्णो $M_1$ 3. मनुः $M_2$

क्रोधरूपं च सुमुखं सोदकं कलशं ततः ।
प्रणवादिं च माहेन्द्रं[1] पुलहं च समुद्धरेत् ॥ ९१ ॥

पावकं पाटलं ब्रह्म माहेन्द्रञ्च गुह्यालयम् ।
प्रभञ्जनं पूर्णचन्द्रमौषधं यष्टिसंयुतम् ॥ ९२ ॥

सुभद्रं देवदत्तं च भास्करं यष्टि मस्तकम् ।
स्वाहायां विरतिर्मन्त्रः कथितः कमलासन ॥ ९३ ॥

पूर्वोक्तं बीजमङ्गानि ऋषिश्छन्दश्चदेवता ।
सारस्वतं मनुवरं प्रवक्ष्यामि यथातथम् ॥ ९४ ॥

निगमादिं श्वेतरश्मिं मनुमर्घेन्दुशेखरम् ।
[2]इत्युद्धरेत् स्वयं गां च द्रष्टा काश्यपनन्दनः ॥ ९५ ॥

छन्दश्च देवी गायत्रं देवता भारती स्वयम् ।
लक्षमेकं नियमवान् जपेन्मन्त्रमतन्द्रितः ॥ ९६ ॥

अतुला वाग्विभूतिः स्याल्लभते ज्ञानमुत्तमम् ।
[3]सकृद्ग्रहणमात्रेण ग्रहणं दृढमश्नुते ॥ ९७ ॥

स्मृतिप्रमोषो नैवास्य सभायां [4]न पराभवः ।
अन्यं सारस्वतं मन्त्रमधुना कथयामिते ॥ ९८ ॥

मुखमस्य ब्रह्मकोशं गोधनं चन्द्रशेखरम् ।
कमलं पुलहं मायामनुस्वारपरिष्कृताम् ॥ ९९ ॥

यष्टिं[5] यष्ट्याविसर्गान्तः पूर्वोक्तं मन्त्रमन्वतः ।
त्र्यक्षरस्यचोद्धारः कथितः कमलासन ॥ १०० ॥

---

1. सुभगंपुलहान्तं A, $M_2$ 2. इत्युद्धरेत्स्वयं चाङ्गम् $M_1$ 3. सकृच्छ्रवण $M_2$ 4. स्वपराजितः $M_1$ 5. यष्टिवर्जं विसर्गान्तं $M_2$



द्रष्टा वसिष्ठो मन्त्रस्य विराट्छन्दः सरस्वती ।
देवता जपसंख्या च लक्षत्रयमुदाहृतम् ॥ १०१ ॥

परावरज्ञो वाग्मी च सप्तकृत्वोऽभिमन्त्रितम् ।
जलं पिबेद्ध्रुवं तस्य कल्याणी वाग्भविष्यति ॥ १०२ ॥

षडक्षरगणो मन्त्रः कथ्यते कमलासन ।
तारकं वरुणं चादिं नासिक्यं ज्वलनाह्वयम् ॥ १०३ ॥

मधुसूदनमन्वक् च हुम्फडन्तं नमस्कृतिः ।
ऋषिर्महेश्वरश्छन्दो विराट् सैव च देवता ॥ १०४ ॥

दशाक्षरं मन्त्रराजं वर्णोद्धारेण चोच्यते ।
व्यापी सुधारसश्चापि वैधरो विष्णुमस्तकः ॥ १०५ ॥

वर्णान्त एव चत्वारः समनन्तरमीरिताः ।
ईरयित्वा तथा कुम्भं मधुसुदनमन्वतः ॥ १०६ ॥

पश्चान्तकः पाशपाणिं मधुसूदन पश्चिमम् ।
वैधरं रामसहितं विघ्नेशं बन्धुमस्तकम् ॥ १०७ ॥

हुतान्तवर्णानुध्दृत्य मनुरेष समीरितः ।
अङ्गानि रूपं मन्त्रस्य बीजमेवं विभाजितम् ॥ १०८ ॥

चन्द्रमण्डलमध्यस्थां तुषारनिचयप्रभाम् ।
वमन्तीममृतं वक्राज्जिह्वामध्यगतां स्मरेत् ॥ १०९ ॥

ध्यायतो मन्त्रिणस्तस्य वाक्सिद्धिरतुला भवेत् ।
निगमादिं च नत्यन्तं सुभद्रं गदिनं तथा ॥ ११० ॥

कुम्भमादिं च विजयं गोविन्दं मधुकेतनम् ।
विजयं माधवयुतं[1] ठठान्तं मनुमुद्धरेत् ॥ १११ ॥

---

1. गोधरं वायुं $M_1$

ज्वलनं चादिमर्घेन्दुं बीजमेवं समुद्धरेत् ।
द्रष्टास्य देवलश्छन्दो विराट् देवी रतिस्तथा ॥ ११२ ॥

दशलक्षं जपेन्मन्त्रं ततःसिध्यति मन्त्रिणः ।
वश्याकर्षणविद्वेषमुखा च फलसन्ततिः ॥ ११३ ॥

दूरादागमनं चापि प्रोषितस्याचिराद्भवेत् ।
सप्तवर्णान् समुच्चार्य पूर्वोक्तान् समनन्तरम् ॥ ११४ ॥

पवित्रं पीठमन्वक्त्रं च पञ्चबिन्दुमनन्तरम् ।
वैराजं [1]गोधनं वायुं ठठान्तं मनुमुद्धरेत् ॥ ११५ ॥

एकचक्षुश्चपीठं च हृषीकेशं सबिन्दुकम् ।
बीजमुक्तं मनोरस्य मुनिराङ्गिरसः स्मृतः ॥ ११६ ॥

छन्दश्च देवीगायत्रं देवता प्रीतिरुच्यते ।
साधयित्वा यथापूर्वं धर्मादिफलभाग्भवेत् ॥ ११७ ॥

सप्तार्णाः पूर्ववद्ग्राह्याः करालं वामनं ततः ।
ए[क]दृग् गोधनं चित्रभानुं च मधुसूदनम् । ११८ ॥

यष्टिं करालमग्निं च ध्रुवं चाग्नेश्च योषितम् ।
तदेव बीजं द्रष्टा च मनुः कीर्तिश्च देवता ॥ ११९ ॥

छन्दश्च देवीगायत्रं पूर्ववत् सिद्धिसाधने ।
वर्णानादाय सप्तादौ परिशिष्टान् समुद्धरेत् ॥ १२० ॥

श्रीवत्सं गोपनं भद्रपाणिं च विजयं तथा ।
स्पर्शनं वीरसेनं च शुभदं दहनं मनुम् ॥ १२१ ॥

1. गोपनयुतं $M_2$



यष्टिं च भास्करोपेतं पावकं बिन्दुपञ्चकम् ।
सयष्टिं बीजसहितं श्रियः स्वाहापदावधि ॥ १२२ ॥

छन्दो विराड् गौतमऋषि र्देवता शान्तिरुच्यते ।
मनुना साधयेद्ब्रह्मन् पादुकादि फलं महत् ॥ १२३ ॥

सप्तवर्णान् यथापूर्वं नृहरिं पावकं तथा ।
महामायामनुस्वारं विजयं प्रणवादिकम् ॥ १२४ ॥

उदयं क्रोधरूपं च भूधरं गोपनं तथा ।
ठठान्तमेवमुध्दृत्य मनुर्ज्ञेयो विचक्षणैः ॥ १२५ ॥

द्रष्टा व्यासो विराट् छन्दो देवता तुष्टिरीरिता[1] ।
लक्षत्रयजपेनैव तुष्टिश्च महती भवेत् ॥ १२६ ॥

सप्तार्णाः पूर्ववद् ग्राह्याः शिष्टार्णस्योध्दृतिः क्रमात् ।
भास्करं पावकं पञ्चबिन्दुं यष्टिसमन्वितम् ॥ १२७ ॥

पवित्रं भुवनं क्रोधरूपं भूधरमन्वतः ।
गोविन्दमाग्नेयीमन्वमुध्दृत्य मनुरीरितः ॥ १२८ ॥

[2]द्रष्टेरितस्तथेशाना पुष्टिश्छन्दो विराडभूत् ।
अष्टलक्षं जपेन्मन्त्रं पुष्टिकामस्समाहितः ॥ १२९ ॥

भुक्त्वा भोगांश्च [3]विपुलान् रसायनपुरोगमान् ।
अतलादिषु लोकेषु मन्त्री चरति देववत् ॥ १३० ॥

योगासनाङ्गान्याधारशक्त्यादीनि चतुर्मुख ।
यानि तेषां कल्पनेषु वर्णोद्धारपुरस्सरम् ॥ १३१ ॥

1. रुच्यते T, $P_2$ 2. हारीतो मुनिरीशाना $M_1$ 3. विविधान् $M_1$

मन्त्रान्वक्ष्याम्यानुपूर्व्या यथावदवधारय ।
ब्रह्मकोशं मुखं विद्यात् पवित्रमृतधाम च ॥ १३२ ॥

हृषीकेशं बिन्दुपरं प्रतर्दनमतः[1] परम् ।
पद्मनाभं च नासिक्यं गोपनं सुभगं पुनः ॥ १३३ ॥

आदि देवं हुतवहं श्रीवत्सं कमलाह्वयम् ।
वैराजं [2]वीरसेनं च नतिमेवं समुद्धरेत् ॥ १३४ ॥

आधारशक्तिमन्त्रोऽयं कथितः कमलासन ।
चतुर्मुखं चतुर्बाहुं शुद्धस्फटिकवर्चसम् ॥ १३५ ॥

किरीटहारकेयूर प्रमुखाकल्पभूषितम् ।
श्रीवत्साङ्कं शङ्खचक्रगदापद्मायुधैर्युतम् ॥ १३६ ॥

तेजोमण्डलमध्यस्थं ध्यायेदाधाररूपिणम् ।
ब्रह्मकोशं दिनकरं भुवनं पावकाह्वयम् ॥ १३७ ॥

गुहालयं ध्रुवं भूयः कमलं सगुहालयम् ।
पावकं मन्तरं पद्मकारं विपुलं तथा ॥ १३८ ॥

गोपनं च गदध्वंसं विनायकमनन्तरम् ।
[3]प्रभञ्जनं माधवं च नत्यन्तं मनुमुद्धरेत् ॥ १३९ ॥

एकवक्त्रं चतुर्बाहुं जपापुष्पसमद्युतिम् ।
शङ्खचक्रधरं क्रुद्धं [4]पद्मकौमोदकीधरम् ॥ १४० ॥

वह्निमण्डलमध्यस्थं [5]ज्वलनापीतविग्रहम् ।
सकलाभरणोपेतं ध्यायेत्कूर्ममनन्तरम् ॥ १४१ ॥

1. गुहालयम् $M_1$ 2. गोधनं वायुं $M_1$ 3. चतुर्गतिं माधवं च सत्यन्तः कूर्ममन्त्रराट् A. $M_2$ 4. शक्तिंकौमोदकीधरम् $M_2$ 5. ज्वाला-वितत विग्रहम् A.



उद्गीथं भानुमाकारं यष्टिमादिं विनायकम् ।
द्विरदं विजयाकारं श्वसनं प्रथमं स्वरम् ॥ १४२ ॥

नतिं चोद्धृत्य मन्त्रोऽयमनन्तस्य प्रदर्शितः ।
स्फटिकाद्रिप्रतीकाशं चतुर्बाहुं किरीटिनम् ॥ १४३ ॥

पूर्णचन्द्राननं सौम्यं सितपुष्पैर्विराजितम् ।
लाङ्गलं मुसलं मुख्यकरयोर्दधतं शिवम् ॥ १४४ ॥

जघन्यकरयोश्शङ्खचक्रद्वन्द्वं यथायथम् ।
नीलाम्बरधरं दंष्ट्राकरालवदनैर्युतम् ॥ १४५ ॥

[1]प्रशान्तवपुषायुक्तं सहस्रफणमुन्नतम् ।
फणामणिसहस्रांशुनीराजनविराजितम् ॥ १४६ ॥

अनन्तवक्त्रकुहरैरुद्वमन्तमुदर्चिषम् ।
मण्डलीकृतनागेन्द्र [2]भोगवेष्टनविग्रहम् ॥ १४७ ॥

ध्यायेदनन्तमुभयोः पार्श्वयोर्नागयोषितः ।
देव्यस्तस्य सुखासीनाः फणामण्डलमण्डिताः ॥ १४८ ॥

ध्यात्वा भुवो मनुः पश्चाद्वर्णोद्धारेण वक्ष्यते ।
तारं सुभगनामानमर्चिष्मन्तं चतुर्मुख ॥ १४९ ॥

सुमुखं [3]गोधनं वायुं नत्यन्तमिति कल्पयेत् ।
तस्योपरि फणीन्द्रस्य तपनीयनिभां शुभाम् ॥ १५० ॥

चतुरश्रां महापीठीं कल्पयेन्मधुविद्विषः ।
धर्मादीनां चतुर्णांत्वधर्मादीनां च तावताम् ॥ १५१ ॥

1. पृष्टतोनागवपुषम् M. 2. भोगिवेष्टनविष्टरम् $M_2$ 3. गोप-नाह्वानं $M_2$.

पादानां कल्पनामन्त्राः वक्ष्यन्ते कमलासन ।
आद्यर्णान् प्रणवादींश्च सानुस्वारान्यथायथम् ॥ १५२ ॥

चतुर्थ्यन्तानि नामानि प्रोच्यन्ते नतिमीरयेत् ।
मध्ये सदाशिवपदं पादत्वेन प्रकल्पयेत् ॥ १४३ ॥

तच्चतुर्थ्यन्तमादौ च भास्करं सगुहालयम् ।
नत्यन्तं चैव पादानां नवानां कल्पयेन्मनून् ॥ १५४ ॥

ऋगादयश्चतुर्वेदास्तेषां तु मनवः पुनः ।
सानुस्वारांस्तदाद्यर्णान् प्रोच्यादौ कमलासन ॥ १५५ ॥

चतुर्थ्यन्तानि नामानि ऋगादीनां नतिः पुनः ।
मनून् प्रकल्पयेदेवं भौतिकादिरहङ्कृतिः ॥ १५६ ॥

तिस्रः प्रकल्पयेत्पश्चात्तासां मन्त्रान् ब्रवीमि ते ।
प्रणवादीन् फुल्लनयनानचामादिं सदण्डकम् ॥ १५७ ॥

भौतिकादिरहङ्कारश्चतुर्थ्यन्तो नतिस्तथा ।
पश्चिमं मारुतं चोर्ध्वलोकेशं बिन्दुमस्तकम् ॥ १५८ ॥

पदं च तैजसं शिष्टं पूर्ववन्मनुरीरितः ।
कुम्भमौर्वं सनासिक्यं वैकारिपदमन्व[1]तः ॥ १५९ ॥

शिष्टं यथापुरं सर्वं मनुरन्यः समीरितः ।
सत्त्वं रजस्तमश्चेति गुणान् पश्चात्प्रकल्पयेत् ॥ १६० ॥

सानुस्वारांस्तदाद्यर्णांश्चतुर्थ्यन्तांस्तदाह्वयान्
मनून् प्रकल्पयेदेवं मह्याद्यैस्तत्प्रकल्पनम् ॥ १६१ ॥

1. मन्ततः $M_1$.



आत्मशब्दं चतुर्थ्यन्तं मह्यादि पदपूर्वकम् ।
हुम्फडन्तं च नत्यन्तं प्रयुञ्जीत मनुं पुनः ॥ १६२ ॥

प्रणवं मन्दरं यष्टिं मुसलं पञ्चबिन्दुकम् ।
अमृतं गोपनयुतं विजयं माधवीं तथा[1] ॥ १६३ ॥

भद्रहस्तं मृगेशं च नतिमुध्दृत्यमन्त्रवित् ।
मन्त्रेणास्तरणाध्यासो वह्न्यादिमण्डलत्रयम् ॥ १६४ ॥

तस्योपरिष्टादध्यासान्मन्त्रान् सर्वान् यथाक्रमम् ।
पावकं शशिनं सूर्यं त्रयमा[2]कारबिन्दुकम् ॥ १६५ ॥

मनुमेवं समुध्दृत्य पद्मं चोपरिकल्पयेत् ।
प्रणवं पश्चिमं यष्टिं पवित्रं विजयं तथा ॥ १६६ ॥

दक्षं च गोपनपरं[3] श्वसनं च विनायकम् ।
विष्णुं च मन्दरं स्वर्गमुध्दृत्याजमनुः स्मृतः ॥ १६७ ॥

श्रीवत्सादि द्वादशानां शक्तीनां तत्समाह्वया ।
चतुर्थ्यन्ताः [4]सनासिक्याः तदाद्यर्णपुरस्कृताः ॥ १६८ ॥

मन्त्रो भद्रासनस्यैष कथितः कल्पनाक्रमः ।
ब्रह्मादयस्त्रयः पश्चात्सनकादित्रयं पुनः ॥ १६९ ।

विनायकश्च दुर्गा च मन्त्रिणो गुरुरन्वतः ।
प्रणवाद्याश्चतुर्थ्यन्ता नत्यन्ताश्च तदाह्वयाः ॥ १७० ॥

[5]तानर्चयेच्च ब्रह्मादीन् परिचर्यामुखैर्हरे ।
अष्टौ व्याप्त्यादिकाः शक्तीः प्रथमावरणे यजेत् । १७१ ॥

1. ततः $M_1$ 2. साकार $M_1$ 3. युतं $M_2$ 4. सनासिक्यः तावदन्य $M_2$ 5. तैर $M_1$

पूर्ववत्तत्समाख्याभिर्मन्त्रैः पञ्चायुधान्यपि ।
[1]दिव्यानि दिक्पतीन् सर्वानिन्द्रादीन् विहगाधिपम् ॥ १७२ ॥

सेनेशं च चतुर्थ्यन्तैर्नत्यन्तैश्च स्वनामभिः ।
पूर्ववत् पूजयेद्ब्रह्मन् द्वितीया[2]वरणे ततः ॥ १७३ ॥

चण्डप्रचण्डावन्तस्थौ द्वाःस्थौ च मनुना यजेत् ।
निगमादिं खङ्गधरमृतमोतं सयष्टिकम् ॥ १७४ ॥

वक्रतुण्डं प्रचण्डं च पुण्डरीकाक्षगोपनौ ।
प्रभञ्जनं चाप्रमेयं नत्यन्तो मनुरीरितः ॥ १७५ ॥

प्रथमं छन्दसामादिं पश्चिमं ऋतधामकम् ।
सदण्डं पापहननं दहनं वक्रतुण्डकम् ॥ १७६ ॥

प्रचण्डंपुण्डरीकाक्षं चतुर्थ्यन्तं तथा नतिः ।
चण्डप्रचण्डयोर्मन्त्रः समुध्दृत्यार्णमीरितः ॥ १७७ ॥

उदुम्बरस्य नत्यन्तं शान्तिमा[3]दिविभक्तिकम् ।
उदीरयेदधिष्ठात्री तस्य शान्तिश्च देवता ॥ १७८ ॥

सरस्वती दक्षिणस्यां रतिश्चोत्तर दारुणि ।
श्रीः पश्चिमादधस्तस्याः शान्तिर्भवति देवता ॥ १७९ ॥

[4]चतुर्थ्यन्तश्च तन्नाम मन्त्रश्चोक्तः चतुर्मुख ।
कवाटे दक्षिणे विश्वनेत्रस्याद्देवता तथा ॥ १८० ॥

उत्तरे विश्ववक्त्रश्च देवता वेत्र दारुषु ।
वसन्ति वेदशास्त्राणि नाराचेषु तथामराः ॥ १८१ ॥

1. द्वितीयावरणे चाग्निमिन्द्रादीन् विहगाधिपम् $M_1$ 2. तृतीयावरणे $M_1$
3. ताहग्विभक्तिकम् $M_1$ 4. चतुर्थ्यन्तो नाममन्त्रः प्रोक्तश्चैवचतुर्मुख । $M_1$



ऋषयः कीलदेशेषु मृतेशः पट्टिकासुवि ।
विश्वभावनवासः स्यात्कन्दपट्टद्वयं तथा ॥ १८२ ॥

नाम तेषां चतुर्थ्यन्तं मनुर्वास्तुपतेस्तथा ।
क्षेत्रेशस्य मनुर्ब्रह्मन् छन्दसामादिमुद्धरेत् ॥ १८३ ॥

नृसिंहमुदयं दक्षमृतधाम सदण्डकम् ।
चतुर्थ्यन्तं नमोऽन्तश्च तार्क्ष्यमग्रेहरेः स्थितम् ॥ १८४ ।

द्वारपार्श्वे शङ्खचक्रद्वयं तत्संज्ञयार्चयेत् ।
वह्निधामार्चने मन्त्रं छन्दसामादिमुद्धरेत् ॥ १८५ ॥

वरुणं बन्धुशिरसं क्रोधरूपं वनस्रजम् ।
वरुणं देवदत्तं च पश्चिमं वह्निगोपनौ ॥ १८६ ॥

शशाङ्क[1]मादिदेवान्तं वैधरं दहनं ततः ।
हृषीकेशं पश्चिमं च रामं सुमुखमन्वतः ॥ १८७ ॥

माधवं हुम्फडन्तं च स्वाहान्तावधिको मनुः ।
दिङ्मूर्तयश्चानुपूर्व्या कथ्यन्ते कमलासन ॥ १८८ ॥

इन्द्रेशानौ नृसिंहश्च विरिञ्चिश्च क्रमात् भवेत्[2] ।
दिङ्मूर्तयोऽथवा शक्तिधरः पशुपतिस्तथा ॥ १८९ ॥

श्रीधरो धनदश्चेति यद्वा क्रोडाकृतिर्हरिः ।
नृसिंहः श्रीधरश्चेति हयशीर्षाकृतिस्तथा ॥ १९० ॥

अपि वा स्यात् चतुर्वक्त्र नरनारायणावुभौ ।
हरिः कृष्णश्च कथितो यद्वा [3]सत्यादयः क्रमात् ॥ १९१ ॥

1. आदिदेवं च $M_2$ 2. स्मृतः $M_1$ 3. मत्स्यादयो $M_2$

वासुदेवादयो व्यूहा यद्वा दिङ्मूर्तयः क्रमात् ।
क्रमाच्च तोरणायान्ते पूर्वपश्चिमधामयोः ॥ १९२ ॥

चतुरश्रायते धाम्नि पूर्वपश्चिमनासयोः ।
पूर्णश्च पुष्करश्च द्वावधिष्ठाने पुनः क्रमात् ॥ १९३ ॥

आग्नेये हस्तिवदनो याम्ये पशुपतिस्तथा ।
वारुणे दक्षिणामूर्तिः कौबेरे विश्वरूपधृक् ॥ १९४ ॥

शाङ्करे च चतुर्वक्त्र तस्मिन् भगवती तथा ।
अन्तर्मण्डलसंबन्धि गोपुरोभयपार्श्वयोः ॥ १९५ ॥

चन्द्रादित्यौ तथोर्व्याग्निन्द्रदिक्षु[1] विदिक्षु च ।
मन्मथश्च विधाता च [2]विघ्नेशः षण्मुखस्तथा ॥ १९६ ॥

दुर्गावनदरुद्राश्च क्षेत्रेशस्तदनन्तरम् ।
सोमेशानान्तरे चैव विष्वक्सेनः प्रतिष्ठितः ॥ १९७ ॥

दक्षिणोर्वीतले सप्तमातरो वीरभद्रकः ।
विघ्नेशः पार्श्वयोस्तासां[3] ज्येष्ठा निरृति भूतले ॥ १९८ ॥

इन्द्रादयः स्वासु दिक्षु द्वितीयावरणे पुनः ।
भगवत्प्रमुखे तार्क्ष्यो द्वितीयावरणे ततः ॥ १९९ ॥

[4]तदीयगोपुरद्वारपार्श्वयोः पुरुषाच्युतौ ।
खड्गिकाधरित्रीषु [5]वह्न्यादीनां दिशि क्रमात ॥ २०० ॥

हयशीर्षः कर्षणश्च क्रोडाकृतिरनन्तरम् ।
प्रद्युम्नोऽनन्त नामानावनिरुद्धो नृकेसरी ॥ २०१ ॥

---

1. अग्न्यादिषु च दिक्षु च $M_2$    2. विश्वेशः $P^1$, $P_2$    3. स्तेषां T, $P^1$, $P_2$.    4. द्वितीय A, $M_2$    5. खड्गं कौमोदकींधनुः $M_2$.



चक्रं च मुसलं शङ्खं खड्गं कौमोदकीं धनुः ।
वज्रं पद्ममिति प्रोक्तं प्रागादिषु तृतीयके ॥ २०२ ॥

गोपुरो भयपार्श्वस्थाः द्वादशाः शीतरश्मयः ।
यमाग्निमध्ये वसवः पितरो यमराक्षसोः ॥ २०३ ॥

विश्वेदेवाश्च मध्यस्था निर्ऋतेर्वरुणस्य च ।
मरुतःपाशहस्तस्य श्वसनस्य च मध्यमाः ॥ २०४ ॥

पाशीमारुतयोर्मध्ये मुनयःसप्त च स्थिताः ।
कुबेरेशानयोर्मध्ये रूद्राश्चैकादशास्थिताः[1] ॥ २०५ ॥

क्षेत्रपालश्च तत्रैव प्राच्यादौ कुमुदादयः ।
[2]मर्यादाह्वयसालस्य द्वारि पूर्णश्च पुष्करः ॥ २०६ ॥

उर्वीतले समाराध्याः प्राङ्गणे क्लृप्तपीठके ।
[3]स्थाप्याश्चैवोत्तमगणाः प्राच्यादिष्वष्टसु क्रमात् ॥ २०७ ॥

तथोपेन्द्रादयः स्थाप्या महत्यावरणे तथा ।
महीतले मध्यगणा विश्वेशाद्या दिशि क्रमात् ॥ २०८ ॥

[4]जयादयो गोपुराणां बहिर्भूमौ व्यवस्थिताः ।
बलिपीठेषु सर्वत्र प्रथमावरणादिषु ॥ २०९ ॥

आद्याश्च [5]कर्मजाश्चैव ये भूताः प्राग्दिशिस्थिताः ।
प्रसन्नाः परितुष्टास्ते गृह्णन्तु बलिकाङ्क्षिणः ॥ २१० ॥

भूमौ व्योम्नि तथा वृक्षपर्वतादिषु विष्ठिताः ।
विनायकः क्षेत्रपालाः शूराश्च कुमुदादयः ॥ २११ ॥

---

1. स्मृताः T,$P_1$,$P_2$    2. मध्यान्त हरिसालस्य $M_2$    3. स्थाप्या-देवोत्तमगणाः $M_1$    4. ऋगादयो $M_1$    5. कूर्मजाश्चैव $M_2$, A.

सर्वैः पारिषदैश्चान्यैस्साधं गृह्णन्तु ते बलिम् ।
चण्डादयोऽथ द्वारस्थाश्चतुर्थ्यन्तैस्स्वनामभिः ॥ २११ ॥

प्रणवाद्यैश्च नत्यन्तै र्देवीपरिजनान्विताः ।
सवाहनास्ते सम्पूज्याः स्वे स्वे देशे चतुर्मुख ॥ २१३ ॥

बलिपीठेषु सर्वेषां बलिग्रहणकाङ्क्षिणाम् ।
तत्तन्नाम समुच्चार्य बलिर्देया विचक्षणैः ॥ २१४ ॥

धामेशानं विनातेन बलिदानेन योऽर्चयेत्[1] ।
हरन्ति राष्ट्रं राजानं धामचात्मानमेव च ॥ २१५ ॥

परिवारानन्भ्यर्च्य तथैवाग्नेसमिन्धनम् ।
[2]भोगैरकृत्वा देवस्य पूजा स्यान्निष्प्रयोजना ॥ २१६ ॥

तस्माद्यथोक्तमार्गेण पूजनं स्यानवृद्धिदम् ।
वर्धनं राजराष्ट्राणां पूजनं वृद्धिकाङ्क्षिणाम् ॥ २१७ ॥

दृश्यादृश्येन रूपेण स्थितानां बलिकाङ्क्षिणाम् ।
भूतानां भूतिकामेन देयोऽवश्यं बलिस्सदा ॥ २१८ ॥

इति श्री पञ्चरात्रे महोपनिषदि पाद्मतन्त्रे चर्यापादे
श्रियादि परिवारमन्त्रवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥

—: * :—

1. योऽर्चति $P_1$,$P_2$ 2. होमै $M_2$



## त्रिंशोऽध्यायः ।

### तिथिदेवतामन्त्रोद्धारः ।

श्री भगवान्ः—

तिथियागं[1] चतुर्वक्त्र ब्रवीमि सुखसाधनम् ।
काम्यस्य कर्मणः कालः शुक्लपक्षस्तथा तिथिः ॥ १ ॥

जपहोमार्चनैः सम्यक् कालेष्वाराधयेत् सुधीः ।
अग्निर्ब्रह्मा धनेशानौ विघ्नेशः श्रीःषडाननः ॥ २ ॥

भानुर्वृषध्वजो दुर्गा यमो बलनिषूदनः ।
विष्णुः कामोऽश्विनौ चन्द्र इत्युक्तास्तिथिदेवताः ॥ ३ ॥

प्रणवं नवबिन्दुं च वरुणं श्रीधरं ततः ।
गदध्वंसं भद्रहस्तं पावनं माधवं ततः ॥ ४ ॥

ठान्तमुध्दृत्य मनुः कथितो जातवेदसः ।
अग्निमाद्यमनुस्वारं बीजं तेनाङ्गपद्धतिः ॥ ५ ॥

छन्दो विराड् देवलश्च द्रष्टाग्निरधिदेवता ।
चतुर्थ्यन्तं स्वाभिधानं नत्यन्तमपरो मनुः ॥ ६ ॥

ऋषिच्छन्दो देवतापि मनोरस्यापि पूर्ववत् ।
प्रत्यक्षरं [2]जपः साधनं स्थापनं मन्त्रयोर्द्वयोः ॥ ७ ॥

काम्यस्य लाभस्सर्वस्य फलमत्यन्तदुर्लभम् ।
निगमादिं कालनेमिमृतधामविदर्भितम् ॥ ८ ॥

मार्ताण्ड[3]मन्दरयुतं प्रचण्डं माधवं नतिम् ।
इत्युद्धरेद्ब्रह्मनुमुद्धारोऽन्यस्य कथ्यते ॥ ९ ॥

1. योगं $M_1$ 2. लक्षजापः $M_1$ 3. मण्डल $M_1$

चतुर्थ्यन्तं ब्रह्मपदमाग्नेयी निष्ठितं मनुः ।
वैराजमक्षप्रथमं विजयं रोहिणीपतिम् ॥ १० ॥

अकारमेकनेत्रं च बीजं प्रणवसंयुतम् ।
एतदेवाङ्गसन्तानः स्वरश्छन्दश्च लोहितः ॥ ११ ॥

मुनिर्ब्रह्मा च देवश्च यष्टव्यं पङ्कजोदरे ।
प्रणवं सूक्ष्मदृष्टिं च भद्रपाणिं सबिन्दुकम् ॥ १२ ॥

[1]उद्धृत्येकाक्षरो मन्त्रः कुबेरस्य समीरितः ।
उष्णिक् छन्दो मुनिर्वह्निर्धनेशानश्च देवता ॥ १३ ॥

आरम्भं नतिमन्वक् च [2]सुभगं विघ्ननायकम् ।
पवित्रं विजयं पश्चाद्ध्वंसनं माधवं तथा ॥ १४ ॥

कमलं चोदयं प्रोच्य जृम्भलं मृगवल्लभम् ।
पावकं गोपनयुतं सदागतिमनन्तरम् ॥ १५ ॥

कुम्भं शशाङ्कं [3]भुवनं हेरम्बं रामसंयुतम् ।
वक्रतुण्डं जगत्प्राणं मन्दरं पश्चिमाननम् ॥ १६ ॥

अग्निमाद्यं मारुतं च प्रथमं प्रेतनायकम् ।
अचामादिमथाग्नेयीमुध्दृत्य मनुरीरितः ॥ १७ ॥

धनदस्य नभो द्रष्टा छन्दो गायत्रमीरितः ।
[4]दैवं धनाधिपो देवो बीजं पूर्ववदीरितम् ॥ १८ ॥

अङ्गुष्ठे माणिभद्राख्यं तर्जन्यां पूर्णभद्रकम् ।
[5]कलिमालिं मध्यमायां विकुण्डलमनामिकाम् ॥ १९ ॥

1. पुमित्येकाक्षरो $M_1$ 2. सुभद्रं $M_1$ 3. पवनं हेरम्भं कामसंज्ञितम् $M_2$
4. एवं $M_1$ 5. कलिमादिं मध्यमया विजृम्भलमनामिका $M_2$



मूले कनिष्ठिकायां च मध्ये च मणिबन्धयोः ।
मखेन्द्रं पाणितलयोरङ्गन्यासे धनाधिपम् ॥ २० ॥

स्नात्वा जृम्भलमन्त्रेण प्रक्षिपेदुदकाञ्जलिम् ।
अम्भोजकर्णिकामध्ये महाकायं महोदरम् ॥ २१ ॥

द्विभुजं पीतवसनं चिन्तारत्नं करे स्थितम् ।
धारयन्तं मनः कान्तं मन्त्रिभ्योभीप्सितं वसु ॥ २२ ॥

यक्षयक्षीपरिजनं ध्यायन्नर्घ्यादिभिर्यजेत् ।
ऋद्धिं गुप्तिं च तत्पार्श्वे चतुर्थ्यन्तं स्वसंज्ञया ॥ २३ ॥

अर्घ्याद्यैरर्चयित्वा तु ततो जृम्भलमञ्जज ।
कलिमलिं मणिभद्रं [1]चरेन्द्रं पूर्णभद्रकम् ॥ २४ ॥

मुखेन्द्रं शिखिपूर्णञ्च कुण्डलं नलेकूबरम् ।
अम्भोजकर्णिकामध्ये दलेष्विन्द्रादिषु क्रमात् ॥ २५ ॥

अर्चयेत्पुरतश्शङ्खनिधिं पद्मनिधिं तथा ।
[2]शबलां पुरतो न्यस्येत्पृष्ठतः कल्पकद्रुमम् ॥ २६ ॥

जपहोमौ तर्पणादि फलं मूलमनोर्यथा ।
वक्ष्यामि जृम्भलमनुमर्णोद्धारेण सम्प्रति ॥ २७ ॥

व्योमादिं सुभगं भद्रहस्तं वैधरमक्षरम् ।
आदिदेवं मारुतं च धनदं भद्रबाहुकम् ॥ २८ ॥

पवित्रं विजयं चैव मारुतं माधवं तथा ।
[3]जम्नहन्तृ तथाम्नायं माधवं सूक्ष्मदर्शनम् ॥ २९ ॥

1. वरेन्द्रं A 2. शम्बरम् $M_2$; जबलां T 3. जन्महन्ता ऋतं चापि माधवीं $M_1$

विष्कम्भमादिदेवं च स्पर्शनं स्वाहया युतम् ।
बीजमाद्यक्षरं भर्गो द्रष्टा छन्दो विराण्मनोः ॥ ३० ॥

देवता जृम्भलः कार्यः फलं सर्वं प्रयच्छति ।
विघ्नेशमन्त्रमुध्दृत्य वर्णान्वक्ष्याम्यनुक्रमात् ॥ ३१ ॥

उद्गीथं च तृतीयं च स्पर्शेषु [1]पुलहं मनुम् ।
[2]दण्ड इत्युद्धृतो मन्त्रो गणिकाः षड् विराट् तथा ॥ ३२ ॥

देवताविघ्नराजश्च जपो लक्षत्रयं स्मृतम् ।
भूतं भव्यं भविष्यच्च स्वप्ने पश्यति मन्त्रवित् ॥ ३३ ॥

आरब्धं कर्म निर्विघ्नं फलं दुग्धे यथेप्सितम् ।
तृतीयादिं च सुमुखमाद्यं पश्चिमसंज्ञितम् ॥ ३४ ॥

अर्चां मुखं च विजयं प्राणं माधवमन्वतः ।
नत्यन्तमादौ पूर्वोक्तं मनुं च मनुरीरितः ॥ ३५ ॥

अजो मुनिश्छन्द उष्णिग्देवता विघ्ननायकः ।
सप्तलक्षं जपेन्मन्त्रं सिद्धयः पूर्वमीरिताः ॥ ३६ ॥

एकाक्षरं नतिशिरो मनुरस्य[3] समीरितः ।
निगमादिं दिनकरज्वलनं पञ्चबिन्दुकम् ॥ ३७ ॥

सानुस्वारं गदध्वंसं पद्मनाभं च वामनम् ।
यष्टिं सहस्रकिरणं पावकं दण्डशेखरम् ॥ ३८ ॥

त्रियक्षरमनुर्ब्रह्मन् कथितः सर्वसाधनः ।
अब्जादि गदितं वर्णमाकारादिस्वरान्तकम् ॥ ३९ ॥

1. सुलभं मनुं $M_2$, पुलहं वसुम् A 2. दग्धमित्युध्दृतोमन्त्रो गणना T. $P_1$
3. रन्यः T



प्रयुञ्जीत मनुश्चान्यो वक्ष्यते कमलासन ।
उद्गीथमादिं कमलं पावकं पञ्चबिन्दुकम् ॥ ४० ॥

अर्धेन्दुसहितं भद्रमनलं बिन्दुवामनम् ।
सरोरुहं समाहेन्द्रं महामाया सयष्टिकम् ॥ ४१ ॥

बीजं च तत्स्वराद्यर्णं गदध्वंसं प्रचण्डकम् ।
पश्चिमाननवैराजौ मायां च वसुधारसम् ॥ ४२ ॥

आदिमग्निमकारं च षट्पदद्वयमीरयेत् ।
शशिनं वरुणं वह्निं ककुभं भद्रबाहुकम् ॥ ४३ ॥

मन्दरद्वयमेकारं वरुणं कमलामुखम् ।
अर्चां दक्षं गोपनं च विघ्नेशं श्वसनं तथा ॥ ४४ ॥

ठठान्तमित्थमुद्धारो बीजादि कथितं पुरा ।
ऐहिकामुष्मिकफलं सर्वमेतेन साधयेत् ॥ ४५ ॥

श्रियं पूर्वोक्तमार्गेण देवीमर्घ्यादिभिर्यजेत् ।
तत्कटाक्षनिपातेन लभते श्रियमुत्तमाम् ॥ ४६ ॥

तारं नतिं क्रोधरूपं प्रचण्डं दक्षमन्वतः ।
उदयं खर्वदेहं च गोपनं च प्रभञ्जनम् ॥ ४७ ॥

शशाङ्कं श्रीधरं ह्रस्वमृतधामसमाह्वयम् ।
दिनेशं माधवीमन्वक् प्रचण्डं मधुसूदनम् ॥ ४८ ॥

श्वसनं स्वाहया सार्धं मनुरेष समीरितः ।
जृम्भलं [1]चोर्ध्वलोकेशं पुलहं यष्टिमस्तकम् ॥ ४९ ॥

1. पुलहं चोर्ध्वलोकेशं

एतद्बीजसमुद्धारस्तदेवाङ्गमृषिः पुनः ।
वर्णात्मा कथितश्छन्दो गायत्रं देवता गुहः ॥ ५० ॥

दाडिमीकुसुमप्रख्यां तन्मन्त्रेण समर्चयेत् ।
एवं कृतवतो वंशे सुब्रह्मण्यादयो ग्रहाः ॥ ५१ ॥

न पीडयन्ति तद्वंश्यान् भवन्ति चिरजीविनः ।
निगमादिं चोषधीशमनुनासिक्यमुद्धरेत् ॥ ५२ ॥

एकाक्षरोऽयं कथितो मन्त्रः सर्वार्थसाधकः ।
हारीतो मन्त्रदृक् छन्दो विराट् सूर्यश्चदेवता ॥ ५३ ॥

ब्रह्मकोशं पद्मपाणिमृतं सुमुखसंज्ञितम् ।
राममिन्दुं हृषीकेशमग्निं वायुं [1]अर्चां मुखम् ॥ ५४ ॥

वैधरं बिन्दुवैराजं वायुं तारं समुद्धरेत् ।
इत्थमष्टाक्षरो मन्त्रो बीजमेकाक्षरं स्मृतम् ॥ ५५ ॥

ऋषिरत्रिश्च देवश्च पूषा चैवाधिदेवता ।
परं सप्ताक्षरं मन्त्रं मन्त्रैरुध्दृत्य वर्ण्यते ॥ ५६ ॥

सप्तार्णाः पूर्ववद्ग्राह्याः सुभद्रमधुसूदनौ ।
भद्रहस्तं च कलशं माधवं पूर्वमीरितम् ॥ ५७ ॥

बीजमभ्यन्तरीकृत्वा द्विरुक्तं ककुभं तथा ।
अप्रमेयं गन्धवहमाद्यमेतदनन्तरम् ॥ ५८ ॥

पादद्वितयमावाह्यमादिदेवमनन्तरम् ।
पावकं विक्रमयुतं वैधरं ऋतधाम च ॥ ५९ ॥

1. च गोपनम् $M_1$



मारुतं चापि[1] नासिक्यं विघ्नेशं गोपनाह्वयम् ।
कमलामादिपवनमाद्यं द्विःपदमीरयेत् ॥ ६० ॥

माधवीमादिसहितमक्षरं द्विरदं पठेत् ।
[2]पवित्रं गोपनयुतं पठेच्च स्वरसंयुतम् ॥ ६१ ॥

विघ्नेशं दहतिं धातुं लोहन्तं [3]द्विस्समुद्धरेत् ।
शान्तरोगं सुखपदं पूर्वलोहन्तमध्यमम् ॥ ६२ ॥

यमं चण्डं द्विरुच्चार्य त्रिरन्वक् प्रणवं पदम् ।
स्वनाम्ना प्रणवान्तेन मनुरेवं समुध्दृतः ॥ ६३ ॥

बीजमङ्गानि चोक्तानि सिन्धुद्वीपश्च दृष्टवान् ।
अतिच्छन्दः स्वयं छन्दः सूर्यश्चानेन कथ्यते ॥ ६४ ॥

पद्ममध्ये कर्णिकायामादित्यं दलभूमिषु ।
प्राच्यादिषु ग्रहानन्यान् [4]तदानीं बिम्बमर्चयेत् ॥ ६५ ॥

क्रमात् षडृतवः सर्वे ग्रहास्सानुग्रहास्तथा ।
आयुरारोग्यसौन्दर्यं समृद्धिसुखसम्पदः ॥ ६६ ॥

सप्तजन्मसु वंशेऽस्य भवन्ति निरवग्रहाः ।
प्रणवं नतिमत्वक् च शुभदं च त्रिविक्रमम् ॥ ६७ ॥

वरुणं गोपनं वायुमादिमुध्दृत्य मन्त्रवित् ।
मनुः पञ्चाक्षरः कार्यो बीजं सम्प्रति कथ्यते ॥ ६८ ॥

गोपतिं विष्णुसहितमनुस्वारं समुद्धरेत् ।
बीजमेतच्चतुर्वक्त्र षडङ्गानामुदाहरेत् ॥ ६९ ॥

1. चानुनासिक्ये $M_2$ 2. पश्चिमं $M_2$ 3. समुच्चरेत् $M_1$ 4. नद्यादीनि समर्चयेत् $M_2$; अर्घ्यादिभिः तथार्चयेत् A

उपमन्युःऋषिश्छन्दो देवं गायत्रमुच्यते ।
प्रतिपाद्यो महेशानो जपः स्याल्लक्षपञ्चकम् ॥ ७० ॥

अष्टाक्षरवदस्यापि फलं साधनमेव च ।
रक्ताम्बुजासनासीनमर्चयेत्तद्दलेषु च ॥ ७१ ॥

प्रागादिषु षडङ्गानि पार्वतीनन्दिकेश्वरौ ।
क्रमाद्विन्यस्य पुरतो वाहनं सम्यगर्चयेत् ॥ ७२ ॥

दिक्ष्वष्टसु सुरेन्द्रादीनष्टावर्घ्यादिनार्चयेत् ।
सृष्ट्यादि न्यसनं कृत्वा प्रथमं तदनन्तरम् ॥ ७३ ॥

अक्षरन्यसनं कुर्यात् स्थानेष्वेतेषु पद्मज ।
मूर्ध्नि चास्ये च हृदये गुह्ये पादतले तथा ॥ ७४ ॥

वर्णानां क्रमशो वर्णाः पञ्चानां कथ्यतेऽधुना ।
स्फटिकं पाटलं पीतं श्वेतं नीलमिति स्मरेत् ॥ ७५ ॥

शिवोऽहमिति चात्मानं भावयेन्मन्त्रवित्तमः ।
[1]ध्यायन्तं देवदेवेशमाराध्य वृषभध्वजम् ॥ ७६ ॥

त्यक्त्वा सांसारिकं दुःखमेति स्थानमनश्वरम् ।
भोगानप्यैहिकान् भुक्त्वा दुर्लभानमरैरपि ॥ ७७ ॥

ओमादिसप्तवर्णानामुद्धारः पूर्वमीरितः ।
वैधरं नृहरिं मायां प्रचण्डं मधुसूदनम् ॥ ७८ ॥

मन्दरं चोर्ध्वलोकेशं वैराजं[द्विः] चतुर्मुख ।
पावकं पवनं देवदत्तं पाटलमन्वतः ॥ ७९ ॥

1. ध्यायत्येवं समाराध्य देवेशम् $M_2$



गोपतिं मारुतमथो मन्दरं माधवीं तथा ।
माधवं धनदं ब्रह्मन् मधुसूदन संज्ञितम् ॥ ८० ॥

नासिक्यं पश्चिमं पद्मनाभं च पवनाह्वयम् ।
खड्गं द्विरुच्चरेत् स्वाहा इति [1]मन्त्रं समुद्धरेत ॥ ८१ ॥

मनुमन्यं प्रवक्ष्यामि तमर्णैरुद्धराम्यहम् ।
तारमत्रिं गरुत्मन्तं रामं सुमुखमन्वतः ॥ ८२ ॥

गोपनं मन्दरं चोर्ध्वलोकेशं [2]विजयं पुनः ।
तमर्णं चाभिशङ्करुंच माधवं वरुणाभिधम् ॥ ८३ ॥

गोपनं च करालं च कमलं जृम्भलं ततः ।
[3]श्रीधरं सुभगं मायां जन्मध्वंसमनन्तरम् ॥ ८४ ॥

पाशपाणिं चादिदेवं भद्रहस्तं च पश्चिमम् ।
ऋताह्वयं वैधरं च मधुभिन्मारुतं ततः ॥ ८५ ॥

नतिमुध्दृत्य कथितो वर्णान् षोडशसंज्ञितान् ।
मन्त्रयोरनयोर्ब्रह्मन् जीवो द्रष्टाभिधीयते ॥ ८६ ॥

धर्मवर्ती महेशानो देवता दक्षिणा तनुः ।
दिनेशं रामसहितं श्वसनं मतिबिन्दुमत् ॥ ८७ ॥

बीजमेतदतो ध्यानमीशानस्य ब्रवीमि ते ।
कुन्देन्दु मुक्ता शङ्खाभं सर्वाकल्पपरिष्कृतम् ॥ ८८ ॥

वैयाघ्रचर्मवसनं जटामण्डलमण्डितम् ।
नासाग्रन्यस्तनयनं शशिखण्डविराजितम् ॥ ८९ ॥

1. मन्त्रं समुध्दृतम् T,$P_1$ 2. भुवनं A 3. विघ्नेशं T,P

प्रसन्नवदनं देवं चतुर्भुजमभीष्टदम् ।
वामजानुनि विन्यस्त वामेतर पदाम्बुजम् ॥ ९० ॥

स्फाटिकीं चाक्षमालां वै बिभ्राणं दक्षिणेकरे ।
वामे कराम्बुजे स्वीये धृत विज्ञानपुस्तकम् ॥ ९१ ॥

दर्शयन्तं ज्ञानमुद्रां महर्षिगण सेवितम् ।
ध्यायतो मन्त्रिणस्त्वेवं सिध्यन्ति सकलाः कलाः ॥ ९२ ॥

गङ्गाप्रवाहवत्तस्य वाक्प्रसारः प्रवर्तते ।
चतुर्वर्गफलावाप्तिस्तस्य हस्ते स्थिता ध्रुवम् ॥ ९३ ॥

जपन् भूयस्तथाकामान् दुर्लभान् सुखमश्नुते ।
तिथौ भगवतीं दुर्गां नवम्यां सम्यगर्चयेत् ॥ ९४ ॥

निगमादिं वैधरं च भुवनं च विसर्जनम् ।
मनुरेकाक्षरः प्रोक्तः समुध्दृत्य यथातथम् ॥ ९५ ॥

स्वीकृत्यैकाक्षरं पूर्वं गतध्वंसं हुताशनम् ।
स्पर्शनं गोपनाह्वानं [1]तर्तिं च मनुरीरितः ॥ ९६ ॥

बीजमस्योद्धरिष्यामि गोपतिं पावकं ततः ।
वामनं यष्टिशिरसमस्य कात्यायनो मुनिः ॥ ९७ ॥

छन्दश्च देवी गायत्रं वनदुर्गा च देवता ।
मन्त्रमन्यं प्रवक्ष्यामि दुर्गाश्रयमनुत्तमम् ॥ ९८ ॥

निगमादिं विष्णुसंज्ञं कपिलं जृम्भलाह्वयम् ।
माधवं च सुरेन्द्रादिं प्रद्युम्नं कालनेमिजम् ॥ ९९ ॥

मधुसूदननामानं पुलहं मायया वृतम् ।
करालं देवदत्ताख्यं शशाङ्कं [2]कमलानुगौ ॥ १०० ॥

1. नतिं T 2 कलशानुजी $M_2$



पवित्रमादिदेवं तं नृहरिं स्पर्शनं तथा ।
ब्रह्माणमग्निं चोध्दृत्य पञ्चबिन्दुमनन्तरम् ॥ १०१ ॥

आदिं श्रीवत्समुदयं सुभद्रं नासिकाह्वयम् ।
भास्करं भद्रबाहू द्वौ वैधरं गोपतिद्वयम् ॥ १०२ ॥

पवित्रखड्गनामानौ द्वौ च दक्षमनन्तरम् ।
सुप्रतिष्ठं द्विरुच्चार्य दिनकृन्माधवी ध्रुवौ ॥ १०३ ॥

फट्कारमग्न्यादिमन्वगित्युध्दृत्य जपेन्मनुम् ।
[1]अस्योद्धारक्रमादन्यं मन्त्रं वच्मि चतुर्मुख ॥ १०४ ॥

प्रणवं वैधरं पश्चाच्छ्रीधरं गदिनं तथा ।
वैश्वानरं मृगपतिं तमेवार्णमनन्तरम् ॥ १०५ ॥

[2]यान्तं नृसिंहं सुमुखं रामं स्वाहां समुद्धरेत् ।
[3]उध्दृतोऽयं मनुश्चान्यो बीजमङ्गानि पूर्ववत् ॥ १०६ ॥

ऋषिर्जयमतिच्छन्दो गिरिदुर्गा च देवता ।
उद्गीथं श्रीधरं चैव दृष्टिद्वन्द्वं त्रिविक्रमम् ॥ १०७ ॥

क्रोधरूपी च जीमूतं पश्चिमं भुवनाह्वयम् ।
बहुलं श्रीधरं क्रोधं विक्रमं सरसीरुहम् ॥ १०८ ॥

विक्रमं धर्मशीतांशुं शशाङ्कं च सुधामयम् ।
पश्चिमं रामशिरसं क्रोधरूपं पवित्रकम् ॥ १०९ ॥

भल्लायुधं तथा शङ्खं[4]माधवी द्वयमाधवम् ।
शुक्लमादिं मृगपतिं श्रीधरं पश्चिमाननम् ॥ ११० ॥

1. अर्णोद्धार $P_2$ 2. यान्तं नासिक्यसुमुखं नाम स्वाहान्तमुद्धरेत् $M_2$
3. इत्युध्दृतो $M_2$ 4. वैधरं बन्धुमस्तकम् $M_1$

नीहारदीधितिं सर्वेरोधं विक्रमशीर्षकम् ।
वैराजं कपिलंशङ्खं वैधरं बन्धुमस्तकम् ॥ १११ ॥

शुभदं कमलं वायुं मन्दरं वित्तवर्धनम् ।
आदिं करालमनिलं नासिक्यं यादसां पतिम् ॥ ११२ ॥

गोपनं विजयं विघ्ननायकं दक्षमाधवौ ।
सुभद्रं च गदिं [1]कुम्भं वैराजं बन्धुशीर्षकम् ॥ ११३ ॥

शुभदं मन्दरं शङ्खं ठठान्तं मनुरीरितः ।
षोढा विभज्य तं मन्त्रो हृदयाद्यङ्गकल्पनम् ॥ ११४ ॥

द्रष्टा वरेण्यको नाम ह्यनुष्टुप् छन्द ईरितम् ।
देवता वनदुर्गाख्या[2]दस्याष्टाक्षरवत् फलम् ॥ ११५ ॥

सर्वदाह्वयदुर्गाया मन्त्रमुद्धारयामि ते ।
उद्गीथं नतिमन्वक्रू च सूक्ष्मदृग्दृष्टिशीर्षकम् ॥ ११६ ॥

गदध्वंसमकारं च कुम्भमाद्यं चतुर्मुखं ।
वैराजं राजमानं वै वैधरं श्रीधराह्वयम् ॥ ११७ ॥

[3]गदिनं [4]बन्धुसंज्ञं च स्वाहाशीर्षं[5] श्रियःपतिम् ।
गदिनं [6]पावकं चैव दृष्टिमीकारपावकम्[7] ॥ ११८ ॥

देहं च [8]विक्रमं चण्डं रामं मन्दरसंज्ञितम् ।
मधुसूदं गन्धवहं माधवं मन्दराह्वयम् । ११९ ॥

---

1. घोरं $M_2$, T   2. त्तदष्टाक्षरवत् T, $P_2$   3. हयासुर निहन्तारं हयशीर्वं श्रिधः पतिम् । A कोशेऽयमर्धोऽधिकः पठ्यते ।   4. मृगसंज्ञं च $M_1$   5. हयशीर्षं T   6. सुगोपं च $M_1$   7. कारमन्वतः $P_1$,$P_2$   8. विष्णुं च वक्रतुण्डश्च $M_1$; देवं च वक्रतुण्डञ्च $M_2$



आदित्यं गोपनं दक्षमादिदेवं च मारुतम् ।
मृगेशं मन्दरं भानुं मधुसूदनसंज्ञितम् ॥ १२० ॥

पुलहं देवदत्तं च दक्षञ्च यदुभास्करम् ।
राममुग्रात्मनात्मानं मधूसूदनमन्वतः ॥ १२१ ॥

शशाङ्कं श्रीधरं सप्तजिह्वं कुम्भं त्रिविक्रमम् ।
गजाननं [1]गोपतिं च लक्ष्मीं भद्रं त्रिविक्रमम् ॥ १२२ ॥

वैधरं भुवनाह्वानमुग्ररूपं च खेटकम् ।
भल्लायुधं ततो ब्रह्मन् श्वसनं नासिकाभुवम् ॥ १२३ ॥

विधातारं हुतवहं विक्रमं च सुधारसम् ।
रामं च भद्रं सुभगमनिलं विघ्ननायकम् ॥ १२४ ॥

रामं महेन्द्रं [2]सुभगं महेशं गगनाह्वयम् ।
मार्ताण्डमादिदेवं च शशाङ्कं श्रीधरं तथा ॥ १२५ ॥

चित्रभानुं तथा दक्षं वैधरं हव्यवाहनम् ।
विघ्नेशं विक्रमं दृष्टिं देवदत्तमपांपतिम् ॥ १२६ ॥

मधुसूदननामानं कलात्मानमतः परम् ।
भुवनं पावकं दृष्टिं [3]गोपनं विजयं तथा ॥ १२७ ॥

वायुं पवित्रमाकारं[4] [5]मुसलं विक्रमं पुनः ।
एकनेत्रं माधवं च कलशं पावकाह्वयम् ॥ १२८ ॥

वैधरं देवदत्तं च विघ्नेशं मधुसूदनम् ।
दहनं गोपनं चैव मारुतं वनमालिनम् ॥ १२९ ॥

---

1. गोपनं $M_1$   2. श्वसनं मृगेशं मन्दराह्वयम् $M_1$   3. गोघनं $M_2$   4. मुकारं $M_1$   5. कमलं $M_2$

मायां च वैधराह्वानं मधुसूदनमन्दरौ ।
श्वेतदेहं दृष्टिमग्निं पश्चिमाननमन्वतः ॥ १३० ॥

ऋतधामं विक्रमं च श्वसनं मृगनायकम् ।
पुष्टिबीजं त्रिरुच्चार्य सहस्रकिरणाह्वयम् ॥ १३१ ॥

गुहालयमनुस्वारं बीजमेतत् त्रिरुद्धरेत् ।
[1]भद्रं गुहालयं चैव विजयं गदिनं तथा ॥ १३२ ॥

पद्मनाभं गोपतिं च कलशं मृगराट् तथा ।
वैराजमादिदेवं च डुण्डुभं लोचनोदयौ ॥ १३३ ॥

उग्रात्मा खेटको वह्निं गोपतिं विहगाधिपम् ।
श्वेतांशुं पश्चिमं लक्ष्मीमादिदेवमनन्तरम् ॥ १३४ ॥

वक्रतुण्डं गोपनं च भद्रपाणिमनन्तरम् ।
विजयाकारमादिं च शशाङ्कं च सदागतिम् ॥ १३५ ॥

द्विरभ्यसेत्कालनेमिं भद्रं पुण्यं द्विरुच्चरेत् ।
मन्दरं चादिदेवं च दहनं श्वसनं तथा ॥ १३६ ॥

द्विर्ब्रूयात् सूक्ष्मदृग्ब्रह्मन् करालं विजयं पुनः ।
पीयूषमादिं विजयं वसुमस्तकनिष्ठितम् ॥ १३७ ॥

नीहारदीधितिमचामादिं पीतं [2]समाधवम् ।
सुभद्रं कमलं चैकदृष्टिं च चतुरानन ॥ १३८ ॥

पवित्रमृतधामानं त्रिविक्रममतः परम् ।
पुरुषात्मानमेणेशं पश्चिमं [3]पुरतस्तथा ॥ १३९ ॥

---

1. सुभद्रं गुहालयं चक्रं $M_2$ 2. च माधवम् $M_1$ 3. पुरुषं $M_2$



ध्रुवं ध्रुव तथा ह्रस्वं माहेन्द्रं मन्दरं ततः ।
सर्वरोधं गजास्यं च मायां कमलमन्दरौ ॥ १४० ॥

एकनेत्रमृतं शूलं [1]बहुकुक्षिस्त्रिविक्रमम् ।
करालं पद्मनाभाख्यं विघ्नेशं विजयं तथा ॥ १४१ ॥

भद्रहस्तं तथा रामं शशाङ्कं मनुमन्वतः ।
सुभद्रं गोपनं पश्चात्पञ्चान्तिकमथानिलम् ॥ १४२ ॥

पश्चिमं पद्मनाभाख्यं ऋतधामसमन्वितम् ।
जृम्भलं पुलहं पापहननं पद्मनाभकम् ॥ १४३ ॥

दृष्टिं मृगेशममृतं मायां च द्विर्गुहालयम्[2] ।
पवित्रमृतधामानं वैधरं माधवं ततः ॥ १४४ ॥

[3]मारुतं कमलां पद्म पवित्रमृतधाम च ।
अत्रिं मृगपतिं लक्ष्मीं बहुलं पञ्चबिन्दुकम् ॥ १४५ ॥

पवित्रमृतधामानं वैराजं[4] विक्रमं तथा ।
[5]पश्चिमं पद्मनाभाख्यं वैधरं मृगवल्लभम् ॥ १४६ ॥

दक्षं रविं गोपनाख्यं सुभद्रं भुवनं तथा ।
ककुभं माधवं पश्चान्माधवीं भास्कराह्वयम् ॥ १४७ ॥

गोपनं मतिमन्तञ्च पुलहं माधवं रविम् ।
यष्टिं च व्याहरेद्ब्रह्मन् तथैव मधुसूदनम् ॥ १४८ ॥

---

1. लम्बकुक्षिं A 2. आर्यादूर्वी गुहालयम् T, P शशाङ्कं च गुहालयम् $M_1$ 3. माधवं $M_2$ 4. मुखं वैराज विक्रमम् A,$M_2$ 5. तं तथा पश्चिमं पद्मं $M_2$

ध्रुवं नभोमणिं गोपं बिन्दुं च चतुरानन ।
एवं त्रिर्व्याहरेदर्णं सुगतं सागरोत्तमम् ॥ १४९ ॥

मन्द्ररं भास्करं पश्चाद्गोपनं माधवीं तथा ।
आदिदेवं जगत्प्राणं माधवं नतिमुद्धरेत् ॥ १५० ॥

इत्येवमुध्दृतो मन्त्रो ब्रह्मन् सर्वार्थसिद्धिदः ।
[1]शतेन संमितोवर्णो रश्मीत्यादिभिरेव सः ॥ १५१ ॥

भास्करं [2]मन्दरं पञ्चबिन्दुं यष्टिमनन्तरम् ।
उध्दृत्य बीजमेतेन षडङ्गानि प्रकल्पयेत् ॥ १५२ ॥

द्रष्टा ककुत्स्थश्छन्दः स्यादतिच्छन्दोऽत्र[3] देवता ।
सर्वदाह्वानमन्त्रस्य चतुर्लक्षो जपस्मृताः ॥ १५३ ॥

ज्ञानाध्यानाज्जपान्मन्त्रः सिद्धिं सर्वां प्रयच्छति ।
मन्त्रिणो नित्ययुक्तस्य प्रत्यहं प्रयतात्मनः ॥ १५४ ॥

आमुष्मिकं चैहिकं च फलं सर्वं प्रयच्छति ।
दशम्यामर्चयेद्ब्रह्मन् कृतान्तमभयप्रदम् ॥ १५५ ॥

[4]निगमादिं गन्धवहं हृषीकेशमनन्तरम् ।
दण्डं प्रभञ्जनं दक्षं चादिदेवं सदागतिम् ॥ १५६ ॥

[5]नतिमुध्दृत्य कथितो मनुर्वैवस्वताह्वयः ।
बीजमर्णान् समुध्दृत्य श्वसनं यष्टिशीर्षकम् ॥ १५७ ॥

उदितं तेन बीजेन हृदयाद्यङ्गकल्पनम् ।
ऋषिस्सत्यातपश्छन्दो गायत्रं दैवमीरितम् ॥ १५८ ॥

---

1. नतेन T, $M_2$ 2. दहनं $M_2$ 3. हि देवता $M_1$
4. उद्गीथमादिं $M_2$ 5. मनूद्धारोऽपि $M_2$



मन्त्रश्च पितृदैवत्यो जपः स्यात्पञ्चलक्षकः ।
तेनाराध्य श्राद्धदेवमभीष्टं सर्वमश्नुते ॥ १५९ ॥

प्रथमं छन्दसामादिं विक्रमं मानुषेश्वरम् ।
वैधरं वह्निमपरं गोपनं पवनं मुखम् ॥ १६० ॥

नतिमुध्दृत्य मघोनः कथितो मनुरब्जज ।
वैधरं चोर्ध्वलोकेशं नासिक्यं बीजमुध्दृतम् ॥ १६१ ॥

ऋषिर्देवो[1] विराट् छन्दो देवता वलसूदनः ।
एतेनेष्ट्वा तुरासाहं साम्राज्य फलमश्नुते ॥ १६२ ॥

द्वादश्यां मूलमन्त्रेण पूजयेदुक्तवर्त्मना ।
भगवन्त श्रियःकान्तं फलमीप्सन् सुदर्लभम् ।। १६३ ॥

निगमादिं च नत्यन्तं पश्चिमोदयनं तथा ।
क्रोधरूपं पवित्रं च श्रीवत्सं पावकं ततः ।। १६४ ॥

अदिदेवं च पवनं गोपनं [2]यष्टिमन्वतः ।
[3]गोपतिं बहुलं पञ्चबिन्दुं नरहरिं ततः ॥ १६५ ॥

और्वं यष्टिं च कमलं[4] गोपनं मन्दराह्वयम् ।
वैधरं देवदत्तं च [5]कमलं गोपनं तथा ॥ १६६ ॥

शङ्खं ठठान्तमुध्दृत्य मनुरेष समीरितः ।
[6]स्वर्गादिं पुलहं बन्धुं नासिक्यं बीजमुद्धरेत् ।। १६७ ॥

ऋषिः श्रीनिधिरस्योक्तो विराट् छन्दश्चदेवता ।
मन्मथस्तेन यष्टव्यः सः सर्वफलकाङ्क्षिभिः ।। १६८ ॥

---

1. जीवो $M_1$ 2. यष्टिमस्तकम् A, $M_2$ 3. गोपनं $M_2$
4. कलशं $M_2$ 5. कलशं $M_1$ 6. स्पर्शादिं $M_1$

एकार्णमपरं मन्त्रमुद्धरिष्यामि पद्मज ।
तारं गरुडमौर्वं च सबिन्दुं मनुरीरितः ॥ १६९ ॥

लक्षमेकं जपेन्मन्त्री कर्मण्याकर्षणादिके ।
समर्थं कामदैवत्यं मनुमन्यं ब्रवीमि ते ॥ १७० ॥

उद्गीतं कमलं पीतं मायामर्धेन्दुशेखरम् ।
करालं गोपनं दक्षं वैधरं तदनन्तरम् ॥ १७१ ॥

मृगेन्द्रं वरुणं चादिदेवं श्वसनसंज्ञितम् ।
शुक्रं सुधामयं वह्निं ककुभं सविनायकम् ॥ १७२ ॥

शशाङ्कं माधवं ब्रह्मसाधकं भास्कराह्वयम् ।
हैरम्बं गोपनं वायुं ककुभं यादसांपतिम् ॥ १७३ ॥

पुलहं निगमादिं च तद्द्वयं तत् द्विरुच्चरेत् ।
पश्चिमं ऋतधामानं पूर्णं पर्वभिरुच्चरेत् ॥ १७४ ॥

शशाङ्कमादिं जलजं पीतं वरुणमब्जज ।
ककुभं विष्णुविघ्नेशौ प्रथमं तिग्मदीधितिम् ॥ १७५ ॥

पद्मनाभं वैधरं च वायुमाद्यं च मन्दरम् ।
मन्दराद्यद्वयं भूयस्तदेव समनन्तरम् ॥ १७६ ॥

वरुणं विष्णुमब्जाक्ष[1] यष्टिमब्दोदयौ तथा ।
दहनं श्रीधरं वर्णं पुलहं ब्रह्मसाधनम् ॥ १७७ ॥

करालमाद्यं कलशं मुखं श्रीवत्समन्वतः ।
प्रभञ्जनं गोपनं च स्पर्शमाद्यमपां पतिम् ॥ १७८ ॥

1. बीजमब्जं च $M_1$



ठठान्तमुध्दृत्य मनुः कथितः कमलासन ।
ऋषिः कलिङ्गोऽतिच्छन्दः कामश्चदेवता ॥ १७९ ॥

जपेद्द्विरष्टौलक्षाणि नासाध्यं तेन मन्त्रिणा ।
रतिश्च विरतिश्चोभे तस्य पार्श्वे स्थिते [1]सदा ॥ १८० ॥

[2]मन्त्रस्तयोश्चतुर्थ्यन्तं नाममात्रं त्रिशीर्षकम् ।
मदनः प्रथमो बाणस्तथैवोन्मादनोऽपरः ॥ १८१ ॥

मोहनं द्वेषणं च द्वे दीपनं पञ्चमं स्मृतम् ।
मल्लिका केतकी जातिः पङ्कजं यूथिका तथा ॥ १८२ ॥

पुष्पाणि क्रमशो बाणमाहुस्तेषां मनुं पुनः ।
संविद्वर्णाश्च सहिताश्चतुर्थ्यन्तसमाह्वयाः ॥ १८३ ॥

तेषां नत्यन्तसहितं तैस्तेषामर्चनं विदुः ।
धनुरङ्कुशपाशाश्च तस्यास्त्राणि मनोभुवः ॥ १८४ ॥

मन्त्राश्च पूर्ववत्तेषां नामान्येव चतुर्मुख ।
कल्पकानोकह प्रायः पुष्पितद्रुमशोभिते ॥ १८५ ॥

उद्याने मञ्जुशिञ्जान पक्षिसंघनिषेविते ।
मध्ये महाह्रदे पूर्णे सरोजैश्च विकस्वरैः ॥ १८६ ॥

विष्टरे काञ्चने न्यस्ते शुभास्तरणसंयुते ।
आसीनं सह देवीभ्यां सर्वाभरणभूषितम् ॥ १८७ ॥

रक्तचन्दनलिप्ताङ्गं रक्तमाल्योपशोभितम् ।
चारुकुण्डलिनं कान्तं युवानं क्षौमवाससम् ॥ १८८ ॥

1. स्थिरे $M_1$  2. मन्त्रो द्वयोश्चतुर्थ्यन्तं नामानीति त्रिशीर्षकम् $M_2$

वसानमप्सरोमुख्यैः स्त्रीगणैः परितो वृतम् ।
ध्यायन्ननेन मनुना क्रमादर्घ्यादिभिर्यजेत् ॥ १८९ ॥

[1]कामगायत्र्यया चापि यजेत मकरध्वजम् ।
जपादि पूर्ववत्सर्वं वश्यं च भुवनत्रयम् ॥ १९० ॥

मन्त्रिणो नित्ययुक्तस्य किमन्यैरतिविस्तरैः ।
अश्विनोर्मन्त्रमधुना ब्रवीमि कमलासन ॥ १९१ ॥

उध्दृत्य पूर्वमुद्गीथं विघ्नेशं पाटलप्रियम् ।
ब्रह्मसाधननामानं श्रीवत्सं च सुधामयम् ॥ १९२ ॥

मायां सुभद्रमाकारमश्विनोरीरितो मनुः ।
आदिमर्धेन्दुसहितं बीजं तेनाङ्गकल्पना ॥ १९३ ॥

भृगुर्द्रष्टा बृहच्छन्दः प्रतिपाद्यौ तथाश्विनौ ।
जपन् वै पञ्चलक्षेण सिद्धि [2]स्सर्वार्णसाधनः ॥ १९४ ॥

राजयक्ष्मादयो रोगा न तिष्ठन्ति तदन्वये ।
औषधानि च दक्षाणि व्याधीनामपनोदने ॥ १९५ ॥

तस्करस्पर्शमात्रेण सर्वं वस्त्वौषधं भवेत् ।
पौर्णमास्यां तथा सोमं यजेत मनुवित्तमः ॥ १९६ ॥

निगमादिं पूर्णचन्द्रमोतदेहं समन्दरम् ।
मधुमारुतविघ्नेशं माधवीं च विसर्जनम् ॥ १९७ ॥

सोमस्य कथितो मन्त्रो बीजमुद्धारयामि ते ।
सितमादिमनुस्वारं कुर्यात्तेनाङ्गसन्ततिम् ॥ १९८ ॥

1. साम $M_2$ 2. स्सर्वार्थसाधनः $M_1$



द्रष्टा कौमोदको नाम पङ्क्तिश्छन्दश्च देवता ।
जपः पूर्ववदेवास्य गायत्र्या वा समर्चयेत् ॥ १९९ ॥

फलं च सर्वं पूर्वोक्तं चन्द्रसालोक्यमप्यथ ।
इत्युक्तास्तिथयो देवास्तेषां मन्त्रसमर्चनम् ॥ २०० ॥

फलानि च समस्तानि क्रमेणाप्युदितानि ते ।
नासाध्यं तिथियोगैस्तैरैहिकामुष्मिकात्मकम् ॥ २०१ ॥

फलं मन्त्रप्रसादेन तद्देवानां महत्तया ।
सुकृतान्यपि कर्माणि विना विघ्नेशपूजया ॥ २०२ ॥

न फलन्त्यन्तरायेण निहतानि चतुर्मुख ।
तदादौ कर्म कुर्वाणैराराध्यो विघ्ननायकः ॥ २०३ ॥

इति श्री पञ्चरात्रे महोपनिषदि पाद्मतन्त्रे चर्यापादे
तिथि देवता मन्त्रोद्धारो नाम त्रिंशोऽध्यायः ॥

—: * :—

## एकत्रिंशोऽध्यायः ॥

विष्वक्सेनोत्पत्तिः, किरीटादि मन्त्रोद्धारणम् च ॥

ब्रह्मा :—

भगवान् विघ्नराजस्य जन्म कीदृक् कुत[1]श्च सः ।
भूषणानां च कोटीरप्रमुखानां यथातथम् ॥ १ ॥

1. च कुतश्च सः $M_1$

चक्रादीनामायुधानां तार्क्ष्यसेनेशयोरपि ।
मनवः पूजिता यैस्तैः पूजिताः फलहेतवः ॥ २ ॥

इति सर्वं समाचक्ष्व मयि ते[1] यद्यनुग्रहः ।

**श्रीभगवान् :—**

असुरैरर्दिता देवा बलिनो युद्धदुर्जयैः ॥ ३ ॥

शरण्यं शरणं जग्मुः प्रद्युम्नमभयप्रदम् ।

**देवा :—**

आहवेषु वयं दैत्यैर्बलवन्तोऽपि बाधिताः ॥ ४ ॥

यथा ते विघ्नविहताः पलायन्ते तथा कुरु ।
प्रद्युम्नस्तैरिति प्रोक्तः क्रुद्धस्संरक्तलोचनः ॥ ५ ॥

कोपात्तस्य समुद्भूतं [2]सम्यक् स्तम्बेर[3]माननः ।
सञ्जातं प्राञ्जलिपुटं कुर्वाणं तं पुरःस्थितम् ॥ ६ ॥

तं दृष्ट्वा गजवद्वक्त्रं प्रोवाचेदं वचस्तदा ।
देवानामसुराणां च सङ्ग्रामे समुपस्थिते ॥ ७ ॥

सन्निधाय भवांस्तत्र दैत्यानां विघ्नमाचर ।
इत्युक्त्वा मिषतस्तस्य प्रद्युम्नो भगवान् हरिः ॥ ८ ॥

अन्तर्दधे सुराश्चापि प्रतिजग्मुर्यथागतम् ।
ततः प्रभृति विघ्नेशप्रसादाद्देवतागणाः ॥ ९ ॥

असुरान् जघ्निवांसस्ते न च जग्मुः पराभवम् ।
आकल्पस्य किरीटस्य मनुं वक्ष्यामि सम्प्रति ॥ १० ॥

व्यापिनं नतिमुध्दृत्य कमलं तदनन्तरम् ।
महामायां सप्तजिह्वां पञ्चबिन्दुसमाह्वयम् ॥ ११ ॥

1. चेदस्त्यनुग्रहः $M_2$ 2. सद्यः $M_2$



हृदयाह्लादमाकारं पवनं शुक्रमन्दरौ ।
दाक्षायणीशविजयौ मन्दरं च सरोरुहम् ॥ १२ ॥

श्रीधरं हृदयाह्लादं माधवं वित्तवर्धनम् ।
कुम्भं हुताशनं देवदत्तं क्षीरं सुधामयम् ॥ १३ ॥

दहनं गोपनं वायुं करालं कमलोद्भव ।
ओतदेहं क्षितिधरं [1]विक्रमं धूमकेतनम् ॥ १४ ॥

अमृतं बन्धुसहितं भद्रहस्तं त्रिविक्रमम् ।
चतुर्गतिं श्रीधरंच विजयं माधवं तथा ॥ १५ ॥

हस्तिवक्त्रं वैधरं च भुवनं कामगं ततः ।
[2]वैराजं वैधराह्वानमीरयित्वा ततः परम् ॥ १६ ॥

रामं पवित्रं विजयं गोपनं द्विरदाननम् ।
[3]महेन्द्रं कुञ्जरमुखं विक्रमं सूक्ष्मलोचनम् ॥ १७ ॥

गोपनं [4]स्पर्शनामादिदेवं समसरोरुहम् ।
माहेन्द्रं पश्चिमं चादिदेवं च धनदाह्वयम् ॥ १८ ॥

विक्रमं पश्चिमं चैव विजयं चतुरानन ।
प्रभञ्जनं मृगेशं च मधुसूदनसंज्ञितम् ॥ १९ ॥

मार्ताण्डं पावकमथो पञ्चबिन्दुं सबिन्दुकम् ।
करालमृतधामानं महामायां सयष्टिकम् ॥ २० ॥

गोपतिं श्रीधरयुतं नासिक्यं फट्कृतिं तथा ।
स्वाहायां विरमेन्मन्त्रं बीजमस्योच्यतेऽधुना ॥ २१ ॥

1. विक्रमं धामकेतनम् T 2. विक्रमं M 3. उपेन्द्रं A
4. स्पर्शनामानमादिदेवं $M_2$

कमलं ऋतधामानं महामायां परिष्कृतम् ।
उध्दृतं यत् षडङ्गानि द्रष्टा चाखण्डलस्तथा ॥ २२ ॥

छन्दश्च पङ्क्तिरित्युक्तं किरीटो देवतापि च ।
किरीटिनं च द्विभुजं महाकायं [1]महोदरम् ॥ २३ ॥

कृताञ्जलिपुटं [2]प्रह्वं सुस्थितं भूषणैर्युतम् ।
ध्यात्वैवं मन्त्रविन्मन्त्रं पञ्चलक्षमतन्द्रितः ॥ २४ ॥

नरयन्तं छन्दसामादिं श्रीशब्दं कलशं तथा ।
एकनेत्रं [3]हुतवहं शशाङ्कं मधुसूदनम् ॥ २५ ॥

सदागतिं चादिदेवं नासिक्यं षष्टिसंज्ञितम् ।
लक्ष्मीं करालं पुलहं महामायां सबिन्दुकम् ॥ २६ ॥

तार्क्ष्यमौर्वादिकं षष्टिं हुम्फट्कारं हुतान्तिमम् ।
श्रीबीजं तद्ध्वेद्बीजमृषिश्चैव प्रजापतिः ॥ २७ ॥

विराट् छन्दश्च गायत्रं श्रीवत्सो देवता मता ।
श्रीवत्समन्त्रमपरं कथयामि चतुर्मुख ॥ २८ ॥

ओङ्कारं प्रथमं सोमं स्वरादिं जयमारुतौ ।
माधवं तारकाधीशमेकनेत्रं समारुतम् ॥ २९ ॥

कलशं विजयं पश्चान्महामाया परिष्कृतम् ।
शुक्रं च तारं श्वसनं कुम्भं वैराजमेव च ॥ ३० ॥

अनलं पूर्णचन्द्रं च पुलहं माधवं तथा ।
नरयन्तं शुक्रविजयौ श्वसनं श्वेतरोचिषम् ॥ ३१ ॥

1. महाभुजम् $M_2$ 2. ह्रस्वं $P_2$ 3. शशिधरं T,P



दक्षं दरं देवदत्तमोषधीशं तथाब्जज ।
वैराजं प्रथमं कुम्भमृतधामविदर्भितौ ॥ ३२ ॥

जयं सदागतिं देवदत्तं चैव ठठान्तिमम् ।
श्रीबीजं पूर्वमेवोक्तमृषिर्देवल उच्यते ॥ ३३ ॥

छन्दश्चाक्षरपङ्क्तिः स्याच्छ्रीवत्सो देवता मता ।
ततो लक्षजपेनैव सर्वान् कामानवाप्नुयात् ॥ ३४ ॥

प्रणवादिं च नरयन्तं विधातारं तथा मनुम् ।
[1]सकारं विजयं लोकं सुभद्रं मधुविद्विषम् ॥ ३५ ।

प्रभञ्जनं पावकं च वैराजं विघ्ननायकम् ।
गोपनं धनदं मायां पश्चिमं प्रथमस्वरम् ॥ ३६ ॥

वैराजं मारुतं पश्चादेकारं प्रथमस्वरम् ।
माधवीं पद्मनाभं च विजयं ब्रह्मसाधनम् ॥ ३७ ॥

[2]अग्निं भल्लायुधं कुम्भमाकारं मारुतं तथा ।
अर्चां द्वितीयं [3]कमलं पुलहं च पवित्रकम् ॥ ३८ ॥

आदिदेवं च धनदं त्रिविक्रममनन्तरम् ।
पश्चिमं विजयं चादिं [4]स्पर्शनं माधवं तथा ॥ ३९ ॥

ओषधीशमिकारं च दृष्टिं च धनदं पुनः ।
रामं प्रद्युम्नसहितं पश्चिमं पद्मनाभकम् ॥ ४० ॥

प्रभञ्जनं छलध्वंसं द्वयं स्वाहावसानकम् ।
कौस्तुभं बिन्दुसहितं बीजमेतद्दृषिः पुनः ॥ ४१ ॥

1. नकारं $M_2$ 2. अत्रिं T,P 3. कलशं A 4. मारुतं $M_2$

जमदग्निर्विराट् छन्दो देवता कौस्तुभाह्वया ।
कौस्तुभं च चतुर्थ्यन्तमुच्चार्य नतिमुद्धरेत्[1] ॥ ४२ ॥

पञ्चलक्षजपात्तस्य मनोः सिध्यति वाञ्छितम् ।
सप्तार्णपूर्वकं कुम्भं भद्रहस्तं प्रियद्विषम् ॥ ४३ ॥

भद्रहस्तं मन्दरञ्च मधुसूदनमब्जज ।
पुलहं देवदत्तं च माधवीं मधुसूदनम् ॥ ४४ ॥

माहेन्द्रं रामनामानं विघ्नेशं पञ्चबिन्दुकम् ।
पश्चिमं श्रीधरं वह्निं भुवनं तदनन्तरम् ॥ ४५ ॥

क्रोधाग्निं वासुदेवं च वैराजौ द्वौ च मन्दरम् ।
पश्चिमं पद्मनाभं च मायाशिरसमन्वतः ॥ ४६ ॥

मारुतं माधवयुतं ठठान्तो मनुरीरितः ।
कलशं मारुतं पश्चादुदयश्चानिरुद्धकम् ॥ ४७ ॥

बीजं मुनिश्च धनदः पङ्क्तिश्छन्दश्च देवता ।
वनमालापरं मन्त्रं कथयामि महाफलम् ॥ ४८ ॥

ब्रह्मकोशं नतिं कुम्भं मुखं विघ्नेशमन्दरौ
गोपनं पुलहं चादिदेवं शङ्खं च गोधनम् ॥ ४९ ॥

माधवं सूदनं वायुं मृगेशं दक्षगोपनौ ।
चतुर्गतिश्चादिदेवमनकं सगुहालयम् ॥ ५० ॥

पश्चिमं विक्रमपरं प्रचण्डं पञ्चबिन्दुकम् ।
[2]दक्षं दिनकरं चक्षुः द्वितीयं श्वेतदीधितिम् । ५१ ॥

1. मुच्चरेत् M 2. एकदृष्टिं नकारञ्च $M_1$



दक्षद्वयं वासुदेवं तिग्मांशुं बन्धुशीर्षकम् ।
द्विरदास्यं पञ्चबिन्दुं श्वेतरोचिवमादिमत् ॥ ५२ ।

अमृतं वह्निशिरसं कमलं गोपनाह्वयम् ।
मन्दरं [1]वैधरं मायां पञ्चमं गजवाहनम् ॥ ५३ ॥

माधवं श्वेतदीधितं च कुम्भं बहुलशीर्षकम् ।
विजयं चैकदृष्टिं च वरुणं पाटलप्रियम् ॥ ५४ ॥

चतुर्गतिं सूदनं च मारुतं चादिमत्तथा ।
चतुर्थमृतधामानमग्निं च श्वसनं पुनः ॥ ५५ ॥

ब्रह्मकोश[2]परां चैव भद्रपाणिं च [3]पद्मजाम् ।
विजयं प्रणवादिं च श्वेतदीधितिमब्जज । ५६ ।

शशाङ्कं पद्मनाभं वैधरं मायामहाधनौ ।
पश्चिमं विजयं मायाशीर्षं विघ्नेशमीरयेत् ॥ ५७ ॥

विक्रमं सूक्ष्मदृष्टिं च गोपनं च चतुर्मुख ।
जन्मध्वंसं च कलशं पुलहं च द्विरुच्चरेत् ॥ ५८ ॥

पूर्ववच्च द्विरभ्यस्य पुष्टिबीजमथोद्धरेत् ।
गोपतिं गोपनं यष्टिं वरुणं चादि [4]बिन्दुकम् ॥ ५९ ॥

भास्करं भुवनं यष्टिं फट्कारं च ठठान्तिमम् ।
पीयूषं पवनं ब्रह्मसाधनं यष्टिशीर्षकम् ॥ ६० ॥

बीजमेतच्चतुर्वक्त्र [5]प्रधानार्णाङ्गकल्पना ।
[6]भवश्चास्य मुनिश्छन्दो अस्या उष्णिक्च देवता ॥ ६१ ॥

1. वैधरमचां $M_2$ 2. परं $M_2$ 3. पद्मजम् A 4. भद्रकम् $M_2$
5. प्रथमा $M_2$ 6. भवश्चापि $M_1$

द्विभुजां बालिकां पीनवक्षोरुहविभूषिताम् ।
करण्डमकुटोपेतां बिभ्राणां वनमालिकाम् ॥ ६२ ॥

दर्पणं वामहस्तेन बिभ्राणां दक्षिणेन तु ।
पुष्पमञ्जरिकां[1] द्वाभ्यां ध्यात्वा लक्षं जपेन्मनुम् ॥ ६३ ॥

अन्येषां भूषणानां च चतुर्थ्यन्तं समाह्वयम् ।
मन्त्रं नमोऽन्तं जानीयात् बीजमाद्यं प्रकल्पयेत् ॥ ६४ ॥

प्रभामनुं प्रवक्ष्यामि यथावदवधारय ।
उद्गीथमादिं नत्यन्तं [2]पश्चिमंत्वृतधामकम् ॥ ६५ ॥

भल्लायुधं चादिदेवं श्वसनं सूक्ष्मलोचनम् ।
अचां द्वितीयं श्वेतांशुं कमलं [3]चादिमत्वया ॥ ६६ ॥

पावकं चौषधं पद्मपाणिं वैराजमन्वतः ।
मृगेशं जन्मविध्वंसं ब्रह्मसाधनसंयुतम् ॥ ६७ ॥

ककुभं कलशं चादिदेवं पुलहमठजज ।
ओङ्कारं माधवीमग्निं मायामस्तक भूषितम् ॥ ६८ ॥

पाटलप्रियमाकारं पीताभं मधुविद्विषम् ।
श्रीवत्समादिं विजयं शशाङ्कं विष्णुमस्तकम् ॥ ६९ ॥

मार्ताण्ड[4]मिन्दुमनलं मधुसूदनमारुतौ ।
श्रियःपतिमथैकाक्षं गोपनं कमलोद्भव ॥ ७० ॥

अमृतं त्वृतधामानं विजयं कमलालयम् ।
ओतदेहं सुभद्रं च बन्धुमस्तकभूषितम् ॥ ७१ ॥

1. मञ्जलिकां T,$P_1$ 2. पश्चिमाद्दतधामकम् $M_1$ 3. त्वादिमत्तया $M_1$ 4. मिन्द्र $M_1$



विजयं गोपनं प्राणं हुंफट्कारं ठठान्तकम् ।
आद्यर्णं यष्टिसहितं बीजमस्य प्रकीर्तितम् ॥ ७२ ॥

ऋषिर्भास्कर एतस्य पङ्क्तिच्छन्दश्च देवता ।
प्रभा जपश्च मन्त्रस्य लक्षसंख्यः प्रकीर्तितः ॥ ७३ ॥

भोगांश्च पुष्कलान् भुक्त्वा मन्त्रविन्मन्त्रवैभवात ।
परं पदमवाप्नोति देहत्यागे न संशयः ॥ ७४ ॥

निगमादिं कौस्तुभं च गोपनं बिन्दुमैन्दवम् ।
विक्रमं वैधरं पुण्यं रामं [1]शुक्लसमाह्वयम् ॥ ७५ ॥

वैराजमग्निमाकारं स्पर्शनं विष्णुमस्तकम् ।
नत्यन्तमुद्धरेन्मन्त्रमेवमक्षस्रजः सुधीः ॥ ७६ ॥

अक्षमालाधरं ध्यायेद्द्विभुजं स्फटिकप्रभम् ।
अलङ्कृतं पीतवस्त्रं पद्मविष्टरसंस्थितम् ॥ ७७ ॥

वरदाभयदाकारं मन्त्रस्य च जपस्तथा ।
मन्त्री च महदाप्नोति [2]फलमत्यन्तदुर्लभम् ॥ ७८ ॥

उद्गीथं सुभगं शङ्खमूर्ध्वयष्टिमनन्तरम् ।
धनदं च हृषीकेशं मन्दरं ब्रह्मसाधनम् ॥ ७९ ॥

बहुलं चैकनेत्रं च पश्चान्तं बन्धुमस्तकम् ।
अनलं गोपनं शङ्खमचामादिं नतिं ततः ॥ ८० ॥

धूपपात्रमनुः प्रोक्तो घण्टामन्त्रः प्रवक्ष्यते ।
आम्नायादिं क्षितिधरं हृषीकेशं रविं तथा ॥ ८१ ॥

1. शुक्लोदयाह्वयम् $M_1$ 2. पद $M_1$

[1]गुहालयं च नासिक्यं पद्मपाणिं प्रचण्डकम् ।
[2]झषाकारेण संयुक्तं चतुर्गति नमस्कृतिः ॥ ८२ ॥

कथितं च मनुर्ब्रह्मन् दीपपात्रस्य कथ्यते ।
उद्गीथं [3]ककुभं चादिं गदध्वंसमचां मुखम्[4] ॥ ८३ ॥

पावकं विजयं जन्महन्तारं ब्रह्मसाधनम् ।
वैराजं विक्रमपरमनलं च गुहालयम् ॥ ८४ ॥

पश्चिमं चादिदेवं च श्वसनं नतिशीर्षकम् ।
दीपपात्रस्य कथितो [5]मनुः सम्प्रति कथ्यते ॥ ८५ ॥

ब्रह्मकोशमुखं ब्रह्मन् सप्तार्णं तदनन्तरम् ।
शशाङ्कं श्रीधरं दृष्टिमादिलक्ष्मीं हुताशनम् ॥ ८६ ॥

लम्बोधरं चादिदेवं दरं विष्णुं च माधवम् ।
नभोमणिमथो रामं पुलहं चादिमत्तथा ॥ ८७ ॥

वक्रतुण्डं विधातारं वक्रतुण्डमचां मुखम् ।
कमलं स्वृतधामानं यान्तश्च मधुसूदनम् ॥ ८८ ॥

मुसलं गोपनयुतं श्वसनं ककुभं ततः ।
अमृतं [6]पीतवर्णाभं हुम्फट्कारं ठठान्तिमम् ॥ ८९ ॥

शुक्लं मुखं सबिन्दुं च बीजमेवं समुद्धरेत् ।
तारं करालमाकारं पुलहं चादिमत्तथा ॥ ९० ॥

वक्रतुण्डं विधातारं बहुलं मधुविद्विषम् ।
आदिं चतुर्गतिं हुम्फडित्यादि हृदयादिषु ॥ ९१ ॥

---

1. विजयं स्वथनासिकयं $M_2$ 2. झषमाकार $T, P_1, P_2$ 3. कमलं $M_1$
4. मवाङ्मुखम् $M_2$ 5. मन्त्रः $M_1$ 6. पूर्णवर्णाभं फट्कारान्तं $M_2$; पीतवर्णाभं $P_1, P_2$



कालरुद्रोऽथ भगवानृषिश्छन्दः प्रकीर्तितम्[1] ।
[2]गायत्रं देवता चास्य हेतिराजस्सुदर्शनः ॥ ९२ ॥

जपेत् द्वादशलक्षं च सिद्धये मूलमन्त्रवत् ।
आदितः सप्तवर्णांश्च पूर्वोक्तान् शशिनं तथा ॥ ९३ ॥

श्रीधरं वैधरं विष्णुं श्रीवत्समनलं तथा ।
[3]भद्रहस्तादिदेवं च शंखादिं च चतुर्मुख ॥ ९४ ॥

सुदर्शनस्य कथितो द्वादशार्णात्मको मनुः ।
बीजमङ्गं यथापूर्वं द्रष्टाच कपिलःस्मृतः ॥ ९५ ॥

छन्दो विराड् देवता च हेतिराजः सुदर्शनः ।
[4]जपो द्वादशलक्षं च द्विषट्काक्षरवत् फलम् ॥ ९६ ॥

आम्नायादि च नरयन्तं सुदर्शनपदं ततः ।
चतुर्थ्यन्तं प्रयुञ्जीत फलमष्टाक्षरे तथा ॥ ९७ ॥

ऋषिर्भवस्तथा छन्दो [5]गायत्रं [6]हेतिसंज्ञितम् ।
पूर्वोदितं द्विषट्कार्णं माधवीमादिमुद्धरेत् ॥ ९८ ॥

नभोमणिं चादिदेवं वक्रतुण्डमचांमुखम्[7] ।
करालमृतमग्निं च गोपनं ककुभं तथा ॥ ९९ ॥

अचांद्वयं गन्धवहं मुखं दक्षं चतुर्मुख ।
गोपतिं गोपनमथो जृम्भलं चादिमत्तथा ॥ १०० ॥

माहेन्द्रं यादसां नाथं द्विरदं पन्नगाधिपम ।
स्पर्शनं नृहरिं कुम्भं रामं सुभगमन्वतः ॥ १०१ ॥

---

1. प्रकीर्तितः $P_1, P_2$ 2. गायत्री $T, P_1, P_2$ 3. भद्रहस्तं चादिदेवं $M_1$
4. जपेद् $M_1$ 5. गायत्री $T, P_1$ 6. हेतिराडिन: $M, P_2$ 7. वाङ्मुखम् $M_1$

प्राचेतस सयष्टिं च शुक्लमादिं दरं तथा ।
अमृतं बन्धुसहितं धनाध्यक्षमपां पतिम् ॥ १०२ ॥

नासिक्यं शशिनं चादिं मारुतं मन्दरद्वयम् ।
मुखं लक्ष्मी तथैकाक्षं वसुं चैव गुहालयम् ॥ १०३ ॥

सयष्टिं कुञ्जरमुखं गोपनं शुभदं दरम् ।
माधवीं गोपतिं चैव गोपनं कालनेमिजित् ॥ १०४ ॥

माहेन्द्रं गोपनं शङ्खं ककुभं कुम्भसंज्ञितम् ।
पुलहं मुसलं कुम्भं [1]माहेन्द्रं भुवनाह्वयम् ॥ १०५ ॥

गदध्वंसं हुतवहं वैराजं मृगवल्लभम् ।
जन्मध्वंसं [2]शशधरमेणेशं च ठठान्वितम् ॥ १०६ ॥

बीजमङ्ग यथापूर्वमृषिः स्यान्नीललोहितः ।
यष्टिच्छन्दश्च कथितो देवता हेतिराडसौ ॥ १०७ ॥

जपेल्लक्षत्रयं मन्त्री [3]जपस्यास्य च वैभवात् ।
निग्रहेऽनुग्रहे शक्तिः स्तम्भविद्वेषणादिकृत् ॥ १०८ ॥

चलाचलसमुद्रादिशोषणं कम्पनं तथा ।
तत्कटाक्षविनिक्षेपात् सृष्टयादीनां विधिर्भवेत् ॥ १०९ ॥

सुदर्शनमहामन्त्रं वक्ष्यामि चतुरानन ।
[4]मातृकाचक्रमालिख्य समभ्यर्च्य यथाविधि ॥ ११० ॥

स्वीकृत्य द्वादशार्णां च वक्रतुण्डमचांमुखम् ।
करालमग्निसहितं गोपनं मारुतं ततः ॥ १११ ॥

1. नत्यन्तं $M_2$  2. शशिधरं $M_1$  3. जपः स्यात्सिद्धिवैभवात्
4. मातृकां च समालिख्य



पश्चिमं पावकं खड्गमनलं च कृशानुकम् ।
विधातारं चादिदेवं पुलहं मधुसूदनम् ॥ ११२ ॥

दरं हुतवहं तार्क्ष्यं द्विर्वसुञ्च समुद्धरेत् ।
पाटलप्रियमाकारं दरं ध्रुवसमन्वितम्[1] ॥ ११३ ॥

लक्ष्मीं मुखं च वैराजमग्निं भुवनशीर्षकम् ।
द्विरदाननमाकारं कमलां मधुसूदनम् ॥ ११४ ॥

स्पर्शनं वैधरं चादिमनलं वैधरं तथा ।
अमृतं चादिदेवं च माहेन्द्रं च समीरणम् ॥ ११५ ॥

शुक्लं मुखं भास्करं च कमलं विक्रमं तथा ।
अनलं सुमुखं विष्णुं पद्मनाभविनायकौ ॥ ११६ ॥

जन्मध्वंसं च कलशं पुलहं बन्धुसंमितम् ।
वैराजं शुभदं रामं खर्वदेहं हुताशनम् ॥ ११७ ॥

वैधरं ऋतधामानं नृहरिं मृगवल्लभम् ।
पवित्रमृतधामानं माधवं भुजगं ततः ॥ ११८ ॥

चुतुर्गतिं तथा दृष्टिं चादिदेवं हुताशनम् ।
भुवनं चण्डमग्निं[2] च ऊकारं कमलोद्भव ॥ ११९ ॥

क्रोधरूपं दिनमणिं विघ्नेशं मधुसूदनम् ।
एकाक्षं मन्दरं पद्मं वैधरं गोपतिं तथा ॥ १२० ॥

पश्चिमं वक्रतुण्डं च खड्गं गोपनमन्वतः ।
भूधरं [3]मारुतं स्पर्शं तृतीयं [4]ककुभं तथा[5] ॥ १२१ ॥

1. विष्णुसमन्वितम् $M_1$  2. मग्निं $M_1$  3. मघवम् $M_2$
4. ककुभाह्वयम् $M_2$  5. ततः $M_1$

यान्तं च विजयंत्वग्निं[1]माकारं श्वेतरोचिषम् ।
[2]आदिं दरं तथेन्द्रं च विजयं ज्वलनं तथा ॥ १२२ ॥

श्रीधरं च गदध्वंसं भुवनं च हुताशनम् ।
उदयं चतुर्गतिं विघ्ननायकं [3]त्वेकचक्षुषम् ॥ १२३ ॥

स्वाहाधवं [4]गोपनं च यष्टिं च कमलालयम् ।
वक्रतुण्डं चोर्ध्वलोकं प्रचण्डं वसुमस्तकम् ॥ १२४ ॥

मारुतं वरुणं चाग्निं पश्चिमं [5]स्वान्तमब्जज ।
पवित्रमृतधामानं मारुतोदयसंज्ञितौ ॥ १२५ ॥

विरिञ्चिविजयौ [6]चाग्नि देवमन्दरश्रीधरौ ।
[7]मारुतात् षष्टमन्त्रं च पद्मां विजयमादिमत् ॥ १२६ ॥

यष्टिं लक्ष्म्यास्तृतीयं च शिखण्डं ब्रह्मसाधनम् ।
[8]खेटकं मारुतं पापहननं पावकं ततः ॥ १२७ ॥

शशाङ्कं विक्रमं [9]चार्तिदण्डनं विक्रमं तथा ।
अर्धेन्दुशेखरं पश्चात्पश्चान्तमृतधाम च ॥ १२८ ॥

नभोमणिं पवित्रं च पवनान्तं च मन्दरम् ।
गजाननं च विजयं दहनं बिन्दुशेखरम् ॥ १२९ ॥

नीहारदीधितिं यष्टि सान्तं चैवाग्नि[10]सप्तमम् ।
माधवीमिन्दुयान्तौ च दक्षं च मधुविद्विषम् ॥ १६० ॥

अर्धेन्दुमिन्दुमाकारं मन्दरं मायया युतम् ।
क्रोधरूपं हुतवहं भुवनं पुण्यविक्रमौ ॥ १३१ ॥

1. वह्नि $M_1$ 2. आदिदेवं $A, M_2$ 3. ए $M_1$ 4. गोघनं $M_2$
5. ता $M_1$ 6. चादिदेवं श्रीधरमन्दरौ $M_1$ 7. मरुतां षष्ठमादिं च $M_1$
मरुता त्रिषुमन्त्रं च T 8. खेटकीं T 9. चाग्निं गदिनं M 10. सप्तकम् A,T



यान्तं सुभद्रमोङ्कारं मुसलं द्विरदाननम् ।
धनदं विक्रमं स्पर्शं गोपनश्च चतुर्गतिम् ॥ १३२ ॥

वैराजं वामनं तार्क्ष्यं प्रचण्डं श्वेतदीधितिम् ।
विक्रमं वैधरं पुण्यं प्रचण्डं कुञ्जराननम् ॥ १३३ ॥

एकनेत्रं हुतवहं मधुसूदनसंज्ञितम् ।
यान्तोदयौ शुक्लोकौ बहुलं ब्रह्मसाधनम् ॥ १३४ ॥

सप्रार्चिं श्रीधरं [1]त्विन्द्रं यष्टिं [2]पञ्चान्तकं तथा ।
यान्तं चाग्निद्वितीयं च मन्दरं पवनद्वयम् ॥ १३५ ॥

भद्रपाणिमथैकाक्षं यान्तं च मधुविद्विषम् ।
लम्बकुक्षिं च विजयं शिखिनं मन्दरं तथा ॥ १३६ ॥

सर्वरोधं भद्रबाहुं माधवं कमलं ततः ।
नासिक्यं खर्वदेहं च वक्रतुण्डं सरोरुहम् ॥ १३७ ॥

यान्तं कुशेशयं कुम्भं सुमुखं द्वि(स्स)मुद्धरेत् ।
ओतदेहं [3]तथादिं च श्वसनं विजयं तथा ॥ १३८ ॥

करालमग्निवदनं मुखं पावकगोपनौ ।
नीहारदीधितिं चैव चषकं हव्यवाहनम् ॥ १३९ ॥

विघ्नेशं गोपनं चाग्नि मधुसूदनमारुतौ ।
चण्डं हुतवहं रामं पुलहं बन्धुशीर्षकम् ॥ १४० ॥

सुधामयमिकारं च माहेन्द्रं रामशीर्षकम् ।
स्पर्शान्तं विक्रमाद्यञ्च नत्यन्तं बन्धुमस्तकम् ॥ १४१ ॥

1. चेन्द्रं $M_2$ 2. पञ्चांशकम् $A_2$ 3. तदादिं $M_1$

खड्गं त्रिविक्रमं पीतवर्णाभं च त्रिविक्रमम् ।
माधवीं सर्वरोधं च [1]वैधरं मन्दरद्वयम् ॥ १४२ ॥

यान्तार्णाम्निरथं पश्चाद्यान्तं गोपनमस्तकम् ।
विहगेशं श्वेतरोचिं मुखं हुतवहं तथा ॥ १४३ ॥

श्रीधरं चैकनयनं पश्चिमं [2]बन्धुमस्तकम् ।
श्रीवत्सं चादिदेवान्तं प्रचण्डं कमलाभिधम् ॥ १४४ ॥

अथोर्ध्वलोकं श्रीवत्सं मन्दरं मधुविद्विषम् ।
प्रचण्डं पुण्डरीकाक्षं शुभदं च सरोरुहम् ॥ १४५ ॥

भुवनं गजमुखं बन्धुं बहुलं मृगवल्लभम् ।
अमृतं चैकनयनं पद्मबिन्दुं सुधामयम् ॥ १४६ ॥

विक्रमं कुञ्जरमुखं गोपनं [3]धूलिकेतनम् ।
करालं जन्मविध्वंसं [4]कुलिशं च हुताशनम् ॥ १४७ ॥

शशाङ्कमादिं यान्तं च वरुणं पुलहं तथा ।
हृषीकेशं तथैकाक्षं वरुणं बन्धुशीर्षकम् ॥ १४८ ॥

क्रोधरूपं [5]गोपतिं च दान्तं मन्दरगोपनौ ।
शिखिनं स्पर्शन चादिं षट्कृत्वः पुलहं क्षिपेत् ॥ १४९ ॥

जयं सदागतिं बन्धुं पीयूषं विक्रमाभिधम् ।
हिरण्यगर्भमनलं मन्दरद्वयमठजज ॥ १५० ॥

[6]पुण्डरीकाक्षमभ्यन्तं विजयं रामशीर्षकम् ।
नभोमणिं चादिदेवममृतं मायया युतम् ॥ १५१ ॥

1. मन्दरं वैधरद्वयम् $M_1$ 2. बन्धुसप्तकम् T 3. धूमकेतनम् $M_1$
4. कलशं $M_1$ 5. गोपनं $A, M_2$ 6. सुमुखं पुण्डरीकाक्षं $M_1$



अत्रिं च धनदं कुम्भद्वयमर्धेन्दुमादिमत् ।
हस्तिवक्त्रं च कमलमनलं च सुधामयम् ॥ १५२ ॥

अग्निं च गोपनं मान्तं श्रीधरं सुभगं तथा ।
स्पर्शत्रयं वृद्धद्यानुं गोपनं सुमुखं ततः ॥ १५३ ॥

माधवीं वासुदेवं च वैधरं माधवाह्वयम् ।
सुभद्रं चन्द्रधवलं मुसलं च द्विरुच्चरेत् ॥ १५४ ॥

ब्रह्मानन्तरं तस्य मारुतं मधुविद्विषम् ।
कुम्भं [1]सविक्रमं लक्ष्मीं सुधादीविति विक्रमौ ॥ १५५ ॥

क्रोधरूपं प्रचण्ड च भुवनं वक्रतुण्डकम् ।
करालं शिखिनं दक्षं भद्रहस्तं तथोदरम् ॥ १५६ ॥

ओषधीशं तथा दक्षं पावकं च ठठान्तिमम् ।
बीजमन्त्रं यथापूर्वमृषिर्दक्षः प्रजापतिः ॥ १५७ ॥

छन्दोऽतिच्छन्द एतस्य देवता च सुदर्शनः ।
सप्ताधिका सप्ततिश्च वर्णानां द्वे शते समे ॥ १५८ ॥

जपेन सिध्यति मनुर्लक्षद्वादशसंख्यया ।
कृष्णपक्षे चतुर्दश्यामुपोष्य प्रयतात्मवान् ॥ १५९ ॥

निशीथे दृढधीर्मन्त्री श्मशाने वा चतुष्पथे ।
जपेद्भूतादयस्तस्य प्रत्यक्षाः सर्वकामदाः ॥ १६० ॥

महासुदर्शनं मन्त्रमपरं कथयामि ते ।
द्विषट्काक्षरमुद्धृत्य गोपतिं मृगवल्लभम् ॥ १६१ ॥

1. त्रिविक्रमं $M_1$

वैराजं विक्रमपरमनलं[1] मधुसूदनम् ।
[2]गदध्वंसमचामादिं दक्षं दिनकराह्वयम् ॥ १६२ ॥

गोपनं धृतिमन्तं च पुलहं पश्चिमाननम् ।
ऋतधामा दिनमणिं पावकं सुमुखं ततः ॥ १६३ ॥

अमृतं ककुभं पद्मनाभं [3]गोपतिमब्जज ।
सुभगं बन्धुशिरसं पवित्रं विजयं तथा ॥ १६४ ॥

चतुर्गतिं देवदत्तं पश्चिमं बन्धुमस्तकम् ।
प्रचण्डं पुण्डरीकाक्षं गोपनं वैधराह्वयम् ॥ १६५ ॥

सरामं चैकनेत्रं च मारुतं ब्रह्मसाधनम् ।
अत्रिं चतुर्गतिं श्वेतदीधितिं च स्वर दिमत् ॥ १६६ ॥

विघ्नेशद्वितयं पश्चान्मायामस्तकमुद्धरेत् ।
सुभद्रं सूदनं शङ्खं वैधरं पद्मबिन्दुकम् ॥ १६७ ॥

पश्चिमं चैकनयनं सूदनं गदिनं तथा ।
भद्रबाहुं सरामं च ककुभं कुम्भगोपनौ ॥ १६८ ॥

माहेन्द्रं सूदनं विश्वरूपं भूधरमब्जज ।
शुभदं विजयं शुक्लं गोपनं श्वेतदीधितिम् ॥ १६९ ॥

ऋतं च सूदनं यान्तं देवरं मन्दरोदयौ ।
भृगुं खड्गधरौ द्वौ च माधवं भुवनाह्वयम् ॥ १७० ॥

आकारं वक्रतुण्डं च वैधरं श्रीधरं तथा ।
उग्रात्मानं पवित्रं च पद्मनाभं च माधवम् ॥ १७१ ॥

1. यान्तं च; वामनं A 2. जन्म $M_1$ 3. गोपनं $M_1$



नृहरिं सूदनं शुक्लं भुवनं बहुलद्वयम् ।
तार्क्ष्यं झषं [1]गोपनं च कमलं बन्धुमस्तकम् ॥ १७२ ॥

विघ्नेशं वामनमपरं सुभद्रं सगुहालयम् ।
एकनेत्रं चादिदेवं पश्चिमाननमब्जज ॥ १७३ ॥

शुक्लं दक्षं सूदनं च यान्तं पश्चिमवक्त्रकम् ।
ऋतधामं तथा दक्षं सर्वरोधं सपश्चिमम् ॥ १७४ ॥

विक्रमं शुभदं चादिदेवं खड्गधरं तथा ।
चतुर्गतिं वासुदेवं गदध्वंसं सविक्रमम् ॥ १७५ ॥

भद्रहस्तं पद्मबिन्दुमोषधीशं करालकम् ।
विघ्नेशं वैधरं कुम्भं विकाममनन्तरम् ॥ १७६ ॥

कुञ्जराननमाकारं चतुर्गतिमचां मुखम् ।
[2]शिखिनं मानुषेशं च नृहरिं स्पर्शषोडशीम् ॥ १७७ ॥

ऋतधामोतदेहं च भद्रबाहुमनन्तरम् ।
अचां द्वितीयं दृष्टिं च गदिनं पद्मनाभकम् ॥ १७८ ॥

मार्ताण्डं सूदनं विघ्ननायकं विजयं तथा ।
पद्मनाभं [3]गोपनं च शुक्लमादिं दराह्वयम् ॥ १७९ ॥

तरसमष्टिं द्विरुच्चार्य सोममादिं सयष्टिकम् ।
भास्करं पावकं चैव द्विर्वक्तव्यं तदक्षरम् ॥ १८० ॥

पीयूषं विक्रमं पुण्यं कलशं यष्टिशीर्षकम् ।
शशाङ्कमादिं शङ्खं च पूर्ववत् कमलोद्भव ॥ १८१ ॥

1. गोपति $M_2$ 2. शङ्खिनं $M_1$ 3. गोपतिं $M_2$

पीयूषं रामशिरसं स्पर्शानामपि षोडशम् ।
ऋतं च सूदनं शुक्र[1]मन्त्रिञ्चैव यथापुरम् ॥ १८२ ॥

तार्क्ष्यद्वयं च कमलां विजयं ऋतधाम च ।
हृषीकेशं तथा भद्रद्वयं मधुनिषूदनम् ॥ १८३ ॥

श्रीवत्सं चादिमनलं च श्रियःपतिमनन्तरम् ।
पद्मान्तकं पद्मनाभमेकाक्षं मृगवल्लभम् ॥ १८४ ॥

जन्मध्वंसं श्वेतरश्मिमेणेशं दृष्टिवामनौ ।
सुभद्रं बन्धुशिरसं स्पर्शानां षोडशाक्षरम् ॥ १८५ ॥

विक्रमं चैकविंशं च बन्धुं तन्मस्तकस्थितम् ।
सुमुखं पवनाह्वानं ब्रह्मसाविजयाह्वयम् ॥ १८६ ॥

दहनं भद्रममृतं मतिमन्तं च सूदनम् ।
विक्रमं माधवीमग्निं वासुदेवं चतुर्मुख ॥ १८७ ॥

भल्लायुधं श्रीधरं च मुसलं प्रेतनायकम् ।
माधवं वैधरं विघ्ननायकं द्वितयं तथा ॥ १८८ ॥

अचां द्वितीयं पद्मान्तं विष्कम्भं द्विरदाननम् ।
धरित्रीं कमलाक्षं च सूक्ष्मदृग्बन्धुमस्तकम् ॥ १८९ ॥

वक्रतुण्डं मानुषेशमप्रमेयं वनस्रजम् ।
प्रचण्डं गोपनं शुक्रं भुवनं बहुलं तथा ॥ १९० ॥

विघ्नेशं वैधरं प्रेतनायकं माययायुतम् ।
हैरम्बं वैधरं चादिं पश्चिमं ऋतधामकम् ॥ १९१ ॥

1. उग्रं चैव $M_2$ ; वायुं चैव $M_1$



विजयं रामशिरसं भास्करं विजयाह्वयम् ।
अत्रिं मृगेशं वरुणं गोपनं श्वेतदीधितिम् ॥ १९२ ॥

श्रीधरं बहुलं पीतं जृम्भलं मोहनाशनम् ।
पश्चिमं भुवनं विघ्ननायकं द्वितयं तथा ॥ १९३ ॥

अचां द्वितीयं कमलमादिं शङ्खं विनायकम् ।
पश्चिमं भुवनं बिन्दुं शशाङ्कं द्विगुणं तथा ॥ १९४ ॥

भद्रबाहुं सरामं च सुधादीधितिगोपनौ ।
यान्तं समीरणं चादिं पश्चिमं जातवेदसम् ॥ १९५ ॥

अमृतं विक्रमपरं वैधरं [1]चानलं वसु ।
[2]गोपनं विजयं विघ्ननायकं विजयाह्वयम् ॥ १९६ ॥

ऋतधामं सरसिजं पद्मनाभं पितामह ।
वैराजं श्वसनं चादिदेवं भल्लायुधं करम् ॥ १९७ ॥

श्वसनं प्रणवादिं च विघ्नेशं [3]सर्वविक्रमौ ।
करालमृत[4]धामान्तं विजयं घनसंज्ञितम् ॥ १९८ ॥

स्वच्छन्द[5]मथदृष्टिं च चतुर्गतिमनन्तरम् ।
शशाङ्कं फुल्लनयनं वासुदेवं च खेटकम् ॥ १९९ ॥

शङ्खं पुरुहमोङ्कारं मार्ताण्डं पश्चिमाननम् ।
क्रोधं वनस्रजं भूमिं नासिक्यं श्वेतदीधितिम् ॥ २०० ॥

षोडशं कपिलं [6]भानुं चतुर्गतिमनन्तरम् ।
विधातारं तथा शैलं विजयं कमलोद्भव ॥ २०१ ॥

1. चानिलं तथा $M_2$ ; गोपनं $M_1$ 2. कपिलं $M_1$ 3. शर्वं $M_2$
4. मृतधामानं 5. माधवं दृष्टिं A ; मधुदृष्टिं $M_1$ 6. मल्लं $M_1$

अचांत्रयोदशं चाग्निं कमलं चन्द्रदीधितिम् ।
वक्रतुण्डं चादिदेवं शङ्खं पीत[1]मचां मुखम् ॥ २०२ ॥

पूर्णचन्द्रं तथा दक्षं भुवनं वैधरात्मकम् ।
पद्मनाभं ध्रुवं लक्ष्मीं ब्रह्मसाधनसंज्ञितम् ॥ २०३ ॥

क्रोधरूपं दरं चादिं माधवं गोपतिं तथा ।
विक्रमं माधवं भानुं सरामं सूक्ष्मलोचनम् ॥ २०४ ॥

गदध्वंसं च पीयूषं विघ्नेशं पश्चिमाननम् ।
अचांद्वितीयं शुभदं सूदनं यष्टिशीर्षकम् ॥ २०५ ॥

करालं श्रीधरं लक्ष्मीं मृगेशं द्विरदाननम् ।
पद्मपाणिं भूधराख्यं द्वयं [2]वैधरमाधवी ॥ २०६ ॥

पश्चिमं पवनं लक्ष्मीं ब्रह्मसाधनसंज्ञितम् ।
क्रोधरूपमचामादिं स्पर्शनं दक्षगोपनौ ॥ २०७ ॥

यान्तं चतुर्गतिं पापहननं बहुलं तथा ।
वक्रतुण्डं करालं च [3]ककुभं ऋतधाम च ॥ २०८ ॥

भद्रबाहुं [4]चलध्वंसं मृगेशं दृष्टिमादिमम् ।
द्विरदाननयष्टिं चानलं गोपनाह्वयम् ॥ २०९ ॥

[5]सध्रुवं पुलहं बिन्दुं माहेन्द्रं मधुसूदनम् ।
अर्धचन्द्रं तथा चन्द्रं नासिक्यं तद्विरुद्धरेत् ॥ २१० ॥

शशाङ्कमृतधामानं सूदनं यष्टि[6]शीर्षकम् ।
तद्द्विरभ्यस्य [7]शीतांशुमर्पितं वसुमस्तकम् ॥ २११ ॥

---

1. मवाङ्मुखम् $M_1$ 2. भूधर $M_2$ 3. ऋतधाम च धाम च M; ऋतधामविदर्भितम् $M_1$ 4. गदध्वंसं $M_1$ 5. बिन्दूलं $M_1$ 6. मस्तकम् $M_1$ 7. शीतांशु भुवनं वसुमर्पितम् $M_1$



पुलहं वासुदेवाख्यं स्रष्टारं द्विरदाननम् ।
विक्रमं [1]बहुलं ब्रह्मन् गोपनं पुलहं तथा ॥ २१२ ॥

प्रचण्डं अन्नविध्वंसं विघ्नेशं च [2]तृतीयकम् ।
अचां [3]दृष्टिं द्वितीयान्तं भद्रबाहुं पवित्रकम् । २१३ ॥

ऋतं चकारद्विरदं चाननं मन्दराह्वयम् ।
प्रद्योतनं गोपनं च शशाङ्कं च श्रियःपतिम् ॥ २१४ ॥

वैधरं शुभदं चाग्निं श्रीवत्सं ब्रह्मसाधनम् ।
सुमुखं विक्रमपरं विजयं सुखमब्जज ॥ २१५ ॥

अत्रिं सरामं पद्मान्तं सुभगं मधुसूदनम् ।
यष्टिं करालमाकारं चतुर्गतिमनन्तरम् ॥ २१६ ॥

अपांपतिं श्वेतरश्मिं श्रियःपति[4]मतः परम् ।
स्तम्बेरमाननं मायां कलशं [5]दीप्तरोचिषम् ॥ २१७ ॥

सुभगं गोपनं यान्तं गोपनं पश्चिमाननम् ।
हृषीकेशं वसुं शङ्खं गोपनद्वितयं पुनः ॥ २१८ ॥

यष्टिबीजं द्विरुच्चार्य तिग्मदीधिं[6] पवित्रकम् ।
ऋतधामं तथैकाक्षं विक्रमं बहुलाह्वयम् ॥ २१९ ॥

गदध्वंसं तथैकाक्षं विक्रमं बहुलाह्वयम् ।
[7]गुहालयं [8]पापहननमृतं मधुविद्विषम् ॥ २२० ॥

रोचिः श्रियःपतिं कान्तं वैधरं माधवं तथा ।
पीयूषमादिं कमलनशिवं[9] धनदाह्वयम् ॥ २२१ ॥

---

1. पुलहं $M_1$ 2. द्वितीयकम् $M_1$ 3. दृष्टिद्वयं यान्तं $M^1$ 4. मनन्तरम् $M_1$ 5. सप्त $M_2$ 6. द्युतिं $M_1$ 7. गुहाश्रयं $M_2$ 8. पापहरम $M_1$ 9. नलं $M_1$

ऋतधाम तथैकाक्षमचामेकादशं तथा ।
द्विरुद्धरेत् कामबीजं वैधरं [1]तूदयाह्वयम् ॥ २२२ ॥

गदध्वंसं तथैवाग्निमस्तकस्थं पवित्रकम् ।
गोपनं विजयं चादिदेवं विष्कम्भसंज्ञितम् ॥ २२३ ॥

त्रिदशाकारमेकारं[2] श्वेतांशुं विक्रमं तथा ।
गजवक्त्रं सूदनं च कपिलाक्षमनन्तरम् ॥ २२४ ॥

तृतीयं ककुभं द्वन्द्वमस्तकस्थं[3] वसुं पुनः ।
जन्मध्वंसं च जलजं [4]सुधादीधितिविक्रमौ ॥ २२५ ॥

[5]कलशं पुरुषात्मानं गहनं पद्मनाभकम् ।
भास्करं सुमुखं ब्रह्मन् भुवनं विजयं वसु[6] ॥ २२६ ॥

द्रुहिणं ऋतधामानं भूधरे क्रोधनं ततः ।
स्वर्शानां षोडशार्णश्च [7]कुम्भेशं मुसलं ततः ॥ २२७ ॥

नीहारदीधितिमचामेकादशमतः परम् ।
[8]ज्वलनं मानुषघ्नं च विघ्नेशं गोपनाह्वयम् ॥ २२८ ॥

श्रीवत्सं जलजं शुक्रमचामादिं सरोरुहम् ।
चतुर्गतिं भद्रहस्तं विजयं पद्मनाभकम् ॥ २२९ ॥

हैरम्भं गोपनं चैव गादिनं कलुषापहम् ।
अचां द्वितीयं कमलं गोपनं वित्तवर्धनम् ॥ २३० ॥

[9]हरिणाननमाये द्वे ककुभं वरुणाह्वयम् ।
ब्रह्मन् पञ्चान्तकमतः धृतवासुमतः परम् ॥ २३१ ॥

1. वरुणाह्वयम् $M_2$ 2. माकारं $M_1$; मैकारं T 3. मस्तकं सरसं पुनः $M_1$ 4. सुधानिधित्रि $M_1$ 5. मुसलं $M_2$ 6. सुखम् $M_2$ 7. मृगेशं A 8. अनलंमानुषेशं $M_2$ 9. वारणानन $M_2$



वैराजमग्निं नृहरिं ब्रह्मसाधनसंज्ञकम् ।
सुभद्रं सुमुखं कुम्भं मारुतं चोतदेहकम् ॥ २३२ ॥

दक्षं दाक्षायणीकान्तं मन्दरं पञ्चबिन्दुकम् ।
धूमध्वजं प्रचण्डं च सूदनं [1]कतृतीयकम् ॥ २३३ ॥

[2]हरिवक्त्रं रामसंज्ञं दृष्टिविक्रममब्जज ।
शुभदं कपिलं ह्रस्वं[3] भद्रहस्तं समीरणम् ॥ २३४ ॥

नीहारदीधितिमचामादिं कुम्भं हुताशनम् ।
शुक्रमोङ्कारसंयुक्तं सुभद्रं मधुसूदनम् ॥ २३५ ॥

स्पर्शं तृतीयमनलं विजयं सप्तमीं कलाम् ।
विक्रमं सूक्ष्मदृष्टिं च श्रीधरं यादसां पतिम् ॥ २३६ ॥

हेरम्बं वासुदेवं च भद्रहस्तं[4] च माधवीम् ।
अचांद्वितीयं [5]दृष्टिं च कमलं बहुलं तथा ॥ २३७ ॥

स्पर्शान्तं भुवनं चक्रं भृगुं ककुभसंज्ञितम् ।
नभोमणिं विक्रमं च पाटलं मधुविद्विषम् ॥ २३८ ॥

भल्लायुधं बन्धुशीर्षं विघ्नेशं वैधराह्वयम् ।
वक्रतुण्डमचामादिं कमलं पीठपूर्वकम् ॥ २३९ ॥

गोपनं मानुषं चैव [6]पुलहं बन्धुह[7]स्तकम् ।
ओतदेहं तथापीतं जन्मध्वंसं त्रिविक्रमम् ॥ २४० ॥

गोपतिं वरुणं विघ्ननायकं ऋतधामकम् ।
एकाक्षं मारुतं चादिदेवं बहुलमस्तकम् ॥ २४१ ॥

1. सत्तृतीयकम् $M_1$ 2. करि $M_1$ 3. ब्रह्मन् $M_1$ 4. बाहुं $M_1$ 5. तुष्टिं $M_2$ 6. पुलहद्वयमस्तकम् $M_2$ 7. मस्तकम् T

[1]पवनं सुक्ष्मदृक् प्रोक्तं सूदनं च चतुर्गतिम् ।
सुभद्रं च बृहद्भानुं गदिनं वरुणं मुखम् ॥ २४२ ॥

जयं कुम्भेशमखिलमृतं भुवनसंज्ञितम् ।
दृष्टिं च धनदं दक्षं हृषीकेशं जयाह्वयम् ॥ २४३ ॥

शशाङ्कं भुवन चादिं कमलामद्रिमस्तकम् ।
विघ्नेशं पश्चिमं बन्धुं नासिक्यं गदिनं तथा ॥ २४४ ॥

माहेन्द्रं शशिनं देवदत्तं लक्ष्मीं श्रियः पतिम् ।
[2]पश्चान्तकं पद्मनाभं गोपनं विघ्ननायकम् ॥ २४५ ॥

अमृतं समीरणमचां द्वितीयं पश्चिमाननम् ।
वैराजं माधवीमूर्ध्वलोकेशं विजयद्वयम् ॥ २४६ ॥

बहुलं समीरणं देवदत्तं मन्दरगोपनौ ।
गोपनं चौषधीशं च भुवनं वैधशाह्वयम् ॥ २४७ ॥

श्रीवत्समग्निं विघ्नेशं गोपनं च चतुर्गतिम् ।
हुम्फट्कारं ठठान्तं च [3]मनुमेवं समुद्धरेत् ॥ २४८ ॥

बीजाङ्गानि यथापूर्वमृषिः स्यान्नीललोहितः ।
छन्दश्च वरिवस्संज्ञं देवता च सुदर्शनः ॥ २४९ ॥

अष्टलक्षं जपेद्ब्रह्मन् पाताले दिवि वा भुवि ।
गतिर्न प्रतिहन्येत मन्त्रिणो मन्त्रवैभवात् ॥ २५० ॥

सुदर्शन नृसिंहाख्यं मन्त्रं ब्रूमि चतुर्मुख ।
उद्गीथं नृहरिं पद्मनाभं सङ्कर्षणाह्वयम् ॥ २५१ ॥

1. पावनं $M_2$ 2. पश्चात्मकं T 3. मन्त्र $M_1$



नासिक्यं शुक्रमादिं च गोपतिं प्रणवादि च ।
नीहारदीधितिं पद्मनाभं च मधुविद्विषम् ॥ २५२ ॥

अनलं ककुभं कुम्भं गोपनं [1]पुलहात्मकम् ।
अचांद्वितीयं स्पर्शान्तं सूदनं पुलहाह्वयम् ॥ २५३ ॥

विक्रमं कुञ्जरमुखं [2]माधवं तस्य मस्तके ।
मार्ताण्डं भद्रहस्तं च द्विरुच्चार्य प्रभाकरम् ॥ २५४ ॥

श्रीधरं कपिलाक्षं च फट्कारं खेटकी ततः ।
ठठान्तमेवं कथितं द्वाविंशत्यक्षरात्मकम् ॥ २५५ ॥

बीजमङ्गानि चोक्तानि छन्दो गायत्रमीरितम् ।
द्रष्टा च जमदग्निः स्याद्देवता च सुदर्शनः ॥ २५६ ॥

सुदर्शनस्य हृदये विष्टितं नृहरिं हरिम् ।
स्फटिकाचलसङ्काशं परश्शतसटाकुलम् ॥ २५७ ॥

[3]प्रलयाम्बुदनिर्घोष गम्भीर [4]गहनध्वनिम् ।
शङ्खचक्रधरं द्वाभ्यां कराभ्यामितरौ पुनः ॥ २५८ ॥

प्रसार्य जानुनीभीमं नखदम्भोलि [5]भीषणौ ।
व्यत्यस्तचरणद्वन्द्वमासीनं पद्मविष्टरे ॥ २५९ ॥

भ्रुकुटीकुटिलं योगपट्टिकादृढबन्धनम् ।
व्यादाय वक्त्रकुहरं दंष्ट्रिणं स्फुरिताधरम् ॥ २६० ॥

त्रिणेत्रमखिलाकल्पकल्पितं ब्रह्मगर्जितम् ।
ध्यायेद्देवं च तन्मन्त्रं मन्त्री तरति दुर्गतिम् ॥ २६१ ॥

1. पुलहात्यजम् $M_1$ 2. वामनं A 3. हाराद्यङ्गदनिर्घोषगम्भीर-भयदध्वनिम् A, $M_2$ 4. भयद $M_1$ 5. संमितौ $M_1$; निर्मितौ $M_2$

सकृत्स्मरणमात्रेण यथाभिलषितं फलम् ।
अन्येषु मन्त्रकल्पेषु यदुक्तं तत् समश्नुते ॥ २६२ ॥

वक्ष्यामि पाञ्चजन्यस्य मन्त्रं सर्वार्थसाधनम् ।
उद्गीथमादौ सप्तार्णानुध्दृत्य तदनन्तरम् ॥ २६३ ॥

पश्चिमं भुवनं चण्डं पुण्डरीकं हुताशनम् ।
महामायां करालं च गोपनं पन्नगाधिपम् ॥ २६४ ॥

सूदनं च तथा शङ्खं [1]कलशं मधुसूदनम् ।
मारुतं भुवनाह्वानं मन्दरं भुवनं ततः ॥ २६५ ॥

खर्वदेहं तथा चादिदेवं श्वसनमादिमत्[2] ।
वैधरं पञ्चबिन्दुं च पश्चिमं विजयं ततः ॥ २६६ ॥

यान्तं गुहालयं पापहननं मधुविद्विषम् ।
शङ्खं लक्ष्मीं तथायष्टिं खर्वदेहं च पश्चिमम् ॥ २६७ ॥

आदिदेवं महेन्द्रं च मधुसूदनशीर्षकम् ।
वायुं ठठान्तमुदितमिति प्रोक्तो मनुर्महान् ॥ २६८ ॥

श्रीवत्सो यष्टिरुद्गीथो बीजमेतत् प्रकीर्तितम् ।
अमुष्य सनको द्रष्टा छन्दः स्याद्बृहती मनोः ॥ २६९ ॥

देवता पाञ्चजन्यश्च चतुर्लक्षो जपस्स्मृतः ।
अतोऽन्यं पाञ्चजन्यस्य मन्त्रं शृणु चतुर्मुख ॥ २७० ॥

सप्तार्णमुद्धरेदादौ पश्चिमं मधुसूदनम् ।
भृगुं चन्द्रधरं खड्गधवलं ककुभाह्वयम् ॥ २७१ ॥

1. कमलं $M_2$ 2. मादित: A



गजवक्त्रं तथा वायुमादिदेवसमीरणौ ।
पश्चिमं सप्तममर्चां सुमुखं निगमादिकम् ॥ २७२ ॥

पीयूषमत्रिं [1]सुभगं वरुणं मधुविद्विषम् ।
गजास्यमादिदेवं च श्वसनं श्वेतरोचिषम् ॥ २७३ ॥

वैधरं गोपनं चापि गदध्वंसं चतुर्मुख ।
वैराजं विक्रमं दक्षं श्रीधरं तार्क्ष्यवाहनम् ॥ २७४ ॥

गोपनं स्पर्शनं [2]जन्नहन्तारं सलिलाधिपम् ।
माहेन्द्रमादिं ज्वलनं तथार्चां षष्ठपञ्चमौ[3] ॥ २७५ ॥

गोपनं पश्चिमं गोपं पीतवर्णं मधुद्विषम् ।
श्वसनं च ठठान्तं च मनुरित्थमुदाहृतः ॥ २७६ ॥

बीजमङ्गानि [4]वै तस्य देवता चापि पूर्ववत् ।
विष्वक्सेनो ऋषिश्छन्दः सुप्रतिष्ठा पितामह ॥ २७७ ॥

पञ्चलक्षजपेनास्य साधको मन्त्रवैभवात् ।
अतलादिषु लोकेषु [5]चरन्न प्रतिहन्यते ॥ २७८ ॥

किं पुनर्धर्मकामार्थमोक्षाः कमलसम्भव ।
सप्तार्णमग्रे गोविन्दं गदिनं हलिसूदनौ ॥ २७९ ॥

चतुर्गतिं [6]चातिवीरं [7]भल्लायुधमर्चां मुखम् ।
अपां पतिं हुतवह [8]माकारं पश्चिमाननम् ॥ २८० ॥

रामं प्रचण्डं गोविन्दं ब्रह्मसङ्कर्षणावपि ।
मन्दरं वायुदेवाह्वं वैधरं विष्णुमस्तकम् ॥ २८१ ॥

1. सुमुखं $M_2$ 2. चैव $M_1$ 3. पाश्चमौ $T, P_1, P_2$ 4. चै $M_1$
5. गतिर्न $M_2$ 6. चादि T ; चाय $M_1$ 7. सुभगं गदिनं तथा $M_1$ 8. मूकारं T

कुशेशयधरे वीरसेनं हुम्फट् ठठान्तिमम् ।
इति कौमोदकीमन्त्रमुद्धरेद्बीजमस्य तु ॥ २८२ ॥

स्पर्श[1]द्वितीयमर्धेन्दुमेतेनैवाङ्गकल्पना ।
ऋषिः कृष्णस्तथा छन्दः पङ्क्तिः कौमोदकी पुनः ॥ २८३ ॥

देवता लक्षमन्त्रं च जपतः सिद्धिदो [2]भवेत् ।
आदावुध्दृत्य [3]चोङ्कारं गोपनं दृष्टिविक्रमौ ॥ २८४ ॥

वैराजं मारुतं पापहननं [4]वसुमस्तकम् ।
वैराजं बन्धुशिरसं माधवीं सूदनं [5]दरम् ॥ २८५ ॥

पाटलप्रियमाकारं समीरण [6]मचां मुखम् ।
यान्तं गुहालयं ब्रह्मन् पश्चिमं बन्धुमस्तकम् ॥ २८६ ॥

सुमुखं देवदत्तं च हुम्फट्कारं ठठान्तिमम् ।
नादं पकारमूकारमर्धेन्दुशिरसं पुनः ॥ २८७ ॥

बीजं प्रकल्पयेद्ब्रह्मन् अमुनैवाङ्गकल्पना ।
द्रष्टा विरिञ्चश्छन्दश्च विराट् पद्मोधिदेवता ॥ २८८ ॥

दशलक्षजपात् [7]ऋद्धिमखिलां प्राप्नुयान्नरः ।
इति पद्ममनुः प्रोक्तो बीजेनास्याङ्गकल्पना ॥ २८९ ॥

शुक्लं पुनर्विष्णुर्वह्नि पीयूषं गोपनाह्वयम् ।
सप्तार्णोद्धरणात्पश्चान्मन्दरं [8]कमलासन ॥ २९० ॥

शशाङ्कमादिं पुलह गोपनं पवनं पुनः ।
ज्वलनं गोपनं दक्षं गोपनं कमलोद्भव ॥ २९१ ॥

---

1. द्वितय A  2. मनुः $M_1$  3. चोद्गीथं $M_2$  4. विजयं तथा $M_2$
5. ततः $M_1$  6. मधुद्विषम् $M_1$  7. सिद्धिरखिलं $T, P_1, P_2$  8. कमलाधरम् $M_1$



चतुर्गतिं च भुवनं सुमुखं मधुविद्विषम् ।
दरं मुखं ठठान्तं च मन्त्रविन्मन्त्रमुद्धरेत् ॥ २९२ ॥

मन्दरं भुवनं यष्टिं इति बीजमिदं मनोः ।
मुद्गलः स्यादृषिश्छन्दो विराण्मन्त्रस्य देवता ॥ २९३ ॥

मुसलः पञ्चलक्षं तु मन्त्रमस्य प्रचक्षते ।
उध्दृत्य सप्तवर्णांश्च हैरम्बं मधुसूदनम् ॥ २९४ ॥

[1]गजाह्वमत्रिं कमलं मधुशत्रुं चतुर्गतिम् ।
विष्णुं शुक्लं पुनर्विष्णुं वह्निपीयूषगोपनाः ॥ २९५ ॥

शशाङ्कं भुवनं वह्निं श्रीवत्सं ब्रह्मसाधनम् ।
सुमुखं विक्रमं चापि विजयं वैधरं तथा ॥ २९६ ॥

रामं पञ्चान्तकं पुण्यं गोपनं यष्टिशीर्षकम् ।
पञ्चान्तकं गोपनं च श्वसनं हुङ्कृतिं तथा ॥ २९७ ॥

फट्कारं स्वाहयासार्धं खड्गस्य गदितो मनुः ।
चक्रमन्त्रस्य बोजं स्यात् ऋषिः श्रीनिधिरुच्यते ॥ २९८ ॥

छन्दो विराडधिपतिः [2]खड्गाख्यो हेतिराड् भवेत् ।
लक्षत्रयं जपेन्मन्त्री काङ्क्षितां सिद्धिमश्नुते ॥ २९९ ॥

सप्तार्णं कल्पयित्वादौ श्रीवत्सं मधुसूदनम् ।
शार्ङ्गहस्तं गदध्वंसं मधुसूदनशीर्षकम् ॥ ३०० ॥

ज्वलनं पवनादिं च वह्निं शुक्लमपांपतिम् ।
मधुसूदनपूर्णेन्दु भुवनं हव्यवाहनम् ॥ ३०१ ॥

---

1. गजास्य $M_2$  2. खड्गाढ्यो $M_1$

पवित्रं सप्तममचां श्रियं मन्दरमादिमत् ।
विघ्नेशं गोपनं शङ्खं मुखं पश्चिमश्रीधरम् ॥ ३०२ ॥

बहुलं भुवनं क्रोधं त्रयोदशमचां तथा ।
हुताशमेकदृष्टी द्वौ मन्दरं पद्मसम्भव ॥ ३०३ ॥

पवित्रमृतधामानं वायुं यष्टिं मधुद्विषम् ।
चतुर्गतिं हुङ्कृतिं च फट्कारं च ठठन्तिमम् ॥ ३०४ ॥

हुम्फडन्तं मनुं कृत्वा बीजमाद्यर्णमुद्धरेत् ।
ऋषिर्हुतान्तो मन्त्रस्य छन्दश्छन्दोऽधिदेवदा ॥ ३०५ ॥

पाणौ जपन्नष्टलक्षं समरे विजयी भवेत् ।
ब्रह्मकोशं नतिं सर्गं कलात्मा कमलाह्वायम् ॥ ३०६ ॥

[1]माहेन्द्रं गोपनपरं शुभदं मधुविद्विषम् ।
शशाङ्कं श्रीधरं वह्निं वरुणं बन्धुमस्तकम् ॥ ३०४ ॥

विघ्नेशमादिदेवं च शुभदं गोपनं तथा ।
पवनं कूट[2]मौर्वं च नासिक्यं भास्करो मनुः ॥ ३०८ ॥

यष्टिं हुङ्कारफट्कारौ हुतान्तं मनुमुद्धरेत् ।
पीयूषमादिमर्धेन्दुं बीजं चामुष्य कल्पयेत् ॥ ३०९ ॥

शतदृग्दृष्टवान् मन्त्रं माच्छन्दो देवतापि च ।
पञ्चलक्षं जपेन्मन्त्रं विजयेत्तरसा रिपून् ॥ ३१० ॥

उद्गीथं पापघ्ननं गोपनं सध्रुवं मनुः ।
पश्चिमं गोपनं लक्ष्मीमादिदेवसमीरणौ ॥ ३११ ॥

1. यष्टिं हुङ्कारमाहेन्द्रं गोपनं $M_1$   2. मौर्वीं च T



नत्यन्तं कल्पयेन्मन्त्रं ऋषिः प्राचेतसः स्मृतः ।
छन्दो विराडधिपतिः पाशो लक्षत्रयं जपः ॥ ३१२ ॥

ब्रह्मकोशमचामादिं नासिक्यं सरसीरुहम् ।
भुवनं शुभदं पश्चादादिदेवं सदागतिम् ॥ ३१३ ॥

नत्यन्तमीरयेन्मन्त्रं द्रष्टा सत्यो विराट् पुनः ।
छन्दोऽङ्कुशो देवता स्याल्लक्षत्रयमिमं जपेत् ॥ ३१४ ॥

प्रणवादि चतुर्थ्यन्तं नामधेयं ठठान्तकम् ।
अन्येषामायुधानां च मन्त्रबीजमथादिमत् ॥ ३१५ ॥

सिद्धयश्च यथापूर्वं भवन्ति जपतोऽखिलाः ।
अतो वक्ष्ये मनुं ब्रह्मन् श्रूयतां कथ्यतेऽधुना ॥ ३१६ ॥

वश्याकर्षणविद्वेषमारणोच्चाटनादिषु ।
शोषणस्तम्भनावेश[1]सर्वाकर्षणकर्मसु ॥ ३१७ ॥

नष्टधनविषक्षेप समुद्रतरणादिषु ।
नभोलङ्घनवाय्वग्निजलभूमिप्रवेशने ॥ ३१८ ॥

इन्द्रजालादिविद्यासु [2]ऋषीणां विजये तथा ।
अतीतानागतज्ञाने भूतसंवनने तथा ॥ ३१९ ॥

देवतासन्निधानादौ [3]स्फोटमुष्यादिकर्मणि ।
एवमादिषु साध्येषु तथान्येष्वपि [4]कर्मसु ॥ ३२० ॥

इति मन्त्रं प्रयुञ्जीत गरुत्मन्तमनुस्मरेत् ।
सप्तार्णान् पूर्वमुध्दृत्य गदिनं हव्यवाहनम् ॥ ३२१ ॥

1. सर्पा T,$P_2$   2. ऋणानां $M_2$; सुराणां A   3. स्फुटमुष्ट्र्यादि $M_2$
4. मन्त्रवित् $M_1$

भुवनं पुण्डरीकाक्षं गोपनं पवनं पुनः ।
पश्चिमं भुवनं वह्निं श्रीधरं क्रोधविग्रहम् ॥ ३२२ ॥

ब्रह्मसाधनवैराजौ जयं मन्दरमादिमत् ।
अमृतं गोपनं चापि गोपतिं द्विरदाननत् ॥ ३२३ ॥

आदिदेवं नभस्वन्तमनलं[1] च रमाधरम् ।
प्रचण्डं कमलं भद्रहस्तं वामनमस्तकम् ॥ ३२४ ॥

श्वसनं रोहिणीशं च मृगेशं मानुषेश्वरम् ।
गोपनं गदिनं पश्चात्कमलां भुवनं तथा ॥ ३२५ ॥

वासुदेवं [2]प्रचण्डं च विक्रमं विजयं तथा ।
[3]वैराजं रामसहितं गदिनं मोहनाशनम् ॥ ३२६ ॥

अचां [4]तृतीयमर्धेन्दुं पश्चान्तकमधुद्विषौ ।
मारुतं धूमकेतुं च सप्तकृत्वः समुद्धरेत् ॥ ३२७ ॥

हुङ्कृतिं फट्कृतिं स्वाहामोतदेहं ध्रुवं तथा ।
पुलहं सप्तकृत्वश्च हुम्फट्कारं ठठान्तकम् ॥ ३२८ ॥

तारं वरुणगोविन्दौ [5]विघ्नेशमथ माधवम् ।
स्पर्शान्तिकमकारं च पञ्चकृत्वस्सदागतिम् ॥ ३२९ ॥

षट्कृत्वो वरुणं चापि हुम्फट्स्वाहावसानकम् ।
निगमं पश्चिमं कूटं विक्रमं [6]वह्निगोपनौ ॥ ३३० ॥

ककुभं गोपनं चापि षट्कृत्वो मारुतं पुनः ।
व्यञ्जनार्णेषु सर्वत्र सुखोच्चारणमिच्छता ॥ ३३१ ॥

---

1. केशवं $M_2$ 2. श्रीधरं च $A, M_2$ 3. वैधरं $M_1$ 4. द्वितीय $M_1$
5. विघ्नेशं जयमाधवौ $M_1$ 6. विघ्न $T, P_1, P_2$



स्वरानुद्धरणे कल्प्यं मनुशास्त्रोक्तवर्त्मना ।
हुंम्फट्स्वाहावसानं च गारुडं मन्त्रमुद्धरेत् ॥ ३३२ ॥

पश्चान्तकमनुस्वारं बीजमेतस्य कल्पयेत् ।
आदौ सुपर्णवचनं वक्रतुण्डगिरं पुनः । ३३३ ॥

महासुपर्ण इत्येवं खगेश्वरशिरस्तथा ।
अनन्तवीर्यवन्तारव्यं पक्षिराजं तथान्तिमम् ॥ ३३४ ॥

प्रणवादि चतुर्थ्यन्त नत्यन्तानि चतुर्मुख ।
कल्पयित्वाङ्गमन्त्राणि षड्भिरेतैर्यथाक्रमम् ।' ३३५ ॥

अङ्गानि हृदयादीनि स्पृशेन्मन्त्रविचक्षणः ।
अमुष्य काश्यपो द्रष्टा छन्दः पङ्क्तिर्निगद्यते ॥ ३३६ ॥

देवता गरुडस्तस्य जपो लक्षत्रयं स्मृतः ।
अधस्ताद्वटवृक्षस्य साधकस्साधयेन्मनुम् ॥ ३३७ ॥

आम्नायादिं नरहरिं वामनं पश्चिमाननम् ।
वैराजं पावकं तारं इति पञ्चाक्षरो मनुः ॥ ३३८ ॥

ऋषिर्मरीचिरेतस्य गरुडो देवता तथा ।
छन्दश्च देवी गायत्र षडङ्गानि पुनःस्वयम् ॥ ३३९ ॥

उद्गीथं कमलं वायुं वासुदेवं ध्रुवं तथा ।
पश्चिमं बहुलं ब्रह्मसाधनं यष्टिमस्तकम् ॥ ३४० ॥

विघ्नेश विक्रमं वह्निं महामायां ध्रुवं पुनः ।
पुष्पभद्रं तथा पीठं वामनं यष्टिकौस्तुभौ ॥ ३४१ ॥

बिन्दुं कलशचन्द्रार्धौ सूर्यार्धेन्दुकलात्मनः ।
पन्नगाधिपतिं बन्धुं वरुणं यादसां मुखम् ॥ ३४२ ॥

हुतान्तमुद्धरेन्मन्त्रमिति गारुडमुत्तमम् ।
स्यादिमं जगतः साक्षात्प्रत्यक्षः पक्षिपुङ्गवः ॥ ३४३ ॥

ब्रह्मकोशमथो पद्मं नासिक्यं भूधराह्वयम् ।
यष्टिं पापस्य हन्तारं बिन्दुं कमलमन्दरम् ॥ ३४४ ॥

अर्धेन्दुं कलशं बिन्दुं पश्चिमं पन्नगाशनम् ।
विक्रमाग्निमथो शत्रुं ककुभं मधुसूदनम् ॥ ३४५ ॥

वायुं स्वाहान्तमित्येवमन्यं गारुडमीरयेत् ।
आकाशारोहणं सिद्धिर्जपात्तस्य भविष्यति ॥ ३४६ ॥

एवं कृत्वाद्यमोङ्कारमादिदेवं स्वपश्चिमम् ।
स्वच्छन्दं च [1]द्विरुच्चार्य गदिनं हव्यवाहनम् ॥ ३४७ ॥

भुवनं [2]मेदिनीश्च द्विर्मन्दरं मधुसूदनम् ।
वैराजं [3]विपुलं पश्चाद्वामनं च द्विरीरयेत् ॥ ३४८ ॥

पवित्रं पद्मकञ्जं च नागेन्द्रं वायुमादिमम् ।
एताद्भिः कल्पयित्वाथो गोपनं यष्टिमन्तिमम् ॥ ३४९ ॥

तुष्टिबीजार्धशशिनं ठठान्तं कल्पयन्मनुम् ।
सप्तार्णानादितः कृत्वा भास्करं हव्यवाहनम् ॥ ३५० ॥

गोपनं यष्टिमार्ताण्डौ हव्यवाहनवामनौ[4] ।
चन्द्रार्धौद्वादशात्मानं हृषीकेशमथो ध्रुवम् ॥ ३५१ ॥

वरुणं हृदयाह्लादं द्वन्द्वं कमलमाधवौ ।
वैराजं श्रीधरो भूयः पीठस्तु भुवनद्वयन् ॥ ३५२ ॥

1. त्रि    2. मेदिनीगोपं चतुर्गतिमनन्तरम् $M_1$    3. पुलहं $M_2$
4. मारुतौ $M_2$



विजयं श्रीधरं वह्निं भुवनं पुनरीरयेत् ।
लोकनेत्रोर्ध्वनासिक्यं करालं ब्रह्मसाधनम् ॥ ३५३ ॥

अनलं यष्टिमनिलं यष्टिं कुम्भोद्भवं तथा ।
हुतान्तमिति सर्वार्थं जानीयाद्गारुडं मनुम् ॥ ३५४ ॥

सप्तार्णमुध्दृत्य पुनः कलशं बन्धुमस्तकम् ।
क्रोधरूपं प्रचण्डं च त्रिदशाहारमाधवौ ॥ ३५५ ॥

चन्द्रं स्वाहापतिं चापि शशिनं बहुलं तथा ।
मृगाङ्कं श्रीधरं वह्निं भुवनं द्विचतुष्टयम् ॥ ३५६ ॥

भानुमत् पुलहद्वन्द्वं हुम्फडन्तं हुतान्तिमम् ।
इत्यन्यं गारुडं मन्त्रमूहेन्मन्त्रविचक्षणः ॥ ३५७ ॥

पवनेन हुताशेन माहेन्द्रेण प्रचेतसा ।
एतैश्चतुर्भिः प्रत्येकं क्रमव्यस्तैर्विषं हरेत् ॥ ३५८ ॥

समस्तैः प्रातिलोम्येन स्तम्भनादिं समाचरेत् ।
व्यापिनं विघ्नराजं च दामोदरमथो ध्रुवम् ॥ ३५९ ॥

एवमादिमिति ब्रह्मन् त्र्यक्षरं मनुमुद्धरेत् ।
येनैव साधितो मन्त्रो पक्षिराजोपलक्षितः ॥ ३६० ॥

त्रीणि तस्य भविष्यन्ति भुवनानि [1]विधेयताम् ।
आदिद्वितीयं भुवनं पञ्चान्तं अमृतं तथा ॥ ३६१ ॥

गदिनं श्रीधरं वह्निमुदयं [2]भद्रमम्बुजम् ।
वैराजं विक्रमं स्वाहा औवं च कमलाह्वयम् ॥ ३६२ ॥

1. विशेषताम् $T, M_1, M_2$, विधेस्तथा A.    2. चादि $T, M_1, M_2$

भुवनं पर्वतं बन्धुं माहेन्द्रादिश्रियं तथा ।
विक्रमं तार्क्ष्यवाहं च मृगेशं मन्दरं तथा ॥ ३६३ ॥

आदिसूर्यौ गोपनं च मन्दरं भुवनं [1]दिशम् ।
अग्निं मृगाधिपश्चापि स्वाहाकारावसानिकम् ॥ ३६४ ॥

इति मुद्रामनुर्ब्रह्मन् कल्पयेदथ मण्डलम् ।
विस्तरेषु निरीक्षन्तां तेषां संख्या न विद्यते ॥ ३६५ ॥

आत्मानं चिन्तयेन्मन्त्री गरुत्मन्तमनन्यधीः ।
अथ ध्यानं प्रवक्ष्यामि पक्षिराजस्य पद्मज ॥ ३६६ ॥

मेरुशृङ्गनिभाकारं रुक्मपक्षतिमण्डलम् ।
वैडूर्यनीलनासाग्रं वक्रतुण्डं भयङ्करम् ॥ ३६७ ॥

वज्रकल्पनखाकारं कल्पितोरुकटिकासनम् ।
[2]स्वन गम्भीरनिर्ह्रादं शिलाघनभुजान्तरम् ॥ ३६८ ॥

अनन्तकर्णाभरणं मूर्ध्नि वासुकिभूषणम् ।
महापद्मोदरं पद्म दामवेष्टित भूषणम् ॥ ३६९ ॥

मस्तके बद्धकार्कोटं कलाभाः कटिवेष्टितम् ।
उपवीतकृतेनापि शङ्खपालेन भूषितम् ॥ ३७० ॥

जयेन गुलिकेनापि [3]कल्पितानघनूपुरम् ।
धनञ्जयाभि[4]धानेन विजयेन च भोगिना ॥ ३७१ ॥

वामदक्षिणहस्ताभ्यां बिभ्राणं कटकद्वयम् ।
बालपल्लवताम्रेण[5] वारवाणेन शोभितम् ॥ ३७२ ॥

1. इशम् $M_1$ 2. धन $M_2$ 3. कल्पितं नवनूपुरम् $M_1$
4. मानेन A 5. मात्रेण $M_1$



उद्भिन्नभ्रुकुटीबन्धं करण्डमुकुटं तथा ।
पक्षविक्षेपगम्भीर कृतोर्ध्वनयनभ्रमम् ॥ ३७३ ॥

दंष्ट्राकरालवदनं ताम्रवर्तुलचक्षुषम् ।
[1]इत्थं ध्यात्वा गरुत्मन्तमेकतानेन चेतसा ॥ ३७४ ॥

साधयेत्साधनीयानि दुर्लभान्यपि [2]नाकिभिः ।
यथोक्तं जपतो मन्त्रमादित्ये न्यस्तचक्षुषः ॥ ३७५ ॥

ऊर्ध्वबाहोर्भविष्यन्ति दासा इव फणीश्वराः ।
विष्वक्सेनमनुर्ब्रह्मन् कथ्यते सर्वसिद्धिदः ॥ ३७६ ॥

तारं सुधामयं रामं क्रोधरूपं सुधामयम् ।
करालं शशिनं पश्चान्माधवं कुञ्जराननम् ॥ ३७७ ॥

गोपनं मारुतं चापि ठठान्तं मन्त्रमुद्धरेत् ।
तारेण बिन्दुना चापि बीजमेतस्य कल्पयेत् ॥ ३७८ ॥

एतेनैवाङ्गमन्त्राणि कल्प्यानि कमलासन ।
विश्वनाथमृषिं प्राहुर्विराट् छन्दो निगद्यते ॥ ३७९ ॥

देवता च मनोस्तस्य विष्वक्सेनो महाबलः ।
अथान्यः कल्पितो मन्त्रो विष्वक्सेनस्य पद्मज ॥ ३८० ॥

उद्गीथं भद्रपाणिं च मन्दरं ब्रह्मसाधनम् ।
[3]सुभद्रं गदिनं कुम्भं सुमुखान्तं समाधवम् ॥ ३८१ ॥

स्पर्शादिं [4]बिन्दुसहितं सध्रुवं कमलासन ।
दरान्तं गोपनं ब्रह्मन् धनदं रामशीर्षकम् ॥ ३८२ ॥

1. इति $M_1$ 2. नातिभिः $T, P_1$ 3. सुभगं $M_1$ 4. बन्धु $M_1$

पश्चिमं निगमादिं च वैराजं च समाह्वयम् ।
खड्गहस्तं सरामं च जयं वसु[1]वरं तथा ॥ ३८३ ॥

[2]शुभदं सरोरुहं [3]वैराजं [4]विक्रममस्तकम् ।
पद्मपाणिं भद्रपाणिं पाशपाणिं च पश्चिमम् ॥ ३८४ ॥

सोदयं शत्रुहननं मृगेशं वक्रतुण्डकम् ।
प्रचण्डं पुण्डरीकाक्षं मधुशत्रुं चतुर्गतिम् ॥ ३८५ ॥

खड्गहस्तमचामादिं प्रचण्डं झषमर्षितम् ।
सुभद्रान्तं मधुद्वेषिं [5]वैराजं द्विर्वसुं[6]परम् ॥ ३८६ ॥

अचां द्वितीयं सुभगं पुण्डरीकविदर्भितम् ।
वैधरं विष्णुसहितं प्रचण्डं सवनालयम् ॥ ३८७ ॥

[7]श्रीवत्सं सध्रुवं खड्गहस्तधरं तथा ।
कमलं त्वृतधामं च सुभगं वसुगोपनौ ॥ ३८८ ॥

चतुर्गतिमचामादिं वैधरं गोपनं तथा ।
विजयं श्वसनं दत्तं सूदनं मृगलाञ्छनम् ॥ ३८९ ॥

समाधवं [8]ठठान्तं च कमलं माधवं ततः ।
पीतं च धनदं कुम्भमर्पितं सध्रुवं पुनः ॥ ३९० ॥

कलानिधिं च [9]पुरन्निमादिदेवं चतुर्गतिम् ।
वैधरं वरुणं मायां खेटकं च समुद्धरेत् ॥ ३९१ ॥

1. परं $M_1$ 2. शुभं $M_1$ 3. चैव $M_1$ 4. रविमस्तकम् $M_1$
5. वैधरं गोपनं तथा $M_2$ 6. पदम् $M_1$ 7. खड्गहस्तमचामादिं गोपनं वैधरं तथा $M_2$ 8. दधानं च $T, P_1, P_2$ 9. पुरधमिति पाठः सर्वत्र दृश्यते। अस्यार्थः कः स्यादिति विमृश्यापि न ज्ञायते। पुरन्धिमिति पाठः साधुः स्यात्।



पश्चिमं पद्मनाभं च मावृतं शुभमालिनीम् ।
समन्दरं [1]दरान्तं च मधुद्वेषिं सुमन्त्रजित् ॥ ३९२ ॥

ऐन्दवं कतृतीयं च संमतं [2]माठराभिधम् ।
सुन्दरं वैधरं पद्मबिन्दुकं भद्रकं तथा ॥ ३९३ ॥

स्पर्शेषु षोडशं पद्मनाभं च चतुरानन ।
गोपनं [3]चैन्दवमथो चतुर्गतिमनन्तरम् ॥ ३९४ ॥

भान्तं मधुद्विषं यान्तं दरं च द्विः समुद्धरेत् ।
[4]कद्वितीयं सूदनं च वैधरं च चतुर्गतिम् ॥ ३९५ ॥

द्विर्वक्तव्यं दिनकरं भद्रपाणिमनन्तरम् ।
वैधरं भास्करं चापि पश्चिमं वक्रतुण्डकम् ॥ ३९६ ॥

मन्दरं सर्वरोधं च द्विर्गतीरिति संमितम् ।
गोपतिं सुमुखं चापि शुभदं ब्रह्मसाधनम् ॥ ३९७ ॥

क्रोधं चतुर्गतिं चाप्यादिबीजं चतुर्मुख ।
आदिदेवं तथाकुम्भं संप्रसारणमक्षरम् ॥ ३९८ ॥

श्रीवत्सं पुरुषात्मनं मन्त्रविक्रमनिष्ठितम् ।
वरुणं शङ्खमपरं पश्चिमं पद्मनाभकम् ॥ ३९९ ॥

शुभद्रं च मधुद्वेषिं कुम्भं भद्रकरं तथा ।
वैधरं शुभदं चाग्निं चतुर्गतिमनन्तरम् ॥ ४०० ॥

हुङ्कारं च वषट्कारमीरयेत्कमलासन ।
शुभदं वामन[5]परं क्रोधं चाग्निं मधुद्विषम् ॥ ४०१ ॥

1. मन्त्रराजं $M_2$ 2. माधवाभिधम् $M_2$ 3. माधवमथो $M_2$
4. तद्वितीयं A; कतृतीयं $M_2$ 5. पदं $M_1$

चतुर्गतिं सूदनं च वक्रतुण्डं समीरणम् ।
[1]माधवं विजयं भद्रहस्तं च समतं पुनः ॥ ४०२ ॥

विधातारं मृगेशं च भागं यान्तं सविक्रमम् ।
सरोरुहं मधुद्वेषिं पश्चिमं रामशीर्षकम् ॥ ४०३ ॥

माहेन्द्रममृतं बन्धुं कतृतीयं [2]मृगं तथा ।
भास्करं सूदनमथो शङ्खं खड्गधरं पुनः ॥ ४०४ ॥

वैराजं सोदयं चैव कतृतीयं वसुं परम् ।
द्वितीयं वासुदेवं च तृतीयं बन्धुसंहितम् ॥ ४०५ ॥

माधवं वरुणं पार्श्व[3]मेधरं दरगोपनौ ।
चतुर्गतिं खड्गधरं सक्रतं ब्रह्मसाधनम् ॥ ४०६ ॥

सबिन्दुं पश्चिमं चैव वाचां[4] ससमसाधने ।
सध्रुवं चेन्दिराबीजं पृथ्वीबीजं सहुङ्कृतिम् ॥ ४०७ ॥

सुधारसं चौर्वपरं माधवं च चतुर्मुख ।
वौषट्कारं तथा लक्ष्मीं दरान्तं पञ्चबिन्दुकम् ॥ ४०८ ॥

यान्तं च सूदनं मान्तं श्रीशब्दं भद्रपाणिनम् ।
विक्रमं पुलहं धूमकेतनं सुरिनन्दनम् ॥ ४०९ ॥

हुङ्कृतिं वैधरं भानुं विघ्नेशं मधुसूदनम् ।
खर्वदेहं सबन्धुं च पीतं भल्लायुधं तथा ॥ ४१० ॥

माधवं वरुणं भद्रहस्तं सर्गिणमब्जज ।
पवित्रं सूदनमथो वैराजं च समीरणम् ॥ ४११ ॥

1. माधवीं $P_1$,$P_2$ 2. ऋतं $M_1$ 3. मन्दरं A 4. मचां $M_1$



ओङ्कारादि जयं पीतं सूदनं विधुरं पुनः ।
श्रीधरं माणिभद्रं च द्विरदं विक्रमं तथा ॥ ४१२ ॥

वक्रतुण्डधरं बिन्दुं पीयूषं रामशीर्षकम् ।
अत्रिं च सूदनं यान्तं मन्दरं दरवैधरौ ॥ ४१३ ॥

द्वयं वसुशिरश्शङ्खं कुम्भं विक्रममस्तकम् ।
पूर्णफुटं सध्रुवं[1] च वैधरं च चतुर्गतिम् ॥ ४१४ ॥

शुक्लं फुटं वह्निपरं वैधरं च मधुद्विषम् ।
सुभद्रं मधुविद्वेषं सरसीरुहसम्भव ॥ ४१५ ॥

कपिलाक्षं हुतवहं नृसिंहं च समुद्धरेत् ।
[2]बीजान्येतद्द्विरुच्चार्य शुक्लपीतान्तिमाक्षरम् ॥ ४१६ ॥

शीर्षं च गोपनं चण्डं पश्चिमं जयतत्परम् ।
भल्लायुधं मारुतं च सर्गिणं चतुरानन ॥ ४१७ ॥

कृपाकरं शरीरं च वसुतच्छिरसं तथा ।
सुभद्रमूर्ध्वलोकेशं विजयं सम्प्रसारणम् ॥ ४१८ ॥

सुभद्रं पुरुषात्मानं कलान्तं फट्कृतिं तथा ।
निगमादिं शशधरं माधवं वसुमाधवम् ॥ ४१९ ॥

भल्लायुधं तथा सर्गं फट्कृतिं दक्षमक्षरम् ।
गोपतिं गोपनं कुम्भं विक्रमं क्रोधरूपिणम् ॥ ४२० ॥

प्रचण्डं सार्धममृतं माधवं घटविक्रमम् ।
उमात्मानं तथा कुम्भं कमलं [3]द्विविधुन्तुदम् ॥ ४२१ ॥

दत्तं भद्रं सूदनं च दक्षान्तकं हुम्फडन्तकम् ।
स्वाहावसानमित्येवं विष्वक्सेनमहामनुम् ॥ ४२२ ॥

1. वैधरञ्च सध्रुवञ्च चतुर्गतिम् T 2. बीजमे $M_1$ 3. द्विवेसुं तथा $M_2$

उद्धरेद्बीजमस्याथ तारं कुम्भं मनुं ध्रुवम् ।
कल्पयेदमुनैवाङ्गमन्त्रं मन्त्रविचक्षणः ॥ ४२३ ॥

द्रुपदो दृष्टवानेतत् छन्दोऽतिच्छन्द उच्यते ।
विष्वक्सेनो देवता च जपेल्लक्षत्रयं पुनः ॥ ४२४ ॥

एतं महामनुं ब्रह्मन् जपतस्सिद्धिकाङ्क्षया ।
सुरासुरेभ्यस्सर्वेभ्यो भयं तस्य[1] प्रणश्यति ॥ ४२५ ॥

अथेदानीं प्रवक्ष्यामि तस्याराधनसंयुतम् ।
कल्पयित्वा महापद्मं दलैर्द्वादशभिर्युतम् ॥ ४२६ ॥

कर्णिकायां समासीनं [2]सेनान्यं सम्यगर्चयेत् ।
विष्वक्सेन नमस्तेऽस्तु नमो मृत्युभयावह ॥ ४२७ ॥

नमः पारिषदेशाय धुर्याय जगतां नमः ।
चराचराणा[3]मादिस्त्वं जन्मनाशो न विद्यते ॥ ४२८ ॥

धुरमाधाय लोकानां त्वय्येव पुरुषोत्तमः ।
योगनिद्रा सुखवशश्शेते शेषे मनोहरे ॥ ४१९ ॥

एकान्तिनां तपोभक्तिप्रकर्षक्षीणकर्मणाम् ।
भगवत्प्राप्तये द्वारदृष्टयस्त्वां प्रभूतये ॥ ४३० ॥

ब्रह्माणमाहुः कल्पादौ पालने तं मधुद्विषम् ।
पतिं पशूनां संहारे जगतस्तस्थुषामपि ॥ ४३१ ॥

पादेन मेदिनीं विश्वं मध्येन [4]परमम्बरम् ।
नाकं मूर्ध्ना त्वमाक्रम्य तिष्ठस्येको जगन्मयः ॥ ४३२ ॥

---

1. तत्र $M_1$  2. तेनाद्यं T, $M_2$  3. मादिस्त्वं $M_1$
4. पुनरम्बरम $M_1$



त्वं भूमिस्त्वमपां स्थानं तेजश्च त्वं समीरणः ।
आकाशस्त्वं त्वामियन्ते विभूतिर्व्याप्य तिष्ठति ॥ ४३३ ॥

त्वमेव भास्करो भूत्वा विश्वं तपसि विष्टपम् ।
आह्लादयसि तद्भूयः सोमो भूत्वा कृपानिधिः ॥ ४३४ ॥

[1]सत्त्वरूपस्य ते रूपे गुणावन्यो रजस्तमः ।
[2]विष्णुरूपे यथारूपे शुक्लरूपस्य वस्तुनः ॥ ४३५ ॥

त्वां सृष्ट्वा भगवानादौ भक्त्वार्तैः हेतुभिः पुनः ।
त्वां स्मृत्वा [3]सत्तमं पश्चात्पुमानेति त्वदात्मवान् ॥ ४३६ ॥

वैभवेन निजेनैव बिभ्राणे त्वयि विष्टपम् ।
[4]पितामहस्सुखं शेते शेषेऽशेषजगत्पतिः ॥ ४३७ ॥

ऋग्भिः प्रातः स्तुवन्ति त्वां यजुभिर्मध्यमे दिने ।
सायाह्ने सामभिः पुण्यैः सूर्यात्मानं द्विजातयः ॥ ४३८ ॥

प्रवृत्तिहेतुं विश्वस्य त्वामेव प्रकृतिं विदुः ।
पुमांसमप्युदासीनं तत्साक्षिणमकल्मषम् ॥ ४३९ ॥

न किञ्चिदभिरूपं यद्विश्वं ते विष्टपं पुनः ।
नास्ति ते नामधेयं च त्वन्नामाग्निं सुहृद्विदः ॥ ४४० ॥

संख्या नास्ति गुणानां ते तेजसामपि भास्वतः ।
षड्गुणा इत्युक्तत्वात् प्रमेयादीन् प्रचक्षते ॥ ४४१ ॥

शक्नोषि बुध्यसे विश्वं बिभर्षि न विकारयम् ।
ईशिषे द्विषतो हंसि त्वमेव भुवनत्रयम् ॥ ४४२ ॥

---

1. सत्य A  2. शुक्ल  3. सन्ततं A  4. वीतभार A, $M_2$

हितैषी त्वं यथा स्वामिन् भक्तानां गतपाप्मनाम् ।
तथा च बान्धवास्तेषां साक्षादात्महिकं बहु ॥ ४४३ ॥

जलानामिव सिन्धुर्वै दीधितीनामिवांशुमान् ।
स्वामिन्नाम्नायमूलानां विद्यानां प्रभवो भवान् ॥ ४४४ ॥

ननु तिष्ठन्ति शास्त्राणि बहूनि कथयन्नपि ।
न च त्वद्भक्तिसाराणां कल्याणानि विचिन्तयन् ॥ ४४५ ॥

भवेऽस्मिन् दुःखबहुले त्वामाहुर्योगिनां गतिम् ।
अपां शिवानामाधारमध्वगानां [1]विवासिनाम् ॥ ४४६ ।

धन्यं तव प्रदेशेषु गत्यन्तरमपश्यताम् ।
निर्वापयसि नोचेच्च त्वं कटाक्षसुधारसैः ॥ ४४७ ॥

दुःखदावाग्निभिर्दग्धा जन्तवस्तं महीमयाः ।
विशालवक्षसं श्यामं पुण्डरीकनिभेक्षणम् ॥ ४४८ ॥

सालाकारचतुर्बाहुं त्वामहं शरणं व्रजे ।
चक्रवाका इवादित्यं चातका वारिदं यथा ॥ ४४९ ॥

चकोरा इव शीतांशुमार्तस्त्वामहमाश्रये ।
एतत्पठति यःस्तोत्रं श्रुतिभिः संस्थितं स्विमम् । ४५० ॥

प्रीयते तस्य भगवान् सेनानीरविलम्बितम् ।
दद्याच्च सम्पदस्सर्वास्तस्मै भक्ताय दुर्लभाः ॥ ४५१ ॥

इति श्री पञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे "विघ्नराजोत्पत्ति-किरीटादि-मन्त्रोद्धारः नाम" एकत्रिंशोऽध्यायः ।

—: * :—

1. विपासिनाम् $M_1$



## द्वात्रिंशोऽध्यायः ।

ऐहिकामुष्मिक सुदर्शन महामन्त्रवैभवः ।

**ब्रह्मा :—**

ऐहिकामुष्मिकं सर्वं मन्त्रं सौदर्शनं परम् ।
शुश्रूषा भगवन्नद्य रहस्यमपि पावनम् ॥ १ ॥

भक्ताय मह्यं दातव्यं प्रणताय यथातथम् ।

**श्री भगवान् :—**

हन्त ते कथयिष्यामि मन्त्रं सर्वार्थसाधनम् ॥ २ ॥

यथार्थ नाम तेनायं नाख्येयो यस्य कस्यचित् ।
उद्गीथमुद्धरेत् पूर्वं चन्द्रमाद्यं नभोमणिम् ॥ ३ ॥

आर्त्रिं [1]सितद्युतिं वह्निं गोपनं ज्वलनं मुखम् ।
ऊष्मा[2]णमुदयं [3]वीरं [4]फुल्लाक्षं विष्णुमस्तकम् ॥ ४ ॥

हृदयाह्लादमित्येव मन्त्रोद्धारश्चतुर्मुख ।
वह्निमादिमनुस्वारं बीजमुध्दृत्य कल्पयेत् ॥ ५ ॥

षडङ्गमनुवर्णानामुद्धारः कथ्यते क्रमात् ।
अङ्गत्रयं चतुर्वक्त्र पूर्वमाविष्कृतं मया ॥ ६ ॥

चतुर्थ्यन्तं चक्रपदमुद्गीथादि प्रयोजयेत् ।
अनन्तरं सूर्यपदं तद्विभक्ते च तत्पदम् ॥ ७ ॥

पञ्चमं षष्ठमप्यङ्गं पदं तत्तद्विभक्तिकम् ।
उद्धार्य च सहस्रादि ज्वालाधारादि पूर्वकम् ॥ ८ ॥

1. त्विषं $M_1$ 2. न्तमुदयं $A, M_2$ 3. बिन्दुं $A$; बीजं $M_1$
4. भल्लाक्षं $M_1$

एवमङ्गानि षड् ब्रह्मन् उक्तानि गहनानि ते ।
अहिर्बुध्न्यो मनोर्द्रष्टा बिराट् छन्दः सुदर्शनः ॥ ९ ॥

देवता मुनयश्चात्र प्रत्यक्षरमथाब्जज ।
व्यास:कण्वो नारदश्च वसिष्ठः परमो भृगुः ॥ १० ॥

अत्रिष्षडेते द्रष्टारश्छन्दांस्यक्षरशः शृणु ।
उष्णिक्बृहत्यौ गायत्रं पङ्क्तिश्च जगती विराट् ॥ ११ ॥

वर्णाः कालाग्निवर्णाभाः कालाश्चैव हि देवताः ।
करयोर्न्यस्य तलयोरुभयोरक्षराणि षट् ॥ १२ ॥

प्रथमान्तार्णशिष्टानामङ्गुष्ठादिषु पर्वसु ।
अङ्गुलीषु क्रमादेवमक्षरन्यास ईरितः ॥ १३ ॥

देहे च मूर्ध्नि चास्ये च हृदये गुह्यजानुनोः ।
पादयोर्न्यसनीयानि क्रमान्मन्त्राक्षराणि षट् ॥ १४ ॥

श्रीसुदर्शनगायत्रीमपरान्नपराजिताम् ।
वक्ष्यामि तस्य चोद्धारः पदशः कथ्यतेऽधुना ॥ १५ ॥

उद्गीथादि चतुर्थ्यन्तं सुदर्शनपदं ततः ।
वेत्ति लुडन्तमपरं बह्वर्थं पदमीरयेत् ॥ १६ ॥

महापूर्वं चक्रपदं तद्विभक्तिर्विभूतिजम् ।
ध्यायन्ती पद[1]मुच्चार्य पूर्ववत्तद्विभूषितम् ॥ १७ ॥

तत्पदं चास्मदादेशः नः पदं च द्विशीर्षकम् ।
प्रपूर्वं चोदयान्तं च पदमित्युद्धरेन्मनुम् ॥ १८ ॥

1. सुद्धार्य $M_1$



अस्य बीजं तु पूर्वोक्तं वेदितव्यं चतुर्मुख ।
आशासु दशसु स्थाप्य मन्त्रं तच्चक्रमुद्रया ॥ १९ ॥

तन्मध्ये स्थितमात्मानमग्निज्वालापरीतवत् ।
ध्यायेत् क्षितितले शुद्धे सहस्रदलपङ्कजे ॥ २० ॥

कर्णिकायां चक्रधरं द्विभुजं वृत्तलोचनम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ २१ ॥

महोदरं महाकायं जपाकुसुमसन्निभम् ।
करण्डमकुटोपेतं रक्ताम्बरविभूषितम् ॥ २२ ॥

धारयन्तं शिखारत्ने चक्रं मेघसमप्रभम् ।
नाभिनेमिसमायुक्तं ज्वालामण्डलदुस्सहम् ॥ २३ ॥

ज्वलत्षडरसंयुक्तमयुतार्कसमप्रभम् ।
पद्ममेवं स्थितं ध्यायेत्तन्नाभौ च सुविस्तृते ॥ २४ ॥

चक्राभिमानिनं देवं द्विहस्तं पुरुषं स्थितम् ।
रक्ताम्बरधरं रक्तं रक्तचन्दनपङ्किलम् ॥ २५ ॥

करण्डमकुटोपेतं सर्वाकल्पपरिष्कृतम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलाननम् ॥ २६ ॥

उद्गिरन्तं हुतवहं करजैर्मारुतानुगम् ।
विस्फुलिङ्गाद्दुर्विषहाद्विसृजन्तमनेकशः ॥ २७ ॥

कामरूपसहस्रेभ्यः प्रलयाम्बुदनिस्स्वनम् ।
तर्जनं वामतर्जन्या बिभ्राणं दक्षिणे करे ॥ २८ ॥

निपीडिताङ्गुलिं शत्रुं प्रहरन्निव भीषणम् ।
दहन्निव च नेत्राभ्यां पिबन्निव महोदधिम् ॥ २९ ॥

ध्यात्वैवमर्चयेद्भोगैरर्घ्यादिभिरतन्द्रितः ।
सिद्धये मन्त्रराजस्य पुरश्चर्या यथोदिता ॥ ३० ॥

देशे काले च मन्त्रस्य [1]रूपं संख्या च पूर्ववत् ।
शाककन्दफलक्षीरसक्तुपिण्डान्नभक्षणः ॥ ३१ ॥

तोयैस्तर्पणमग्नौ च जुहुयात्समिदादिभिः ।
मन्त्रस्सिध्यति तस्यैवं कुर्वाणस्य यथाविधि ॥ ३२ ॥

सिद्धिं च सूचयत्यस्य स्वप्ने मङ्गलदर्शनम् ।
प्रयुञ्जीत ततो मन्त्रं शान्तिकादिषु कर्मसु ॥ ३३ ॥

षोडशस्तम्भसंयुक्तं कल्पयेद्यागमण्डपम् ।
स्थापयेत्तत्र विधिवत्कुम्भानां पञ्चविंशतिम् ॥ ३४ ॥

वेष्टितान् सूत्रवस्त्राद्यैर्धान्यराशिषु मङ्गलान् ।
एषु द्रव्याणि संगृह्य न्यसेत्कमलसम्भव ॥ ३५ ॥

घृतमुष्णोदकं रत्नं फलोदकमनन्तरम् ।
लोहतोयं मार्जनाम्भो गन्धाम्भश्चाक्षतोदकम् ॥ ३६ ॥

यवोदकं क्रमादेषु कुम्भेषु नवसु क्षिपेत् ।
पाद्यं गुलोदकं चैव [2]दधि चेक्षुरसं तथा ॥ ३७ ॥

अर्घ्यं च नालिकेराम्भः क्षीरं च तदनन्तरम् ।
सर्वौषधिजलं तद्वदाचामं मङ्गलोदकम् ॥ ३८ ॥

मधुपूर्वं शान्तिवारि पञ्चगव्यमनन्तरम् ।
मूलोदकं कषायाम्भः पुष्पवारि चतुर्मुख ॥ ३९ ॥

1. जप $M_1$ 2. मधु $M_2$



द्रव्याण्येतेषु कुम्भेषु [1]बहिष्टेषु विनिक्षिपेत् ।
प्रत्येकं शतकृत्वश्च मन्त्रेणैवाभिमन्त्रयेत् ॥ ४० ॥

कुम्भे द्रव्याणि निक्षिप्य चक्राब्जं वर्तयेत्ततः ।
तन्मध्ये मन्त्रराजेन यष्टव्यं तत्सुदर्शनम् ॥ ४१ ॥

कुण्डे [2]वृत्ते च जुहुयात्समि[3]दन्नादिभिः क्रमात् ।
हुत्वा निशायां मनुना प्रभातेऽर्घ्यादिभिः क्रमात् ॥ ४२ ॥

अर्चयित्वा हेतिराजं हुत्वाग्नौ समिदादिभिः ।
भूर्जपत्रे लिखेच्चक्रं नाभिनेमिसमन्वितम् ॥ ४३ ॥

षडरं तत्र पूर्वादिक्रमाच्चैव[4] षडक्षरम् ।
लिखित्वा छन्दसामादिं तन्मध्ये साध्यनाम च ॥ ४४ ॥

हेमसूच्या लिखेद्द्रव्यैर्मिश्रितैश्चन्दनादिभिः ।
चन्दनद्वयकाश्मीररोचनागरुमुख्यकैः ॥ ४५ ॥

गन्धद्रव्यैः सुसम्पिष्टैः पश्चात्तां भूर्जपत्रिकाम् ।
गुलिकां कारयेत्तां च शालितण्डुलराशिषु ॥ ४६ ॥

अधिवास्यान्वहं कुम्भैः स्नापयित्वा यथाविधि ।
बन्धयेत्तां मातुरङ्गे मन्त्रेणानेन मन्त्रवित् ॥ ४७ ॥

गुलिकाबन्धनेनैव मुक्तो रोगादिभिर्नरः ।
तेजस्वी भवति क्षिप्रं त्वचा मुक्तो यथोरगः ॥ ४८ ॥

ज्वलितस्य भवेच्छान्तिः प्रसूनैः निम्बसम्भवैः ।
दूर्वाङ्कुरैः चूतदलैः सिक्तैर्मधुपयोघृतैः ॥ ४९ ॥

1. संहितेषु $M_1$ 2. घृतैश्च A 3. दाज्यादिभिः $M_1$ 4. देवं A

मनुना जुहुयादग्नौ सप्तरात्रमतन्द्रितः ।
प्रत्यहं दशसाहस्रसंख्यया रोगिसन्निधौ ॥ ५० ॥

अभिषिच्य तथा कुम्भैः रोगिणं चक्रविद्यया ।
बध्द्वा च गुलिकां मन्त्री मोचयेज्ज्वरितं ज्वरात् ॥ ५१ ॥

गोभूहिरण्यवस्त्राद्यैर्मन्त्रिणं तोषयेत्ततः ।
ब्राह्मणेभ्यो यथाशक्ति दद्याद् गोकम्बलादिकम् ॥ ५२ ॥

भूतग्रहपिशाचादि [1]पीडितानां तथा नृणाम् ।
शान्तये जुहुयादग्नौ किंशुकोत्थैः समिच्छतैः ॥ ५३ ॥

त्रियहं त्रिसहस्रैश्च तेषां बद्धा शिखां ततः ।
गुग्गुलूत्थेन धूपेन धूपितान् ग्रहपीडितान् ॥ ५४ ॥

ताडयेन्मन्त्रजप्तेन दण्डेन लतयापि वा ।
पिशाचादिस्ततो ब्रूयान्मुञ्चामीति [2]प्रपीडितः ॥ ५५ ॥

शपथं कारयित्वा तु शिखाबन्धं च मोचयेत् ।
स्नापितैः कलशैः पश्चान्मन्त्रेण ग्रहपीडितम् ॥ ५६ ॥

स्नापयेद्बन्धयेच्चापि गुलिकामभिमन्त्रिताम् ।
ततो विमुच्यते रोगाच्चेतोवाग्भिरुपद्रवात् ॥ ५७ ॥

तेजस्वी शतमायुश्च भवेन्मन्त्र [3]प्रभावतः ।
नारी च दुर्भगा चक्रधारणात्सुभगा भवेत् ॥ ५८ ॥

वन्ध्या च गर्भिणी सद्यः सुप्रसूः स्यादपप्रसूः ।
अनृतुः स्यादृतुमती विमुखा सुमुखा भवेत् ॥ ५९ ॥

1. गृहीतानां $M_2$; दूषितानां $M_1$  2. प्रपीडितम् $M_1$  3. प्रसादतः $M_1$



विरहे सङ्गता भर्त्रा भवेदचिरकालतः ।
स्त्रीप्रसूः पुम्प्रसूतिश्चास्तना स्तनमण्डिता ॥ ६० ॥

कुमारपक्षिपीडादौ बालानां च यथोदितैः ।
विधिभिर्मुच्यते दुःखात् लभते [1]शान्तिमुत्तमाम् ॥ ६१ ॥

प्रासादेऽपि नरेन्द्रस्य ब्रह्मरक्षोमुखैर्ग्रहैः ।
प्रवेशे सति तन्मध्ये कुम्भान् रत्न[2]समन्वितान् ॥ ६२ ॥

स्थापयित्वा यथापूर्वं समिदाद्यै[3]रतन्द्रितः ।
मन्त्रेण जुहुयान्मन्त्री द्वादशाहान् समाहितः ॥ ६३ ॥

प्रत्येकं दशसाहस्रसंख्यया कमलासन ।
ताम्रपत्रे शिलायां वा चक्रमालिख्य तत्पुनः ॥ ६४ ॥

धान्यराशिषु संस्थाप्य निशायां प्रातरुत्थितः ।
प्रासादद्वारि निखनेद्दिक्षु चाष्टसु मन्त्रितम् ॥ ६५ ॥

प्रोक्षयेत्कुम्भतोयेन गृहं सर्वमशेषतः ।
पलायन्ते ग्रहास्सर्वे दूरतः सर्वतोमुखः ॥ ६६ ॥

तद्राष्ट्रेऽपि न तिष्ठन्ति सर्वकालमसंशयम् ।
प्रासादवर्तिनः सर्वे जीवन्ति [4]निरुपद्रवाः ॥ ६७ ॥

धनधान्यसमृद्धिश्च यथा धनदवेश्मनि ।
वस्त्रशय्यासनादीनां दंशने मूषिकादिभिः ॥ ६८ ॥

[5]रक्तास्थिदर्श[6]नेनापि केशानां दहने तथा ।
अकस्माद्गोपुरादीनां दहनेऽशनिपीडिते ॥ ६९ ॥

1. चायुरुत्तमम् T,$P_1$,$P_2$  2. रक्त $M_2$,T  3. समन्वितम् $M_1$
4. निरुपाधिकाः $M_1$  5. रक्तास्थिदर्शनेनापि $P_1$  6. वापि T,$P_2$

निशि शकधनुर्दर्शे निवाते चैत्यभूरुहः ।
भङ्गे वल्मीकजनने दुःस्वप्नेऽन्यत्रतादृशे ॥ ७० ॥

एवमादौ दुर्निमित्ते शान्तिमेतेन कारयेत् ।
यज्ञवृक्षसमिद्भिश्च होमः पूर्वोक्तसंख्यया ॥ ७१ ॥

कुर्याच्च शान्तिं पुष्ट्यादिकर्मणा कमलासन ।
कथ्यन्ते तानि बहुधा नाभेदं यान्ति भेदतः ॥ ७२ ॥

सर्वाभ्युदयकर्माणि चतुरश्रेषु कारयेत् ।
पौष्टिकं पद्मकुण्डेषु शान्तिं वृत्ते सुखावहाम् ॥ ७३ ॥

त्रिकोणे मारणं कर्म कुण्डे चापाकृतौ पुनः ।
उच्चाटनं यक्षकन्यासाधने कोणपञ्चके ॥ ७४ ॥

षडश्रे स्तम्भनं कर्म सप्ताश्रे मोहनं भवेत् ।
विद्वेषणं नवाश्रे स्यादष्टाश्रे मारणो विधिः ॥ ७५ ॥

एकादशाश्रे ब्रह्मादि वशीकरणमाचरेत् ।
कुण्डे दशाश्रे पश्वादि देवतातोषणो विधिः ॥ ७६ ॥

द्वादशाश्रे तु पुरुषं वैकुण्ठं द्रष्टुमाचरेत् ।
योन्याकारे विवाहार्थं [1]कन्यार्थं कमलासन ॥ ७७ ॥

चतुर्विंशत्यङ्गुलैः स्याद्विस्तारायामकल्पनम् ।
खातं तावद्भिरेव स्यात्कुण्डेषु नियतिं शृणु ॥ ७८ ॥

तदर्धं पादमथवा चतुरङ्गुलमेव वा ।
परितो द्व्यङ्गुलं [2]हित्वा बहिस्तिस्रश्च वेदिका ॥ ७९ ॥

1. वश्यार्थं $M_2$ 2. खात्वा $M_1$



कार्यास्तासाञ्च विस्तारश्चतुरङ्गुलसंमितः ।
तावत्येवोन्नतिर्ब्रह्मन् कुण्डस्य धनुषः पुनः ॥ ८० ॥

अङ्गुल्या नवतिः षट् च ज्या च षट्त्रिंशदङ्गुला ।
शङ्कुं विधाय तन्मध्ये दशाङ्गुलसमायतम् ॥ ८१ ॥

भ्रामयेत्परितः सूत्रं कुण्डं तद्वलयाकृतिम् ।
चतुरश्रस्य कुण्डस्य विभजेत् पञ्चधा भुजम् ॥ ८२ ॥

द्वौ भागौ भुजमेकं च त्रिंशत्पञ्चाथवा पुनः ।
अङ्गुलीनां भवेदेषां त्रिकोणाङ्के भुजः स्मृतः ॥ ८३ ॥

कुण्डे षडश्रे च भुजा [1]अष्टाष्टैकादशाङ्गुलाः ।
एको भुजः पञ्चकोणे विंशत्यङ्गुलिसंमितः ॥ ८४ ॥

सप्ताश्रे च भुजायामो यवषट्काधिकाः पुनः ।
तिस्रश्च दशचाङ्गुल्यः कुण्डे त्वष्टा[2]श्रिभिर्युते ॥ ८५ ॥

द्व्याधिका दश वा भूमौ दशाङ्गु[3]लमितीरितम् ।
अङ्गुल्योस्तु भुजायामो नलस्कन्दांशकीर्तितः ॥ ८६ ॥

[4]नवाश्रकुण्डेषु यवा पञ्चकोणे भुजायतिः ।
दश चाङ्गुलयः प्रोक्ता दशाश्रे च चतुर्मुख ॥ ८७ ॥

यवाः पञ्च भुजायामो नव चाङ्गुलयः ।
एकादशाश्रे कुण्डे तु यवैरष्टाभिरन्वितः ॥ ८८ ॥

अष्टावङ्गुलयः कुण्डे द्वादशाश्रे भुजायतिः ।
अष्टादशाङ्गुलाः प्रोक्तो योनिकुण्डेषु चायतीः । ८९ ॥

1. अष्टौ वाष्टादशाङ्कुलाः $M_1$ 2. श्रनिर्मितो $M_1$ 3. ल्यः प्रकीर्तिता $T, P_1, P_2$ 4. सहस्रकुण्डेत्वथवा पञ्च एकोभुजायतिः $M_1$

अष्टौ च चत्वारिंशच्च भवेदङ्गुलयोऽब्जज ।
गजोष्ठसन्निभा योनिर्यद्वाश्वत्थदलोपमा ॥ ९० ॥

[1]कुण्डान्युक्तान्यथैदानीं शान्त्यादिः प्रतिकल्प्यते ।
यत्कुण्डं यस्य कथितं शान्त्यादेस्तस्य तद्भवेत् ॥ ९१ ॥

अश्ववारणशालासु चक्रयन्त्रं यथाविधि ।
लिखित्वा ताम्रदार्वादौ निशायामधिवासयेत् ॥ ९२ ॥

सहस्रकृत्वः कर्तव्यो होमः कुण्डे[2] शुभे यतः ।
समिद्भिर्यज्ञयोग्याभिः स्थापयेत्कुम्भमर्चितम् ॥ ९३ ॥

अथ प्रभाते शालायां यन्त्रं [3]खन्यान् महीतले ।
प्रोक्षयेत्कुम्भतोयेन गजानश्वान् पृथक्पृथक् ॥ ९४ ॥

सौदर्शनेन मन्त्रेण पुण्याहं वाचयेत्तथा ।
नश्यन्ति व्याधयस्तेषां गजाश्वानां चतुर्मुख ॥ ९५ ॥

बलं स्यादधिकं तेषां इति सप्ताहमाचरेत् ।
ब्राह्मणेभ्यो धनं दद्याद्य[4]थाशक्ति च दक्षिणाम् ॥ ९६ ॥

ऊर्जस्वलमथो ब्रह्मन् गजाश्वं जायते भृशम् ।
तथा च प्रत्यहं होमः स्यात्सुदर्शनविद्यया ॥ ९७ ॥

इत्थं गोमहिषादीनां रक्षां कुर्वीत मन्त्रवित् ।
पुररक्षामथ ब्रह्मन् प्रवक्ष्यामि यथातथम् ॥ ९८ ॥

स्तम्भैष्षोडशभिर्युक्तां दर्भमालापरिष्कृताम् ।
पुरमध्ये प्रपां कृत्वा जुहुयात् सर्पिषा पुनः ॥ ९९ ॥

1. कुण्डे ह्युक्ता य $M_1$ 2. कुम्भे यथोदिते $M_2$ 3. कुर्यात् $M_1$
4. दावार्याय च $M_2$



पालाशाभिः समिद्भिश्च दिनान्येकोनविंशतिः ।
दिक्ष्वष्टासु तथा मध्ये पुरस्य कमलासन ॥ १०० ॥

खन्यात्सौदर्शनं यन्त्रं स्थापयेत् कुम्भमञ्जसा ।
तोयेन प्रोक्षयेद्विद्वान्नगरं चक्रविद्यया ॥ १०१ ॥

ऋग्भिश्च पावमानीभिः प्रशस्ताभिर्यथाक्रमम् ।
पुरद्वारेषु सौधेषु मण्डपेषु महीभृताम् ॥ १०२ ॥

सर्वत्र निखनेच्चक्रं जुहुयात्समिदादिभिः ।
मरणव्याधि दुर्भिक्ष ज्वरादि व्याधयः पुनः ॥ १०३ ॥

नश्यन्ति बलवन्तश्च भवन्ति पुरवासिनः ।
ग्राममध्ये तथा दिक्षु विदिक्षु चतुरानन ॥ १०४ ॥

शृङ्गाटकेषु सर्वेषु निखनेदायुधाधिपम् ।
ग्रहवेतालरक्षांसि व्याधयश्च ज्वरादयः ॥ १०५ ॥

न बाधन्ते पुरग्राममपस्मारादयस्तथा ।
न तस्करभयं किञ्चिदकालमरणं तथा ॥ १०६ ॥

पुरुषायुषवन्तः स्युर्नरा धान्यधनान्विताः ।
सौभाग्यं शान्तिरारोग्यं तथा कुलविवृद्धयः ॥ १०७ ॥

ब्रह्मवर्चसमित्येतद् ब्राह्मणानां भविष्यति ।
पयस्विन्यो भविष्यन्ति गावः पीनपयोधराः ॥ १०८ ॥

तद्राष्ट्रेऽपि मनुष्याणां भद्रमेव भविष्यति ।
अथ वक्ष्यामि ते ब्रह्मन् पन्नगानां निवारणम् ॥ १०९ ॥

देवालये नदीतीरे नन्दनोपवनेषु वा ।
चतुःस्तम्भसमायुक्तं चतुस्तोरणभूषितम् ॥ ११० ॥

अभितो दर्भमालाभिश्शोभितं होममण्डपम् ।
कृत्वा तस्मिन्[1]वान् कुम्भान् स्थापयित्वा नवापरान् ॥ ११११ ॥

प्राच्यां वेद्यां पुनः कुर्यान्कुण्डं पूर्वोक्तलक्षणम् ।
यजेदेतेषु कुम्भेषु नव मूर्ती यथाक्रमात् ॥ ११२ ॥

[2]निवेद्य पायसं ताभ्यः पश्चात्कुण्डे हुताशनम् ।
आददीताथ ताम्रेण तालमात्रं भुजङ्गमम् ॥ ११३ ॥

प्रकल्प्य शेषमन्त्रेण प्रतिष्ठाप्य पितामह ।
तस्मिन् चक्रं लिखेत्तस्य मध्ये मत्स्याकृतिं पुनः ॥ ११४ ॥

गरुडं शङ्खपालं च कृष्णमन्त्रं च वेष्टनम् ।
तन्नागयन्त्रं क्षीरेण घृतेन मधुनापि च ॥ ११५ ॥

दध्ना शक्रद्रसेनापि स्नापयेच्चक्रविद्यया ।
पुष्पगन्ध प्रदीपाद्यैरुपचारैस्तथापरैः ॥ ११६ ॥

इष्ट्वा नागं स्वमन्त्रेण चक्रं चक्रस्य विद्यया ।
कुण्डमध्ये पुनर्नागयन्त्रं खन्याद्विचक्षणः ॥ ११७ ॥

तस्य चोत्तानरूपस्य हुताशमुपरिस्थितम् ।
कृत्वा दध्ना घृतेनापि पयसा मधुनापि च ॥ ११८ ॥

समिद्भिर्ब्रह्मवृक्षस्य जुहुयान्मन्त्रकोविदः ।
सहस्रकृत्वः प्रत्येकमथ गोपयसोक्षितैः ॥ ११९ ॥

नीवारभागैः[3]र्जुहुयात्सप्ताहं अयुतैरपि ।
अपानस्त्विवति मन्त्रेण जुहुयात्साधकोत्तमः ॥ १२० ॥

1. न्पा T,$P_1$,$P_2$ 2. नैवेद्यं पायसान्नं स्यात् $M_2$ 3. सप्ताहं जुहयात् $P_2$



त्रिष्वहस्सु व्यतीतेषु पर्जन्यो मेघवाहनः ।
[1]द्रावयेदवनीं कृत्स्नां भूयोऽपि सलिलोदयैः ॥ १२१ ॥

अतिवृष्टि प्रशमनं प्रवक्ष्यामि चतुर्मुख ।
पिङ्गलाकारमात्मानं ध्यात्वा पीयूषभावितम् ॥ १२२ ॥

शूलवज्रधरं चापि मन्त्रविन्मन्त्रभूषणम् ।
तैलाज्यसिक्तैर्जुहुयाल्ला[2]जसर्षपलावणै ॥ १२३ ॥

जुहुयाज्ज्वलिते वह्नावयुतं सप्तसागरात् ।
वृष्टिशब्दं पुरस्कृत्य स्तम्भयेति पदद्वयम् ॥ १२४ ॥

प्रयोक्तव्यमिदं ब्रह्मन् मन्त्रान्ते मन्त्रवेदिना ।
अथ शाम्यति सा वृष्टिर्महती चक्रविद्यया ॥ १२५ ॥

अथ राष्ट्रपुरादीनां क्षोभशान्तिं तथा शृणु ।
अथ काष्ठगतं चक्रं प्रतिष्ठाप्य यथाविधि ॥ १२६ ॥

पुरे राष्ट्रे तथा खन्यात् तत्काष्ठैर्जुहुयात्तथा ।
सहसा क्षोभमायान्ति वाजिवारणसङ्कुलम् ॥ १२७ ॥

राष्ट्रं च क्षुभितं ब्रह्मन्ननवस्थं भविष्यति ।
यदि शान्तौ मतिं कुर्याच्चक्रमुद्धास्य तत्पुनः ॥ १२८ ॥

स्नापयेद्भगवन्तं च सहस्रकलशाम्बुभिः ।
झटित्येव प्रशान्तं स्याद्दुरितं पुरराष्ट्रयोः ॥ १२९ ॥

राष्ट्रादिलम्भनं[3] तेऽद्य प्रवक्ष्यामि चतुर्मुख ।
उपेतं दलषट्कोणे कर्णिका केसरान्वितम् ॥ १३० ॥

1. प्लावये A 2. राजसर्षप $M_1$ 3. जं बलं $M_1$

चक्राब्जं कारयेद्भूमौ मेध्यायां कमलासन ।
तद्बहिर्नाभिवलयं षडरं तद्बहिर्लिखेत् ॥ १३१ ॥

तद्बहिर्नेमिवलयं ज्वालामाला समन्वितम् ।
तद्बहिः कल्पयेत्पीठं चतुर्द्वारपरिष्कृतम् ॥ १३२ ॥

शोभोपशोभयुक्तं च कृत्वा मण्डलमीदृशम् ।
तस्मिन् सुदर्शनं ब्रह्मन् पूजयित्वा यथाविधि ॥ १३३ ॥

समिद्भिरन्नैराज्यैश्च हुत्वा मन्त्रं प्रसीदतु ।
शृङ्गे चक्रं देहराष्ट्रं देहराष्ट्रं तथाधनम् ॥ १३४ ॥

इत्येतां पावनीं गाथां जपान्ते प्रार्थयन् पठेत् ।
अथ तस्य पुरं राष्ट्रं ग्रामं चक्रं प्रयच्छति ॥ १३५ ॥

अथ प्रभ्रष्टराज्यानां मनुजानां यथाश्रियः ।
तथा वक्ष्यामि ते ब्रह्मन्नुपायं चक्रविद्यया ॥ १३६ ॥

अन्तस्थितस्य पद्मस्य स्यात्पलाश चतुष्टयम् ।
अथाष्टौ द्वादश ब्रह्मन् षोडशाथ चतुष्टयम् ॥ १३७ ॥

विंशतिश्च तथा त्रिंशत् द्वौ क्रमेण बहिश्छदाः ।
इति षड्विध पत्रस्य कर्णिकायां सुदर्शनम् ॥ १३८ ॥

[1]येष्वथो षट्प्रकारेषु पलाशेषु यथाक्रमम् ।
मूर्तीश्चतस्त्रः प्रथमं तथाष्टाद्याधिका दश ॥ १३९ ॥

षोडशाथ सहस्रं च विंशतिश्च पितामह ।
अथ द्वात्रिंशतिं पश्चादन्तरालेषु षट्स्वपि ॥ १४० ॥

1. इष्ट्वा $M_2$



यथाक्रमं भूषणानि श्रीवत्सप्रभृतीन्यथा ।
अष्टौशक्तीः श्रियासार्धं चक्रादिं होममण्डलम्[1] ॥ १४१ ॥

रवीन् सप्त'धिकान् पञ्च कुमुदादीननन्तरम् ।
इन्द्रादीनथ दिक्पालान् पूजयेन्मन्त्रकल्पवित् ॥ १४२ ॥

समिद्भिर्बिल्वरूपाभिस्तिलैः पद्मैस्तथा घृतैः ।
सहस्रकृत्वः प्रत्येकं जुहुयाच्चक्रविद्यया ॥ १४३ ॥

इत्थं गते सप्तरात्रे प्रातरुत्थाय मन्त्रवित् ।
स्थापितैः पञ्चविंशत्या कुम्भैश्शालिकृतासनैः ॥ १४४ ॥

घृतादि पूरितैर्ब्रह्मन् चक्रविद्याभिमन्त्रितैः ।
राज्यभ्रष्टं [2]मन्त्रहीनं दस्युभिः परिपीडितम् ॥ १४५ ॥

राजानं ब्राह्मणं वैश्यं तथान्यं दुरिताहतम् ।
अभिषिञ्चेत्स्मरन् चक्रं तन्मन्त्रेण विधानवित् ॥ १४६ ॥

तथा प्रकल्पयेद्यन्त्रं दापयेद्दक्षिणां गुरोः ।
[3]इत्थं कृते चतुर्वक्त्र सौभाग्यं राज्यलम्भनम्[4] ॥ १४७ ॥

दस्युनाशो भवेद्भद्रं स्यात्सुदर्शनतेजसा ।
आदावन्ते तदा ब्रह्मन् हंसमन्त्रवता पुनः ॥ १४८ ॥

नाशयेच्चक्रमन्त्रेण विषं स्थावरजङ्गमम् ।
अथ सङ्ग्रामविजयं वक्ष्यामि कमलासन ॥ १४९ ॥

कृपाणे तोमरे शक्तौ शरेषु वलये तथा ।
आयुधेषु तथान्येषु ललाटे वाजिहस्तिनाम् ॥ १५० ॥

1. मण्डपम् $M_2$ 2. भाग्यहीनं $M_2$ 3. इत्थं गते चक्रयन्त्रे $M_1$
4. लाभदम् A

तथा ध्वज[1]पटान्तेषु लिखित्वा चक्रमण्डलम् ।
प्रविश्य समरं भीमं रिपूणां रोमहर्षणम् ॥ १५१ ॥

हेषितेन तुरङ्गाणां बृंहितेन विषाणिनाम् ।
हर्षनादेन योधानां रथनेमि स्वनैस्तथा ॥ १५२ ॥

तुरङ्गम खुरक्षुण्णैः पार्थिवैः पांसुमण्डलैः ।
तिरोहितनभस्सूर्यं कृतान्तसदनोपमम् ॥ १५३ ॥

रुधिरासवसम्भ्रान्तं वैतालमिथुनोद्यतम् ।
मांसखण्डग्रहणोड्डीनसहस्रश्येनसङ्कुलम् ॥ १५४ ॥

ज्वालामालामयं चक्रं ध्यायन् जित्वा रिपूनपि ।
अक्षनागप्रहरणैः निष्क्रमेत् पृतनामुखम् ॥ १५५ ॥

अथवा राज्यसीमासु शङ्कून् खदिरसम्भवान् ।
स्थापयेच्चक्रमन्त्रेण हुतशिष्टघृतोक्षितान् ॥ १५६ ॥

अग्निप्रकाररूपास्ते न शक्यं प्रेक्षितुं परैः ।
[2]प्रवेशे कम्पनं ब्रह्मन् [3]चक्रविद्याप्रभावतः ॥ १५७ ॥

यत्र यत्र भयं पुंसां तत्र तत्र भयं भवेत् ।
चक्रमध्यस्थमात्मानं ध्यायन्तं कुपितात्मनः ॥ १५८ ॥

पर्वतारोहणेऽरण्ये सागरप्लवनादिषु ।
व्याघ्रसिंहवराहादि सन्निपातैः खिले पथि ॥ १५९ ॥

गच्छन्न भयमाप्नोति चक्रमन्त्रमिमं जपन् ।
तं न छिन्दन्ति शस्त्राणि न तं दहति पावकः ॥ १६० ॥

1. पताकेषु $A, M_2$ 2. प्रवेशे किं पुनः $M_2$ 3. ब्रह्म $T, P_1, P_2$



न चैनं क्लेदयन्त्यापो यस्यैष हृदये मनुः ।
ब्राह्मणक्षत्रियविशो शूद्राणां कमलासन ॥ १६१ ॥

प्रतिलोमानुलोमानां कुर्या[1]त्संहननं [2]बुधः ।
समिद्भिर्ब्रह्मवृक्षाणामश्वत्थवटवृक्षयोः ॥ १६२ ॥

प्लक्षोदुम्बरजातीनामपवर्गस्य पावके ।
होमं कुर्याद्यथासंख्यं तथा तज्जातियोषिताम् ॥ १६३ ॥

ब्राह्मणः श्रियमाप्नोति होमेन श्वेतपङ्कजैः ।
रक्त[3]पद्मैर्नरेन्द्रस्य वैश्यस्य श्वेतपाटलैः ॥ १६४ ॥

श्रीफलैराहुतिं कुर्वन् राष्ट्रस्याधिपतिर्भवेत् ।
अङ्गेन न्यस्तमन्त्रेण यां स्पृशेदङ्गनां नरः ॥ १६५ ॥

तस्य सा वशमायाति मृतं चाप्यनुगच्छति ।
अपमृत्युजयं वक्ष्ये यथावदवधारय[4] ॥ १६६ ॥

होमशालागते कुण्डे [5]सम्यगादाय [6]पावकम् ।
तस्मिन्नावाह्य हेतीशं[7] दूर्वाकाण्डैर्घृतोक्षितैः ॥ १६७ ॥

जुहुयात्कोटिभिर्मन्त्रैर्यथाशक्त्यथवा पुनः ।
इति मासद्वयं रक्षेत्पावकं नियतेन्द्रियः ॥ १६८ ॥

होमान्ते यदि भूपालस्तुलारोहणमाचरेत् ।
अन्यच्चेदात्मनो यत्स्वं दद्याद्ब्राह्मणसात् प्रति ॥ १६९ ॥

कलशैः पञ्चविंशत्या स्नापयेच्चक्रविद्यया ।
एवं कृते चतुर्वक्त्र कालमृत्युं जयेन्नरः ॥ १७० ॥

1. संवननाम्बुज $P_1$ 2. पुनः $A, P_2$ 3. पीतैः A 4. यथा तदवधारय $P_1$
5. सम्यगाधाय $P_1$ 6. पङ्कजम् $A, T, P_1, P_2$ 7. देवेशं $T, P_1, P_2$

अपमृत्युः कथं तस्य तज्जये नास्ति संशयः ।
अथवा कालमृत्योश्च जयोपायोऽवगम्यताम् ॥ १७१ ॥

निष्कैः सहस्रसंख्यातैः प्रतिकृत्य पितामह ।
द्विभुजं पुरुषाकारं भ्रुकुटीकुटिलेक्षणम् ॥ १७२ ॥

दंष्ट्राकरालवदनं वराहरुधिरेक्षणम्
यष्टिं करेण सव्येन पाशं वामेन बिभ्रतम् ॥ १७३ ॥

प्रक्षाल्य पञ्चभिर्गव्यैः पञ्चोपनिषदा तथा ।
नवकैरभिषिच्याथ धान्यराशिषु निक्षिपेत् ॥ १७४ ॥

आवाह्य पश्चाद्व्याहृत्या पूजयित्वा स्वनामभिः ।
होममग्नौ प्रकुर्वीत समिच्चरुघृतैरपि ॥ १७५ ॥

ऋग्भिः कृतान्तलिङ्गाभिर्ब्रह्मव्याहृतिभिस्तथा ।
ततः प्रभाते विप्राय तं पुमांसं हिरण्मयम् ॥ १७६ ॥

पूताय भगवद्भक्त्या पञ्चकालानुवर्तिने ।
दापयेत्कालमृत्युं [1]वा स जित्वा स्यात्त्वायुषं पदम् ॥ १७७ ॥

अथ मारणमेतद्धि श्रूयतां चतुरानन ।
विविक्ते कल्पयेद्देशे होमशालां विधानवित् ॥ १७८ ॥

तन्मध्ये कल्पयेत्कुण्डमाचार्यो दक्षिणामुखम् ।
गृहीत्वाक्षस्य फलकां हस्तद्वयसमायताम् ॥ १७९ ॥

तदर्धविस्तृतां ब्रह्मन् घनं च [2]चतुरङ्गुलाम् ।
तस्यां लिखित्वा द्वेष्यस्य वपुः प्रत्यक्षसंमितम् ॥ १८० ॥

1. च T,$P_2$ 2. चतुरानन $M_1$



प्रतिकूलेऽथ नक्षत्रे रिपोरष्टमराशिषु ।
कृष्णपक्षे विशेषेण प्रकुर्यान्मरणक्रियाम् ॥ १८१ ॥

प्राच्यां भागेऽथ कुण्डस्य षडरं चक्रमालिखेत् ।
कृष्णसूत्रैरलङ्कृत्य तस्मिन् चक्रं प्रतिष्ठितम् ॥ १८२ ॥

कृष्णगन्धैः कृष्णपुष्पैः पूजयेत्कृष्णवारिभिः ।
श्मशानाद्वा मुनिलयाद्वल्मीकान्मृदमाहरेत् ॥ १८३ ॥

तां रिपोः पादधूलीभिर्व्यामिश्रां कमलासन ।
उन्मत्तरसमिश्रेण खरमूत्रेण पेषयेत् ॥ १८४ ॥

विष्ठया वा मृदावापि द्वेष्यस्य प्रतियातनाम् ।
तस्यां प्राणान् प्रतिष्ठाप्य मन्त्रेणानेन मन्त्रवित् ॥ १८५ ॥

उद्गीथमप्रमेयं च मन्दरं भुवनं तथा ।
क्रोधानिलं पश्चिमास्यं हुताशं मधुसूदनम् ॥ १८६ ॥

प्रचण्डगोपनौ रामं भास्करं पश्चिमाननम् ।
समध्यं गोपनद्वन्द्वममुष्येति पदं पुनः ॥ १८७ ॥

जीवा इह स्थिता शब्दं विष्णुदक्षोदर्यांस्तथा ।
क्रोधरूपं तपस्यन्तं सर्वशब्दमनन्तरम् ॥ १८८ ॥

विक्रमं विघ्नराजात्रिवह्निबन्धू च गोपनम् ।
वनमालाधरं रामं वाङ्मनः काय इत्यपि ॥ १८९ ॥

अथ मायातृतीयान्तं लोढन्तं यानि यन्मुखम् ।
स्वाहावसानमुध्दृत्य प्रणवान्तादिकं मनुम् ॥ १९० ॥

तां च प्राणवतीं कुण्डे खन्यादुत्तानशायिनीम् ।
फलकास्थितमाकारमनुलिप्य पितामह ॥ १९१ ॥

पूर्वोक्तया मृदा पश्चात्प्राणिनं[1] प्राणविद्यया ।
पादेनाक्रान्तहृदयो रोषलोहितलोचनः ॥ १९२ ॥

सहस्रकृत्वश्चक्रस्य मन्त्रं भाषेत मन्त्रवित् ।
[2]विषवृक्षेप्ररूढेन शङ्कुना नेत्रयोर्हृदि ॥ १९३ ॥

हस्तयोः पादयोर्गुह्ये श्रोत्रयोर्नासिकोदरे ।
अन्येष्वपि प्रतीकेषु [3]वेधं कुर्याद्विचक्षणः ॥ १९४ ॥

तथाकृते रिपोस्तत्तद्गात्रं हीनं भविष्यति ।
अथ कुण्डे श्मशानाग्निं निदधीत पितामह ॥ १९५ ॥

दर्भैः परिस्तरेद्वेद्यां दक्षिणापश्चिमोन्मुखन्[4] ।
परिधींस्तद्वदाकीर्य कृत्वा रक्षां तथात्मनः ॥ १९६ ॥

ऋत्विग्भिः षोडशोद्दिष्टैर्द्वारेष्वध्ययने कृते ।
ब्राह्मणेभ्यो धनं दत्त्वा हेतिराजमनुस्मरन् ॥ १९७ ॥

अक्षकाष्ठ [5]प्रक्लृप्ताभ्यां स्रुक्स्रुवाभ्यां यथाविधि ।
कृष्णपन्नगराजीलकृष्णा तु क्षतजोक्षितैः ॥ १९८ ॥

मरीचैः सर्षपैर्युक्तानष्टधान्याष्टधान्वितान् ।
समिधोऽक्षस्य जुहुयात्सहस्रं प्रतिवासरम् ॥ १९९ ॥

रिपुनक्षत्रवृक्षाणां समिधश्चापि मन्त्रवित् ।
मन्त्रान्ते शत्रुनामानं मारयेति प्रकीर्तयेत् ॥ २०० ॥

[6]होतव्यं चावमानेन होमं कृत्वा दिने दिने ।
[7]यावद्भवति कृत्याया दर्शनं जातवेदसि ॥ २०१ ॥

---

1. न्मन्त्रितं $M_1$ 2. अक्षवृक्ष $M_2$ 3. वधं $M_1, P_1, P_2$ 4. मुखम् $M_1$
5. प्रतप्ताभ्यां $M_1$ 6. होतव्यश्च प्रमाणेन $M_2$ 7. यावदित्यारभ्य-दहेदिति पर्यन्तं T कोशे नास्ति ।



क्रमेण तावज्जुहुयाद्वासरानेकविंशतिम् ।
फलकामपि वेदिस्थां होमधूपेन धूपयेत् ॥ २०२ ॥

अगरुं गुग्गुलुं चापि धूपार्थमनले दहेत् ।
अथ सप्तस्वतीतेषु दिवसेषु पितामह ॥ २०३ ॥

सप्तस्वहस्सु[1] मध्ये च यथाक्रममी ज्वराः ।
आक्रोशो वेदना तीव्रा गात्राणामविधेयता ॥ २०४ ॥

हिक्कानिःश्वासविच्छेदो जिह्वाहानिस्तथारिपोः ।
भवन्ति हि प्रभावेण चक्रमन्त्रस्य निश्चितम् ॥ २०५ ॥

इति द्विसप्तकेऽतीते दिवसेऽनन्तरे पुनः ।
मध्यरात्रे कृते होमे कृत्या तस्माद्विभावसोः ॥ २०६ ॥

त्रिशूलभीषणैर्हस्तैस्सप्तभिस्त्रिभिरङ्घ्रिभिः ।
जिह्वया रक्तवर्षिण्या लेलिहाना निजं मुखम् ॥ २०७ ॥

उद्गिरन्ती स्वनेत्राभ्यामाज्यसिक्तं हविर्भुजम् ।
नरास्थिमालां बिभ्राणा नूपुरीकृतमेखला ॥ २०८ ॥

कपालकुण्डलोपेता प्रहसन्ती भयानकम् ।
दण्डं [2]घण्टां तथा शूर्पं मार्जनीं पाशमण्डलम् ॥ २०९ ॥

बिभ्रतीं लम्बमानाभ्यां हस्ताभ्यां मुक्तमूर्धजाम् ।
अधिरूढापरस्कन्धमन्धकारनिभाकृतिः ॥ २१० ॥

स्फुलिङ्गमण्डलस्थेव विमुक्ताटोपभीषणा ।
उत्थाय प्राञ्जलिर्भूत्वा किं करोमीति भाषते ॥ २११ ॥

---

1. स्स्वतीतेषु $M_1$ 2. गदां $M_1$

अभिधास्यत्यथाचार्यः प्राणान् हर रिपोरिति ।
आदिष्टा सा तथेत्युक्त्वा रिपुं तस्य महात्मनः ॥ २१२ ॥

अपि दूरस्थितं हत्वा गुरुं पुनरुपैष्यति ।
अथ पूर्णाहुतिं हुत्वा होतृभिस्सह मन्त्रवित् ॥ २१३ ॥

[1]द्वाविंशे दिवसे लक्षं षडक्षरमिमं जपेत् ।
तथापराजितं मन्त्रन्नारसिंहमनुं तथा ॥ २१४ ॥

घृतादि पूरितैः कुम्भैर्विंशत्या पञ्चभिः पुनः ।
आत्माभिषेकं कुर्वीत चक्रमन्त्राभिमन्त्रितैः ॥ २१५ ॥

एनसो मुच्यते तस्मात्तथा शान्तिर्भविष्यति ।
उच्चाटनं प्रवक्ष्यामि यथावत् कमलासन ॥ २१६ ॥

निम्बधत्तूरपत्राणां श्मशानाङ्गारमिश्रितैः ।
रसैरक्षस्य काष्ठेन द्विहस्ते प्रेतवानसि । २१७ ॥

षट्कोणे नाभिनेम्यङ्के मण्डले क्रमशो लिखेत् ।
नामधेयं रिपोरन्तः [2]प्रोच्य याम्येऽथ पश्चिमे ॥ २१८ ॥

[3]यकारं भुवनं ब्रह्मन् [4]झकारं भुवनं तथा ।
शिष्टेषु त्रिषु कोणेषु तथाष्टौ मण्डलादयः ॥ २१९ ॥

तदारूढं रिपुं चापि कुण्डे चापाकृतौ पुनः ।
समिद्भिर्निम्बवृक्षस्य तथा च विषभूरुहः ॥ २२० ॥

जुहुयादभितो वह्नावमृतं प्लोषयन् रिपुम् ।
यत्र ध्वजं तं बध्नीयात् [5]उच्छ्रिते चैत्यपादपे ॥ २२१ ॥

1. द्वादशे $M_2$ 2. प्राच्ये $M_2$ 3. ककारं $M_2$ 4. ईकारं $M_2$
5. दृश्यते $M_1$



अहोभिरेकविंशत्या रिपुस्तस्य महानपि ।
अधिष्ठानं निजं हित्वा भार्यापुत्रादिभिः सह ॥ २२२ ॥

पलायते दिगन्तेषु न क्वचिल्लभते स्थितिम् ।
अथविद्वेषणं ब्रह्मन्यथावदवधारय ॥ २२३ ॥

अक्षपादपकाष्ठेन स्निग्धयोराकृतिर्द्वयोः ।
कृत्वा तयोर्लिखेन्मन्त्रं नामधेयं तयोरपि ॥ २२४ ॥

विद्वेषयपदोपेतमसृजा ध्वाङ्क्षकाकयोः ।
आखुमार्जारयोर्ब्रह्मंस्तथा सर्पमयूरयोः ॥ २२५ ॥

तथान्येषां विरुद्धानां तिरश्चां पक्षिणामपि ।
निबध्य रज्जुमायामां मूर्वजैर्महिषाश्वयोः ॥ २२६ ॥

तथा ते आकृती बध्वा व्यस्तयोस्तु कृतं मुखम् ।
अपिदध्यात्तयोरास्यं जपेन्मन्त्रं षडक्षरम् ॥ २२७ ॥

कुण्डेऽथ[1]होमं कुर्वीत समिद्भिर्मृत्युबन्धयोः ।
अष्टोत्तरसहस्रेण हुयादग्नौ सुदर्शनम् ॥ २२८ ॥

युध्येतस्निग्धयोर्द्वन्द्वं काकोलूकादि संमितम् ।
इत्थं दशस्वतीतेषु दिवसेषु स मन्त्रवित् ॥ २२९ ॥

अपाकृष्यति दम्पत्यो [2]ममत्वं मित्रयोरपि ।
[3]क्षीरैः स्नायात्तयोर्भूयः प्रीतिर्भवति पूर्ववत् ॥ २३० ॥

अथाभिधीयते ब्रह्मन् स्तम्भनं तन्निशाम्यताम् ।
शिलातले लिखित्वाथ चतुष्कोणचतुष्टयम् ॥ २३१ ॥

1. च T,$P_2$ 2. मुखं सन्मित्रयोरपि $M_1$ 3. क्षीरस्नानात् $M_2$

तेषु प्रत्येकमालिख्य पत्रैर्द्वैर्द्वयैः पितामह ।
गृहं वामनमन्त्रं तमिन्द्रकान्तचतुष्टयम् ॥ २३२ ॥

वज्राङ्कमपि पुष्पैस्तत्पूजयेत् कनकप्रभम् ।
स्थापयित्वा[1]स्थण्डिलेऽस्मिन्नासिक्या मन्त्रमीरयेत् ॥ २३३ ॥

स्तम्भयेति पदं चापि जुहुयादर्कखण्डिकाः ।
स्तम्भनं स्यात् झटित्येवं विवाहे गर्भलाभके ॥ २३४ ॥

वादजल्पवितण्डासु कथास्वपि च वादिनाम् ।
वक्ष्यामि तिलकं ब्रह्मन् लिखित्वा प्रतियातनाम् ॥ २३५ ॥

[2]द्वेष्यस्यावयवैस्तुल्यैं गोमयाङ्गारमिश्रितैः ।
तदङ्गेषु लिखेन्मन्त्रं तद्बीजेन समन्वितम् ॥ २३६ ॥

अथस्याच्छक्तिहीनं तु मतिद्वेषस्य देहिनः ।
अथ ते ताडनं वक्ष्ये धत्तूरं भयमारयोः ॥ २३७ ॥

अर्कस्य च रसे ब्रह्मन् श्मशानाङ्गारमिश्रितैः ।
लिखेत्प्रतिकृतिं विल्वकाष्ठे प्रेतस्य वाससि ॥ २३८ ॥

शङ्खकीलमथादाय चतुरङ्गुल संमितम् ।
अङ्गानि ताडयेत्तस्य तेन कीलेन मन्त्रवित् ॥ २३९ ॥

षडक्षरस्य कुर्वीत नित्यं जपमतन्द्रितः ।
धनादि हानिस्तस्य स्यात् म्यन्ते द्वेष्टि समन्त्रवित् ॥ २४० ॥

वशीकारमहं ब्रह्मन् भूपतीनां वदामि ते ।
कुष्ठकुङ्कुमसिद्धार्थकर्पूरागरुचन्दनैः ॥ २४१ ॥

1. तलेतस्मिन् $M_2$ 2. द्वेष्यस्यालयवैस्तल्या,-लयवैशल्या इति पाठौ नार्थबोधावहौ । अथ एष पाठस्साधुस्स्यादिति प्रतिभाति ।



गोरोचनान्वितैश्चापि कुसुम्भरजसा सह ।
भूर्जपत्रे लिखेच्चक्रं षडरेषु षडक्षरम् ॥ २४२ ॥

तद्बहिर्द्वादशारं च नाभिनेमिसमन्वितम् ।
द्वादशाक्षरमालिख्य द्वादशारं ततो बहिः ॥ २४३ ॥

अष्टाक्षरेण मन्त्रेण हंसमन्त्रेण चान्वितम् ।
तद्बहिर्द्वादशज्वालं पाशाङ्कुशमनुद्वयम् ॥ २४४ ॥

साध्यस्य नामधेयेन प्रणवेनान्तराङ्कितम् ।
आभिष्षोडशभिर्ब्रह्मन् विदर्भितमनन्तरम् ॥ २४५ ॥

तदेतद्गुलिकां कृत्वा पद्मसूत्रेण वेष्टिताम् ।
चक्राब्जे वासितां कृत्वा पूजितां कुसुमादिभिः ॥ २४६ ॥

होमं पद्माकृतौ कुण्डे कृत्वा कुसुमसर्पिषा ।
द्वादशाहानि कृत्वैवं मङ्गल्यादीनि साधयेत् ॥ २४७ ॥

राजादयो मुखं तस्य प्रेक्षन्ते विवशा इव ।
तस्य दूरात्पलायन्ते कूश्माण्डप्रमुखा ग्रहाः ॥ २४८ ॥

रसातलप्रवेशं ते कथयामि चतुर्मुख ।
बिल्वदारुं समासाद्य कुसुम्भरजसा सुधीः ॥ २४९ ॥

लिखित्वा षडरं चक्रं बहिस्तस्याथ मन्त्रवित् ।
[1]यथोपदेशं पातालं पन्नगासुरसङ्कुलम् ॥ २५० ॥

लिखेत्कृत्वा पुनः कुण्डे तस्मिन्नाधाय पावकम् ।
जुहुयान्नरमांसेन जपेन्मन्त्रं च सर्वशः ॥ २५१ ॥

1. यथोद्देशाच्च $M_2$

द्वादशाहेन ते पश्चात्पातालतलसंश्रयाः ।
उपस्थास्यन्ति तं [1]भीता युवत्यः कामपीडिताः ॥ २५२ ॥

तं ग्रहीष्यन्ति भर्तारमहम्पूर्वं शुचिस्मिताः ।
पाणिभिर्लोलवलयैः कामयानाः प्रियंवदाः ॥ २५३ ॥

[2]रसायनानि दास्यन्ति तस्मै पातालवर्तिने ।
[3]तद्भक्षणेन दीर्घायुस्ताभिस्सह यथेप्सितम् ॥ २५४ ॥

रंस्यते रम्यदेशेषु यत्र वा जायतेरुचिः ।
खड्गस्य साधनं ब्रह्मन्निदानीं कथयामि ते ॥ २५५ ॥

अश्वत्थपत्रान्तरितं खड्गं शास्त्रोक्तलक्षणम् ।
स्पृष्ट्वा षडक्षरं मन्त्रं जपेध्यात्वा सुदर्शनम् ॥ २५६ ॥

अथ खड्गस्य तापः स्यात् स यक्ष्यादीनि जेष्यते ।
तस्मिन् धूमायमाने तु गन्धर्वाधिपतिर्भवेत् ॥ २५७ ॥

तस्मिन् ज्वालामुखे ब्रह्मन् विद्याधरपतिर्भवेत् ।
गृहीत्वा तं पुनः खड्गं यथेष्टं लोकमाप्नुयात् ॥ २५८ ॥

गोमयेनोपलिप्तेऽथ शून्यागारे [4]पितामह ।
चक्रं लिखित्वा सुमनसितपुष्पैरलङ्कृतम् ॥ २५९ ॥

व्रणहीनं शवं तस्मिन् ब्राह्मणस्य नृपस्य वा ।
प्राचीनशिरसं कृत्वा माहिषेण घृतेन तम् ॥ २६० ॥
पादयोर्मन्त्रविल्लिम्पेद[5]सहायोऽप्रमत्तधीः ।
तद्वक्षसि पदं कृत्वा मन्त्रराजमिदं जपेत् ॥ २६१ ॥

1. भीत्या T  2. रसायनादि $T, P_1, P_2$  3. ततः प्रभावात् $M_2$
4. चतुर्मुख T  5. नाहरो $M_1$



प्रत्यहं जुहुयादग्नौ समिद्भिर्वेत्रभूरुहः ।
कृतसंख्यं जपेन्मन्त्रं जपहोमैः पितामह ॥ २६२ ॥

उत्थास्यति शवः प्राणी निशीथे कल्पिताञ्जलिः ।
स तस्मै मन्त्रसिद्धाय वक्ति दिव्यं रसायनम् ॥ २६३ ॥

पादुकामञ्जनं खड्गं प्रदास्यति यथेप्सितम् ।
यदिदं तेन खड्गेन हत्वा नीयात्तदामिषम् ॥ २६४ ॥

त्रैलोक्यविषयं ज्ञानं लप्स्यते चतुरानन ।
वलीपलितहीनत्वममरत्वं च सेत्स्यति ॥ २६५ ॥

निधीनन्यपि गूढानि प्रत्यक्षमिव पश्यति ।
रसं विमृज्य पाषाणे लिखेच्चक्रं षडक्षरम् ॥ २६६ ॥

रसं निधाय मूषायां बध्वा द्रव्यैर्यथोचितैः ।
कृत्वाभिमन्त्रितं ब्रह्मन् चक्रमन्त्रेण कल्पवित् ॥ २६७ ॥

उपयुञ्जीत मेधावी जपेच्चापि षडक्षरम् ।
आरोग्यं बलमैश्वर्यं कालमृत्युव्यतिक्रमम् ॥ २६८ ॥

वाग्मित्वं बुद्धिमत्त्वं च रूपसंहननं वयः ।
नभस्थले गतिश्चापि साक्षादिव गरुत्मतः ॥ २६९ ॥

इत्यादयो गुणास्तस्य भविष्यन्ति न संशयः ।
यथा न पादखेदः स्याद्दूरं गत्वापि तच्छृणु ॥ २७० ॥

काकजंघामुपादाय कोकिलेक्षण संहिताम् ।
बलां मोटारसैस्तेषां शरपुङ्खरसान्वितैः ॥ २७१ ॥

सर्षपस्नेहसंमिश्रैश्चक्रमन्त्राभिमन्त्रितैः ।
[1]लिप्त्वा पादयुतं चक्रं कृत्वारण्यमहापथे ॥ २७२ ॥

1. लिप्तपादयुतं चक्रं गत्वारणमहापथम् $M_2$

योजनानां सहस्रे द्वे न खेदं समवाप्नुयात् ।
यक्षिसिद्धिं प्रवक्ष्यामि तां लिखेत् क्षौमवाससि ॥ २७३ ॥

न्यग्रोधमूले तां ध्यात्वा यक्षीविद्यां जपेद्बुधः ।
आराध्य गुग्गुलुत्थेन धूपेन कमलासन ॥ २७४ ॥

समिद्भिर्वटवृक्षस्य तथाशोककरञ्जयोः ।
रक्तपद्मैस्तिलैश्चापि जुहुयाज्जातवेदसि ॥ २७५ ॥

एकविंशतिरात्रान्ते कम्पते स वटो मुहुः ।
दृढ बुद्धिः पुनश्चापि मन्त्रमेवं जपेद्बुधः ॥ २७६ ॥

अथ प्रत्यक्षरूपा सा यक्षी कल्याणलक्षणा ।
स्निग्धेव जननी सिद्धिं [1]तस्मै दत्त्वा यथेप्सितम् ॥ २७७ ॥

अमुनैव विधानेन यक्षा वैश्रवणादयः ।
प्रत्यक्षभूता दास्यन्ति साधकेन वृतं वरम् ॥ २७८ ॥

यथायथाधिको होमो जपो वा कमलोद्भव ।
अमुष्य चक्रमन्त्रस्य पञ्चकोटिर्यथोत्तरम् ॥ २७९ ॥

तथा तथा पदान्येतान्यवधूयेत किल्बिषम् ।
आदित्यानां शशाङ्कस्य वसूनां मरुतामपि ॥ २८० ॥

अश्विनो वासवस्यापि मन्वादीनां तपस्विनाम् ।
रुद्राणां ब्रह्मणश्चापि चक्रमन्त्रस्य वैभवात् ॥ २८१ ॥

सहस्रकोटिसंख्येन होमेन च जपेन च ।
तपसा चातितीव्रेण लभते वैष्णवं पदम् ॥ २८२ ॥

1. रक्षां $M_1$



किं भूयसा प्रलापेन यत्रेष्टं तद्भविष्यति ।
स तेन तेन लभते पापेभ्योऽपि प्रमुच्यते ॥ २८३ ॥

इत्येतत्कथितो ब्रह्मन् षडक्षरमहामनोः ।
कालः सङ्ग्रहरूपेण रहस्यं सर्वसिद्धिदम् ॥ २८४ ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मतन्त्रे चर्यापादे
सुदर्शन महामन्त्रवैभवो नाम द्वात्रिंशोऽध्यायः ॥

—: * :—

त्रयस्त्रिंशोऽध्यायः ।

## समाराधनाङ्गमन्त्रोद्धारः ।

ब्रह्मा :—

अथौपचारिकान्मन्त्रान् शुश्रूषे भगवन्नहम् ।
प्रयुज्यमानैर्यैः प्रीतिर्महती ते भविष्यति ॥ १ ॥

श्री भगवान् :—

ब्रह्मन्नाराधनाङ्गानि मन्त्राण्यवहितः श्रृणु ।
यानि श्रुत्यन्तभागेषु श्रृण्वन्ति ब्रह्मवादिनः ॥ २ ॥

[1]बन्धुकोशं पुरस्कृत्य ककुभं [2]ब्रह्ममस्तकम् ।
[3]वैराजं देवरं पश्चादेकनेत्र[4]मृगेश्वरौ ॥ ३ ॥

पवित्रभुवनौ चापि ब्रह्मन् चण्डवनालयौ ।
हुताशवामनौ पद्मगोपनौ विनतात्मजम् ॥ ४ ॥

1. ब्रह्म $M_1$ 2. बन्धु $M_1$ 3. वैकुण्टं A 4. महेश्वरौ T.

विघ्नेशं मन्दरं [1]कान्तं कलारमा च जयाजयौ ।
पीयूषरामौ श्रीकुम्भौ सूक्ष्मं गोपनपश्चिमौ ॥ ५ ॥

वरुणं भद्रहस्तान्तं विघ्नेशं पाटलप्रियम् ।
अनिरुद्धं जयेणेशौ शुक्लं जयमथोदयम् ॥ ६ ॥

भास्वन्तमृतधामानं शत्रुदाहकवामनौ ।
पद्मदिदेवौ श्रीवत्सं दक्षं भास्करगोपनौ ॥ ७ ॥

पवित्रभुवनौ वह्निभुवनौ शत्रुदाहकम् ।
पश्चिमास्यं मकारं च हुताशनसुधारसौ ॥ ८ ॥

अन्तिमं ककुभं कृत्वा [2]जितन्ते मनुमीरयेत् ।
भानुविष्णुं ध्रुवं बीजं ब्रह्मास्येतस्य कल्पयेत् ॥ ९ ॥

अङ्गान्यप्यमुना कुर्यादृषिः सनक उच्यते ।
छन्दोऽनुष्टुप्तथैतस्य देवता पुरुषोत्तमः ॥ १० ॥

जपोऽम्बुतर्पणं होमं कृतं षोडशलक्षवत् ।
धर्मार्थकाममोक्षार्थान् पुंसां सर्वं प्रयच्छति ॥ ११ ॥

पञ्चोपनिषदान्मन्त्रानथ ते कथयाम्यहम् ।
परमेष्ठी पुमान्विश्वो निवृत्तः सर्व एव हि ॥ १२ ॥

आम्नायादिं क्रोधरूपं सङ्कर्षणगजाननौ ।
दक्षानिरुद्धौ पापघ्न वह्निगोपनमारुतान् ॥ १३ ॥

पवित्रपावकौ दक्षमाधवौ पद्मसम्भव ।
क्रोधकौस्तुभशङ्खवैर्गोपनं जयमन्दरौ ॥ १४ ॥

1. शान्तं P.   2. जितन्ता T, P, $P_2$



[1]विघ्नेशमाधवौ चान्ते परमेष्ठिनमीरयेत् ।
ऋषिरादित्यनामास्य छन्दो गायत्रमुच्यते ॥ १५ ॥

देवता च सदाविष्णुर्जपेद् द्वादशलक्षवत् ।
प्रथमं प्रणवं कृत्वा धूलिकेतनगोपनौ ॥ १६ ।

विघ्नेशद्वितयं दक्षकलान्तौ पश्चिमाननम् ।
वह्न्यादिदेवौ शङ्खाख्यं पश्चिमं भुवनं तथा ॥ १७ ॥

पावकं [2]भुवनं पश्चाच्छकं दाहकगोपनौ ।
जयदक्षौ भद्रपाणिं देवदत्तौ तथान्तिमौ ॥ १८ ॥

इत्येवं पौरुषं मन्त्रमीरयेन्मन्त्रकोविदः ।
ऋषिं नारदमस्याहुश्छन्दो गायत्रमीरितम् ॥ १९ ॥

देवता वासुदेवश्च शृणु विश्वमतः परम् ।
ताराग्निगोपनौ [3]दक्षभद्रपाणी कलान्तिमौ ॥ २० ॥

पवित्रवह्न्यादि देवान् शङ्खं वरुणविक्रमौ ।
श्रीवत्सकुम्भौ विजयमन्दरौ विघ्नमाधवौ ॥ २१ ॥

इतीरितो विश्वमन्त्रः पुनर्द्रष्टा भृगुर्मनोः ।
छन्दो गायत्रमेतस्य वाच्यः सङ्कर्षणाभिधः ॥ २२ ॥

उद्गीथकुम्भादिदेवौ विघ्नेशद्वयमस्तकम् ।
मन्दरं वरुणं पापहननं वह्निगोपनौ ॥ २३ ॥

वायुं विघ्नेश्वरं रामं पीयूषं वसुमस्तकम् ।
एकनेत्रं वायुमादिं देवान् वैराजमन्दरौ ॥ २४ ॥

1. विघ्नेशं च मृगेशं च दक्षकमन्तिमौ A, $M_2$   2. श्रीधरं A, $M_2$   3. भद्रपाणि-

मनुष्येशं मृगेशानं निवृत्तिमनुमीरीरितः ।
ऋषिस्तु नारदश्छन्दो गायत्रं पूर्वमीरितम् । २५ ॥

प्रद्युम्नो देवताऽनेन निवृत्तिं लभते पुमान् ।
प्रणवं पीतवर्णाभं गोपनं मानुषेश्वरम् ॥ २६ ॥

माधवीं सर्गिणं पापहननं वह्निगोपनौ ।
चतुर्गतिं कलात्मानं कुम्भः पावकगोपनौ ॥ २७ ॥

वैराजमन्दरौ स्यातामुद्धार्य चतुरानन ।
गजास्यं देवदत्तान्तं सर्वमन्त्रं प्रकल्पयेत् । २८ ॥

उष्णिक्छन्दः पुनस्तस्य द्रष्टा स्यान्नीललोहितः ।
अनिरुद्धो देवता च मनवः पञ्च कीर्तिताः ॥ २९ ॥

पञ्चोपनिषदः पुण्यास्ता एताश्चतुरानन ।
महापातकनाशिन्यः पराकादिफलप्रदाः ॥ ३० ॥

एतास्सम्यगधीते यो वेदान्तानथवाखिलान् ।
तावुभौ सदृशौ मन्ये पञ्चभूश्शस्यतेऽथवा[1] ॥ ३१ ॥

प्रायश्चित्तेषु होमेषु प्रतिष्ठाप्रोक्षणादिषु ।
प्रयुञ्जीत क्रमानेताः सर्वपापप्रणाशिनीः ॥ ३२ ॥

अतः परं प्रवक्ष्यामि शान्तिमन्त्रचतुष्टयम् ।
प्रणवं मधुहन्तारं पवनं मधुसूदनम् ॥ ३३ ॥

भास्करं पुरुषात्मानं गदिविघ्नेशमाधवान् ।
भल्लायुधं हृषीकेशमग्निं भल्लायुधोदयम् ॥ ३४ ॥

1. पञ्चभूश्शस्यतेऽधुना T, $P_1$, $P_2$



कुम्भं मृगाङ्कपीयूषौ कमलाननमन्तिमम् ।
शुक्लं कुम्भं मघोश्शत्रुं भास्करं गोपनं तथा ॥ ३५ ॥

इतीरयेन्मनुं ब्रह्मन् ऋषिः स्याद्देवता मनोः ।
छन्दो गायत्रमेतस्य देवता तिग्मतेजसः ॥ ३६ ॥

उद्गीथं विजयं कुम्भं विघ्नेशात्रिमृगेश्वराः ।
पीयूष गोपनौ भद्रहस्तगोपनयद्वयः ॥ ३७ ॥

जृम्भल पद्मनाभं च भानुमद्विजयोनयः ।
मुसली गोपनः पश्चाज्जयं कुंभञ्च माधवम् ॥ ३८ ॥

नेत्रोतदेहौ सूर्यश्च श्रीधरौ विजयावनौ ।
श्रीविघ्नेशस्सुभद्रोऽथ गदीवरुणमस्तकाः ॥ ३९ ॥

वैराजकुम्भादिदेवा दक्षो मधुनिषूदनः ।
आदित्यरामनासिक्यचन्द्रवामनसर्गिणः ॥ ४० ॥

हुतान्त इति मन्त्रोऽयमुदनीयश्चतुर्मुख ।
ऋषिरस्य [1]भृगुं प्राहुश्छन्दो गायत्रमित्यपि ॥ ४१ ॥

हुताशनो देवता च देवानां प्रथमं मुखम् ।
निगमादिं श्रियः कान्तौ विजयद्वयविक्रमौ ॥ ४२ ॥

क्रोधमेघौ पवित्रं च श्रीधरं [2]पावकाह्वयौ ।
उग्रात्मवह्निद्युमणिरनलं बन्धुमस्तकम् ॥ ४३ ॥

पवित्रं बन्धुनासिक्यं गदिनं पुलइं तथा ।
दृष्टिं मृगेशं द्युमणिं रामो वैधरपावकौ ॥ ४४ ॥

1. मनुं T, $P_2$ 2. पावकोदयौ T, $P_1$, $P_2$

वरुणं मायया साकं प्रचण्डं पाटलप्रियम् ।
पवित्रदहनौ वायुस्वच्छन्दौ ठठ पश्चिमौ ॥ ४५ ॥

इत्थं प्रकल्पयेन्मन्त्रमृषिर्धनद उच्यते ।
छन्दो गायत्रमेतस्य देवता हरिपिङ्गलः ॥ ४६ ॥

तारं पवित्रं विजयं विघ्नेशं भृगुगोपनौ ।
भास्करं पुरुषात्मानं गदिनं विघ्नमाधवौ ॥ ४७ ॥

भल्लायुधहृषीकेशौ वह्निं भल्लायुधोदयम् ।
कुम्भसम्पुटितं शुक्लं चन्द्रं[1] पीयूषगोपनौ ॥ ४८ ॥

भानुमन्तं मघोशशत्रुमिति मन्त्रं विवेचयेत् ।
ऋषिर्बृहस्पतिस्तस्य छन्दः पूर्ववदीरितम् ॥ ४९ ॥

आदित्यो देवता ह्येवमुक्तं मन्त्रचतुष्टयम् ।
यत्र मन्त्रं क्रियाद्रव्यहीनं शान्त्यादिकर्मणि ॥ ५० ॥

तस्मिन्नेतत्प्रयुञ्जीत तथायं साधको विधिः ।
मन्त्राणि ते प्रवक्ष्यामि तत्वानां पञ्चविं[2]शतिम् ॥ ५१ ॥

प्रयुज्यमानैर्यैर्विश्वं प्राणिति प्राणवर्जितम् ।
प्रणवस्योपरि स्पर्शानाहुर्वामनमस्तकान् ॥ ५२ ॥

नमोऽन्तान् प्रातिलोम्येन योजयेत्पञ्चविंशतिम् ।
परशब्दं चतुर्थ्यन्तं नतेः पश्चात्प्रकल्पयेत् ॥ ५३ ॥

जीवं देहं तथा [3]बुद्धिं गर्वं पश्चान्मनस्तथा ।
शब्दस्पर्शौ तथा रूपं रसो गन्धश्च पञ्चमः ॥ ५४ ॥

1. चन्द्रपीयूष गोपनान् T, $P^1$, $P_2$  2. विंशतेः T, $P_1$, $P_2$  3. बुद्धिं-अहंकारं मनस्तथा A.



एतान् पञ्चापि विषयान् तन्मन्त्रवचनोदरान् ।
श्रोत्रं त्वक्च तथा नेत्रं जिह्वा घ्राणं ततः परम् ॥ ५५ ॥

वाचं पाणिं तथा पादं पायूपस्थौ पितामह ।
पृथिवीं प्रथमं तोयं तेजो मारुतमन्वतः ॥ ५६ ॥

व्योम चान्ते चतुर्थ्यन्तैरात्मशब्दैस्तथोत्तरैः ।
कृतनामानिमान् शब्दान् मन्त्ररूपेण कल्पयेत् । ५७ ।

उद्गीथकृतनासिक्यौ हुताशं बिन्दुमस्तकम् ।
ककुभं गदिनं [1]वासुदेवं विजयवामनौ ॥ ५८ ॥

तथा च वासुदेवान्तविजयं वामनं तथा ।
वह्निं गुहालयं चापि पवित्रमधुसूदनौ ॥ ५९ ॥

चतुर्गतिं [2]मनुं प्राणं दीपार्थं मनुमीरयेत् ।
तारं सूर्यहृषीकेशयष्टयः पुष्टिबीजवान् ॥ ६० ॥

मेघबिन्दू शुक्लरामौ ऋषिः पुण्यत्रिविक्रमौ ।
इन्दुर्गुहालयं पश्चाज्जयपावकगोपनाः ॥ ६१ ॥

इति वायुर्नतिर्मत्स्यादक्षसूत्रमनुर्महान् ।
तारं श्रीराम कौमार पुरुषात्ममृगेश्वरौ ॥ ६२ ॥

विष्णुं पञ्चान्तकं वह्निं धूमध्वजगुहालयौ ।
पवित्रबन्धुसुमुखा माधवं प्रथमं तथा ॥ ६३ ॥

हुताशं पद्मपाणिं च वायुं वह्निं गुहालयम् ।
पश्चिमास्यं मघोशशत्रुं शङ्खं च नतिमस्तकम् ॥ ६४ ॥

1. पीठं मुसलं वायुमस्तकम् $M_1$  2. नतिं $M_1$

इत्यर्घ्यमन्त्रं रचयेदथ पाद्यमनुं शृणु ।
तारं गदिभ्रुवौ चापि गदध्वंसी मृगाधिपौ ॥ ६५ ॥

पश्चिमं रामशिरसं विजयं वह्निपश्चिमौ ।
एकविंशं पद्मनाभं मायां पवनपङ्कजौ ॥ ६६ ॥

वह्निद्वितीयमनिलं पापघ्नं मधुसूदनम् ।
[1]वैधरं मारुतं वह्निं हृषीकेशोऽथ पश्चिमम् ॥ ६७ ॥

रामं सुमुखसारङ्गौ नत्यन्तं मन्त्रमीरयेत् ।
आदौ [2]व्यालं शुक्रवह्निं चन्द्रकुम्भौ जयानिलौ ॥ ६८ ॥

मन्दरं पद्मनाथं च वैराजाग्निगुहालयाः ।
[3]पापहन्तारमद्वेषी वनमाली मृगेश्वरौ ॥ ६९ ॥

गोपनो वक्रतुण्डश्च दक्षविघ्नेशगोपनाः ।
वैराजदक्षौ विघ्नेशमाधवौ नतिमस्तकौ ॥ ७० ॥

इत्याचमनमन्त्रस्स्यात् धूपादीनि यथा अमी ।
प्रथमं चेदपि मनोर्धूपान्दुरितात्मवान् ॥ ७१ ॥

रामं दष्टिमनुस्वारं गदिनं विष्णुमस्तकम् ।
आदित्यगोपनौ चण्डं वह्निजायावसानकम् ॥ ७२ ॥

इत्येतत्कल्पितं मन्त्रं प्रतिभोगनिवेदनम् ।
प्रयुञ्जीत प्रयोगं च तस्मात्साधारणो मनुः ॥ ७३ ॥

द्विषट्कक्षरमुद्धृत्य शिखण्डिपुलहं ध्रुवम् ।
सुभद्रकुम्भौ विजयश्रीधरौ दक्षमाधवौ ॥ ७४ ॥

---

1. सुभगं A, $M_2$ 2. व्यापीति पाठो न कश्चिदप्यर्थं बोधयति ।
3. पापहन्ता च रामं च वनमालिमृगेश्वरौ $M_1$



पवित्रभुवनौ क्रोधपश्चिमाननगोपनाः ।
ठठान्तमथ नत्यन्तं मनुमित्थं प्रकल्पयेत् ॥ ७५ ॥

पुष्पाञ्जलिप्रदानेषु नियुञ्जीत जितं पुनः ।
तारश्शुक्लघटौ यष्टिश्चन्द्रमा भुवनोऽनलः ॥ ७६ ॥

सुभद्रवाय्वोतदेह नत्यन्तो मनुरीरितः ।
तेनाराधनवस्त्रं स्यादाप्यायनमुपाचरेत् ॥ ७७ ॥

इत्थमाराधनाङ्गानि मन्त्राणि कथितानि ते ।
इदानीमैहिकान् मन्त्रान्प्रवक्ष्यामि मनोहरान् ॥ ७८ ॥

स्वीकृत्य सप्तवर्णानि रोहिणीशमपांपतिम् ।
पवित्रमानुषेशानौ गोपनं पुण्यविक्रमौ ॥ ७९ ॥

पश्चिमं विजयं वायुं माधवौ वरुणानिलौ ।
वासुदेवं तथा दक्षं गोपनं जयमन्दरौ ॥ ८० ॥

विघ्नेशमाधवौ पापहननं पवनं तथा ।
गुहालयमथो यष्टिं सूर्यमूर्ध्वं जगत्पतिम् ॥ ८१ ॥

यष्टिं कुम्भं जगत्प्राणं हृषीकेशं तथा ध्रुवम् ।
श्वेतांशुं वरुणं बिन्दुं द्विसुर्यं वामनं ध्रुवम् ॥ ८२ ॥

ठठान्तिकं तनुं ब्रह्मन्नीरयेदथ तारकम् ।
नत्यन्तं शुक्लवरुणौ पश्चिमं विक्रमं जयम् ॥ ८३ ॥

बन्धुमग्निं हृषीकेशं पश्चिमं मधुसूदनम् ।
चतुर्गतिमचामादिं माहेन्द्रं विष्णुपन्नगौ ॥ ८४ ।

मन्दरं वामनं पश्चात्पश्चिमं विजयानिलौ ।
देवदत्तं श्रियं वह्निं महामायां महाबलाम् ॥ ८५ ॥

हृषीकेशं ध्रुवं चापि बीजमाम्रेडयेदिदम् ।
पवित्रमनिलं[1] चण्डं गोपनं द्विविनायकम् ॥ ८६ ॥

वैधरं मधुहन्तारं विजयं मन्दरं तथा ।
भद्रहस्तं मृगेशं च ठठान्तं मन्त्रमीरयेत् ॥ ८७ ॥

सिन्धुद्वीपो मनोर्द्रष्टा विराट् छन्दो निगद्यते ।
स्वप्नाधिपतिरेतस्य देवता परमः पुमान् ॥ ८८ ॥

हृषीकेशं यष्टिमन्त्रमीरयेन्मन्त्रकोविदः ।
उष्णिक् छन्दः पुनस्तस्य देवता नृहरिर्हरिः ॥ ८९ ॥

[2]अथाङ्गिरस नामानि तेषां मन्त्रं प्रचक्षते ।
[3]अभिन्नविटपस्कन्धं स्पृष्ट्वाश्वत्थमिमं जपेत् ॥ ९० ॥

अहोभिः सप्तभिर्मृत्युं लङ्घयेत्संयतेन्द्रियः ।
अथाल्पायाससाध्यानि शृणु मन्त्राणि पद्मज ॥ ९१ ॥

व्यापिनं पुरुषात्मानं वासुदेवं सपश्चिमम् ।
रामं [4]विघ्नेश्वरं मायामुद्गीथरहितानिमान् ॥ ९२ ॥

दक्षादीशानादि देवान् मायाब्जं सुप्रतिष्ठितम् ।
वायुं पद्मं मघोश्शत्रुं शङ्खं वह्निध्रुवानपि ॥ ९३ ॥

हुतान्तमुद्धरेत्कर्णं गोभितं मन्त्रमुत्तमम् ।
जपेल्लक्षमिमं मन्त्रमुपोष्यैकादशेऽहनि ॥ ९४ ॥

द्वादश्यामपि कुर्यात्स्त्रीं समुन्नतपयोधराम् ।
आवाह्य तस्यां हुत्वा च पूजयित्वा च योगिनीम् ॥ ९५ ॥

1. मनलं T, $P_1$, $P_2$ 2. तथा हि $P_2$ 3. अभय A, $M_2$
4. विश्वेश्वरं A, $M_2$



मध्यरात्रे बलिं दत्वा छिन्द्यात्तां प्रतियातनाम् ।
भूतं [1]भवद्भविष्यं च तस्य वक्ष्यति योगिनी ॥ ९६ ॥

आम्नायादिं विधातारं प्रचण्डं वसुमस्तकम् ।
पश्चिमं विक्रमं लक्ष्मीं गोपनं खड्गधारिणम् ॥ ९७ ॥

सविक्रमं घटं चाग्निं [2]पद्मं तद्विरदाननम् ।
पङ्कजं वारुणमथो सरसीरुहसम्भव ॥ ९८ ॥

ककुभं वह्निमपरं पीयूषं गोधनं तथा ।
झषं गुह्यालयं चापि शङ्खं वह्निं च मन्दरम् ॥ ९९ ॥

श्रीधरं पद्मवैराजं गोपनं सूक्ष्मलोचनम् ।
वह्निं प्रचण्डं विघ्नेशं रामो मन्दरपावकौ ॥ १०० ॥

पीतादिदेवौ पुलहं यष्टिं पद्मगुह्यान्तिकौ ।
एकनेत्रं श्रियं वह्निं वामनं वह्निमाधवौ ॥ १०१ ॥

मृगेशभावसद्वन्धू[3]न्विन्घोपहतिकं तथा ।
स्वच्छन्दं विजयं वह्निं वीरसेनसरोरुहौ ॥ १०२ ॥

आदिदेवं तथा चन्द्रं [4]रविदृष्टिशुभप्रदौ ।
वह्निं विनायकं रामं द्विर्दक्षं चतुरानन[5] ॥ १०३ ॥

प्रचण्डः पावको यष्टिः पश्चिमास्यहुताशनौ ।
पीयूषरामसहितौ शुभदं वायुगोपनौ ॥ १०४ ॥

विजयं पद्मबिन्दुं च वैराजमधुसूदनौ[6] ।
गणेशगोपनौ पश्चाद् गदिनं विजयं घटम् ॥ १०५ ॥

1. भन्यं $M_1$ 2. घटश्च T, $P_1$, $P_2$ 3. विघ्नेशं भुवनं तथा $M_1$
4. बायुं विष्णुद्दाष्टिशुभप्रदौ $M_1$ 5. चतुराननम् T, $P_1$, $P_2$ 6. वैराजं
मधुसूदनम् T

एकदृष्टिं तथा वह्निं मन्दरं मधुसूदनम् ।
कुञ्जराननविष्णवन्तौ विघ्नेशं बन्धुमस्तकम् ॥ १०६ ॥

ककुभं चन्द्रधवलं गोपनं पश्चिमाननम् ।
चतुर्गतिं ठठोपान्तं इति मन्त्रं प्रकल्पयेत् ॥ १०७ ॥

अधस्तान्नेत्रवृक्षस्य जपन्नेतदतन्द्रितः ।
नष्टं मुष्टिं चिन्तनांच जानात्येतत्प्रसादतः ॥ १०८ ॥

सप्ताक्षरं प्रकल्प्यादौ वरुणं गोपनं दरम् ।
पीयूषमाधवौ[1] दक्षं दृष्टिवह्निदरद्वयम् ॥ १०९ ॥

पश्चिमाग्निमुखानेतान् दहनस्यान्तरोदितान् ।
[2]सूर्यरामौ पीतबन्धू द्विः प्रकल्प्य चतुष्टयम् ॥ ११० ॥

शुक्लं यष्टिविवस्वन्तौ वह्निं स्वाहावसानकम् ।
इत्थम्बुस्तम्भनं मन्त्रं कल्पयेत्कमलासन ॥ १११ ॥

प्रणवादिं वासुदेवं शुभदं [3]पङ्कजद्वयम् ।
मायामभ्यस्य हन्तारं पुलहं शशिनं जयम् ॥ ११२ ॥

यष्टिं भल्लायुधं चापि विघ्नेशं राममस्तकम् ।
नत्यन्तमुदकस्तम्भं मन्त्रं मन्त्रवदीरयेत्[4] ॥ ११३ ॥

अनयोः पूर्वमन्त्रेण स्थितवत् सलिले चरेत् ।
उत्तरेण तु सिन्धूनां वेगस्तम्भं समाचरेत् ॥ ११४ ॥

अग्निस्तम्भनमन्त्रं ते कथयामि यथातथम् ।
सप्ताक्षरं कुम्भवह्निं भुवनं वनमालिनम् ॥ ११५ ॥

1. पीयूषमाधवं $P_1$,$P_2$ 2. रामोऽपि तद्बन्धू $M_2$ 3. पङ्कजं तथा T,$P_1$,$P_2$ 4. मुदीरयेत् $M_1$



गोपनं पुरुषात्मानं त्रिवह्निं शशलाञ्छितम् ।
वैराजबिन्दूं [1]ह्रस्वान्तं चतुर्गतिमथो ठठम् ॥ ११६ ॥

इत्यग्निस्तम्भनं मन्त्रं साधयेदयुतं नरः ।
लोहं तैलं घृतं क्षीरं परशुं सलिलं तथा ॥ ११७ ॥

सप्तान्येतानि संस्पृश्य शीतश्चाग्निर्भविष्यति ।
[2]उदरे पङ्कजस्येव सुखमासीत शुष्मणः ॥ ११८ ॥

सप्ताक्षरं चतुर्थ्यन्तं विष्णुशब्दं चतुर्मुख ।
[3]पवित्रं श्रीहृषीकेषं विघ्नेशं मधुसूदनम् ॥ ११९ ॥

प्रद्युम्नं पापहननं विजयं वायुमाधवौ ।
दृष्टिं मन्दरपाताद्विर्ठठान्तं मन्त्रमीरयेत् ॥ १२० ॥

गवां च महिषाणां च कुर्यादेतेन वश्यताम् ।
आदौ चतुस्त्रिवर्णानि धनप्रदगुहालयौ ॥ १२१ ॥

पवित्रवह्निकमलं सुमुखं वह्निगोपनौ ।
वायुष्ठठान्तमिन्येष व्यालादि दमनो मनुः ॥ १२२ ॥

प्रणवे षष्ठशब्दादि सम्बुध्यन्तं पिशाचवत् ।
ऊर्ध्वलोकेशहननं पाषाणेषु ठठो मनुः ॥ १२३ ॥

इमं हि जपतोमन्त्रं रिपुमूर्धनि ताडयेत् ।
पिशाचरूपं प्रत्यक्षं पाषाणैरस्थिभिश्शवैः ॥ १२४ ॥

व्यापिनं गदिनं भद्रहस्तं पुण्यस्सरित्पतिम् ।
वह्निं [4]हुताशं विष्णवन्तं ककुभं कुम्भविक्रमौ ॥ १२५ ॥

1. सुस्वान्तं $M_1$ 2. उत्तरे A,$P_1$,$P_2$ 3. पवित्रार्थं हृषीकेशं $M_2$
4. हुताशनं विष्णुं A,$M_2$

श्रीकुम्भगोपनान् कुम्भं शशाङ्कं ब्रह्मसाधनम् ।
द्विर्मन्दरं मधोश्शत्रुं सुभद्रं बन्धुमस्तकम् ॥ १२६ ॥

पीतं क्रोधनमायामं विजयं गोपनं ध्रुवम् ।
ब्रह्माणं मानुषेशानं वायुं गोपनमस्तकम् ॥ १२७ ॥

बिन्दुं पवित्रमनलं[1] मारुतं प्रेतनायकम् ।
स्वाहावसानं गन्धर्वं मन्त्रमित्थं प्रकल्पयेत् ॥ १२८ ॥

अथर्वणमिमं मन्त्रं पिनाकी शिरसिस्थितम् ।
अधस्तात्पारिजातस्य हेमसिंहासनस्थितम् ॥ १२९ ॥

[2]आयामिनीभिर्मालाभिर्दिव्याभिश्शोभिवक्षसम् ।
चन्दना[3]गरुलिप्ताङ्गं दिव्याभरणभूषितम् ॥ १३० ॥

रूपयौवनयुक्ताभिर्वालव्यजनपाणिभिः ।
नित्यं षोडशवर्षाभिरुत्पलस्निग्धदृष्टिभिः ॥ १३१ ॥

महाकुलप्रसूताभिर्मदविह्वल[4]मूर्तिभिः ।
अद्भुतभ्रूविलासाभिः श्रवणप्रियगीतिभिः ॥ १३२ ॥

ईष[5]द्विस्रंसिवासोभिरंसव्याकुलमौलिभिः ।
स्तनान्दोलितहाराभिः कदलीसुभगोरुभिः ॥ १३३ ॥

कुटिलालकमालाभिः कन्यकाभिर्निषेवितम् ।
कृतावधानं गीतेषु [6]किंनरीणां मुहुर्मुहुः ॥ १३४ ॥
गन्धर्वाधिपतिं ध्यायन् लक्षं मन्त्रमिमं जपेत् ।
अथैनमुपतिष्ठन्ते कुलवत्यो वराः स्त्रियः ॥ १३५ ॥

---

1. मनिलं $M_2$ 2. आयामिनीभिः ज्वालाभिर्मालाभिः $M_2$ 3. दिङ्नाग मदलिप्ताङ्गं रत्नाभरण $T, P_1, P_2$ 4. दृष्टिभिः $M_2$ 5. द्विस्रंसि $B_2, P_1, P_2$ 6. किन्नराणां $T, P_1, P_2$



गन्धर्वराजवचनाद्रूपयौवनशालिनम् ।
अथेन्द्रजालमन्त्रस्य स्वरूपं कथयामि ते ॥ १३६ ॥

ब्रह्मकुम्भौ वीरसेनौ क्रोधं [1]सुमुखवारुणौ ।
रामं दक्षं मधोश्शत्रुं चतुर्गतिमृगेश्वरौ ॥ १३७ ॥

मोहयत्यथ रूपाणि द्विः प्रदर्शय मस्तकम् ।
हुङ्कारं चतुरभ्यस्तं ब्रह्मन् किलिकिलिं तथा ॥ १३८ ॥

ऋतद्वयं कुम्भरामौ पवित्रानलवामनान् ।
विजयं लोचने कृत्वा भद्रं[2] वामनमस्तकम् ॥ १३९ ॥

नानारूपाणि माये द्वे द्विर्मन्त्रमिति कल्पयेत् ।
जपेन लक्षसंख्येन माया प्रत्यक्षसङ्गता ॥ १४० ॥

यद्यदिष्टं साधकस्य तत्तत्कुर्वीत तत्क्षणात् ।
ब्रह्माद्या देवताः सर्वा गगनस्थाः प्रदर्शयेत् ॥ १४१ ॥

गगनं मेदिनीं कुर्याद्यामिनीं दिवसं तथा ।
जीवन्तमप्सु निहितं प्राणवन्तं तथा शवम् ॥ १४२ ॥

मरुप्रदेशं वारीणि शुष्यन्तं पयसां निधिम् ।
षड्रसं वैपरीत्येन देशानप्ययथातथम् ॥ १४३ ॥

पाषाणैस्ताडयन् देहं नेत्राद्युत्पाटनं तथा ।
खर्वाटकेशसंरोहं यूनः स्थविरतां तथा ॥ १४४ ॥

पुंसः स्त्रीत्वं तथा स्त्रीणां पुंस्त्वं क्लीबस्य तद्द्वयम् ।
तयोर्वा क्लीबतां चित्रं श्मश्रु स्तनविपर्ययात् ॥ १४५ ॥

---

1. सुभग $M_2$ 2. गर्भद्वितय मस्तकम् $T, P_1, P_2$

गीतं शुक्रस्तथा गीतामन्यथा भावभागिनः ।
अगर्भिणीं गर्भिणीं च गर्भिणीं चाप्यगर्भिणीम् ॥ १४६ ॥

पादादि भङ्गसन्धाने नभःकुसुमसम्भवः ।
अचिन्तितानि शैलानां पतनानि यथेप्सितम् ॥ १४७ ॥

मनुष्यादिषु श्रृङ्गाणि गगनारोहणं तथा ।
अकाल रणसंरम्भान् प्रतिमाकर्षणं तथा ॥ १४८ ॥

कठिनानां द्रवीभावो द्रवतां कठिनात्मता ।
अद्यापि प्रलयावस्थामुन्मज्जननिमज्जने ॥ १४९ ॥

खड्गादिभिरभङ्गं च जङ्गमं स्थावरं तथा ।
अचेतनेषु चैतन्यं चेतनेषु विचेतनाम् ॥ १५० ॥

रूपदर्शनमन्धस्य मूकस्य मधुरां गिरम् ।
श्रवणं बधिरस्यापि पङ्गोर्गमनमद्भुतम् ॥ १५१ ॥

प्रदर्शनं विमानानां भुवि सूर्येन्दुमण्डलम् ।
शिलावर्षं महाघोरं[1] राहुग्रासमपर्वणि ॥ १५२ ॥

एकस्थानप्रविष्टानि भुवनानि चतुर्दश ।
आसनस्थस्य पतनं तुमुलं च परस्परम् ॥ १५३ ॥

प्रतीपगमनं सिन्धोरासनं हव्यवाहने ।
[2]तत्क्षणे विप्ररूढानां वृक्षाणां पल्लवं फलम् ॥ १५४ ॥

सेचनं हव्यवाहेन ज्वलनं पयसा तथा ।
मध्याह्नसमये ज्योत्स्ना दिङ्मोहं वातसंभ्रमम् ॥ १५५ ॥

1. महासारं $M_1$ 2. तत्क्षणेऽपि प्ररूढानां $T, P_1, P_2$



चित्तादि धातुसंक्षोभं प्रत्यक्षस्याप्यदर्शनम् ।
शैलश्रृङ्गाद्यपतनात् [1]गगनस्य प्रदर्शनम् ॥ १५६ ॥

इत्थम्भूतानि चित्राणि कुर्यान्मायानुभावितः ।
इदानीं सप्तयक्षीणां मन्त्राणि कथयामि ते ॥ १५७ ॥

आगच्छ सुन्दरी स्वाहावसानं प्रणवादिमम् ।
इत्येष सुन्दरीमन्त्रो मन्त्रादेः कार्यमाचरेत् ॥ १५८ ॥

प्रणवं प्रथमं सर्वं मनोहरि नमो ठठ ।
इत्थं मनोहारी मन्त्रः प्रियादिष्टं प्रयच्छति ॥ १५९ ॥

उद्गीथं कनकं ब्रह्मन् वक्ष्यते मैथुनप्रिया ।
ठठः कनकवत्सास्यान्मन्त्रः कामुकसिद्धिदः ॥ १६० ॥

मामागच्छ चतुर्वक्र कामेश्वरि ठठान्तिमम् ।
इति कामेश्वरीमन्त्रः सर्वां सिद्धिं प्रयच्छति ॥ १६१ ॥

आरुह्य शयनं नक्तमेकाकी पुष्पगन्धवान् ।
ध्यायेत्कामेश्वरीं यक्षीं सा तस्य भवति प्रिया ॥ १६२ ॥

यदन्यां कामयेन्मन्त्री सा तस्य वशमाचरेत् ।
स्वाहान्तः कथितो मन्त्रो ब्रह्मोत्पाते रतिप्रिये ॥ १६३ ॥

प्रीता रतिप्रिया यक्षी साधकस्य प्रयच्छति ।
दिव्यान्योदन वासांसि कुसुमाद्यनुलेपनम् ॥ १६४ ॥

पादुकाञ्जन खड्गादीन् भूषणानि रसायनम् ।
ओं पद्मिनी ठठो मन्त्रं पद्मिनी यस्य देवता ॥ १६५ ॥

1. गव्य सत्य $T, P_1, P_2$

ओं श्री ह्रीं ह्रयमागच्छ ह्रयं यक्षि ठठान्तिमम् ।
प्रणवह्रितयं पुष्टिबीजं पश्चान्नतिस्तथा ॥ १६६ ॥

वातादि देवौ दक्षाक्षं बन्धुं विघ्नेशमारुतौ ।
वीरसेनमथो शुक्लं कुम्भं वह्निं [1]सुभद्रकम् ॥ १६७ ॥

हृषीकेशं जयं कुम्भं श्रीध्रुवौ कमलासन ।
पञ्चबिन्दुं ठठान्तं च [2]यामिनीमन्त्रमुद्धरेत् ॥ १६८ ॥

एतज्जपेन पुरुषो विभवं लभते परम् ।
द्वन्द्वानि पुंसां स्त्रीणां च रहितान्यपि योजयेत् ॥ १६९ ॥

यद्यद्वस्तु तथान्येषां स्त्रियो वा पुरुषोऽपिवा ।
ताम्बूलं कुसुमं चापि दत्त्वान्वहमुपासयेत् ॥ १७० ॥

यस्यैते मनवस्सप्त सिद्धाः पुंसश्चतुर्मुख ।
यक्ष्यस्तस्य भविष्यन्ति किं कार्यमिति देवताः ॥ १७१ ॥

मेरुमन्दरविन्ध्यादि शिखरेषु यथातथम् ।
साधकं रमयिष्यन्ति कल्पं भोगैरमानुषैः ॥ १७२ ॥

ब्रह्मन् पिशाचमन्त्राणि श्रृणुष्व गदतो मम ।
सप्ताक्षराणि सप्तार्के गोपनाः कुम्भविक्रमौ ॥ १७३ ॥

क्रोधप्रचण्डौ वरुणमृगेशौ विपुलस्तथा ।
द्विकुण्ड सप्तमी स्वाहा मनुरेष प्रकीर्तितः ॥ १७४ ॥

बध्नीयादमुना ब्रह्मन्नाविष्टस्य शिखां पुनः ।
सप्ताक्षरं पुरस्कृत्य चतुर्थी विष्णुमस्तकम् ॥ १७५ ॥

---

1. च पश्चिमम् T,$P_1$,$P_2$ 2. कामिनी $M_1$



गुरुर्बन्धुः पिता कामो मन्दरं विक्रमं तथा ।
पुलहं विक्रमं पश्चाद्धलायुध गुहालयौ ॥ १७६ ॥

वैराजपापहननौ विजयं बन्धुमस्तकम् ।
हुताशगोपनौ ब्रह्मन् ककुभं ब्रह्मसूदनौ ॥ १७७ ॥

पवित्र शङ्खौ विजयं मायां स्वाहावसानकम् ।
इति मन्त्रं प्रकल्प्याथ बलिमेतेन दापयेत् ॥ १७८ ॥

पूर्वमन्त्रदशार्णानि महेन्द्रो राममस्तकः ।
पवित्रपवनौ पीतगोपनौ पश्चिमाननौ ॥ १७९ ॥

वह्न्यन्त सूदनौ विघ्नगोपनौ पवनं तथा ।
गदी हुतवहः सूर्यो वनमाली पितामहः ॥ १८० ॥

मानं शब्दं शिरः स्वाहा गन्धमन्त्रप्रकल्पितम् ।
द्वादशार्णमुखं [1]पूर्वं वह्निं सुमुखविक्रमौ ॥ १८१ ॥

माहेन्द्रविक्रमौ भानुर्दक्षं विजययोर्द्वयम् ।
द्विर्वारिशब्दं कमलं देवदत्तं विनायकम् ॥ १८२ ॥

स्वाहान्तमीरयेन्मन्त्रं तमाद्वेषे नियोजयेत् ।
स्तम्भे वा पुरुषे वापि पयस्तेनाभिमन्त्रितम् ॥ १८३ ॥

विक्षिपेदथ भूतानि स्तम्भमप्याविशन्ति तम् ।
अष्टाक्षरमुखस्सूर्यो वह्निर्द्विः कमलासन ॥ १८४ ॥

व्यस्तौ पुनस्तयोर्वह्नावुभयत्र त्रिविक्रमौ ।
आदित्यरामं नासिक्यं घटनं पावकप्रिया ॥ १८५ ॥

---

1. पुण्यं $M_1$

येन साग्रहमन्त्रस्य पिशाचादि भयावहम् ।
भूतप्रतिकृतिं कृत्वा शालिपिष्टैर्महोदरीम् ॥ १८६ ॥

भित्त्वाऽतितीक्ष्णेन शस्त्रेण भूतं साक्षाद्धविष्यति ।
भूतग्रहपिशाचादीनपस्मारमथापि वा ॥ १८७ ॥

कूष्माण्डयक्षगन्धर्वब्रह्मरक्षस्सुरासुरान् ।
आवेशयेद्धरेद्वापि मन्त्रैरेतैश्चतुर्मुख ॥ १८८ ॥

यद्यदेभिरशक्यं स्यात्तत्तत्कुर्याद्विचक्षणः ।
[1]सौदर्शनस्य मन्त्रेण नारसिंहेन वा पुनः ॥ १८९ ॥

त्रैलोक्यमोहनेनापि साक्षादष्टाक्षरेण वा ।
इति मन्त्रप्रभावस्ते कथितः पद्मसम्भव ॥ १९० ॥

चर्या च विधिवत्प्रोक्ता धर्मकामार्थमुक्तिदा ।
[2]इदं हि पावनं शास्त्रमधीते यः समाहितः ॥ १९१ ॥

त्रिष्वप्यमीषु लोकेषु ज्ञेयमन्यन्न विद्यते ।

पद्म :—

इत्युक्त्वा ब्रह्मणे शास्त्रं भगवान् भूतभावनः ॥ १९२ ॥

वासुदेवः परं ब्रह्म तत्रैवान्तरधीयत ।
अथ विस्मयमानात्मा ब्रह्मलोकपितामहः ॥ १९३ ॥

आजगाम स्वकं लोकं स्तूयमानो महर्षिभिः ।
कपिलाय ददौ ब्रह्मा शास्त्रमेतन्महर्षये ॥ १९४ ॥

स चापि भगवान् मह्यं, मया ते कथितं पुनः ।
तत् पातालमितो हित्वा जम्बूद्वीपमितो व्रज ॥ १९५ ॥

1. सुदर्शनस्य T,$P_2$    2. इदमेकायनं $M_2$



हिमवत्पर्वते रम्ये समाधाय मनश्शुभम् ।
आराधय हृषीकेशं [1]विधानैः पञ्चकालिकैः ॥ १९६ ॥

संवर्त :—

इति ब्रुवाणे पद्मेतु लब्ध्वा हृष्टेन चेतसा ।
अयोग्याज्ञानतिमिरं शास्त्राञ्जनशलाकया ॥ १९७ ॥

निवृत्य पातालतलात्कृत्वा पद्मं प्रदक्षिणम् ।
अमुष्मिन् शैलशिखरे देवदारुभिरावृते ॥ १९८ ॥

महाभागवतैः पुण्यैः पाञ्चरात्रविशारदैः ।
तपस्स्वाध्यायनिरतैः सेविते परमर्षिभिः ॥ १९९ ॥

हृदयेभ्यः समाहृत्य हृदयं संयमादिभिः ।
आराधयामि विश्वेशं वासुदेवं जगद्गुरुम् ॥ २०० ॥

अन्यमानीय तद्वाचा तं ध्यायन् मनसा पुनः ।
कालेनाराधनं कुर्वन् भजामि परमेश्वरम् ॥ २०१ ॥

त्वमप्याराधय क्षिप्रं चातुर्व्यूहमधोऽक्षजम् ।
मया ते कथितं शास्त्रं सावधानेन किं श्रुतम् ॥ २०२ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ २०३ ॥

तन्त्राणां चैव रत्नानि पञ्चाहुः परमर्षयः ।
पाद्मं सनत्कुमारं च तथा परमसंहिता ॥ २०४ ॥

पद्मोद्भवं च माहेन्द्रं कण्वतन्त्रामृतानि च ।
तदा प्रभृति ये शिष्यास्ततोऽहं हिमवत्तटे ॥ २०५ ॥

1. विधिभिः $M_2$

आराध्याहं चतुर्बाहुं नियतः पुरुषोत्तमम् ।
भवन्तोऽपि यतात्मानः भक्तिमन्तो जनार्दने ॥ २०६ ॥

केन वा कथितं शास्त्रं ऋषयः कल्मषापहम् ।
इमां महोपनिषदं श्रद्धानः शृणोति यः ॥ २०७ ॥

स याति शाश्वतं स्थानं दुष्पापमकृतात्मभिः ।
येन मां प्रथयामास यथा पद्मगुरोर्गुरुः ॥ २०८ ॥

तेनेदं क्रियते पुण्यामतनोत्पद्मसंहिताम् ।
ऋषयस्तं भवन्तोऽपि भजन्तु पुरुषोत्तमम् ॥ २०९ ॥

प्रदास्यति स युष्मभ्यमपवर्गं तपोधनाः ।
इत्यध्यायास्त्रयस्त्रिंशच्चर्यापादः प्रकीर्तितः ॥ २१० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे समाराधनाङ्ग मन्त्रोद्धारो
नाम त्रयस्त्रिंशोऽध्यायः ॥

चर्यापादः समाप्तः



## अग्निकार्यविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | १४ | मार्कण्डेय सं | अ | १६ |
| अनिरुद्ध सं | अ | १८ | विश्व सं | अ | ३ |
| कपिञ्जल सं | अ | १६ | विष्णुतत्त्व सं | अ | २७ |
| जयाख्या सं | प | १५ | विष्णुतन्त्रं | अ | २० |
| परम सं | अ | २० | विष्णु सं | अ | ८ |
| पाद्म - चर्या सं | अ | ४ | सनन्त सं | अ | ४ |
| पारमेश्वर सं | अ | ७ | हयशीर्ष सं सौरकाण्ड | अ | ३० |
| पुरुषोत्तम सं | अ | ३१ | | | |

## अङ्कुरार्पणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | १३ | वसिष्ट सं | अ | १८ |
| कपिञ्जल सं | अ | २१ | विश्व सं | अ | १७ |
| पुरुषोत्तम सं | अ | १३ | विष्णुतत्त्व सं | अ | १५ |
| मार्कण्डेय सं | अ | १३ | विष्णुतन्त्रम् | अ | ११ |

## जीर्णोद्धारविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | १३ | विष्णुतन्त्रम् | अ | ४९ |
| कपिञ्जल सं | अ | २६ | विष्णु सं | अ | २४ |
| नारदीय सं | अ | १७ | विष्वक्सेन सं | अ | ३६ |
| पाद्म (चर्या) सं | अ | १७ | हयशीर्ष सं सङ्कर्षणकाण्ड | अ | ३५ |
| विश्वामित्र सं | अ | २३ | लिङ्गकाण्ड | अ | १७ |

## ध्वजारोहणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | २० | पारमेश्वर सं | अ | १६ |
| ईश्वर सं | अ | १० | पुरुषोत्तम सं | अ | २३ |
| कपिञ्जल सं | अ | २२ | विष्णुतत्व सं | अ | १७ |
| नारदीय सं | अ | १८ | हयशीर्ष सं लिङ्गकाण्ड | अ | २० |
| परमागमचूडामणि | अ | ३६ | सौरकाण्ड | अ | ४१ |
| पाद्म (चर्यापाद) | अ | १० | | | |

## पवित्रारोपणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | ९ | पुरुषोत्तम सं | अ | २६ |
| अनिरुद्ध सं | अ | २४ | पौष्कर सं | अ | ३० |
| ईश्वर सं | अ | १४ | भार्गव तन्त्र | अ | २१ |
| कपिञ्जल सं | अ | ३२ | मार्कण्डेय सं | अ | २३ |
| जयाख्या सं | प | २१ | विश्व सं | अ | ७ |
| नारदीय सं | अ | २३ | विश्वामित्र सं | अ | २४ |
| परमागमचूडामणि | अ | ३४ | सात्वत सं | अ | १४ |
| पाद्म (चर्यापाद) | अ | १४ | हयशीर्ष सं सौरकाण्ड | अ | ४२ |
| पारमेश्वर सं | अ | १२ | | | |

## प्रायच्छित्तविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | ३० | मार्कण्डेय सं | अ | २६, ३२ |
| ईश्वर सं | अ | १९ | वसिष्ट सं | अ | १३ |
| कपिञ्जल सं | अ | ३१ | विष्णुरहस्य सं | अ | ३५ |
| जयाख्या सं | प | २५ | विष्णु सं | अ | २५ |
| नारदीय सं | अ | २५ | विष्वक्सेन सं | अ | ३९ |
| पाद्म (चर्या) | अ | १९ | शेष सं | अ | ३१ |
| पारमेश्वर सं | अ | १९ | श्रीप्रश्न सं | अ | ५१ |
| पुरुषोत्तम सं | अ | ३० | सनत्कुमार-ऋषिरात्रं | अ | ८ |
| भार्गवतन्त्र | अ | २२ | | | |



## महोत्सवविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | ६ | भार्गव तन्त्र | अ | ११ |
| अनिरुद्ध सं | अ | २१, २३ | मार्कण्डेय सं | अ | २१, २२ |
| ईश्वर सं | अ | १०, ११ | वसिष्ट सं | अ | १२ |
| कपिञ्जल सं | अ | २३ | विश्व सं | अ | ५ |
| ज्ञानामृतसारम् प्रथम रात्रम् | अ | १०, ११ | विश्वामित्र सं | अ | १७, १८ |
| नारदीय सं | अ | १९ | विष्णु सं | अ | २० |
| परमागम चूडामणि | अ | ३५ | विष्वक्सेन सं | अ | २७ |
| पाद्म (चर्यापाद) | अ | ११ | श्रीप्रश्न सं | अ | ३१ |
| पारमेश्वर सं | अ | १७ | सनत् कुमार (शिवरात्रम्) | अ | ९ |
| पुरुषोत्तम सं | अ | २४ | हयशीर्ष सं [सङ्कर्षणकाण्डम्] | अ | ३६ |

## पञ्चप्रकारार्चना

| | | | | | |
|---|---|---|---|---|---|
| ज्ञानामृतसार सं चतुर्थो रात्रः | अ | १० | पराशर सं | अ | ४ |
| नारदीय सं | अ | ३० | पाद्म सं (चर्या) | अ | १३ |
| (अभिगमन उपादान योग, स्वाध्याय and इज्या) | | | भार्गव तन्त्रं | अ | २५ |
| | | | लक्ष्मी तन्त्रं | अ | २८ |
| | | | श्रीप्रश्न सं | अ | १७ |

## अध्वषट्कनिरुपणम्

| | | | | | |
|---|---|---|---|---|---|
| पाद्म [चर्या] | अ | ७ | श्रीप्रश्न सं | अ | २४, २६ |
| लक्ष्मीतन्त्रं | अ | २२ | | | |

## पाद्मे चर्यापादे षडध्वा निरुपणम्

श्रीप्रश्ने च २४ तमेऽध्याये, २६ तमेऽध्यये च निर्दिष्टाः षड् अध्वविशेषाः

तत्वाध्वा—पञ्चविंशति तत्वानि ।

भुवनाध्वा—(१) सत्यलोकः (२) तपोलोकः (३) जनोलोकः (४) महोलोकः (५) स्वर्गलोकः (६) भुवर्लोकः (७) अन्तरिक्षलोकः ।

पादाध्वा—(१) अतलं (२) वितलं (३) नितलं (४) रसातलं (५) सुतलं (६) तलातलं (७) पातालम् ।

कालाध्वा—चतुर्दश मनवः, कृतादि चतुर्युगानि, संवत्सर, परिवत्सर, इरावत्सर, इद्वत्सराः, दक्षिणायनोत्तरायणे, वसन्तादि षड् ऋतवः, मार्गशीर्षादि षण्मासाः, शुक्लकृष्णपक्षौ, रजनी, दिवसः, सन्ध्या, यामः, मुहूर्तः, नाडी, क्षणः, काष्टा, लवः, त्रुटिः ।

वर्णाध्वा—(१) ब्राह्मणः (२) क्षत्रियः, (३) वैश्यः (४) शूद्रः ।

मन्त्राध्वा—(१) उद्गीथः (२) अष्टार्णः (३) द्वादशमनुः (४) षडर्णः ।

पाद्मे अ. ७. चक्राब्जमण्डले षडध्वार्चनम् । कर्णिकायां मन्त्राध्वानमर्चयेत् । तत्वाध्वानं केसरेषु । वर्णाध्वानं दलेषु च । पदाध्वानं नाभिभागे । कालाध्वानं अरेषु च । भुवनाध्वानं नेमिभागे अर्चयेत् ।

### भूतशुद्धिः

| | | | |
|---|---|---|---|
| अगस्त्य संहिता | अ ११ | शेष संहिता | अ १२ |
| पाद्म (चर्यापादः) | अ ३ | विहगेन्द्र सं | अ १२ |
| बृहत्ब्रह्म ४ पाद | अ १ | हयशीर्ष (आ. खा) | अ ६ |
| लक्ष्मीतन्त्र | अ ३५, ५४ | | |

### भूतशुद्धिः [ पाद्मे चर्यापादे तृतीयोध्यायः । ]

| सं. | पञ्च भूतानि | | पञ्च कर्मेन्द्रियाणि | | पञ्च ज्ञानेन्द्रियाणि | | पञ्च तन्मात्राणि | | पञ्चमन आदयः | | पञ्चवर्णाः | पञ्चमण्डलं | पञ्चगुणाः | पञ्च स्थानानि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 1 | पृथिवी | क | उपस्थः | च | घ्राणः | ट | गन्धः | त | मनः | प | पीतः | चतुरश्रम् | शब्द, स्पर्श रूप रसः गन्धः | पादादि जान्वन्तम् |
| 2 | आपः | ख | पायुः | छ | जिह्वा | ठ | रसः | थ | अहंकारः | फ | श्वेतः | अर्धचन्द्राकारम् | शब्द, स्पर्श रूप रसः | जान्वादि गुह्यान्तम् |
| 3 | तेजः | ग | पादः | ज | अक्षिः | ड | रूपम् | द | बुद्धिः | ब | रक्तः | त्र्यश्रम् | शब्द, स्पर्श रूपाणि | गुह्यादि नाभ्यन्तम् |
| 4 | वायुः | घ | पाणिः | झ | त्वक् | ढ | स्पर्शः | ध | प्रकृतिः | भ | धूम्रः | वृत्तम् | शब्दस्पर्शौ | नाभ्यादि घ्राणान्तम् |
| 5 | आकाशः | ङ | वाक् | ञ | श्रोत्रम् | ण | शब्दः | न | जीवः | म | नीलोत्पलदल-वर्णः | नीरुपमम् | शब्दः | नासादि मूर्धान्तम् |

मानस यागः, बाह्य यागः

| | | | |
|---|---|---|---|
| अगस्त्य सं | अ २६ | मार्कण्डेय सं | अ ३० |
| अहिर्बुध्न्य सं | अ २८ | लक्ष्मीतन्त्रं | अ ३५, ३६ |
| ईश्वर सं | अ २ | विश्वामित्र सं | अ १० |
| जयाख्या सं | प १२, १३ | विष्णु सं | अ ६ |
| पाद्म (चर्यापादः) | अ ३ | सात्वत सं | अ २ |
| पारमेश्वर सं | अ ५, ६ | | |

## मानसयागे योगपीठम्

1. आधारशक्तिः
2. कूर्मकालाग्निः
3. अनन्तः
4. धरणिः
5. क्षीरसमुद्रम्
6. पद्मम्
7. योगासनम्
8. कालचक्रम्
9. अव्यक्तपद्मम्
10. जीवः

आग्नेयादिदिक्षु स्थानदेवताः (7) (1) धर्मः, (2) ज्ञानम्, (3) वैराग्यं (4) ऐश्वर्यम्। प्रागादिदिक्षु—(5) अधर्मः, (6) अज्ञानम्, (7) अवैराग्यम्, (8) अनैश्वर्यम्, (9) ऋग्वेदः, (10) यजुर्वेदः, (11) सामवेदः, (12) अथर्वणवेदः, (13) कृतयुगम्, (14) त्रेतायुगम्, (15) द्वापरयुगम्, (16) कलियुगम्।



## बाह्ययाग योगपीठम् (पाद्मे चर्यापादे अ 3. श्लो. 106-142)

बिम्बेन सहितं पीठं योगपीठमुदाहृतम्।
अनुसन्धानयोगे तु योगपीठं प्रकल्पयेत्॥

पीठोत्तुङ्गे 12 अंशाः :—

पश्चिमे पीठपार्श्वदेवताः —

1. दुर्गा, 2. विघ्नेशः, 3. नारदः, 4. आत्मनः गुरुः।

उत्तरे पीठपार्श्वदेवताः—

1. सनत्कुमारः, 2. सनकः, 3. सनन्दनः।

दक्षिणे—

1. ब्रह्मा, 2. विष्णुः, 3. ईश्वरः।

योगासन कमलदलेषु देवताः —

1. श्रीवत्सः, 2. वनमाला, 3. माया, 4. वैष्णवी, 5. विमला, 6. शक्तिः, 7. उत्कर्षिणी, 8. प्रज्ञा, 9. सत्या, 10. ईशाना, 11. अनुकम्पा, 12. पितामहि।

| प्रथमावरणे देवताः नाम | दिक् | द्वितीयावरणे देवता नाम | तृतीयावरणे देवतानां नाम |
|---|---|---|---|
| 1. व्याप्तिः .... | पूर्वा | 1. शंखधरः | 1. इन्द्रः |
| 2. कान्तिः .... | आग्नेयी | 2. चक्रधरः | 2. अग्निः |
| 3. तृप्तिः .... | दक्षिणा | 3. मुसलधरः | 3. यमः |
| 4. श्रद्धा .... | नैऋति | 4 खड्गधरः | 4. निऋतिः |
| 5. विद्या .... | पश्चिमा | 5. गदाधरः | 5. वरुणः |
| 6. जया .... | वायव्या | 6. शार्ङ्गधरः | 6. वायुः |
| 7. क्षमा .... | उत्तरा | 7. पद्मधरः | 7. सोमः |
| 8. शान्ति .... | ईशाना | 8. वज्रधरः | 8. ईशानः |

# पाद्मसंहितायां तदितरासु च संहितासु निर्दिष्टाः दीक्षाविधिः

| संहिता | अध्यायः | संहिता | अध्यायः |
|---|---|---|---|
| 1. अगस्त्य | 17 | 12. पुरुषोत्तम | 22 |
| 2. अनिरुद्ध | 4 | 13. लक्ष्मीतन्त्र | 41 |
| 3. अहिर्बुध्न्य | 20 | 14. वसिष्ठ | 9 |
| 4. ईश्वर | 21 | 15. विश्वामित्र | 9 |
| 5. जयाख्या | (पटल) 16 | 16. विष्णुतन्त्र | 7 |
| 6. नारदीय | अ 7, 9 | 17. विष्णु संहिता | 10 |
| 7. पञ्चप्रश्न | (पटल) 7 | 18. शाण्डिल्य संहिता | 8, 10 |
| 8. परम | अ 8 | 19. श्रीप्रश्न | 16 |
| 9. परमागम चूडामणिः | अ. 28, 29 | 20. सनन्द | (पटल) 5 |
| 10. पराशर | अ 6 | 21. सात्वत | 19 |
| 11. पाद्म (चर्यापादः) | अ 2 | 22. कपिञ्जल | अ 2 |
| | | 23. पौष्कर संहिता | अ 2 |

N. B. — The स्वार्थ and परार्थदीक्षा are mentioned in almost all the Samhitas, but in Iswara Samhita we find names like वैभवदीक्षा, मण्डलदीक्षा, एकानेकदीक्षा, अपरदीक्षा as well as नित्यदीक्षा, व्यूहदीक्षा, ब्रह्मदीक्षा, and परमन्त्रदीक्षा are mentioned. [449—464]

## दीक्षामण्डपे द्वारध्वजदेवता [ पाद्मसंहिता–क्रियापादः– अ. 27 चर्यापादः– अ. 2 ]

| क्र.सं. | दिक् | वेदः | शाखादेवताः | तोरणनाम | ध्वजवर्णः | द्वारपालाः | कुम्भदेवताः | वृक्षविशेषः | कुम्भे प्रेक्षणीय-रत्नानि |
|---|---|---|---|---|---|---|---|---|---|
| 1 | पूर्वा | ऋग्वेदः | इन्द्रः | सुशोभनं | रक्तः | कुमुदः कुमुदाक्षश्च | पूर्णः पुष्करः | अश्वत्थः | पद्मरागं प्रवालं |
| 2 | दक्षिणा | यजुर्वेदः | यमः | सुभद्रम् | पीतः | पुण्डरीकाक्षः वामनः | आनन्दः नन्दनः | उदुम्बरः | वज्रं वैडूर्यं |
| 3 | पश्चिमा | सामवेदः | सोमः वरुणश्च | सुबद्धं | नीलः | शङ्खुकर्णः सर्वनेत्रः | वीरसेनः सुषेणः | न्यग्रोधः | पुष्यरागं नीलं मरकत |
| 4 | उत्तरा | अथर्ववेदः | सोमः | सुहोत्रं | शुक्लः | सुमुखः सुप्रतिष्टः | सम्भवः प्रभवः | प्लक्षः | मुक्ता स्फटिकं |



चक्राब्जमण्डलम्

| | | | | | |
|---|---|---|---|---|---|
| 1. | अनिरुद्ध सं | अ 4, 7 | 9. | पौष्कर सं | अ 8 |
| 2. | कपिञ्जल सं | अ 2 | 10. | लक्ष्मीतन्त्र | अ 51 |
| 3. | जयाख्य सं | प 16 | 11. | विष्णु संहिता | अ 10, 11 |
| 4. | नारदीय | अ 7, 8, 9, 10 | 12. | विहगेन्द्र सं | अ 9 |
| 5. | परम सं | अ 8, 7 | 13. | शेष संहिता | अ 9 |
| 6. | पराशर सं | अ 6 | 14. | सात्वत संहिता | अ 19 |
| 7. | पाद्म (चर्यापादः) | अ 2 | 15. | श्रीप्रश्न सं | अ 19 |
| 8. | पुरुषोत्तम सं | अ 22 | | | |



## Chakrabja Mandala अध्यायः सप्तमः

Directions are given in the Samhitas as for drawing this Mandala on a dais. For drawing, 2 directions are given one from East to West and the other from North to South. 17 lines are drawn in White Colour from East to West leaving a space of 3″ between the lines. The Same number of lines are made from North to South with the same interval of 3″—thus making together 256 Squares, each square being 3″. On each side there will be 16 Squares. The 36 Squares formed in the central portion are wiped off and in that space 5 Concentric circles are made. The inner most circle is called karṇika. The No. 2 circle is sub-divided into (1) Kesaravali (2) Dalabhūmi and (3) Nābhi Mandala. The 3rd and the 4th circles are called arakshetras and the 5th is named as Bahirnemi bhūmi. The single line of Squares 28 in number, next to the circle, is called Bahirāsana. 2 rows of squares lying outside the Square forming Bahirāsana are called Vīthikā. The 4 Squares in the centre of the four sides are rubbed off and marked as door ways or Dwāra Sthāna. And the 4 Squares in all the 4 Corners are marked as Sankha Sthānas. Close to the Dwāra Sthānās on each side of it, a space, consisting of 3 Squares is marked as Ardha Śōbhās. Next to that, is the Śōbhā consisting of 4 Squares three on the inner row and one on the outer row. Between the Sōbhās and the Śamkhās, 3 squares go to make the upaśōbhā. Thus there will be altogether 8 Śōbhās 8 ardha-Śōbhās and 8 upaśōbhās. The Space between the Concentric Circles round the Central Space and the Central one, is worked up into a lotus with 8 petals. In the Central Circle, 8 or 12 white dots are made to represent the Seeds. Where the dots are eight in number, the Presiding deity is Nārāyana, and if the dots are 12, the deity is Vasudēva. The whole inner circle is filled with green powder, and the Seeds are made on it with white powder. The boundary line is to be

drawn with light red or black powder. The space just outside, limited by the circumference called Kesarāvali is intended to draw the 96 Kesarās all around. Each Kesara should be drawn in 3 colours white, green and red tips. The boundary line is drawn in dark-green. The Space Called Dala bhūmi is intended to contain the 12 petals or the 8 petals, the tips of the petals reaching the end of Arakshetra (the 4th Main circle and the 5th in the order). The inner most row of petals 12 or 8 is to reach the limit of the circumference of the 3rd Main circle. Then alternating with these, 12 or 8 petals are drawn again, reaching the limit of the 4th circle. The lower part of the petals are made in white, ends in red and the line in white.

The Nabhi-rekha or the boundary line of the 2nd main circle is to be black, green and red lines between Dalam and upadalams. The tipes of the upadalams are to be black and the line in red colour. The line bounding the Space called Nemibhū, is marked off with black powder and the Space is to be covered with white powder. The 28 squares forming the Bahirasana, are filled with yellow powder. The Space called Vīthikā is sprinkled with white powder on which green creepers with leaves and flowers are drawn in different colours.

The East Dwara or gateway is filed with white powder, South with red colour West with yellow powder and North with black powder. All the Ardha Śōbhās Which are 8 in number are filled with green or black powder. The Śōbhās which are also 8 in number are to be filled with red powder and the upasobhas are filled with yellow powder. In the four corners where there are 4 squares each, both black and yellow colours are used alternately. And on the squares on



the top in the inner side is coloured in black, and white Sankhas are drawn At the Eastern entrance a Garuda picture is drawn with black nose and golden coloured body. At the South entrance, a cakra with Dwādaśāra or 12 spokes is made in red colour. At the Western entrance, the picture of a Gadhā is drawn with any colour available. And at the entrance on the North, a white Samkha in drawn. All these entrance pictures should be drawn on pials a little away from the cakrābja-Mandala.

The Aniruddha Samhita gives a clear idea about the colouring of the Various parts.

कर्णिका पीतवर्णं अन्तरालं सितप्रभम् ।
केसरं पीतवर्णं पद्मं वै पाण्डरारुणम् ।
नाभिनेमिद्वयं पीतं अरक्षेत्रं तु रक्तकम् ।
पद्मपत्रसमाकारं कृष्णवर्णेन शोभितम् ।
केसरं क्षेत्रमखिलं पाण्डुरक्तेन पूरितम् ।
पाण्डुरक्तेन तत्पत्रं बहिः कोणं तु पीततम् ।
बहिश्च मातुलुङ्गाभं पीतकुङ्कुमसन्निभम् ।
तद्बहिः पत्रसंघं तु पीतरक्तेन मिश्रितम् ।
पत्रान्तरालं श्यामं च ।

[अनिरुद्ध संहिता पञ्चमोऽध्यायः]

### श्रीपाद्मसंहितायां तदितरासु, ईश्वर-परमेश्वर-श्रीप्रश्न-विश्वामित्राख्य संहितासु निर्दिष्टाः रागविशेषाः

1. कामदः
2. केदारः
3. कौलवः
4. कौलेयकः (कौलीयः)
5. कौशिकः
6. गान्धारः (कान्तारः)
7. गौडः
8. गौलिः
9. घण्टा
10. चोलपाणिः
11. तकेशि
12. दक्षरागः (तर्करागः)
13. देशाक्षि
14. दैशिकी
15. नट्टभाषिकम्
16. नाटः
17. पञ्चमः (पश्चिमः)
18. पूर्णचन्द्रः
19. भूपालम्
20. मङ्गलम्
21. मध्यमावती
22. मालती
23. मालवी
24. मेघरागः
25. मोहनम्
26. वरालिका
27. शालपाणी (चोलपाणि)
28. श्रीकामदः
29. श्रीरागः
30. हंसध्वनिः

### पूर्वोक्त संहितासु निर्दिष्टाः तालविशेषाः

1. अनन्ततालः
2. अट्टतालः
3. कर्करीतालः
4. गरुडतालः
5. जयतालः
6. झंपतालः
7. जिङ्क्षिणीतालः
8. त्रिपुटतालः
9. ढक्करीतालः
10. ध्रुवतालः
11. वलितालः
12. ब्रह्मतालः



13. भृङ्गिणीतालः
14. भद्रकतालः
15. भद्रतालः
16. मङ्गलतालः
17. मत्ततालः
18. मध्यमतालः
19. मल्लतालः
20. लयतालः
21. लाङ्गलीतालः
22. शृङ्गिणीतालः
23. समतालः

### श्रीपाद्म संहितायां तदितरसंहितासु च निर्दिष्टाः वाद्यविशेषाः ।

[पाद्म-विश्वामित्र-नारद-विष्णु-विष्णुतन्त्र वसिष्ठ-हयशीर्ष-मार्कण्डेय-विष्वक्सेन-ईश्वर पारमेश्वर-अनिरुद्धसंहिताः]

1. आनकम
2. कांस्यम्
3. काहलम्
4. घण्टा
5. चिह्नम्
6. झल्लरी
7. झल्ली
8. ढक्का
9. ढक्करी
10. डमरुकम्
11. डुड्डुकम्
12. तिमिलम्
13. तूर्यम्
14. दुन्दुभि
15. नाग
16. निस्साणम्
17. पटहम्
18. पणवम्
19. बृहद्भेरी
20. भेरी
21. मड्डुकम्
22. मर्दलम्
23. मल्लम
24. मृदङ्गम्
25. मुरजम्
26. वरूथम्
27. वीणा
28. वेणु, वंशम्
29. शङ्खम्
30. शृङ्गम्
31. हस्तघण्टा
32. हस्वमर्दलम्
33. हस्वपटहम्

## श्रीपाद्मसंहितायां (अ. 5) निर्दिष्टाः नृत्तविशेषाः

1. अलङ्कारम्
2. अवकुञ्चितम्
3. अवभासम्
4. अश्मरी
5. अपवेष्टितम्
6. आवेष्टितम्
7. आलीढम्
8. आसुरी
9. उल्लङ्घि
10. कर्करी
11. कर्तरी
12. कटिबन्धनम्
13. करणम्
14. कान्तारकुट्टिमम्
15. कुञ्चितम्
16. कुञ्चितार्धेन्दु
17. कुट्टिमम्
18. खेटकम्
19. चारी
20. तार्क्ष्यपक्षम्
21. देशिमण्डलम्
22. निकुट्टिमम्
23. निर्धूतम्
24. पताका
25. परीवृत्तम्
26. पारिभद्रम्
27. पृष्ठकुट्टिमम्
28. प्रकुट्टिमम्
29. प्रचारी
30. भद्रमाली
31. मङ्गलम्
32. मार्गचारी
33. वामजानुः
34. वासवेश्वरम्
35. विकलासः
36. विगलितम्
37. विलासम्
38. विषमपदम्
39. विषमसूची
40. विष्णुकान्तम्
41. समपदम्
42. सर्वतोभद्रम्
43. सर्वमङ्गलम्
44. सूची
45. सौम्यम्
46. संवर्तम्
47. स्वस्तिकम्



## श्री पाद्मसंहितायां तदितर संहितासु च निर्दिष्टानां भगवदाराधनादिकर्मसु उपयुक्तानां विविध-मुद्राणां संख्यः – अध्यायक्रमश्च

| | | [अ] | [मद्रा संख्या] | | | [अ] | [युद्रा संख्या] |
|---|---|---|---|---|---|---|---|
| 1. | अगस्त्य सं | 18 | 17 | 10. | विश्वामित्र सं | 13 | 67 |
| 2. | ईश्वर सं | 24 | 35 | 11. | विष्णु सं | 7 | 35 |
| 3. | कपिञ्जल सं | 27 | 27 | 12. | विष्णुतिलक सं | 4 | 12 |
| 4. | जयाख्या सं | 8 | 53 | 13. | विष्वक्सेन सं | 19 | 4 |
| 5. | नारदीयं सं | 6 | 50 | 14. | शेष संहिता | 14 | 5 |
| 6. | परम सं | 14 | 19 | 15. | श्रीप्रश्न संहिता | 54 | 65 |
| 7. | पाद्म (चर्या) सं | 22 | 53 | 16. | सनत्कुमार संहिता ऋषि रात्र | 2 | 81 |
| 8. | मार्कण्डेय सं | 31 | 36 | 17. | सात्वत संहिता | 22 | 4 |
| 9. | लक्ष्मी तन्त्र सं | 34 | 41 | | | | |

## पाद्मसंहितायां निर्दिष्टानां मुद्राणां नामानि

1. हृदय मुद्रा
2. शीर्ष मुद्रा
3. शिखा मुद्रा
4. वर्म मुद्रा
5. अस्त्र मुद्रा
6. नेत्र मुद्रा
7. अग्निप्राकार मुद्रा
8. योग मुद्रा
9. योगसम्पुट मुद्रा
10. कुम्भ मुद्रा
11. संहार मुद्रा
12. सृष्टि मुद्रा
13. तत्व मुद्रा
14. ज्ञान मुद्रा
15. न्यास मुद्रा
16. जप मुद्रा
17. ब्रह्म मुद्रा
18. विष्णु मुद्रा
19. रुद्र मुद्रा
20. अभिवादन मुद्रा

| | |
|---|---|
| 21. विघ्नराज मुद्रा | 39. विष्वक्सेन मुद्रा |
| 22. भागवती मुद्रा | 40. अनन्त मुद्रा |
| 23. वराह मुद्रा | 41. मुष्टि मुद्रा |
| 24. दहन मुद्रा | 42. बलि मुद्रा |
| 25. आप्यायन मुद्रा | 43. वस्त्र मुद्रा |
| 26. सुरभि मुद्रा | 44. ज्ञान मुद्रा |
| 27. आवाहन मुद्रा | 45. गन्ध मुद्रा |
| 28. प्रणाम मुद्रा | 46. पुष्प मुद्रा |
| 29. पद्म मुद्रा, कमल मुद्रा | 47. यज्ञोपवीत मुद्रा |
| 30. शङ्ख मुद्रा | 48. आकल्पा मुद्रा |
| 31. चक्र मुद्रा | 49. धूप मुद्रा |
| 32. गदा मुद्रा | 50. दीप मुद्रा |
| 33. चाप मुद्रा | 51. प्रतिमा मुद्रा |
| 34. मुसल मुद्रा | 52. स्वागत मुद्रा |
| 35. खड्ग मुद्रा | 53. प्रर्थना मुद्रा |
| 36. वनमाला मुद्रा | 54. दान मुद्रा |
| 37. अञ्जलि मुद्रा | 55. ग्रास मुद्रा |
| 38. गरुड मुद्रा | 56. होम मुद्रा |



# मुद्रा


1. हृदय मुद्रा


2. शीर्ष मुद्रा


3. शिखा मुद्रा


4. कवच मुद्रा



5. अस्त्र मुद्रा



6. नेत्र मुद्रा



7. अग्निप्राकार मुद्रा



8. योग मुद्रा





9. योगसम्पुट मुद्रा



10. कुम्भ मुद्रा



11. संहार मुद्रा



12. सृष्टि मुद्रा



13. तत्व मुद्रा

14. ज्ञान मुद्रा



15. न्यास मुद्रा



16 ब्रह्म मुद्रा



17. विष्णु मुद्रा





18. रुद्र मुद्रा



19. भागवत मुद्रा



20. वराह मुद्रा



21. दाहन मुद्रा



22. आप्यायन:मुद्रा



23. सुरभि मुद्रा



24. आवाहन मुद्रा



25. प्रणाम मुद्रा





26. पद्म मुद्रा
27. कमल मुद्रा



28. शङ्ख मुद्रा



29. चक्र मुद्रा



30. गदा मुद्रा



31. चाप मुद्रा



32. मुसल मुद्रा



33. खड्ग मुद्रा



34. वनमाला मुद्रा





33. अञ्जलि मुद्रा



34. गरुड मुद्रा



35. विष्वक्सेन मुद्रा



36. अनन्त मुद्रा



37. बलि मुद्रा
38. मुष्टि मुद्रा



39. स्नान मुद्रा



40. गन्ध मुद्रा



41. पुष्प मुद्रा





42. यज्ञोपवीत मुद्रा



43. आकल्प मुद्रा



44. धूप मुद्रा



45. दीप मुद्रा



46. प्रतिमा मुद्रा



47. स्वागत मुद्रा
48. प्रर्थना मुद्रा



49. यान मुद्रा



50. ग्रास मुद्रा





51. होम मुद्रा



52. वासुदेव मुद्रा



53. सङ्कर्षण मुद्रा



54. प्रद्युम्न मुद्रा



55. अनिरुद्ध मुद्रा



56. सत्य मुद्रा



57. लक्ष्मी मुद्रा



58. कीर्ति मुद्रा





59. माया मुद्रा



60. जय विजय मुद्रा



61. चण्ड प्रचण्ड मुद्रा



62. गङ्गा यमुना मुद्रा



63. शङ्खनिधि पद्मनिधि मुद्रा



64. किरीट मुद्रा



65. श्रीवत्स मुद्रा



66. कौस्तुभ मुद्रा





67. पाश मुद्रा



68. अङ्कुश मुद्रा



69. वरदाभय मुद्रा



70. मत्स्य मुद्रा



71. कूर्म मुद्रा



72. नृसिंह मुद्रा



73. वामन मुद्रा



74. राम मुद्रा





75. कृष्ण मुद्रा



76. बुद्ध मुद्रा



77. कल्कि मुद्रा



78. क्षीराब्धि मुद्रा



79. कूर्मकारुमि मुद्रा



80. आहुति मुद्रा



81. सन्निधि मुद्रा



## श्रीपाद्मसंहितायां (32) द्वात्रिंशत् - तमेऽध्याये वर्णितानि

### चतुर्दशकुण्डानि - तत्प्रयोजनानि च

| | कुण्डानां नामानि | प्रयोजनम् |
|---|---|---|
| 1. | त्रिकोण-कुण्डम् | मारणे-निधिप्राप्तये च |
| 2. | चतुष्कोण | सर्वाभ्युदयाय |
| 3. | पञ्चकोण | यक्षकन्यावशीकरणे |
| 4. | षडश्र | स्तम्भने |
| 5. | सप्ताश्र | मोहने |
| 6. | अष्टाश्र | मारणे |
| 7. | नवकोणक | विद्वेषणे |
| 8. | दशाश्र | वस्वादि पितॄणां तोषणे |
| 9. | एकादशाश्र | ब्रह्मादि देवतायत्तसाधने |
| 10. | द्वादशाश्र | हरिदर्शनार्थे (वैकुण्टे पुरुषदर्शने) |
| 11. | योनि | कन्याप्तये |
| 12. | पद्म | पौष्टिके |
| 13. | वृत्त | शान्त्यर्थे |
| 14. | चाप | उच्चाटने-शत्रुजये च |

[अनिरुद्धसंहितायां, पाद्मे, श्रीप्रश्ने च चतुर्दशकुण्डानि]

## पाद्मेतन्त्रे तदितरासु च संहितासु निर्दिष्टानि कुण्डानि

| | | कुण्डसंख्या | अध्यायः | | | कुण्डसंख्या | अध्यायः |
|---|---|---|---|---|---|---|---|
| 1. | अगस्त्य सं | | 14 | 10. | मार्कण्डेय सं | | 16 |
| 2. | अनिरुद्ध सं | 14 | 8 | 11. | विश्व सं | | 3 |
| 3. | ईश्वर सं | 5 | 25 | 12. | विष्णुतिलक | | 7 |
| 4. | कपिञ्जल सं | 1 | 16 | 13. | विष्णु सं | 3 | 8 |
| 5. | जयाख्य सं | 2 | 15 | 14. | पुरुषोत्तम सं | 2 | 11 |
| 6. | परम सं | | 20 | 15. | भार्गव सं | 4 | 5 |
| 7. | पाद्म सं (क्रिया) | 4 | 25 | 16. | श्रीप्रश्न सं | 14 | 18 |
| | (चर्यापाद) | 14 | 32 | 17. | सनन्त सं | | 4 |
| 8. | पारमेश्वर सं | 1 | 7 | 18. | सात्वत सं | 5 | 11 |
| 9. | पौष्कर सं | 2 | 29 | 19. | हयशीर्ष सं (सौरकाण्ड) | | 30 |

Note.—In kriya Pada of Padma 4 types of Kundas are mentioned to be made in the four main quarters—*Padma* in East, *chapa* in South, *Vrtta* in West, and *yoni* in the North. But in Carya Pada ten more are added to these four, making a total of fourteen, and also the various purposes for which they are to be used. Jayakhya mentions only two types of Kundas, but it specifies the different quarters for the attainment of different fruits. The kunda in the *North-East* is for the obtainment of worldly gains—in the *East* for aerial movements; *South-East* for the destruction of the enemies; *South* for the propitiatory rites; *South-West* for destruction of enemies; *West* for the removal of untimely death, removal of all obstacles and calamities, and also for Victory; *North-West* for the obtainment of treasures and wealth; and *North* for gaining health, wealth and prosperity.



## स्नपनविधिः

| | संहिता नामानि | | अध्यायः |
|---|---|---|---|
| 1. | अनिरुद्ध संहिता | | 19 |
| 2. | ईश्वर संहिता | | 15 |
| 3. | कपिञ्जल संहिता | | 13 |
| 4. | नारदीय संहिता | | 20 |
| 5. | पञ्चप्रश्न संहिता | पटल | 8 |
| 6. | परम संहिता | | 21 |
| 7. | पाद्म संहिता (चर्या) | 8, | 9 |
| 8. | पारमेश्वर संहिता | | 14 |
| 9. | पुरुषोत्तम संहिता | | 29 |
| 10. | भार्गवतन्त्र | | 20 |
| 11. | विश्वमित्र संहिता | 19, | 20 |
| 12. | विष्णुतत्त्व संहिता | | 38 |
| 13. | विष्णुतन्त्र | 51, 52, | 53 |
| 14. | विष्णु संहिता | | 26 |
| 15. | विष्वक्सेन संहिता | | 22 |
| 16. | मार्कण्डेय संहिता | | 28 |
| 17. | श्रीप्रश्न संहिता | | 27 |
| 18 | सनत्कुमार संहिता (शिवरात्र) | | 8 |
| 19. | हयशीर्ष संहिता (प्रतिष्ठा काण्ड) | | 34 |
| 20. | हयशीर्ष संहिता (आदिकाण्ड) | | 36 |
| | (सौरकाण्ड) | | 37 |

# श्रीपाञ्चरात्रे पाद्मसंहितायां स्नपनविधिः

(चर्यापादे अष्टमोऽध्यायः)

## त्रैविध्यम् स्नपनविधिः

### (1) उत्तमोत्तमस्नपनविधिः

मध्ये ब्रह्मपदे 81 कलशाः। तत्परितः दिव्यपदे अष्टदिक्षु प्रतिदिशं 49 कलशाः। ब्रह्मपदे स्थितेषु 81 कलशेषु, द्रव्यकलशाः सप्तदश (17); दिव्यपदे अष्टासु दिक्षु प्रतिदिशं वर्तमानेषु 49 कलशेषु एकैकः द्रव्यकलशः। एवं द्रव्यकलशाः (17 + 8) 25 ; शुद्धोदक कलशाः 448 आहत्य कलशाः (448 + 25) **473** । एतदुत्तमोत्तमम् ।

पूर्वोक्त 25 द्रव्यकलशै सह, शुद्धोदक कलशेषु अर्धहीने सति (224 + 25) **249** कलशाः उत्तममध्यमम् । शुद्धोदककलशान् विहाय, केवलं **25** द्रव्यकलशस्थापने उत्तमाधमम् ।

### (2) मध्यमोत्तमस्नपनविधिः

मध्ये ब्रह्मपदे 81 कलशाः ; तत्परितः चतसृषु दिक्षु प्रत्येकं 49 कलशाः एषु ब्रह्मपदे 17 द्रव्यकलशाः। चतसृषु दिक्षु 4 द्रव्यकलशाः। शुद्धोदक-कलशाः 256। आहत्य (256 + 17 + 4) **277** कलशाः। इदं मध्य-मोत्तमस्नपनं ।

शुद्धोदक कलशेषु अर्धहीने सति (128 + 21) **149** कलशाः। इदं मध्यममध्यमम् ।

शुद्धोदक कलशान् विहाय केवल **21** द्रव्यकलश स्थापने मध्यमाधमम् ।

### (3) अधमोत्तमम्

मध्ये ब्रह्मपदे 81 कलशाः। अत्र 17 द्रव्यकलशाः। अन्ये 64 शुद्धोदककलशाः। (64 + 17) = **81** कलशाः इदं अधमोत्तमम् ।

चतुष्षष्टि शुद्धोदकेषु अर्धहीने (32 + 17) **49** कलशाः अधम-मध्यमम् ।

सर्वत्र शुद्धोदककलश हीने, केवलं **17** द्रव्यकलशस्थापने अधमाधमम् ।



### (1) पञ्चकलशस्नपनविधिः

पञ्चोपनिषदा पञ्चगव्यस्नपनं




| | पञ्चरत्नानि | पञ्चामृतद्रव्याणि | पञ्चगव्यानि | पञ्चलोहं |
|---|---|---|---|---|
| 1. | प्रवालः | दधि | दधि | रजतं |
| 2. | मुक्ता | पयः | क्षीरं | ताम्रं |
| 3 | वज्रं | मधु | गोमूत्रं | कांस्यं |
| 4. | वैडूर्यं | गुडं, फलं वा | शकृत् | अयः |
| 5. | मणिः | आज्यं | आज्यं | स्वर्णं |

| | स्नपनमन्त्राणि | आवहनदेवताः |
|---|---|---|
| 1. | दधिक्राविष्णो | विष्णुः |
| 2. | आप्यायस्वेति | मधुसूदनः |
| 3. | विष्णुगायत्री | त्रिविक्रमः |
| 4. | गन्धद्वारां | वामनः |
| 5. | घृतस्नातेति | वासुदेवः |

## (2) नवकलशस्नपनविधिः

| | | |
|---|---|---|
| 7 | 4 | 8 |
| 3 | 1 | 5 |
| 6 | 2 | 9 |

| | द्रव्याणि | स्नपनमन्त्राः | आवाहनदेवताः |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 2. | पाद्यं | नारायणायविद्महे | विष्णुः |
| 3. | अर्घ्यं | तद्विष्णोः | मधुसूदनः |
| 4. | आचमनं | न ते विष्णो | त्रिविक्रमः |
| 5. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 6. | दधि | दधिक्राविष्णो | श्रीधरः |
| 7. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 8. | मधु | मधुवाता | पद्मनाभः |
| 9, | फलानि | याःफलिनी | दामोदरः |



## (3) द्वादशकलशस्नपनविधिः

<table>
<tr><td>10</td><td colspan="2">7</td><td>11</td></tr>
<tr><td rowspan="2">6</td><td>2</td><td>3</td><td rowspan="2">8</td></tr>
<tr><td>1</td><td>4</td></tr>
<tr><td>9</td><td colspan="2">5</td><td>12</td></tr>
</table>

| | द्रव्याणि | स्नापनमन्त्राः | आवाहन देवताः |
|---|---|---|---|
| 1, | रत्नोदकं | त्रातारमिन्द्र | केशवः |
| 2. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 3. | सर्वगन्धं | गन्धद्वारां | माधवः |
| 4. | आज्यं | घृतस्नाता | वासुदेवः |
| 5. | पाद्य | विष्णुगायत्री | विष्णुः |
| 6. | दधि | दधिक्राविष्णो | श्रीधरः |
| 7. | अर्घ्यं | तद्विष्णोः | मधुसूदनः |
| 8. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 9. | आचमनं | न ते विष्णुः | त्रिविक्रमः |
| 10. | मधु | मधुवाता | पद्मनाभः |
| 11. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 12, | फलोदकं | या फलिनी | सत्यः |

## (4) षोडशकलशस्नपनविधिः

| | | | | |
|---|---|---|---|---|
| 14 | 9 | 10 | | 15 |
| 8 | 2 | 3 | | 11 |
| 7 | 1 | 4 | | 12 |
| 13 | 6 | 5 | | 16 |

| | द्रव्याणि | देवता: | स्नपनमन्त्रा: | | |
|---|---|---|---|---|---|
| 1. | रत्नोदकं | पुरुष: | चन्द्रमामनसो | + | वायुरजायत |
| 2. | लोहतोयं | सत्य: | नाभ्या आसीत् | + | अकल्पयन् |
| 3. | गन्धोदकं | अच्युत: | सप्तास्यासन् | + | पुरुषंपशुं |
| 4. | आज्यं | अनन्तः | यज्ञेनयज्ञं | + | सन्ति देवा: |
| 5. | पाद्यं | केशवः | सहस्रशीर्षा | + | दशाङ्गुलं |
| 6. | अर्घ्यं | नारायणः | पुरुष एवेदं | + | अतिरोहति |
| 7. | आचमनं | माधव: | एतावानस्य | + | अमृतं दिवि |
| 8. | पञ्चगव्यं | गोविन्द: | त्रिपादूर्ध्वं | + | शने अभि |
| 9. | अमृतोदकं | विष्णु: | तस्माद्विराडजायत | + | अथोपुर |
| 10. | मार्जनोदकं | मधुसूदनः | यत्पुरुषेण हविषा | + | शरद्धविः |
| 11. | कषायं | त्रिविक्रम: | तं यज्ञं बर्हिषि | + | ऋषयश्चये |
| 12. | कुशोदकं | वामन: | तस्माद्यज्ञात् सर्वहुत: | + | ग्राम्याश्चये |
| 13. | दधि | श्रीधर: | तस्माद्यज्ञात् | + | अजायत |
| 14. | क्षीरं | हृषीकेशः | तस्मादश्वा अजायन्त | + | अजावयः |
| 15. | मधु | पद्मनाभः | यत्पुरुषं व्यदधुः | + | पादावुच्येते |
| 16. | यवोदकं | दामोदर: | ब्राह्मणोऽस्य मुख | + | शूद्रो अजायत |



## (5) पञ्चविंशतिकलशस्नपनविधिः

| | | | | |
|---|---|---|---|---|
| 23 | 17 | 16 | 18 | 24 |
| 14 | 7 | 4 | 8 | 20 |
| 13 | 3 | 1 | 5 | 19 |
| 15 | 6 | 2 | 9 | 21 |
| 22 | 11 | 10 | 12 | 25 |

| | द्रव्याणि | स्नपनमन्त्रा: | आवाहनदेवता: |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 2. | उष्णोदकं | तद्विष्णोरिति | पुरुषः |
| 3. | फलोदकं | या:फलिनी | सत्य: |
| 4. | मार्जनोदकं | शंनोदेवीरिति | अच्युतः |
| 5. | अक्षतोदकं | सावित्री | अनन्तः |
| 6. | रत्नोदकं | त्राताऽमिन्द्र इति | केशवः |
| 7. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 8. | गन्धोदकं | गन्धद्वारा | माधवः |
| 9. | यवोदकं | शतधारा | गोविन्द: |
| 10. | पाद्यं | विष्णुगायत्री | विष्णु: |
| 13. | अर्घ्यं | तद्विष्णोरिति | मधुसूदनः |
| 16. | आचमनं | न ते विष्णुरिति | त्रिविक्रमः |
| 19. | पञ्चगव्यं | विष्णोकर्माणि | वामनः |
| 22. | दधि | दधिक्राविण्णो | श्रीधर: |
| 23. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 24. | मधु | मधुवाता ऋतायते | पद्मनाभ: |
| 25. | कषायं | ओषध्य इति | दामोदरः |

11, 12, 14, 15, 17, 18, 20, 21 एते शुद्धोदककलशाः, नारायणोदेवता अष्टाक्षरीमन्त्रः। पूर्वोक्त सप्तदशकलशाः द्रव्यकलशाः।

उद्धरेद्बीजमस्याथ तारं कुम्भं मनुं ध्रुवम् ।
कल्पयेदमुनैवाङ्गमन्त्रं मन्त्रविचक्षणः ॥ ४२३ ॥

द्रुपदो दृष्टवानेतत् छन्दोऽतिच्छन्द उच्यते ।
विष्वक्सेनो देवता च जपेल्लक्षत्रयं पुनः ॥ ४२४ ॥

एतं महामनुं ब्रह्मन् जपतस्सिद्धिकाङ्क्षया ।
सुरासुरेभ्यस्सर्वेभ्यो भयं तस्य[1] प्रणश्यति ॥ ४२५ ॥

अथेदानीं प्रवक्ष्यामि तस्याराधनसंयुतम् ।
कल्पयित्वा महापद्मं दलैर्द्वादशभिर्युतम् ॥ ४२६ ॥

कर्णिकायां समासीनं [2]सेनान्यं सम्यगर्चयेत् ।
विष्वक्सेन नमस्तेऽस्तु नमो मृत्युभयावह ॥ ४२७ ॥

नमः पारिषदेशाय धुर्याय जगतां नमः ।
चराचराणा[3]मादिस्त्वं जन्मनाशो न विद्यते ॥ ४२८ ॥

धुरमाधाय लोकानां त्वय्येव पुरुषोत्तमः ।
योगनिद्रा सुखवशश्शेते शेषे मनोहरे ॥ ४१९ ॥

एकान्तिनां तपोभक्तिप्रकर्षक्षीणकर्मणाम् ।
भगवत्प्राप्तये द्वारदृष्टयस्त्वां प्रभूतये ॥ ४३० ॥

ब्रह्माणमाहुः कल्पादौ पालने तं मधुद्विषम् ।
पतिं पशूनां संहारे जगतस्तस्थुषामपि ॥ ४३१ ॥

पादेन मेदिनीं विश्वं मध्येन [4]परमम्बरम् ।
नाकं मूर्ध्ना त्वमाक्रम्य तिष्ठस्येको जगन्मयः ॥ ४३२ ॥

---

1. तत्र $M_1$ 2. तेनाद्यं T, $M_2$ 3. माद्विस्त्वं $M_1$
4. पुनरम्बरम $M_1$



त्वं भूमिस्त्वमपां स्थानं तेजश्च त्वं समीरणः ।
आकाशस्त्वं त्वामियन्ते विभूतिर्व्याप्य तिष्ठति ॥ ४३३ ॥

त्वमेव भास्करो भूत्वा विश्वं तपसि विष्टपम् ।
आह्लादयसि तद्भूयः सोमो भूत्वा कृपानिधिः ॥ ४३४ ॥

[1]सत्त्वरूपस्य ते रूपे गुणावन्यो रजस्तमः ।
[2]विष्णुरूपे यथारूपे शुक्लरूपस्य वस्तुनः ॥ ४३५ ॥

त्वां सृष्ट्वा भगवानादौ भक्त्वातैः हेतुभिः पुनः ।
त्वां स्मृत्वा [3]सत्तमं पश्चात्पुमानेति त्वदात्मवान् ॥ ४३६ ॥

वैभवेन निजेनैव बिभ्राणे त्वयि विष्टपम् ।
[4]पितामहस्सुखं शेते शेषेऽशेषजगत्पतिः ॥ ४३७ ॥

ऋग्भिः प्रातः स्तुवन्ति त्वां यजुभिर्मध्यमे दिने ।
सायाह्ने सामभिः पुण्यैः सूर्यात्मानं द्विजातयः ॥ ४३८ ॥

प्रवृत्तिहेतुं विश्वस्य त्वामेव प्रकृतिं विदुः ।
पुमांसमप्युदासीनं तत्साक्षिणमकल्मषम् ॥ ४३९ ॥

न किञ्चिदभिरूपं यद्विश्वं ते विष्टपं पुनः ।
नास्ति ते नामधेयं च त्वन्नामाग्नि सुहृद्विदः ॥ ४४० ॥

संख्या नास्ति गुणानां ते तेजसामपि भास्वतः ।
षड्गुणा इत्युक्तत्वात् प्रमेयादीन् प्रचक्षते ॥ ४४१ ॥

शक्नोषि बुध्यसे विश्वं बिभर्षि न विकारयम् ।
ईशिषे द्विषतो हंसि त्वमेव भुवनत्रयम् ॥ ४४२ ॥

---

1. सत्य A 2. शुक्ल 3. सन्ततं A 4. वीतभार A, $M_2$

हितैषी त्वं यथा स्वामिन् भक्तानां गतपाप्मनाम् ।
तथा च बान्धवास्तेषां साक्षादात्माहिकं बहु ॥ ४४३ ॥

जलानामिव सिन्धुर्वै दीधितीनामिवांशुमान् ।
स्वामिन्नाम्नायमूलानां विद्यानां प्रभवो भवान् ॥ ४४४ ॥

ननु तिष्ठन्ति शास्त्राणि बहूनि कथयन्नपि ।
न च त्वद्भक्तिसाराणां कल्याणानि विचिन्तयन् ॥ ४४५ ॥

भवेऽस्मिन् दुःखबहुले त्वामाहुर्योगिनां गतिम् ।
अपां शिवानामाधारमध्वगानां [1]विवासिनाम् ॥ ४४६ ।

धन्यं तव प्रदेशेषु गत्यन्तरमपश्यताम् ।
निर्वापयसि नोचेच्च त्वं कटाक्षसुधारसैः ॥ ४४७ ॥

दुःखदावाग्निभिर्दग्धा जन्तवस्तं महीमयाः ।
विशालवक्षसं श्यामं पुण्डरीकनिभेक्षणम् ॥ ४४८ ॥

सालाकारचतुर्बाहुं त्वामहं शरणं व्रजे ।
चक्रवाका इवादित्यं चातका वारिदं यथा ॥ ४४९ ॥

चकोरा इव शीतांशुमार्तस्त्वामहमाश्रये ।
एतत्पठति यःस्तोत्रं श्रुतिभिः संस्थितं स्थिमम् । ४५० ॥

प्रीयते तस्य भगवान् सेनानीरविलम्बितम् ।
दद्याच्च सम्पदस्सर्वास्तस्मै भक्ताय दुर्लभाः ॥ ४५१ ॥

इति श्री पञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे "विघ्नराजोत्पत्ति-किरीटादि-मन्त्रोद्धारः नाम" एकत्रिंशोऽध्यायः ।

—: * :—

1. पिपासिनाम् $M_1$



## द्वात्रिंशोऽध्यायः ।

ऐहिकामुष्मिक सुदर्शन महामन्त्रवैभवः ।

**ब्रह्मा :—**

ऐहिकामुष्मिकं सर्वं मन्त्रं सौदर्शनं परम् ।
शुश्रूषा भगवन्नद्य रहस्यमपि पावनम् ॥ १ ॥

भक्ताय मह्यं दातव्यं प्रणताय यथातथम् ।

**श्री भगवान् :—**

हन्त ते कथयिष्यामि मन्त्रं सर्वार्थसाधनम् ॥ २ ॥

यथार्थं नाम तेनायं नाख्येयो यस्य कस्यचित् ।
उद्गीथमुद्धरेत् पूर्वं चन्द्रमाद्यं नभोमणिम् ॥ ३ ॥

आर्त्रिं [1]सितद्युतिं वह्निं गोपनं ज्वलनं मुखम् ।
ऊष्मा[2]णमुदयं [3]वीरं [4]फुल्लाक्षं विष्णुमस्तकम् ॥ ४ ॥

हृदयाह्लादमित्येव मन्त्रोद्धारश्चतुर्मुख ।
वह्निमादिमनुस्वारं बीजमुद्धृत्य कल्पयेत् ॥ ५ ॥

षडङ्गमनुवर्णानामुद्धारः कथ्यते क्रमात् ।
अङ्गत्रयं चतुर्वक्त्र पूर्वमाविष्कृतं मया ॥ ६ ॥

चतुर्थ्यन्तं चक्रपदमुद्गीथादि प्रयोजयेत् ।
अनन्तरं सूर्यपदं तद्विभक्ते च तत्पदम् ॥ ७ ॥

पञ्चमं षष्ठमप्यङ्गं पदं तत्तद्विभक्तिकम् ।
उद्धार्यं च सहस्रादि ज्वालाधारादि पूर्वकम् ॥ ८ ॥

1. त्विषं $M_1$ 2. न्तमुदयं A, $M_2$ 3. बिन्दुं A ; बीजं $M_1$
4. भल्लाक्षं $M_1$

एवमङ्गानि षड् ब्रह्मन् उक्तानि गहनानि ते ।
अहिर्बुध्न्यो मनोर्द्रष्टा विराट् छन्दः सुदर्शनः ॥ ९ ॥

देवता मुनयश्चात्र प्रत्यक्षरमथाब्जज ।
व्यासःकण्वो नारदश्च वसिष्ठः परमो भृगुः ॥ १० ॥

अत्रिष्षडेते द्रष्टारश्छन्दांस्यक्षरशः शृणु ।
उष्णिक्बृहत्यौ गायत्रं पङ्क्तिश्च जगती विराट् ॥ ११ ॥

वर्णाः कालाग्निवर्णाभाः कालश्चैव हि देवताः ।
करयोर्न्यस्य तलयोरुभयोरक्षराणि षट् ॥ १२ ॥

प्रथमान्तार्णशिष्टानामङ्गुष्ठादिषु पर्वसु ।
अङ्गुलीषु क्रमादेवमक्षरन्यास ईरितः ॥ १३ ॥

देहे च मूर्ध्नि चास्ये च हृदये गुह्यजानुनोः ।
पादयोर्न्यसनीयानि क्रमान्मन्त्राक्षराणि षट् ॥ १४ ॥

श्रीसुदर्शनगायत्रीमपरान्नपराजिताम् ।
वक्ष्यामि तस्य चोद्धारः पदशः कथ्यतेऽधुना ॥ १५ ॥

उद्गीथादि चतुर्थ्यन्तं सुदर्शनपदं ततः ।
वेत्ति लुडन्तमपरं बह्वर्थं पदमीरयेत् ॥ १६ ॥

महापूर्वं चक्रपदं तद्विभक्तिर्विभूतिजम् ।
ध्यायन्ती पद[1]मुच्चार्य पूर्ववत्तद्विभूषितम् ॥ १७ ॥

तत्पदं चास्मदादेशः नः पदं च द्विशीर्षकम् ।
प्रपूर्वं चोदयान्तं च पदमित्युद्धरेन्मनुम् ॥ १८ ॥

1. सुद्धार्य $M_1$



अस्य बीजं तु पूर्वोक्तं वेदितव्यं चतुर्मुख ।
आशासु दशसु स्थाप्य मन्त्रं तच्चक्रमुद्रया ॥ १९ ॥

तन्मध्ये स्थितमात्मानमग्निज्वालापरीतवत् ।
ध्यायेत् क्षितितले शुद्धे सहस्रदलपङ्कजे ॥ २० ॥

कर्णिकायां चक्रधरं द्विभुजं वृत्तलोचनम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ २१ ॥

महोदरं महाकायं जपाकुसुमसन्निभम् ।
करण्डमकुटोपेतं रक्ताम्बरविभूषितम् ॥ २२ ॥

धारयन्तं शिखारत्ने चक्रं मेघसमप्रभम् ।
नाभिनेमिसमायुक्तं ज्वालामण्डलदुस्सहम् ॥ २३ ॥

ज्वलत्षडरसंयुक्तमयुतार्कसमप्रभम् ।
पद्ममेवं स्थितं ध्यायेत्तन्नाभौ च सुविस्तृते ॥ २४ ॥

चक्राभिमानिनं देवं द्विहस्तं पुरुषं स्थितम् ।
रक्ताम्बरधरं रक्तं रक्तचन्दनपङ्किलम् ॥ २५ ॥

करण्डमकुटोपेतं सर्वाकल्पपरिष्कृतम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलाननम् ॥ २६ ॥

उद्गिरन्तं हुतवहं करजैर्मारुतानुगम् ।
विस्फुलिङ्गाद्दुर्विषहाद्विसृजन्तमनेकशः ॥ २७ ॥

कामरूपसहस्रेभ्यः प्रलयाम्बुदनिस्स्वनम् ।
तर्जनं वामतर्जन्या बिभ्राणं दक्षिणे करे ॥ २८ ॥

निपीडिताङ्गुलिं शत्रुं प्रहरन्निव भीषणम् ।
दहन्निव च नेत्राभ्यां पिबन्निव महोदधिम् ॥ २९ ॥

ध्यात्वैवमर्चयेद्भोगैरर्घ्यादिभिरतन्द्रितः ।
सिद्धये मन्त्रराजस्य पुरश्चर्या यथोदिता ॥ ३० ॥

देशे काले च मन्त्रस्य [1]रूपं संख्या च पूर्ववत् ।
शाककन्दफलक्षीरसक्तुपिण्डान्नभक्षणः ॥ ३१ ॥

तोयैस्तर्पणमग्नौ च जुहुयात्समिदादिभिः ।
मन्त्रस्सिध्यति तस्यैवं कुर्वाणस्य यथाविधि ॥ ३२ ॥

सिद्धिं च सूचयत्यस्य स्वप्ने मङ्गलदर्शनम् ।
प्रयुञ्जीत ततो मन्त्रं शान्तिकादिषु कर्मसु ॥ ३३ ॥

षोडशस्तम्भसंयुक्तं कल्पयेद्यागमण्डपम् ।
स्थापयेत्तत्र विधिवत्कुम्भानां पञ्चविंशतिम् ॥ ३४ ॥

वेष्टितान् सूत्रवस्त्राद्यैर्धान्यराशिषु मङ्गलान् ।
एषु द्रव्याणि संगृह्य न्यसेत्कमलसम्भव ॥ ३५ ॥

घृतमुष्णोदकं रत्नं फलोदकमनन्तरम् ।
लोहतोयं मार्जनाम्भो गन्धाम्भश्चाक्षतोदकम् ॥ ३६ ॥

यवोदकं क्रमादेषु कुम्भेषु नवसु क्षिपेत् ।
पाद्यं गुलोदकं चैव [2]दधि चेक्षुरसं तथा ॥ ३७ ॥

अर्घ्यं च नालिकेराम्भः क्षीरं च तदनन्तरम् ।
सर्वौषधिजलं तद्वदाचामं मङ्गलोदकम् ॥ ३८ ॥

मधुपूर्वं शान्तिवारि पञ्चगव्यमनन्तरम् ।
मूलोदकं कषायाम्भः पुष्पवारि चतुर्मुख ॥ ३९ ॥

---

1. जप $M_1$ 2. मधु $M_2$



द्रव्याण्येतेषु कुम्भेषु [1]बहिष्टेषु विनिक्षिपेत् ।
प्रत्येकं शतकृत्वश्च मन्त्रेणैवाभिमन्त्रयेत् ॥ ४० ॥

कुम्भे द्रव्याणि निक्षिप्य चक्राब्जं वर्तयेत्ततः ।
तन्मध्ये मन्त्रराजेन यष्टव्यं तत्सुदर्शनम् ॥ ४१ ॥

कुण्डे [2]वृत्ते च जुहुयात्समि[3]दन्नादिभिः क्रमात् ।
हुत्वा निशायां मनुना प्रभातेऽर्घ्यादिभिः क्रमात् ॥ ४२ ॥

अर्चयित्वा हेतिराजं हुत्वाग्नौ समिदादिभिः ।
भूर्जपत्रे लिखेच्चक्रं नाभिनेमिसमन्वितम् ॥ ४३ ॥

षडरं तत्र पूर्वादिक्रमाच्चैव[4] षडक्षरम् ।
लिखित्वा छन्दसामादिं तन्मध्ये साध्यनाम च ॥ ४४ ॥

हेमसूच्या लिखेद्द्रव्यैर्मिश्रितैश्चन्दनादिभिः ।
चन्दनद्वयकाश्मीररोचनागरुमुख्यकैः ॥ ४५ ॥

गन्धद्रव्यैः सुसम्पिष्टैः पश्चात्तां भूर्जपत्रिकाम् ।
गुलिकां कारयेत्तां च शालितण्डुलराशिषु ॥ ४६ ॥

अधिवास्यान्वहं कुम्भैः स्नापयित्वा यथाविधि ।
बन्धयेत्तां मातुरङ्गे मन्त्रेणानेन मन्त्रवित् ॥ ४७ ॥

गुलिकाबन्धनेनैव मुक्तो रोगादिभिर्नरः ।
तेजस्वी भवति क्षिप्रं त्वचा मुक्तो यथोरगः ॥ ४८ ॥

ज्वलितस्य भवेच्छान्तिः प्रसूनैः निम्बसम्भवैः ।
दूर्वाङ्कुरैः चूतदलैः सिक्तैर्मधुपयोघृतैः ॥ ४९ ॥

---

1. संहितेषु $M_1$ 2. घृतैश्च A 3. दाज्यादिभिः $M_1$ 4. देवं A

मनुना जुहुयादग्नौ सप्तरात्रमतन्द्रितः ।
प्रत्यहं दशसाहस्रसंख्यया रोगिसन्निधौ ॥ ५० ॥

अभिषिच्य तथा कुम्भैः रोगिणं चक्रविद्यया ।
बध्वा च गुलिकां मन्त्री मोचयेज्ज्वरितं ज्वरात् ॥ ५१ ॥

गोभूहिरण्यवस्त्राद्यैर्मन्त्रिणं तोषयेत्ततः ।
ब्राह्मणेभ्यो यथाशक्ति दद्याद् गोकम्बलादिकम् ॥ ५२ ॥

भूतग्रहपिशाचादि [1]पीडितानां तथा नृणाम् ।
शान्तये जुहुयादग्नौ किंशुकोत्थैः समिच्छतैः ॥ ५३ ॥

त्रियहं त्रिसहस्रैश्च तेषां बद्ध्वा शिखां ततः ।
गुग्गुलूत्थेन धूपेन धूपितान् ग्रहपीडितान् ॥ ५४ ॥

ताडयेन्मन्त्रजप्तेन दण्डेन लतयापि वा ।
पिशाचादिस्ततो ब्रूयान्मुञ्चामीति [2]प्रपीडितः ॥ ५५ ॥

शपथं कारयित्वा तु शिखाबन्धं च मोचयेत् ।
स्नापितैः कलशैः पश्चान्मन्त्रेण ग्रहपीडितम् ॥ ५६ ॥

स्नापयेद्बन्धयेच्चापि गुलिकामभिमन्त्रिताम् ।
ततो विमुच्यते रोगाच्चेतोवाग्भिरुपद्रवात् ॥ ५७ ॥

तेजस्वी शतमायुश्च भवेन्मन्त्र [3]प्रभावतः ।
नारी च दुर्भगा चक्रधारणात्सुभगा भवेत् ॥ ५८ ॥

वन्ध्या च गर्भिणी सद्यः सुप्रसूः स्यादपप्रसूः ।
अनृतुः स्यादृतुमती विमुखा सुमुखा भवेत् ॥ ५९ ॥

1. गृहीतानां $M_2$; दूषितानां $M_1$ 2. प्रपीडितम् $M_1$ 3. प्रसादतः $M_1$



विरहे सङ्गता भर्त्रा भवेदचिरकालतः ।
स्त्रीप्रसूः पुम्प्रसूतिश्चास्तना स्तनमण्डिता ॥ ६० ॥

कुमार पक्षिपीडादौ बालानां च यथोदितैः ।
विधिभिर्मुच्यते दुःखात् लभते [1]शान्तिमुत्तमाम् ॥ ६१ ॥

प्रासादेऽपि नरेन्द्रस्य ब्रह्मरक्षोमुखैर्ग्रहैः ।
प्रवेशे सति तन्मध्ये कुम्भान् रत्न[2]समन्वितान् ॥ ६२ ॥

स्थापयित्वा यथापूर्वं समिदाद्यै[3]रतन्द्रितः ।
मन्त्रेण जुहुयान्मन्त्री द्वादशाहान् समाहितः ॥ ६३ ॥

प्रत्येकं दशसाहस्रसंख्यया कमलासन ।
ताम्रपत्रे शिलायां वा चक्रमालिख्य तत्पुनः ॥ ६४ ॥

धान्यराशिषु संस्थाप्य निशायां प्रातरुत्थितः ।
प्रासादद्वारि निखनेद्दिक्षु चाष्टसु मन्त्रितम् ॥ ६५ ॥

प्रोक्षयेत्कुम्भतोयेन गृहं सर्वमशेषतः ।
पलायन्ते ग्रहास्सर्वे दूरतः सर्वतोमुखः ॥ ६६ ॥

तद्राष्ट्रेऽपि न तिष्ठन्ति सर्वकालमसंशयम् ।
प्रासादवर्तिनः सर्वे जीवन्ति [4]निरुपद्रवाः ॥ ६७ ॥

धनधान्यसमृद्धिश्च यथा धनदवेश्मनि ।
वस्त्रशय्यासनादीनां दंशने मूषिकादिभिः ॥ ६८ ॥

[5]रक्तास्थिदर्श[6]नेनापि केशानां दहने तथा ।
अकस्माद्गोपुरादीनां दहनेऽशनिपीडिते ॥ ६९ ॥

1. चायुरुत्तमम् $T, P_1, P_2$ 2. रक्त $M_2$, T 3. समन्वितम् $M_1$
4. निरुपाधिकाः $M_1$ 5. रक्तास्थिदर्शनेनापि $P_1$ 6. वापि $T, P_2$

निशि शकधनुर्दर्शे निवाते चैत्यभूरुहः ।
भङ्गे वल्मीकजनने दुःस्वप्नेऽन्यत्रतादृशे ॥ ७० ॥

एवमादौ दुर्निमित्ते शान्तिमेतेन कारयेत् ।
यज्ञवृक्षसमिद्भिश्च होमः पूर्वोक्तसंख्यया ॥ ७१ ॥

कुर्याच्च शान्तिं पुष्ट्यादिकर्मणा कमलासन ।
कथ्यन्ते तानि बहुधा नामेदं यान्ति भेदतः ॥ ७२ ॥

सर्वाभ्युदयकर्माणि चतुरश्रेषु कारयेत् ।
पौष्टिकं पद्मकुण्डेषु शान्तिं वृत्ते सुखावहाम् ॥ ७३ ॥

त्रिकोणे मारणं कर्म कुण्डे चापाकृतौ पुनः ।
उच्चाटनं यक्षकन्यासाधने कोणपञ्चके ॥ ७४ ॥

षडश्रे स्तम्भनं कर्म सप्ताश्रे मोहनं भवेत् ।
विद्वेषणं नवाश्रे स्यादष्टाश्रे मारणो विधिः ॥ ७५ ॥

एकादशाश्रे ब्रह्मादि वशीकरणमाचरेत् ।
कुण्डे दशाश्रे पश्वादि देवतातोषणो विधिः ॥ ७६ ॥

द्वादशाश्रे तु पुरुषं वैकुण्ठं द्रष्टुमाचरेत् ।
योन्याकारे विवाहार्थं [1]कन्यार्थं कमलासन ॥ ७७ ॥

चतुर्विंशत्यङ्गुलैः स्याद्विस्तारायामकल्पनम् ।
खातं तावद्भिरेव स्यात्कुण्डेषु नियतिं शृणु ॥ ७८ ॥

तदर्धं पादमथवा चतुरङ्गुलमेव वा ।
परितो द्व्यङ्गुलं [2]हित्वा बहिस्तिस्रश्च वेदिका ॥ ७९ ॥

1. वश्यार्थं $M_2$ 2. खात्वा $M_1$



कार्यास्तासाञ्च विस्तारश्चतुरङ्गुलसंमितः ।
तावत्येवोन्नतिर्ब्रह्मन् कुण्डस्य धनुषः पुनः ॥ ८० ॥

अङ्गुल्या नवतिः षट् च ज्या च षट्त्रिंशदङ्गुला ।
शङ्कुं विधाय तन्मध्ये दशाङ्गुलसमायतम् ॥ ८१ ॥

भ्रामयेत्परितः सूत्रं कुण्डं तद्वलयाकृतिम् ।
चतुरश्रस्य कुण्डस्य विभजेत् पञ्चधा भुजम् ॥ ८२ ॥

द्वौ भागौ भुजमेकं च त्रिंशत्पञ्चाथवा पुनः ।
अङ्गुलीनां भवेदेषां त्रिकोणाङ्के भुजः स्मृतः ॥ ८३ ॥

कुण्डे षडश्रे च भुजा [1]अष्टाष्टैकादशाङ्गुलाः ।
एको भुजः पञ्चकोणे विंशत्यङ्गुलिसंमितः ॥ ८४ ॥

सप्ताश्रे च भुजायामो यवषट्काधिकाः पुनः ।
तिस्रश्च दशचाङ्गुल्यः कुण्डे त्वष्टा[2]श्रिभिर्युते ॥ ८५ ॥

द्व्याधिका दश वा भूमौ दशाङ्गु[3]लमितीरितम् ।
अङ्गुल्योस्तु भुजायामो नलस्कन्दांशकीर्तितः ॥ ८६ ॥

[4]नवाश्रकुण्डेषु यवा पञ्चकोणे भुजायतिः ।
दश चाङ्गुलयः प्रोक्ता दशाश्रे च चतुर्मुख ॥ ८७ ॥

यवाः पञ्च भुजायामो नव चाङ्गुलयः ।
एकादशाश्रे कुण्डे तु यवैरष्टाभिरन्वितः ॥ ८८ ॥

अष्टावङ्गुलयः कुण्डे द्वादशाश्रे भुजायतिः ।
अष्टादशाङ्गुलाः प्रोक्तो योनिकुण्डेषु चायतीः । ८९ ॥

1. अष्टौ वाष्टादशाङ्कुलाः $M_1$ 2. श्रनिर्मितो $M_1$ 3. ल्यः प्रकीर्तिता $T, P_1, P_2$ 4. सहस्रकुण्डेत्वथवा पञ्च एकोभुजायतिः $M_1$

अष्टौ च चत्वारिंशच्च भवेदङ्गुलयोऽब्जज ।
गजोष्ठसन्निभा योनिर्यद्वाश्वत्थदलोपमा ॥ ९० ॥

[1]कुण्डान्युक्तान्यथैदानीं शान्त्यादिः प्रतिकल्प्यते ।
यत्कुण्डं यस्य कथितं शान्त्यादेस्तस्य तद्भवेत् ॥ ९१ ॥

अश्ववारणशालासु चक्रयन्त्रं यथाविधि ।
लिखित्वा ताम्रदार्वादौ निशायामधिवासयेत् ॥ ९२ ॥

सहस्रकृत्वः कर्तव्यो होमः कुण्डे[2] शुभे यतः ।
समिद्भिर्यज्ञयोग्याभिः स्थापयेत्कुम्भमर्चितम् ॥ ९३ ॥

अथ प्रभाते शालायां यन्त्रं [3]खन्यान् महीतले ।
प्रोक्षयेत्कुम्भतोयेन गजानश्वान् पृथक्पृथक् ॥ ९४ ॥

सौदर्शनेन मन्त्रेण पुण्याहं वाचयेत्तथा ।
नश्यन्ति व्याधयस्तेषां गजाश्वानां चतुर्मुख ॥ ९५ ॥

बलं स्यादधिकं तेषां इति सप्ताहमाचरेत् ।
ब्राह्मणेभ्यो धनं दद्याद्य[4]थाशक्ति च दक्षिणाम् ॥ ९६ ॥

ऊर्जस्वलमथो ब्रह्मन् गजाश्वं जायते भृशम् ।
तथा च प्रत्यहं होमः स्यात्सुदर्शनविद्यया ॥ ९७ ॥

इत्थं गोमहिषादीनां रक्षां कुर्वीत मन्त्रवित् ।
पुररक्षामथ ब्रह्मन् प्रवक्ष्यामि यथातथम् ॥ ९८ ॥

स्तम्भैष्षोडशभिर्युक्तां दर्भमालापरिष्कृताम् ।
पुरमध्ये प्रपां कृत्वा जुहुयात् सर्पिषा पुनः ॥ ९९ ॥

---

1. कुण्डे ष्टयुक्ता य $M_1$ 2. कुम्भे यथोदिते $M_2$ 3. कुर्यात् $M_1$
4. दाचार्याय च $M_2$



पालाशाभिः समिद्भिश्च दिनान्येकोनविंशतिः ।
दिक्ष्वष्टासु तथा मध्ये पुरस्य कमलासन ॥ १०० ॥

खन्यात्सौदर्शनं यन्त्रं स्थापयेत् कुम्भमञ्जसा ।
तोयेन प्रोक्षयेद्विद्वान्नगरं चक्रविद्यया ॥ १०१ ॥

ऋग्भिश्च पावमानीभिः प्रशस्ताभिर्यथाक्रमम् ।
पुरद्वारेषु सौधेषु मण्डपेषु महीभृताम् ॥ १०२ ॥

सर्वत्र निखनेच्चक्रं जुहुयात्समिदादिभिः ।
मरणव्याधि दुर्भिक्ष ज्वरादि व्याधयः पुनः ॥ १०३ ॥

नश्यन्ति बलवन्तश्च भवन्ति पुरवासिनः ।
ग्राममध्ये तथा दिक्षु विदिक्षु चतुरानन ॥ १०४ ॥

शृङ्गाटकेषु सर्वेषु निखनेदायुधाधिपम् ।
ग्रहवेतालरक्षांसि व्याधयश्च ज्वरादयः ॥ १०५ ॥

न बाधन्ते पुरग्राममपस्मारादयस्तथा ।
न तस्करभयं किञ्चिदकालमरणं तथा ॥ १०६ ॥

पुरुषायुषवन्तः स्युर्नरा धान्यधनान्विताः ।
सौभाग्यं शान्तिरारोग्यं तथा कुलविवृद्धयः ॥ १०७ ॥

ब्रह्मवर्चसमित्येतद् ब्राह्मणानां भविष्यति ।
पयस्विन्यो भविष्यन्ति गावः पीनपयोधराः ॥ १०८ ॥

तद्राष्ट्रेऽपि मनुष्याणां भद्रमेव भविष्यति ।
अथ वक्ष्यामि ते ब्रह्मन् पन्नगानां निवारणम् ॥ १०९ ॥

देवालये नदीतीरे नन्दनोपवनेषु वा ।
चतुःस्तम्भसमायुक्तं चतुस्तोरणभूषितम् ॥ ११० ॥

अभितो दर्भमालाभिश्शोभितं होममण्डपम् ।
कृत्वा तस्मिन्न[1]वान् कुम्भान् स्थापयित्वा नवापरान् ॥ १११ ॥

प्राच्यां वेद्यां पुनः कुर्यात्कुण्डं पूर्वोक्तलक्षणम् ।
यजेदेतेषु कुम्भेषु नव मूर्ती यथाक्रमात् ॥ ११२ ॥

[2]निवेद्य पायसं ताभ्यः पश्चात्कुण्डे हुताशनम् ।
आददीताथ ताम्रेण तालुमात्रं भुजङ्गमम् ॥ ११३ ॥

प्रकल्प्य शेषमन्त्रेण प्रतिष्ठाप्य पितामह ।
तस्मिन् चक्रं लिखेत्तस्य मध्ये मत्स्याकृतिं पुनः ॥ ११४ ॥

गरुडं शङ्खपालं च कृष्णमन्त्रं च वेष्टनम् ।
तन्नागयन्त्रं क्षीरेण घृतेन मधुनापि च ॥ ११५ ॥

दध्ना शक्रद्रसेनापि स्नापयेच्चक्रविद्यया ।
पुष्पगन्ध प्रदीपाद्यैरुपचारैस्तथापरैः ॥ ११६ ॥

इष्ट्वा नागं स्वमन्त्रेण चक्रं चक्रस्य विद्यया ।
कुण्डमध्ये पुनर्नागयन्त्रं खन्याद्विचक्षणः ॥ ११७ ॥

तस्य चोत्तानरूपस्य हुताशमुपरिस्थितम् ।
कृत्वा दध्ना घृतेनापि पयसा मधुनापि च ॥ ११८ ॥

समिद्भिर्ब्रह्मवृक्षस्य जुहुयान्मन्त्रकोविदः ।
सहस्रकृत्वः प्रत्येकमथ गोपयसोक्षितैः ॥ ११९ ॥

नीवारभागै[3]र्जुहुयात्सप्ताहं अयुतैरपि ।
अपानस्त्विति मन्त्रेण जुहुयात्साधकोत्तमः ॥ १२० ॥

1. नपां $T, P_1, P_2$ 2. नैवेद्यं पायसान्नं स्यात् $M_2$ 3. सप्ताहं जुहयात् $P_2$



त्रिष्वहस्सु व्यतीतेषु पर्जन्यो मेघवाहनः ।
[1]द्रावयेदवनीं कृत्स्नां भूयोऽपि सलिलोदयैः ॥ १२१ ॥

अतिवृष्टि प्रशमनं प्रवक्ष्यामि चतुर्मुख ।
पिङ्गलाकारमात्मानं ध्यात्वा पीयूषभावितम् ॥ १२२ ॥

शूलवज्रधरं चापि मन्त्रविन्मन्त्रभूषणम् ।
तैलाज्यसिक्तैर्जुहुयाद्रा[2]जसर्षपलावणै ॥ १२३ ॥

जुहुयाज्ज्वलिते वह्नावयुतं सप्तसागरात् ।
वृष्टिशब्दं पुरस्कृत्य स्तम्भयेति पदद्वयम् ॥ १२४ ॥

प्रयोक्तव्यमिदं ब्रह्मन् मन्त्रान्ते मन्त्रवेदिना ।
अथ शाम्यति सा वृष्टिर्महती चक्रविद्यया ॥ १२५ ॥

अथ राष्ट्रपुरादीनां क्षोभशान्तिं तथा शृणु ।
अथ काष्ठगतं चक्रं प्रतिष्ठाप्य यथाविधि ॥ १२६ ॥

पुरे राष्ट्रे तथा खन्यात् तत्काष्ठैर्जुहुयात्तथा ।
सहसा क्षोभमायान्ति वाजिवारणसङ्कुलम् ॥ १२७ ॥

राष्ट्रं च क्षुभितं ब्रह्मन्ननवस्थं भविष्यति ।
यदि शान्तौ मतिं कुर्याच्चक्रमुद्वास्य तत्पुनः ॥ १२८ ॥

स्नापयेद्भगवन्तं च सहस्रकलशाम्बुभिः ।
झटित्येव प्रशान्तं स्याद्दुरितं पुरराष्ट्रयोः ॥ १२९ ॥

राष्ट्रादिलम्भनं[3] तेऽद्य प्रवक्ष्यामि चतुर्मुख ।
उपेतं दलषट्कोणे कर्णिका केसरान्वितम् ॥ १३० ॥

1. प्लावये A 2. राजसर्षप $M_1$ 3. जं बलं $M_1$

चक्राब्जं कारयेद्भूमौ मेध्यायां कमलासन ।
तद्बहिर्नाभिवलयं षडरं तद्बहिर्लिखेत् ॥ १३१ ॥

तद्बहिर्नेमिवलयं ज्वालामाला समन्वितम् ।
तद्बहिः कल्पयेत्पीठं चतुर्द्वारपरिष्कृतम् ॥ १३२ ॥

शोभोपशोभयुक्तं च कृत्वा मण्डलमीदृशम् ।
तस्मिन् सुदर्शनं ब्रह्मन् पूजयित्वा यथाविधि ॥ १३३ ॥

समिद्भिरन्नैराज्यैश्च हुत्वा मन्त्रं प्रसीदतु ।
श्रृङ्गे चक्रं देहराष्ट्रं देहराष्ट्रं तथाधनम् ॥ १३४ ॥

इत्येतां पावनीं गाथां जपान्ते प्रार्थयन् पठेत् ।
अथ तस्य पुरं राष्ट्रं ग्रामं चक्रं प्रयच्छति ॥ १३५ ॥

अथ प्रभ्रष्टराज्यानां मनुजानां यथाश्रियः ।
तथा वक्ष्यामि ते ब्रह्मन्नुपायं चक्रविद्यया ॥ १३६ ॥

अन्तस्थितस्य पद्मस्य स्यात्पलाश चतुष्टयम् ।
अथाष्टौ द्वादश ब्रह्मन् षोडशाथ चतुष्टयम् ॥ १३७ ॥

विंशतिश्च तथा त्रिंशत् द्वौ क्रमेण बहिच्छदाः ।
इति षड्विध पत्रस्य कर्णिकायां सुदर्शनम् ॥ १३८ ॥

[1]येष्वथो षट्प्रकारेषु पलाशेषु यथाक्रमम् ।
मूर्तीश्चतस्त्रः प्रथमं तथाष्टाद्याधिका दश ॥ १३९ ॥

षोडशाथ सहस्रं च विंशतिश्च पितामह ।
अथ द्वात्रिंशतिं पश्चादन्तरालेषु षट्स्वपि ॥ १४० ॥

1. इष्ट्वा $M_2$



यथाक्रमं भूषणानि श्रीवत्सप्रभृतीन्यथा ।
अष्टौशक्तीः श्रियासार्धं चक्रादिं होममण्डलम्[1] ॥ १४१ ॥

रवीन् सप्त'धिकान् पञ्च कुमुदादीननन्तरम् ।
इन्द्रादीनथ दिक्पालान् पूजयेन्मन्त्रकल्पवित् ॥ १४२ ॥

समिद्भिर्बिल्वरूपाभिस्तिलैः पद्मैस्तथा घृतैः ।
सहस्रकृत्वः प्रत्येकं जुहुयाच्चक्रविद्यया ॥ १४३ ॥

इत्थं गते सप्तरात्रे प्रातरुत्थाय मन्त्रवित् ।
स्थापितैः पञ्चविंशत्या कुम्भैश्शालिकृतासनैः ॥ १४४ ॥

घृतादि पूरितैर्ब्रह्मन् चक्रविद्याभिमन्त्रितैः ।
राज्यभ्रष्टं [2]मन्त्रहीनं दस्युभिः परिपीडितम् ॥ १४५ ॥

राजानं ब्राह्मणं वैश्यं तथान्यं दुरिताहतम् ।
अभिषिञ्चेत्स्मरन् चक्रं तन्मन्त्रेण विधानवित् ॥ १४६ ॥

तथा प्रकल्पयेद्यन्त्रं दापयेद्दक्षिणां गुरोः ।
[3]इत्थं कृते चतुर्वक्त्र सौभाग्यं राज्यलम्भनम्[4] ॥ १४७ ॥

दस्युनाशो भवेद्भद्रं स्यात्सुदर्शनतेजसा ।
आदावन्ते तदा ब्रह्मन् हंसमन्त्रवता पुनः ॥ १४८ ॥

नाशयेच्चक्रमन्त्रेण विषं स्थावरजङ्गमम् ।
अथ सङ्ग्रामविजयं वक्ष्यामि कमलासन ॥ १४९ ॥

कृपाणे तोमरे शक्तौ शरेषु वलये तथा ।
आयुधेषु तथान्येषु ललाटे वाजिहस्तिनाम् ॥ १५० ॥

1. मण्डपम् $M_2$ 2. भाग्यहीनं $M_2$ 3. इत्थं गते चक्रयन्त्रे $M_1$
4. लाभदम् A

तथा ध्वज[1]पटान्तेषु लिखित्वा चक्रमण्डलम् ।
प्रविश्य समरं भीमं रिपूणां रोमहर्षणम् ॥ १५१ ॥

हेषितेन तुरङ्गाणां बृंहितेन विषाणिनाम् ।
हर्षनादेन योधानां रथनेमि स्वनैस्तथा ॥ १५२ ॥

तुरङ्गम खुरक्षुण्णैः पार्थिवैः पांसुमण्डलैः ।
तिरोहितनभस्सूर्यं कृतान्तसदनोपमम् ॥ १५३ ॥

रुधिरास्रवसम्भ्रान्तं वैतालमिथुनोद्यतम् ।
मांससङ्ग्रहणोड्डीनसहस्रश्येनसङ्कुलम् ॥ १५४ ॥

ज्वालामालामयं चक्रं ध्यायन् जित्वा रिपूनपि ।
अक्षनागप्रहरणैः निष्क्रमेत् पृतनामुखम् ॥ १५५ ॥

अथवा राज्यसीमासु शङ्कून् खदिरसम्भवान् ।
स्थापयेच्चक्रमन्त्रेण हुतशिष्टघृतोक्षितान् ॥ १५६ ॥

अग्निप्रकाररूपास्ते न शक्यं प्रेक्षितुं परैः ।
[2]प्रवेशे कम्पनं ब्रह्मन् [3]चक्रविद्याप्रभावतः ॥ १५७ ॥

यत्र यत्र भयं पुंसां तत्र तत्र भयं भवेत् ।
चक्रमध्यस्थमात्मानं ध्यायन्तं कुपितात्मनः ॥ १५८ ॥

पर्वतारोहणेऽरण्ये सागरप्लवनादिषु ।
व्याघ्रसिंहवराहादि सन्निपातैः खिले पथि ॥ १५९ ॥

गच्छन्न भयमाप्नोति चक्रमन्त्रमिमं जपन् ।
तं न छिन्दन्ति शस्त्राणि न तं दहति पावकः ॥ १६० ॥

---

1. पताकेषु A, $M_2$ 2. प्रवेशे किं पुनः $M_2$ 3. ब्रह्म T, $P_1$, $P_2$



न चैनं क्लेदयन्त्यापो यस्यैष हृदये मनुः ।
ब्राह्मणक्षत्रियविशो शूद्राणां कमलासन ॥ १६१ ॥

प्रतिलोमानुलोमानां कुर्या[1]त्संहननं [2]बुधः ।
समिद्भिर्ब्रह्मवृक्षाणामश्वत्थवटवृक्षयोः ॥ १६२ ॥

प्लक्षोदुम्बरजातीनामपवर्गस्य पावके ।
होमं कुर्याद्यथासंख्यं तथा तज्जातियोषिताम् ॥ १६३ ॥

ब्राह्मणः श्रियमाप्नोति होमेन श्वेतपङ्कजैः ।
रक्त[3]पद्मैर्नरेन्द्रस्य वैश्यस्य श्वेतपाटलैः ॥ १६४ ॥

श्रीफलैराहुतिं कुर्वन् राष्ट्रस्याधिपतिर्भवेत् ।
अङ्केन न्यस्तमन्त्रेण यां स्पृशेदङ्गनां नरः ॥ १६५ ॥

तस्य सा वशमायाति मृतं चाप्यनुगच्छति ।
अपमृत्युजयं वक्ष्ये यथावदवधारय[4] ॥ १६६ ॥

होमशालागते कुण्डे [5]सम्यगादाय [6]पावकम् ।
तस्मिन्नावाह्य हेतीशं[7] दूर्वाकाण्डैर्घृतोक्षितैः ॥ १६७ ॥

जुहुयात्कोटिभिर्मन्त्रैर्यथाशक्त्यथवा पुनः ।
इति मासद्वयं रक्षेत्पावकं नियतेन्द्रियः ॥ १६८ ॥

होमान्ते यदि भूपालस्तुलारोहणमाचरेत् ।
अन्यच्चेदात्मनो यत्स्वं दद्याद्ब्राह्मणसात् प्रति ॥ १६९ ॥

कलशैः पञ्चविंशत्या स्नापयेच्चक्रविद्यया ।
एवं कृते चतुर्वक्त्र कालमृत्युं जयेन्नरः ॥ १७० ॥

---

1. संवननाम्बुज $P_1$ 2. पुनः A, $P_2$ 3. पीतैः A 4. यथा तदवधारय $P_1$
5. सम्यगाधाय $P_1$ 6. पङ्कजम् A, T, $P_1$, $P_2$ 7. देवेशं T, $P_1$, $P_2$

अपमृत्युः कथं तस्य तज्जये नास्ति संशयः ।
अथवा कालमृत्योश्च जयोपायोऽवगम्यताम् ॥ १७१ ॥

निष्कैः सहस्रसंख्यातैः प्रतिकृत्य पितामह ।
द्विभुजं पुरुषाकारं भ्रुकुटीकुटिलेक्षणम् ॥ १७२ ॥

दंष्ट्राकरालवदनं वराहरुधिरेक्षणम्
यष्टिं करेण सव्येन पाशं वामेन बिभ्रतम् ॥ १७३ ॥

प्रक्षाल्य पञ्चभिर्गव्यैः पञ्चोपनिषदा तथा ।
नवकैरभिषिच्याथ धान्यराशिषु निक्षिपेत् ॥ १७४ ॥

आवाह्य पश्चाद्याद्दत्या पूजयित्वा स्वनामभिः ।
होममग्नौ प्रकुर्वीत समिच्चरुघृतैरपि ॥ १७५ ॥

ऋग्भिः कृतान्तलिङ्गाभिर्ब्रह्मव्याहृतिभिस्तथा ।
ततः प्रभाते विप्राय तं पुमांसं हिरण्मयम् ॥ १७६ ॥

पूताय भगवद्भक्त्या पञ्चकालानुवर्तिने ।
दापयेत्कालमृत्युं [1]वा स जित्वा स्यात्त्वायुषं पदम् ॥ १७७ ॥

अथ मारणमेतद्धि श्रूयतां चतुरानन ।
विविक्ते कल्पयेद्देशे होमशालां विधानवित् ॥ १७८ ॥

तन्मध्ये कल्पयेत्कुण्डमाचार्यो दक्षिणामुखम् ।
गृहीत्वाक्षस्य फलकां हस्तद्वयसमायताम् ॥ १७९ ॥

तदर्धविस्तृतां ब्रह्मन् घनं च [2]चतुरङ्गुलाम् ।
तस्यां लिखित्वा द्वेष्यस्य वपुः प्रत्यक्षसंमितम् ॥ १८० ॥

1. च T,P₂   2. चतुरानन M₁



प्रतिकूलेऽथ नक्षत्रे रिपोरष्टमराशिषु ।
कृष्णपक्षे विशेषेण प्रकुर्यान्मरणक्रियाम् ॥ १८१ ॥

प्राच्यां भागेऽथ कुण्डस्य षडरं चक्रमालिखेत् ।
कृष्णसूत्रैरलङ्कृत्य तस्मिन् चक्रं प्रतिष्ठितम् ॥ १८२ ॥

कृष्णगन्धैः कृष्णपुष्पैः पूजयेत्कृष्णवारिभिः ।
श्मशानाद्वा मुनिलयाद्वल्मीकान्मृदमाहरेत् ॥ १८३ ॥

तां रिपोः पादधूलीभिर्व्यामिश्रां कमलासन ।
उन्मत्तरसमिश्रेण खरमूत्रेण पेषयेत् ॥ १८४ ॥

विष्ठया वा मृदावापि द्वेष्यस्य प्रतियातनाम् ।
तस्यां प्राणान् प्रतिष्ठाप्य मन्त्रेणानेन मन्त्रवित् ॥ १८५ ॥

उद्गीथमप्रमेयं च मन्दरं भुवनं तथा ।
क्रोधानिलं पश्चिमास्यं हुताशं मधुसूदनम् ॥ १८६ ॥

प्रचण्डगोपनौ रामं भास्करं पश्चिमाननम् ।
समध्यं गोपनद्वन्द्वममुष्येति पदं पुनः ॥ १८७ ॥

जीवा इह स्थिता शब्दं विष्णुदक्षोदर्यांस्तथा ।
क्रोधरूपं तपस्यन्तं सर्वशब्दमनन्तरम् ॥ १८८ ॥

विक्रमं विघ्नराजात्रिवह्निबन्धू च गोपनम् ।
वनमालाधरं रामं वाङ्मनः काय इत्यपि ॥ १८९ ॥

अथ मायातृतीयान्तं लोहन्तं यानि यन्मुखम् ।
स्वाहावसानमुध्दृत्य प्रणवान्तादिकं मनुम् ॥ १९० ॥

तां च प्राणवतीं कुण्डे खन्यादुत्तानशायिनीम् ।
फलकास्थितमाकारमनुलिप्य पितामह ॥ १९१ ॥

पूर्वोक्तया मृदा पश्चात्प्राणिनं[1] प्राणविद्यया ।
पादेनाक्रान्तहृदयो रोषलोहितलोचनः ॥ १९२ ॥

सहस्रकृत्वश्चक्रस्य मन्त्रं भाषेत मन्त्रवित् ।
[2]विषवृक्षेप्ररूढेन शङ्कुना नेत्रयोर्हृदि ॥ १९३ ॥

हस्तयोः पादयोर्गुह्ये श्रोत्रयोर्नासिकोदरे ।
अन्येष्वपि प्रतीकेषु [3]वेधं कुर्याद्विचक्षणः ॥ १९४ ॥

तथाकृते रिपोस्तत्तद्गात्रं हीनं भविष्यति ।
अथ कुण्डे श्मशानाग्निं निदधीत पितामह ॥ १९५ ॥

दर्भैः परिस्तरेद्वेद्यां दक्षिणापश्चिमोन्मुखन्[4] ।
परिधींस्तद्वदाकीर्य कृत्वा रक्षां तथात्मनः ॥ १९६ ॥

ऋत्विग्भिः षोडशोद्दिष्टैर्द्वारेष्वध्ययने कृते ।
ब्राह्मणेभ्यो धनं दत्त्वा हेतिराजमनुस्मरन् ॥ १९७ ॥

अक्षकाष्ठ [5]प्रक्लृप्ताभ्यां स्रुक्स्रुवाभ्यां यथाविधि ।
कृष्णपन्नगराजीलकृष्णा तु क्षतजोक्षितैः ॥ १९८ ॥

मरीचैः सर्षपैर्युक्तानष्टधान्याष्टधान्वितान् ।
समिधोऽक्षस्य जुहुयात्सहस्रं प्रतिवासरम् ॥ १९९ ॥

रिपुनक्षत्रवृक्षाणां समिधश्चापि मन्त्रवित् ।
मन्त्रान्ते शत्रुनामानं मारयेति प्रकीर्तयेत् ॥ २०० ॥

[6]होतव्यं चावमानेन होमं कृत्वा दिने दिने ।
[7]यावद्भवति कृत्याया दर्शनं जातवेदसि ॥ २०१ ॥

---

1. न्मन्त्रितं $M_1$ 2. अक्षवृक्ष $M_2$ 3. वधं $M_1, P_1, P_2$ 4. मुखम् $M_1$
5. प्रतप्ताभ्यां $M_1$ 6. होतव्यश्च प्रमाणेन $M_2$ 7. यावदित्यारभ्य-दहेदिति पर्यन्तं T कोशे नास्ति ।



क्रमेण तावज्जुहुयाद्वासरानेकविंशतिम् ।
फलकामपि वेदिस्थां होमधूपेन धूपयेत् ॥ २०२ ॥

अगरुं गुग्गुलुं चापि धूपार्थमनले दहेत् ।
अथ सप्तस्वतीतेषु दिवसेषु पितामह ॥ २०३ ॥

सप्तस्वहस्सु[1] मध्ये च यथाक्रममी ज्वराः ।
आक्रोशो वेदना तीव्रा गात्राणामविधेयता ॥ २०४ ॥

हिक्कानिःश्वासविच्छेदो जिह्वाहानिस्तथारिपोः ।
भवन्ति हि प्रभावेण चक्रमन्त्रस्य निश्चितम् ॥ २०५ ॥

इति द्विसप्तकेऽतीते दिवसेऽनन्तरे पुनः ।
मध्यरात्रे कृते होमे कृत्या तस्माद्विभावसोः ॥ २०६ ॥

त्रिशूलभीषणैर्हस्तैस्सप्तभिस्त्रिभिरङ्घ्रिभिः ।
जिह्वया रक्तवर्षिण्या लेलिहाना निजं मुखम् ॥ २०७ ॥

उद्गिरन्ती स्वनेत्राभ्यामाज्यसिक्तं हविर्भुजम् ।
नरास्थिमालां बिभ्राणा नूपुरीकृतमेखला ॥ २०८ ॥

कपालकुण्डलोपेता प्रहसन्ती भयानकम् ।
दण्डं [2]घण्टां तथा शूर्पं मार्जनीं पाशमण्डलम् ॥ २०९ ॥

बिभ्रतीं लम्बमानाभ्यां हस्ताभ्यां मुक्तमूर्धजाम् ।
अधिरूढापरस्कन्धमन्धकारनिभाकृतिः ॥ २१० ॥

स्फुलिङ्गमण्डलस्थेव विमुक्ताटोपभीषणा ।
उत्थाय प्राञ्जलिर्भूत्वा किं करोमीति भाषते ॥ २११ ॥

---

1. स्स्वतीतेषु $M_1$ 2. गदां $M_1$

अभिधास्यत्यथाचार्यः प्राणान् हर रिपोरिति ।
आदिष्टा सा तथेत्युक्त्वा रिपुं तस्य महात्मनः ॥ २१२ ॥

अपि दूरस्थितं हत्वा गुरुं पुनरुपैष्यति ।
अथ पूर्णाहुतिं हुत्वा होतृभिस्सह मन्त्रवित् ॥ २१३ ॥

[1]द्वाविंशे दिवसे लक्षं षडक्षरमिमं जपेत् ।
तथापराजितं मन्त्रन्नारसिंहमनुं तथा ॥ २१४ ॥

घृतादि पूरितैः कुम्भैर्विंशत्या पञ्चभिः पुनः ।
आत्माभिषेकं कुर्वीत चक्रमन्त्राभिमन्त्रितैः ॥ २१५ ॥

एनसो मुच्यते तस्मात्तथा शान्तिर्भविष्यति ।
उच्चाटनं प्रवक्ष्यामि यथावत् कमलासन ॥ २१६ ॥

निम्बधत्तूरपत्राणां श्मशानाङ्गारमिश्रितैः ।
रसैरक्षस्य काष्ठेन द्विहस्ते प्रेतवानसि । २१७ ॥

षट्कोणे नाभिनेम्यङ्के मण्डले क्रमशो लिखेत् ।
नामधेयं रिपोरन्तः [2]प्रोच्य याम्येऽथ पश्चिमे ॥ २१८ ॥

[3]यकारं भुवनं ब्रह्मन् [4]झकारं भुवनं तथा ।
शिष्टेषु त्रिषु कोणेषु तथाष्टौ मण्डलादयः ॥ २१९ ॥

तदारूढं रिपुं चापि कुण्डे चापाकृतौ पुनः ।
समिद्भिर्निम्बवृक्षस्य तथा च विषभूरुहः ॥ २२० ॥

जुहुयादभितो वह्नावमृतं प्लोषयन् रिपुम् ।
यत्र ध्वजं तं बध्नीयात् [5]उच्छ्रिते चैत्यपादपे ॥ २२१ ॥

---

1. द्वादशे $M_2$   2. प्राच्ये $M_2$   3. ककारं $M_2$   4. ईकारं $M_2$
5. दृश्यते $M_1$



अहोभिरेकविंशत्या रिपुस्तस्य महानपि ।
अधिष्ठानं निजं हित्वा भार्यापुत्रादिभिः सह ॥ २२२ ॥

पलायते दिगन्तेषु न क्वचिल्लभते स्थितिम् ।
अथविद्वेषणं ब्रह्मन्यथावदवधारय ॥ २२३ ॥

अक्षपादपकाष्ठेन स्निग्धयोराकृतिर्द्वयोः ।
कृत्वा तयोर्लिखेन्मन्त्रं नामधेयं तयोरपि ॥ २२४ ॥

विद्वेषयपदोपेतमसृजा ध्वाङ्क्षकाकयोः ।
आखुमार्जारयोर्ब्रह्मंस्तथा सर्पमयूरयोः ॥ २२५ ॥

तथान्येषां विरुद्धानां तिरश्चां पक्षिणामपि ।
निबध्य रज्जुमायामां मूर्वजैर्महिषाश्वयोः ॥ २२६ ॥

तथा ते आकृती बध्द्वा व्यस्तयोस्तु कृतं मुखम् ।
अपिदध्यात्तयोरास्यं जपेन्मन्त्रं षडक्षरम् ॥ २२७ ॥

कुण्डेऽथ[1]होमं कुर्वीत समिद्भिर्मृत्युबन्धयोः ।
अष्टोत्तरसहस्रेण हूयादग्नौ सुदर्शनम् ॥ २२८ ॥

युध्येतस्निग्धयोर्द्वन्द्वं काकोलूकादि संमितम् ।
इत्थं दशस्वतीतेषु दिवसेषु स मन्त्रवित् ॥ २२९ ॥

अपाकृष्यति दम्पत्यो [2]ममत्वं मित्रयोरपि ।
[3]क्षीरैः स्नायात्तयोर्भूयः प्रीतिर्भवति पूर्ववत् ॥ २३० ॥

अथाभिधीयते ब्रह्मन् स्तम्भनं तन्निशम्यताम् ।
शिलातले लिखित्वाथ चतुष्कोणचतुष्टयम् ॥ २३१ ॥

---

1. च T,$P_2$   2. मुखं सन्मित्रयोरपि $M_1$   3. क्षीरस्नानात् $M_2$

तेषु प्रत्येकमालिख्य पत्रैर्द्वैर्द्वयैः पितामह ।
गृहं वामनमन्त्रं तमिन्द्रकान्तचतुष्टयम् ॥ २३२ ॥

वज्राङ्कमपि पुष्पैस्तत्पूजयेत् कनकप्रभम् ।
स्थापयित्वा[1]स्थण्डिलेऽस्मिन्नासिक्या मन्त्रमीरयेत् ॥ २३३ ॥

स्तम्भयेति पदं चापि जुहुयादर्कखण्डिकाः ।
स्तम्भनं स्यात् झटित्येवं विवाहे गर्भलाभके ॥ २३४ ॥

वादजल्पवितण्डासु कथास्वपि च वादिनाम् ।
वक्ष्यामि तिलकं ब्रह्मन् लिखित्वा प्रतियातनाम् ॥ २३५ ॥

[2]द्वेष्यस्यावयवैस्तुल्यै र्गोमयाङ्गारमिश्रितैः ।
तदङ्गेषु लिखेन्मन्त्रं तद्बीजेन समन्वितम् ॥ २३६ ॥

अथस्याच्छक्तिहीनं तु मतिंद्वेषस्य देहिनः ।
अथ ते ताडनं वक्ष्ये धत्तूरं भयमारथोः ॥ २३७ ॥

अर्कस्य च रसे ब्रह्मन् श्मशानाङ्गारमिश्रितैः ।
लिखेत्प्रतिकृतिं बिल्वकाष्ठे प्रेतस्य वाससि ॥ २३८ ॥

शङ्खकीलमथादाय चतुरङ्गुल संमितम् ।
अङ्गानि ताडयेत्तस्य तेन कीलेन मन्त्रवित् ॥ २३९ ॥

षडक्षरस्य कुर्वीत नित्यं जपमतन्द्रितः ।
धनादि हानिस्तस्य स्यात् न्यन्ते द्वेष्टि समन्त्रवित् ॥ २४० ॥

वशीकारमहं ब्रह्मन् भूपतीनां वदामि ते ।
कुष्ठकुङ्कुमसिद्धार्थकर्पूरागरुचन्दनैः ॥ २४१ ॥

1. तलेतस्मिन् $M_2$ 2. द्वेष्यस्यालयवैस्तल्या,-लयवैशल्या इति पाठौ नार्थबोधावहौ । अथ एष पाठस्साधुस्स्यादिति प्रतिभाति ।



गोरोचनान्वितैश्चापि कुसुम्भरजसा सह ।
भूर्जपत्रे लिखेच्चक्रं षडरेषु षडक्षरम् ॥ २४२ ॥

तद्बहिर्द्वादशारं च नाभिनेमिसमन्वितम् ।
द्वादशाक्षरमालिख्य द्वादशारं ततो बहिः ॥ २४३ ॥

अष्टाक्षरेण मन्त्रेण हंसमन्त्रेण चान्वितम् ।
तद्बहिर्द्वादशज्वालं पाशाङ्कुशमनुद्वयम् ॥ २४४ ॥

साध्यस्य नामधेयेन प्रणवेनान्तराङ्कितम् ।
आभिष्षोडशभिर्ब्रह्मन् विदर्भितमनन्तरम् ॥ २४५ ॥

तदेतद्गुलिकां कृत्वा पद्मसूत्रेण वेष्टिताम् ।
चक्राब्जे वासितां कृत्वा पूजितां कुसुमादिभिः ॥ २४६ ॥

होमं पद्माकृतौ कुण्डे कृत्वा कुसुमसर्पिषा ।
द्वादशाहानि कृत्वैवं मङ्गल्यादीनि साधयेत् ॥ २४७ ॥

राजादयो मुखं तस्य प्रेक्षन्ते विवशा इव ।
तस्य दूरात्पलायन्ते कूश्माण्डप्रमुखा ग्रहाः ॥ २४८ ॥

रसातलप्रवेशं ते कथयामि चतुर्मुख ।
बिल्वदारुं समासाद्य कुसुम्भरजसा सुधीः ॥ २४९ ॥

लिखित्वा षडरं चक्रं बहिस्तस्याथ मन्त्रवित् ।
[1]यथोपदेशं पातालं पन्नगासुरसङ्कुलम् ॥ २५० ॥

लिखेत्कृत्वा पुनः कुण्डे तस्मिन्नाधाय पावकम् ।
जुहुयान्नरमांसेन जपेन्मन्त्रं च सर्वशः ॥ २५१ ॥

1. यथोद्देशश्च $M_2$

द्वादशाहेन ते पश्चात्पातालतलसंश्रयाः ।
उपस्थास्यन्ति तं [1]भीता युवत्यः कामपीडिताः ॥ २५२ ॥

तं ग्रहीष्यन्ति भर्तारमहम्पूर्वं शुचिस्मिताः ।
पाणिभिर्लोलवलयैः कामयानाः प्रियंवदाः ॥ २५३ ॥

[2]रसायनानि दास्यन्ति तस्मै पातालवर्तिने ।
[3]तद्भक्षणेन दीर्घायुस्ताभिस्सह यथेप्सितम् ॥ २५४ ॥

रंस्यते रम्यदेशेषु यत्र वा जायतेरुचिः ।
खङ्गस्य साधनं ब्रह्मन्निदानीं कथयामि ते ॥ २५५ ॥

अश्वत्थपत्रान्तरितं खङ्गं शास्त्रोक्तलक्षणम् ।
स्पृष्ट्वा षडक्षरं मन्त्रं जपेध्यात्वा सुदर्शनम् ॥ २५६ ॥

अथ खङ्गस्य तापः स्यात् स यक्ष्यादीनि जेष्यते ।
तस्मिन् धूमायमाने तु गन्धर्वाधिपतिर्भवेत् ॥ २५७ ॥

तस्मिन् ज्वालामुखे ब्रह्मन् विद्याधरपतिर्भवेत् ।
गृहीत्वा तं पुनः खङ्गं यथेष्टं लोकमाप्नुयात् ॥ २५८ ॥

गोमयेनोपलिप्तेऽथ शून्यागारे [4]पितामह ।
चक्रं लिखित्वा सुमनस्सितपुष्पैरलङ्कृतम् ॥ २५९ ॥

व्रणहीनं शवं तस्मिन् ब्राह्मणस्य नृपस्य वा ।
प्राचीनशिरसं कृत्वा माहिषेण घृतेन तम् ॥ २६० ॥

पादयोर्मन्त्रविल्लिम्पेद[5]सहायोऽप्रमत्तधीः ।
तद्वक्षसि पदं कृत्वा मन्त्रराजमिदं जपेत् ॥ २६१ ॥

---

1. भीत्या T 2. रसायनादि $T, P_1, P_2$ 3. ततः प्रभावात् $M_2$
4. चतुर्मुख T 5. नाहरो $M_1$



प्रत्यहं जुहुयादग्नौ समिद्भिर्वेत्रभूरुहः ।
कृतसंख्यं जपेन्मन्त्रं जपहोमैः पितामह ॥ २६२ ॥

उत्थास्यति शवःप्राणी निशीथे कल्पिताञ्जलिः ।
स तस्मै मन्त्रसिद्धाय वक्ति दिव्यं रसायनम् ॥ २६३ ॥

पादुकामञ्जनं खङ्गं प्रदास्यति यथेप्सितम् ।
यदिदं तेन खड्गेन हत्वा नीयात्तदामिषम् ॥ २६४ ॥

त्रैलोक्यविषयं ज्ञानं लप्स्यते चतुरानन ।
वलीपलितहीनत्वममरत्वं च सेत्स्यति ॥ २६५ ॥

निधीनन्यपि गूढानि प्रत्यक्षमिव पश्यति ।
रसं विमृज्य पाषाणे लिखेच्चक्रं षडक्षरम् ॥ २६६ ॥

रसं निधाय मूषायां बध्द्वा द्रव्यैर्यथोचितैः ।
कृत्वाभिमन्त्रितं ब्रह्मन् चक्रमन्त्रेण कल्पवित् ॥ २६७ ॥

उपयुञ्जीत मेधावी जपेच्चापि षडक्षरम् ।
आरोग्यं बलमैश्वर्यं कालमृत्युव्यतिक्रमम् ॥ २६८ ॥

वाग्मित्वं बुद्धिमत्त्वं च रूपसंहननं वयः ।
नभस्थले गतिश्चापि साक्षादिव गरुत्मतः ॥ २६९ ॥

इत्यादयो गुणास्तस्य भविष्यन्ति न संशयः ।
यथा न पादखेदः स्याद्दूरं गत्वापि तच्छृणु ॥ २७० ॥

काकजंघामुपादाय कोकिलेक्षण संहिताम् ।
बलां मोटारसैस्तेषां शरपुङ्खरसान्वितैः ॥ २७१ ॥

सर्षपस्नेहसंमिश्रैश्चक्रमन्त्राभिमन्त्रितैः ।
[1]लिप्त्वा पादयुतं चक्रं कृत्वारण्यमहापथे ॥ २७२ ॥

---

1. लिप्तपादयुतं चक्रं गत्वारणमहापथम् $M_2$

योजनानां सहस्रे द्वे न खेदं समवाप्नुयात् ।
यक्षिसिद्धिं प्रवक्ष्यामि तां लिखेत् क्षौमवाससि ॥ २७३ ॥

न्यग्रोधमूले तां ध्यात्वा यक्षीविद्यां जपेद्बुधः ।
आराध्य गुग्गुलुत्थेन धूपेन कमलासन ॥ २७४ ॥

समिद्भिर्वटवृक्षस्य तथाशोककरञ्जयोः ।
रक्तपद्मैस्तिलैश्चापि जुहुयाज्जातवेदसि ॥ २७५ ॥

एकविंशतिरात्रान्ते कम्पते स वटो मुहुः ।
दृढ बुद्धिः पुनश्चापि मन्त्रमेवं जपेद्बुधः ॥ २७६ ॥

अथ प्रत्यक्षरूपा सा यक्षी कल्याणलक्षणा ।
स्निग्धेव जननी सिद्धिं [1]तस्मै दत्त्वा यथेप्सितम् ॥ २७७ ॥

अमुनैव विधानेन यक्षा वैश्रवणादयः ।
प्रत्यक्षभूता दास्यन्ति साधकेन वृतं वरम् ॥ २७८ ॥

यथायथाधिको होमो जपो वा कमलोद्भव ।
अमुष्य चक्रमन्त्रस्य पञ्चकोटिर्यथोत्तरम् ॥ २७९ ॥

तथा तथा पदान्येतान्यवधूयेत किल्बिषम् ।
आदित्यानां शशाङ्कस्य वसूनां मरुतामपि ॥ २८० ॥

अश्विनो वासवस्यापि मन्वादीनां तपस्विनाम् ।
रुद्राणां ब्रह्मणश्चापि चक्रमन्त्रस्य वैभवात् ॥ २८१ ॥

सहस्रकोटिसंख्येन होमेन च जपेन च ।
तपसा चातितीव्रेण लभते वैष्णवं पदम् ॥ २८२ ॥

1. रक्षां $M_1$



किं भूयसा प्रलापेन यत्रेष्टं तद्भविष्यति ।
स तेन तेन लभते पापेभ्योऽपि प्रमुच्यते ॥ २८३ ॥

इत्येतत्कथितो ब्रह्मन् षडक्षरमहामनोः ।
कालः सङ्ग्रहरूपेण रहस्यं सर्वसिद्धिदम् ॥ २८४ ॥

इति श्रीपञ्चरात्रे महोपनिषदि पाद्मतन्त्रे चर्यापादे
सुदर्शन महामन्त्रवैभवो नाम द्वात्रिंशोऽध्यायः ॥

—: * :—

त्रयस्त्रिंशोऽध्यायः ।

## समाराधनाङ्गमन्त्रोद्धारः ।

**ब्रह्मा :—**

अथौपचारिकान्मन्त्रान् शुश्रूषे भगवन्नहम् ।
प्रयुज्यमानैर्यैः प्रीतिर्महती ते भविष्यति ॥ १ ॥

**श्री भगवान् :—**

ब्रह्मन्नाराधनाङ्गानि मन्त्राण्यवहितः शृणु ।
यानि श्रुत्यन्तभागेषु शृण्वन्ति ब्रह्मवादिनः ॥ २ ॥

[1]बन्धुकोशं पुरस्कृत्य ककुभं [2]ब्रह्ममस्तकम् ।
[3]वैराजं देवरं पश्चादेकनेत्र[4]मृगेश्वरौ ॥ ३ ॥

पवित्रभुवनौ चापि ब्रह्मन् चण्डवनालयौ ।
हुताशवामनौ पद्मगोपनौ विनतात्मजम् ॥ ४ ॥

1. ब्रह्म $M_1$ 2. बन्धु $M_1$ 3. वैकुण्टं A 4. महेश्वरौ T.

विघ्नेशं मन्दरं [1]कान्तं कलारमा च जयाजयौ ।
पीयूषरामौ श्रीकुम्भौ सूक्ष्मं गोपनपश्चिमौ ॥ ५ ॥

वरुणं भद्रहस्तान्तं विघ्नेशं पाटलप्रियम् ।
अनिरुद्धं जयेणेशौ शुक्लं जयमथोदयम् ॥ ६ ॥

भास्वन्तमृतधामानं शत्रुदाहकवामनौ ।
पद्मादिदेवौ श्रीवत्सं दक्षं भास्करगोपनौ ॥ ७ ॥

पवित्रभुवनौ वह्निभुवनौ शत्रुदाहकम् ।
पश्चिमास्यं मकारं च हुताशनसुधारसौ ॥ ८ ॥

अन्तिमं ककुभं कृत्वा [2]जितन्ते मनुमीरयेत् ।
भानुविष्णुं ध्रुवं बीजं ब्रह्मन्नेतस्य कल्पयेत् ॥ ९ ॥

अङ्गान्यप्यमुना कुर्यादृषिः सनक उच्यते ।
छन्दोऽनुष्टुप्तथैतस्य देवता पुरुषोत्तमः ॥ १० ॥

जपोऽम्बुतर्पणं होमं कृतं षोडशलक्षवत् ।
धर्मार्थकाममोक्षार्थान् पुंसां सर्वं प्रयच्छति ॥ ११ ॥

पञ्चोपनिषदान्मन्त्रानथ ते कथयाम्यहम् ।
परमेष्ठी पुमान्विश्वो निवृत्तः सर्व एव हि ॥ १२ ॥

आम्नायादिं क्रोधरूपं सङ्कर्षणगजाननौ ।
दक्षानिरुद्धौ पापघ्न वह्निगोपनमारुतान् ॥ १३ ॥

पवित्रपावकौ दक्षमाधवौ पद्मसम्भव ।
क्रोधकौस्तुभशङ्खाद्यैर्गोपनं जयमन्दरौ ॥ १४ ॥

1. शान्तं P.   2. जितन्ता T, P, $P_2$



[1]विघ्नेशमाधवौ चान्ते परमेष्ठिनमीरयेत् ।
ऋषिरादित्यनामास्य छन्दो गायत्रमुच्यते ॥ १५ ॥

देवता च सदाविष्णुर्जपेद् द्वादशलक्षवत् ।
प्रथमं प्रणवं कृत्वा धूलिकेतनगोपनौ ॥ १६ ।

विघ्नेशद्वितयं दक्षकलान्तौ पश्चिमाननम् ।
वह्न्यादिदेवौ शङ्खाख्यं पश्चिमं भुवनं तथा ॥ १७ ॥

पावकं [2]भुवनं पश्चाच्छकं दाहकगोपनौ ।
जयदक्षौ भद्रपाणिं देवदत्तौ तथान्तिमौ ॥ १८ ॥

इत्येवं पौरुषं मन्त्रमीरयेन्मन्त्रकोविदः ।
ऋषिं नारदमस्याहुश्छन्दो गायत्रमीरितम् ॥ १९ ॥

देवता वासुदेवश्च शृणु विश्वमतः परम् ।
ताराग्निगोपनौ [3]दक्षभद्रपाणी कलान्तिमौ ॥ २० ॥

पवित्रवह्न्यादि देवान् शङ्खं वरुणविक्रमौ ।
श्रीवत्सकुम्भौ विजयमन्दरौ विघ्नमाधवौ ॥ २१ ॥

इतीरितो विश्वमन्त्रः पुनर्द्रष्टा भृगुर्मनोः ।
छन्दो गायत्रमेतस्य वाच्यः सङ्कर्षणाभिधः ॥ २२ ॥

उद्गीथकुम्भादिदेवौ विघ्नेशद्वयमस्तकम् ।
मन्दरं वरुणं पापहननं वह्निगोपनौ ॥ २३ ॥

वायुं विघ्नेश्वरं रामं पीयूषं वसुमस्तकम् ।
एकनेत्रं वायुमादिं देवान् वैराजमन्दरौ ॥ २४ ॥

1. विघ्नेशं च मृगेशं च दक्षकमन्तिमौ A, $M_2$   2. श्रीधरं A, $M_2$   3. भद्रपाणि-

मनुष्येशं मृगेशानं निवृत्तिमनुमीरीरितः ।
ऋषिस्तु नारदश्छन्दो गायत्रं पूर्वमीरितम् । २५ ॥

प्रद्युम्नो देवताऽनेन निवृत्तिं लभते पुमान् ।
प्रणवं पीतवर्णाभं गोपनं मानुषेश्वरम् ॥ २६ ॥

माधवीं सर्गिणं पापहननं वह्निगोपनौ ।
चतुर्गतिं कलात्मानं कुम्भः पावकगोपनौ ॥ २७ ॥

वैराजमन्दरौ स्यातामुद्धार्य चतुरानन ।
गजास्यं देवदत्तान्तं सर्वमन्त्रं प्रकल्पयेत् । २८ ॥

उष्णिक्छन्दः पुनस्तस्य द्रष्टा स्यान्नीललोहितः ।
अनिरुद्धो देवता च मनवः पञ्च कीर्तिताः ॥ २९ ॥

पञ्चोपनिषदः पुण्यास्ता एताश्चतुरानन ।
महापातकनाशिन्यः पराकादिफलप्रदाः ॥ ३० ॥

एतास्सम्यगधीते यो वेदान्तानथवाखिलान् ।
तावुभौ सदृशौ मन्ये पञ्चभूरशस्यतेऽथवा[1] ॥ ३१ ॥

प्रायश्चित्तेषु होमेषु प्रतिष्ठाप्रोक्षणादिषु ।
प्रयुञ्जीत क्रमानेताः सर्वपापप्रणाशिनीः ॥ ३२ ॥

अतः परं प्रवक्ष्यामि शान्तिमन्त्रचतुष्टयम् ।
प्रणवं मधुहन्तारं पवनं मधुसूदनम् ॥ ३३ ॥

भास्करं पुरुषात्मानं गदिविघ्नेशमाधवान् ।
भल्लायुधं हृषीकेशमग्निं भल्लायुधोदयम् ॥ ३४ ॥

1. पञ्चभूरशस्यतेऽधुना T, $P_1$, $P_2$



कुम्भं मृगाङ्कपीयूषौ कमलाननमन्तिमम् ।
शुक्लं कुम्भं मघोरशत्रुं भास्करं गोपनं तथा ॥ ३५ ॥

इतीरयेन्मनुं ब्रह्मन् ऋषिः स्याद्देवता मनोः ।
छन्दो गायत्रमेतस्य देवता तिग्मतेजसः ॥ ३६ ॥

उद्गीथं विजयं कुम्भं विघ्नेशात्रिमृगेश्वराः ।
पीयूष गोपनौ भद्रहस्तगोपनयष्टयः ॥ ३७ ॥

जृम्भल पद्मनाभं च भानुमद्विजयोनयः ।
मुसली गोपनः पश्चाज्जयं कुंभञ्च माधवम् ॥ ३८ ॥

नेत्रोतदेहौ सूर्यश्च श्रीधरौ विजयावनौ ।
श्रीविघ्नेशस्सुभद्रोऽथ गदीवरुणमस्तकाः ॥ ३९ ॥

वैराजकुम्भादिदेवा दक्षो मधुनिषूदनः ।
आदित्यरामनासिक्यचन्द्रवामनसर्गिणः ॥ ४० ॥

हुतान्त इति मन्त्रोऽयमुदनीयश्चतुर्मुख ।
ऋषिरस्य [1]भृगुं प्राहुश्छन्दो गायत्रमित्यपि ॥ ४१ ॥

हुताशनो देवता च देवानां प्रथमं मुखम् ।
निगमादिं श्रियः कान्तौ विजयद्वयविक्रमौ ॥ ४२ ॥

क्रोधमेघौ पवित्रं च श्रीधरं [2]पावकाह्वयौ ।
उग्रात्मवह्निद्युमणिरनलं बन्धुमस्तकम् ॥ ४३ ॥

पवित्रं बन्धुनासिक्यं गदिनं पुलहं तथा ।
दृष्टिं मृगेशं द्युमणिं रामो वैधरपावकौ ॥ ४४ ॥

1. मनुं T, $P_2$  2. पावकोदयौ T, $P_1$, $P_2$

वरुणं मायया साकं प्रचण्डं पाटलप्रियम् ।
पवित्रदहनौ वायुस्वच्छन्दौ ठठ पश्चिमौ ॥ ४५ ॥

इत्थं प्रकल्पयेन्मन्त्रमृषिर्धनद उच्यते ।
छन्दो गायत्रमेतस्य देवता हरिपिङ्गलः ॥ ४६ ॥

तारं पवित्रं विजयं विघ्नेशं भृगुगोपनौ ।
भास्करं पुरुषात्मानं गदिनं विघ्नमाधवौ ॥ ४७ ॥

भल्लायुधहृषीकेशौ वह्निं भल्लायुधोदयम् ।
कुम्भसम्पुटितं शुक्लं चन्द्रं[1] पीयूषगोपनौ ॥ ४८ ॥

भानुमन्तं मघोरशत्रुमिति मन्त्रं विवेचयेत् ।
ऋषिर्बृहस्पतिस्तस्य छन्दः पूर्ववदीरितम् ॥ ४९ ॥

आदित्यो देवता ह्येवमुक्तं मन्त्रचतुष्टयम् ।
यत्र मन्त्रं क्रियाद्रव्यहीनं शान्त्यादिकर्मणि ॥ ५० ॥

तस्मिन्नेतत्प्रयुञ्जीत तथायं साधको विधिः ।
मन्त्राणि ते प्रवक्ष्यामि तत्वानां पञ्चविं[2]शतिम् ॥ ५१ ॥

प्रयुज्तमानैर्यैर्विश्वं प्राणिति प्राणवर्जितम् ।
प्रणवस्योपरि स्पर्शानाहुर्वामनमस्तकान् ॥ ५२ ।

नमोऽन्तान् प्रातिलोम्येन योजयेत्पञ्चविंशतिम् ।
परशब्दं चतुर्थ्यन्तं नतेः पश्चात्प्रकल्पयेत् ॥ ५३ ॥

जीवं देहं तथा [3]बुद्धिं गर्वं पश्चान्मनस्तथा ।
शब्दस्पर्शौ तथा रूपं रसो गन्धश्च पञ्चमः ॥ ५४ ॥

---

1. चन्द्रपीयूष गोपनान् T, $P^1$, $P_2$ 2. विंशतेः T, $P_1$, $P_2$ 3. बुद्धिं-अहंकारं मनस्तथा A.



एतान् पञ्चापि विषयान् तन्मन्त्रवचनोदरान् ।
श्रोत्रं त्वक्च तथा नेत्रं जिह्वा घ्राणं ततः परम् ॥ ५५ ॥

वाचं पाणिं तथा पादं पायूपस्थौ पितामह ।
पृथिवीं प्रथमं तोयं तेजो मारुतमन्वतः ॥ ५६ ॥

व्योम चान्ते चतुर्थ्यन्तैरात्मशब्दैस्तथोत्तरैः ।
कृतनामानिमान् शब्दान् मन्त्ररूपेण कल्पयेत् । ५७ ।

उद्गीथकृतनासिक्यौ हुताशं बिन्दुमस्तकम् ।
ककुभं गदिनं [1]वासुदेवं विजयवामनौ ॥ ५८ ॥

तथा च वासुदेवान्तविजयं वामनं तथा ।
वह्निं गुहालयं चापि पवित्रमधुसूदनौ ॥ ५९ ॥

चतुर्गतिं [2]मनुं प्राणं दीपार्थं मनुमीरयेत् ।
तारं सूर्यहृषीकेशयष्टयः पुष्टिबीजवान् ॥ ६० ॥

मेघबिन्दू शुक्लरामौ ऋषिः पुण्यत्रिविक्रमौ ।
इन्दुर्गुहालयं पश्चाज्जयपावकगोपनाः ॥ ६१ ॥

इति वायुर्नतिर्मत्स्यादक्षसूत्रमनुर्महान् ।
तारं श्रीराम कौमार पुरुषात्ममृगेश्वरौ ॥ ६२ ॥

विष्णुं पञ्चान्तकं वह्निं धूमध्वजगुहालयौ ।
पवित्रबन्धुसुमुखा माधवं प्रथमं तथा ॥ ६३ ॥

हुताशं पद्मपाणिं च वायुं वह्निं गुहालयम् ।
पश्चिमास्यं मघोरशत्रुं शङ्खं च नतिमस्तकम् ॥ ६४ ॥

---

1. पीठं मुसलं वायुमस्तकम् $M_1$ 2. नतिं $M_1$

इत्यर्घ्यमन्त्रं रचयेदथ पाद्यमनु शृणु ।
तारं गदिभ्रुवौ चापि गदध्वंसी मृगाधिपौ ॥ ६५ ॥

पश्चिमं रामशिरसं विजयं वह्निपश्चिमौ ।
एकविंशं पद्मनाभं मायां पवनपङ्कजौ ॥ ६६ ॥

वह्निद्वितीयमनिलं पापघ्नं मधुसूदनम् ।
[1]वैधरं मारुतं वह्निं हृषीकेशोऽथ पश्चिमम् ॥ ६७ ॥

रामं सुमुखसारङ्गौ नत्यन्तं मन्त्रमीरयेत् ।
आदौ [2]व्यालं शुक्रवह्निं चन्द्रकुम्भौ जयानिलौ ॥ ६८ ॥

मन्दरं पद्मनाथं च वैराजाग्निगुहालयाः ।
[3]पापहन्तारमद्वेषी वनमाली मृगेश्वरौ ॥ ६९ ॥

गोपनो वक्रतुण्डश्च दक्षविघ्नेशगोपनाः ।
वैराजदक्षौ विघ्नेशमाधवौ नतिमस्तकौ ॥ ७० ॥

इत्याचमनमन्त्रस्स्यात् धूपादीनि यथा अमी ।
प्रथमं चेदपि मनोर्धूपान्दुरितात्मवान् ॥ ७१ ॥

रामं दृष्टिमनुस्वारं गदिनं विष्णुमस्तकम् ।
आदित्यगोपनौ चण्डं वह्निजायावसानकम् ॥ ७२ ॥

इत्येतत्कल्पितं मन्त्रं प्रतिभोगनिवेदनम् ।
प्रयुञ्जीत प्रयोगं च तस्मात्साधारणो मनुः ॥ ७३ ॥

द्विषट्काक्षरमुध्दृत्य शिखण्डिपुलहं ध्रुवम् ।
सुभद्रकुम्भौ विजयश्रीधरौ दक्षमाधवौ ॥ ७४ ॥

1. सुभगं A, $M_2$ 2. व्यापीति पाठो न कश्चिदप्यर्थं बोधयति ।
3. पापहन्ता च रामं च वनमालिमृगेश्वरौ $M_1$



पवित्रभुवनौ क्रोधपश्चिमाननगोपनाः ।
ठठान्तमथ नत्यन्तं मनुमित्थं प्रकल्पयेत् ॥ ७५ ॥

पुष्पाञ्जलिप्रदानेषु नियुञ्जीत जितं पुनः ।
तारश्शुक्लघटो यष्टिश्चन्द्रमा भुवनोऽनलः ॥ ७६ ॥

सुभद्रवाय्वोतदेह नत्यन्तो मनुरीरितः ।
तेनाराधनवस्त्रं स्यादाप्यायनमुपाचरेत् ॥ ७७ ॥

इत्थमाराधनाङ्गानि मन्त्राणि कथितानि ते ।
इदानीमैहिकान् मन्त्रान्प्रवक्ष्यामि मनोहरान् ॥ ७८ ॥

स्वीकृत्य सप्तवर्णानि रोहिणीशमपांपतिम् ।
पवित्रमानुषेशानौ गोपनं पुण्यविक्रमौ ॥ ७९ ॥

पश्चिमं विजयं वायुं माधवो वरुणानिलौ ।
वासुदेवं तथा दक्षं गोपनं जयमन्दरौ ॥ ८० ॥

विघ्नेशमाधवौ पापहननं पवनं तथा ।
गुहालयमथो यष्टिं सूर्यमूर्ध्वं जगत्पतिम् ॥ ८१ ॥

यष्टिं कुम्भं जगत्प्राणं हृषीकेशं तथा ध्रुवम् ।
श्वेतांशुं वरुणं बिन्दुं द्विसूर्यं वामनं ध्रुवम् ॥ ८२ ॥

ठठान्तिकं तनुं ब्रह्मन्नीरयेदथ तारकम् ।
नत्यन्तं शुक्लवरुणौ पश्चिमं विक्रमं जयम् ॥ ८३ ॥

बन्धुमग्निं हृषीकेशं पश्चिमं मधुसूदनम् ।
चतुर्गतिमचामादिं माहेन्द्रं विष्णुपन्नगौ ॥ ८४ ।

मन्दरं वामनं पश्चात्पश्चिमं विजयानिलौ ।
देवदत्तं श्रियं वह्निं महामायां महाबलाम् ॥ ८५ ॥

हृषीकेशं ध्रुवं चापि बीजमाम्रेडयेदिदम् ।
पवित्रमनिलं[1] चण्डं गोपनं द्विविनायकम् ॥ ८६ ॥

वैधरं मधुहन्तारं विजयं मन्दरं तथा ।
भद्रहस्तं मृगेशं च ठठान्तं मन्त्रमीरयेत् ॥ ८७ ॥

सिन्धुद्वीपो मनोर्द्रष्टा विराट् छन्दो निगद्यते ।
स्वप्नाधिपतिरेतस्य देवता परमः पुमान् ॥ ८८ ॥

हृषीकेशं यष्टिमन्त्रमीरयेन्मन्त्रकोविदः ।
उष्णिक् छन्दः पुनस्तस्य देवता नृहरिर्हरिः ॥ ८९ ॥

[2]अथाङ्गिरस नामानि तेषां मन्त्रं प्रचक्षते ।
[3]अभिन्नविटपस्कन्धं स्पृष्ट्वाश्वत्थमिमं जपेत् ॥ ९० ॥

अहोभिः सप्तभिर्मृत्युं लङ्घयेत्संयतेन्द्रियः ।
अथाल्पायाससाध्यानि शृणु मन्त्राणि पद्मज ॥ ९१ ॥

व्यापिनं पुरुषात्मानं वासुदेवं सपश्चिमम् ।
रामं [4]विघ्नेश्वरं मायामुद्गीथरहितानिमान् ॥ ९२ ॥

दक्षादीशानादि देवान् मायाब्जं सुप्रतिष्ठितम् ।
वायुं पद्मं मघोश्शत्रुं शङ्खं वह्निध्रुवानपि ॥ ९३ ॥

हुतान्तमुद्धरेत्कर्णं गोभितं मन्त्रमुत्तमम् ।
जपेल्लक्षमिमं मन्त्रमुपोष्यैकादशऽहनि ॥ ९४ ॥

द्वादश्यामपि कुर्यात्स्त्रीं समुन्नतपयोधराम् ।
आवाह्य तस्यां हुत्वा च पूजयित्वा च योगिनीम् ॥ ९५ ॥

---

1. मनलं T, $P_1$, $P_2$ 2. तथा हि $P_2$. 3. अभय A, $M_2$
4. विश्वेश्वरं A, $M_2$



मध्यरात्रे बलिं दत्त्वा छिन्द्यात्तां प्रतियातनाम् ।
भूतं [1]भवद्भविष्यं च तस्य वक्ष्यति योगिनी ॥ ९६ ॥

आम्नायादिं विधातारं प्रचण्डं वसुमस्तकम् ।
पश्चिमं विक्रमं लक्ष्मीं गोपनं खड्गधारिणम् ॥ ९७ ॥

सविक्रमं घटं चाग्निं [2]पद्मं तद्द्विरदाननम् ।
पङ्कजं वारुगमथो सरसीरुहसम्भव ॥ ९८ ॥

ककुभं वह्निमपरं पीयूषं गोधनं तथा ।
झषं गुहालयं चापि शङ्खं वह्निं च मन्दरम् ॥ ९९ ॥

श्रीधरं पद्मवैराजं गोपनं सूक्ष्मलोचनम् ।
वह्निं प्रचण्डं विघ्नेशं रामो मन्दरपावकौ ॥ १०० ॥

पीतादिदेवौ पुलहं यष्टिं पद्मगुहान्तिकौ ।
एकनेत्रं श्रियं वह्निं वामनं वह्निमाधवौ ॥ १०१ ॥

मृगेशभावसद्बन्धू[3]न्विन्घोपहतिकं तथा ।
स्वच्छन्दं विजयं वह्निं वीरसेनसरोरुहौ ॥ १०२ ॥

आदिदेवं तथा चन्द्र [4]रविदृष्टिशुभप्रदौ ।
वह्निं विनायकं रामं द्विर्दक्षं चतुरानन[5] ॥ १०३ ॥

प्रचण्डः पावको यष्टिः पश्चिमास्यहुताशनौ ।
पीयूषरामसहितौ शुभदं वायुगोपनौ ॥ १०४ ॥

विजयं पद्मबिन्दुं च वैराजमधुसूदनौ[6] ।
गणेशगोपनौ पश्चाद् गदिनं विजयं घटम् ॥ १०५ ॥

---

1. भन्यं $M_1$ 2. घटश्च T, $P_1$, $P_2$ 3. विघ्नेशं भुवनं तथा $M_1$
4. वायुं विष्णुदाष्टिशुभप्रदौ $M_1$ 5. चतुराननम् T, $P_1$, $P_2$ 6. वैराजं मधुसूदनम् T

एकदृष्टिं तथा वह्निं मन्दरं मधुसूदनम् ।
कुञ्जराननविष्णवन्तौ विघ्नेशं बन्धुमस्तकम् ॥ १०६ ॥

ककुभं चन्द्रधवलं गोपनं पश्चिमाननम् ।
चतुर्गतिं ठठोपान्तं इति मन्त्रं प्रकल्पयेत् ॥ १०७ ॥

अधस्तान्नेत्रवृक्षस्य जपन्नेतदतन्द्रितः ।
नष्टं मुष्टिं चिन्तनांच जानात्येतत्प्रसादतः ॥ १०८ ॥

सप्ताक्षरं प्रकल्प्यादौ वरुणं गोपनं दरम् ।
पीयूषमाधवौ[1] दक्षं दृष्टिवह्निदरद्वयम् ॥ १०९ ॥

पश्चिमाग्निमुखानेतान् दहनस्यान्तरोदितान् ।
[2]सूर्यरामौ पीतबन्धू द्विः प्रकल्प्य चतुष्टयम् ॥ ११० ॥

शुक्लं यष्टिविवस्वन्तौ वह्निं स्वाहावसानकम् ।
इत्थम्बुस्तम्भनं मन्त्रं कल्पयेत्कमलासन ॥ १११ ॥

प्रणवादिं वासुदेवं शुभदं [3]पङ्कजद्वयम् ।
मायामभ्यस्य हन्तारं पुलहं शशिनं जयम् ॥ ११२ ॥

यष्टिं भल्लायुधं चापि विघ्नेशं राममस्तकम् ।
नत्यन्तमुदकस्तम्भं मन्त्रं मन्त्रवदीरयेत्[4] ॥ ११३ ॥

अनयोः पूर्वमन्त्रेण स्थितवत् सलिले चरेत् ।
उत्तरेण तु सिन्धूनां वेगस्तम्भं समाचरेत् ॥ ११४ ॥

अग्निस्तम्भनमन्त्रं ते कथयामि यथातथम् ।
सप्ताक्षरं कुम्भवह्निं भुवनं वनमालिनम् ॥ ११५ ॥

1. पीयूषमाचवं $P_1$,$P_2$ 2. रामोऽपि तद्वन्घू $M_2$ 3. पङ्कजं तथा T,$P_1$,$P_2$ 4. मुदीरयेत् $M_1$



गोपनं पुरुषात्मानं त्रिवह्निं शशलाञ्छितम् ।
वैराजबिन्दूं [1]ह्रस्वान्तं चतुर्गतिमथो ठठम् ॥ ११६ ॥

इत्यग्निस्तम्भनं मन्त्रं साधयेदयुतं नरः ।
लोहं तैलं घृतं क्षीरं परशुं सलिलं तथा ॥ ११७ ॥

सप्तान्येतानि संस्पृश्य शीतश्चाग्निर्भविष्यति ।
[2]उदरे पङ्कजस्येव सुखमासीत शुष्मणः ॥ ११८ ॥

सप्ताक्षरं चतुर्थ्यन्तं विष्णुशब्दं चतुर्मुख ।
[3]पवित्रं श्रीहृषीकेषं विघ्नेशं मधुसूदनम् ॥ ११९ ॥

प्रद्युम्नं पापहननं विजयं वायुमाधवौ ।
दृष्टिं मन्दरपाताद्विर्ठठान्तं मन्त्रमीरयेत् ॥ १२० ॥

गवां च महिषाणां च कुर्यादेतेन वश्यताम् ।
आदौ चतुस्त्रिवर्णानि धनप्रदगुहालयौ ॥ १२१ ॥

पवित्रवह्निकमलं सुमुखं वह्निगोपनौ ।
वायुष्ठठान्तमित्येष व्यालादि दमनो मनुः ॥ १२२ ॥

प्रणवे षष्ठशब्दादि सम्बुध्यन्तं पिशाचवत् ।
ऊर्ध्वलोकेशहननं पाषाणेषु ठठो मनुः ॥ १२३ ॥

इमं हि जपतोमन्त्रं रिपुमूर्धनि ताडयेत् ।
पिशाचरूपं प्रत्यक्षं पाषाणैरस्थिभिश्शवैः ॥ १२४ ॥

व्यापिनं गदिनं भद्रहस्तं पुण्यस्सरित्पतिम् ।
वह्निं [4]हुताशं विष्णवन्तं ककुभं कुम्भविक्रमौ ॥ १२५ ॥

1. सुस्वान्तं $M_1$ 2. उत्तरे A,$P_1$,$P_2$ 3. पवित्रार्थं हृषीकेशं $M_2$
4. हुताशनं विष्णुं A,$M_2$

श्रीकुम्भगोपनान् कुम्भं शशाङ्कं ब्रह्मसाधनम् ।
द्विर्मन्दरं मधोश्शत्रुं सुभद्रं बन्धुमस्तकम् ॥ १२६ ॥

पीतं क्रोधनमायामं विजयं गोपनं ध्रुवम् ।
ब्रह्माणं मानुषेशानं वायुं गोपनमस्तकम् ॥ १२७ ॥

बिन्दुं पवित्रमनलं[1] मारुतं प्रेतनायकम् ।
स्वाहावसानं गन्धर्वं मन्त्रमित्थं प्रकल्पयेत् ॥ १२८ ॥

अथर्वणमिमं मन्त्रं पिनाकी शिरसिस्थितम् ।
अधस्तात्पारिजातस्य हेमसिंहासनस्थितम् ॥ १२९ ॥

[2]आयामिनीभिर्मालाभिर्दिव्याभिश्शोभिवक्षसम् ।
चन्दना[3]गरुलिप्ताङ्गं दिव्याभरणभूषितम् ॥ १३० ॥

रूपयौवनयुक्ताभिर्बालव्यजनपाणिभिः ।
नित्यं षोडशवर्षाभिरुत्पलस्निग्धदृष्टिभिः ॥ १३१ ॥

महाकुलप्रसूताभिर्मदविह्वल[4]मूर्तिभिः ।
अद्भुतभ्रूविलासाभिः श्रवणप्रियगीतिभिः ॥ १३२ ॥

ईष[5]द्विस्रंसिवासोभिरंसव्याकुलमौलिभिः ।
स्तनान्दोलितहाराभिः कदलीसुभगोरुभिः ॥ १३३ ॥

कुटिलालकमालाभिः कन्यकाभिर्निषेवितम् ।
कृतावधानं गीतेषु [6]किंनरीणां मुहुर्मुहुः ॥ १३४ ॥

गन्धर्वाधिपतिं ध्यायन् लक्षं मन्त्रमिमं जपेत् ।
अथैनमुपतिष्ठन्ते कुलवत्यो वराः स्त्रियः ॥ १३५ ॥

---

1. मनिलं $M_2$ 2. आयामिनीभिः ज्वालाभिर्मालाभिः $M_2$ 3. दिङ्नाग मदलिप्ताङ्गं रत्नाभरण $T,P_1,P_2$ 4. दृष्टिभिः $M_2$ 5. द्विस्रंसि $B_2,P_1,P_2$
6. किन्नराणां $T,P_1,P_2$



गन्धर्वराजवचनाद्रूपयौवनशालिनम् ।
अथेन्द्रजालमन्त्रस्य स्वरूपं कथयामि ते ॥ १३६ ॥

ब्रह्मकुम्भौ वीरसेनौ क्रोधं [1]सुमुखवारुणौ ।
रामं दक्षं मधोश्शत्रुं चतुर्गतिमृगेश्वरौ ॥ १३७ ॥

मोहयत्यथ रूपाणि द्विः प्रदर्शय मस्तकम् ।
हुङ्कारं चतुरभ्यस्तं ब्रह्मन् किलिकिलिं तथा ॥ १३८ ॥

ऋतद्वयं कुम्भरामौ पवित्रानलवामनान् ।
विजयं लोचने कृत्वा भद्रं[2] वामनमस्तकम् ॥ १३९ ॥

नानारूपाणि माये द्वे द्विर्मन्त्रमिति कल्पयेत् ।
जपेन लक्षसंख्येन माया प्रत्यक्षसङ्गता ॥ १४० ॥

यद्यदिष्टं साधकस्य तत्तत्कुर्वीत तत्क्षणात् ।
ब्रह्माद्या देवताः सर्वा गगनस्थाः प्रदर्शयेत् ॥ १४१ ॥

गगनं मेदिनीं कुर्याद्यामिनीं दिवसं तथा ।
जीवन्तमप्सु निहितं प्राणवन्तं तथा शवम् ॥ १४२ ॥

मरुप्रदेशं वारीणि शुष्यन्तं पयसां निधिम् ।
षड्रसं वैपरीत्येन देशानप्ययथातथम् ॥ १४३ ॥

पाषाणैस्ताडयन् देहं नेत्राद्युत्पाढनं तथा ।
खर्वाटकेशसंरोहं यूनः स्थविरतां तथा ॥ १४४ ॥

पुंसः स्त्रीत्वं तथा स्त्रीणां पुंस्त्वं क्लीबस्य तद्द्वयम् ।
तयोर्वा क्लीबतां चित्रं श्मश्रु स्तनविपर्ययात् ॥ १४५ ॥

---

1. सुभग $M_2$ 2. गर्भद्वितय मस्तकम् $T,P_1,P_2$

गीतं शुकैस्तथा गीतामन्यथा भावभागिनः ।
अगर्भिणीं गर्भिणीं च गर्भिणीं चाप्यगर्भिणीम् ॥ १४६ ॥

पादादि भङ्गसन्धाने नभःकुसुमसम्भवः ।
अचिन्तितानि शैलानां पतनानि यथेप्सितम् ॥ १४७ ॥

मनुष्यादिषु शृङ्गाणि गगनारोहणं तथा ।
अकाल रणसंरम्भान् प्रतिमाकर्षणं तथा ॥ १४८ ॥

कठिनानां द्रवीभावो द्रवतां कठिनात्मता ।
अद्यापि प्रलयावस्थामुन्मज्जननिमज्जने ॥ १४९ ॥

खड्गादिभिरभङ्गं च जङ्गमं स्थावरं तथा ।
अचेतनेषु चैतन्यं चेतनेषु विचेतनाम् ॥ १५० ॥

रूपदर्शनमन्धस्य मूकस्य मधुरां गिरम् ।
श्रवणं बधिरस्यापि पङ्गोर्गमनमद्भुतम् ॥ १५१ ॥

प्रदर्शनं विमानानां भुवि सूर्येन्दुमण्डलम् ।
शिलावर्षं महाघोरं[1] राहुग्रासमपर्वणि ॥ १५२ ॥

एकस्थानप्रविष्टानि भुवनानि चतुर्दश ।
आसनस्थस्य पतनं तुमुलं च परस्परम् ॥ १५३ ॥

प्रतीपगमनं सिन्धोरासनं हव्यवाहने ।
[2]तत्क्षणे विप्ररूढानां वृक्षाणां पल्लवं फलम् ॥ १५४ ॥

सेचनं हव्यवाहेन ज्वलनं पयसा तथा ।
मध्याह्नसमये ज्योत्स्ना दिङ्मोहं वातसंभ्रमम् ॥ १५५ ॥

1. महासारं $M_1$   2. तत्क्षणेऽपि प्ररूढानां $T, P_1, P_2$



चित्तादि धातुसंक्षोभं प्रत्यक्षस्याप्यदर्शनम् ।
शैलशृङ्गाग्रपतनात् [1]गगनस्य प्रदर्शनम् ॥ १५६ ॥

इत्थम्भूतानि चित्राणि कुर्यान्मायानुभावितः ।
इदानीं सप्तयक्षीणां मन्त्राणि कथयामि ते ॥ १५७ ॥

आगच्छ सुन्दरी स्वाहावसानं प्रणवादिमम् ।
इत्येष सुन्दरीमन्त्रो मन्त्रादेः कार्यमाचरेत् ॥ १५८ ॥

प्रणवं प्रथमं सर्वं मनोहरि नमो ठठ ।
इत्थं मनोहारी मन्त्रः प्रियादिष्टं प्रयच्छति ॥ १५९ ॥

उद्गीथं कनकं ब्रह्मन् वक्ष्यते मैथुनप्रिया ।
ठठः कनकवत्सास्यान्मन्त्रः कामुकसिद्धिदः ॥ १६० ॥

मामागच्छ चतुर्वक्त कामेश्वरि ठठान्तिमम् ।
इति कामेश्वरीमन्त्रः सर्वां सिद्धिं प्रयच्छति ॥ १६१ ॥

आरुह्य शयनं नक्तमेकाकी पुष्पगन्धवान् ।
ध्यायेत्कामेश्वरीं यक्षीं सा तस्य भवति प्रिया ॥ १६२ ॥

यदन्यां कामयेन्मन्त्री सा तस्य वशमाचरेत् ।
स्वाहान्तः कथितो मन्त्रो ब्रह्मोत्पाते रतिप्रिये ॥ १६३ ॥

प्रीता रतिप्रिया यक्षी साधकस्य प्रयच्छति ।
दिव्यान्योदन वासांसि कुसुमाद्यनुलेपनम् ॥ १६४ ॥

पादुकाञ्जन खड्गादीन् भूषणानि रसायनम् ।
ओं पद्मिनी ठठो मन्त्रं पद्मिनी यस्य देवता ॥ १६५ ॥

1. गव्य सस्य $T, P_1, P_2$

ओं श्री ह्रीं द्वयमागच्छ द्वयं यक्षि ठठान्तिमम् ।
प्रणवद्वितयं पुष्टिबीजं पश्चान्नतिस्तथा ॥ १६६ ॥

वातादि देवौ दक्षाद्यं बन्धुं विघ्नेशमारुतौ ।
वीरसेनमथो शुक्लं कुम्भं वह्निं [1]सुभद्रकम् ॥ १६७ ॥

हृषीकेशं जयं कुम्भं श्रीध्रुवौ कमलासन ।
पञ्चबिन्दुं ठठान्तं च [2]यामिनीमन्त्रमुद्धरेत् ॥ १६८ ॥

एतज्जपेन पुरुषो विभवं लभते परम् ।
द्वन्द्वानि पुंसां स्त्रीणां च रहितान्यपि योजयेत् ॥ १६९ ॥

यद्यद्वस्तु तथान्येषां स्त्रियो वा पुरुषोऽपिवा ।
ताम्बूलं कुसुमं चापि दत्त्वान्वहमुपासयेत् ॥ १७० ॥

यस्यैते मनवस्सप्त सिद्धाः पुंसश्चतुर्मुख ।
यक्ष्यस्तस्य भविष्यन्ति किं कार्यमिति देवताः ॥ १७१ ॥

मेरुमन्दरविन्ध्यादि शिखरेषु यथातथम् ।
साधकं रमयिष्यन्ति कल्पं भोगैरमानुषैः ॥ १७२ ॥

ब्रह्मन् पिशाचमन्त्राणि शृणुष्व गदतो मम ।
सप्ताक्षराणि सप्तार्के गोपनाः कुम्भविक्रमौ ॥ १७३ ॥

क्रोधप्रचण्डौ वरुणमृगेशौ विपुलस्तथा ।
द्विकुण्ड सप्तमी स्वाहा मनुरेष प्रकीर्तितः ॥ १७४ ॥

बध्नीयादमुना ब्रह्मन्नाविष्टस्य शिखां पुनः ।
सप्ताक्षरं पुरस्कृत्य चतुर्थी विष्णुमस्तकम् ॥ १७५ ॥

---

1. च पश्चिमम् T, $P_1$, $P_2$  2. कामिनी $M_1$



गुरुर्बन्धुः पिता कामो मन्दरं विक्रमं तथा ।
पुलहं विक्रमं पश्चाद्धलायुध गुहालयौ ॥ १७६ ॥

वैराजपापहननौ विजयं बन्धुमस्तकम् ।
हुताशगोपनौ ब्रह्मन् ककुभं ब्रह्मसूदनौ ॥ १७७ ॥

पवित्र शङ्खौ विजयं मायां स्वाहावसानकम् ।
इति मन्त्रं प्रकल्प्याथ बलिमेतेन दापयेत् ॥ १७८ ॥

पूर्वमन्त्रदशार्णानि महेन्द्रो राममस्तकः ।
पवित्रपवनौ पीतगोपनौ पश्चिमाननौ ॥ १७९ ॥

वह्न्यन्त सूदनौ विघ्नगोपनौ पवनं तथा ।
गदी हुतवहः सूर्यो वनमाली पितामहः ॥ १८० ॥

मानं शब्दं शिरः स्वाहा गन्धमन्त्रप्रकल्पितम् ।
द्वादशार्णमुखं [1]पूर्वं वह्निं सुमुखविक्रमौ ॥ १८१ ॥

माहेन्द्रविक्रमौ भानुर्दक्षं विजययोर्द्वयम् ।
द्विर्वारिशब्दं कमलं देवदत्तं विनायकम् ॥ १८२ ॥

स्वाहान्तमीरयेन्मन्त्रं तमाद्वेषे नियोजयेत् ।
स्तम्भे वा पुरुषे वापि पयस्तेनाभिमन्त्रितम् ॥ १८३ ॥

विक्षिपेदथ भूतानि स्तम्भमप्याविशन्ति तम् ।
अष्टाक्षरमुखस्सूर्यो वह्निर्द्विः कमलासन ॥ १८४ ॥

व्यस्तौ पुनस्तयोर्वह्नावुभयत्र त्रिविक्रमौ ।
आदित्यरामं नासिक्यं घटनं पावकप्रिया ॥ १८५ ॥

---

1. पुण्यं $M_1$

येन साग्रहमन्त्रस्य पिशाचादि भयावहम् ।
भूतप्रतिकृतिं कृत्वा शालिपिष्टैर्महोदरीम् ॥ १८६ ॥

भित्वऽतितीक्ष्णेन शस्त्रेण भूतं साक्षाद्धविष्यति ।
भूतग्रहपिशाचादीनपस्मारमथापि वा ॥ १८७ ॥

कूष्माण्डयक्षगन्धर्वब्रह्मरक्षस्सुरासुरान् ।
आवेशयेद्धरेद्वापि मन्त्रैरेतैश्चतुर्मुख ॥ १८८ ॥

यद्यदेभिरशक्यं स्यात्तत्तत्कुर्याद्विचक्षणः ।
[1]सौदर्शनस्य मन्त्रेण नारसिंहेन वा पुनः ॥ १८९ ॥

त्रैलोक्यमोहनेनापि साक्षादष्टाक्षरेण वा ।
इति मन्त्रप्रभावस्ते कथितः पद्मसम्भव ॥ १९० ॥

चर्या च विधिवत्प्रोक्ता धर्मकामार्थमुक्तिदा ।
[2]इदं हि पावनं शास्त्रमधीते यः समाहितः ॥ १९१ ॥

त्रिष्वप्यमीषु लोकेषु ज्ञेयमन्यन्न विद्यते ।

पद्म :—

इत्युक्त्वा ब्रह्मणे शास्त्रं भगवान् भूतभावनः ॥ १९२ ॥

वासुदेवः परं ब्रह्म तत्रैवान्तरधीयत ।
अथ विस्मयमानात्मा ब्रह्मलोकपितामहः ॥ १९३ ॥

आजगाम स्वकं लोकं स्तूयमानो महर्षिभिः ।
कपिलाय ददौ ब्रह्मा शास्त्रमेतन्महर्षये ॥ १९४ ॥

स चापि भगवान् मह्यं, मया ते कथितं पुनः ।
तत् पातालमितो हित्वा जम्बूद्वीपमितो व्रज ॥ १९५ ॥

1. सुदर्शनस्य T,$P_2$ 2. इदमेकायनं $M_2$



हिमवत्पर्वते रम्ये समाधाय मनश्शुभम् ।
आराधय हृषीकेशं [1]विधानैः पञ्चकालिकैः ॥ १९६ ॥

संवर्त :—

इति ब्रुवाणे पद्मेतु लब्ध्वा हृष्टेन चेतसा ।
अयोग्याज्ञानतिमिरं शास्त्राञ्जनशलाकया ॥ १९७ ॥

निवृत्य पातालतलात्कृत्वा पद्मं प्रदक्षिणम् ।
अमुष्मिन् शैलशिखरे देवदारुभिरावृते ॥ १९८ ॥

महाभागवतैः पुण्यैः पाञ्चरात्रविशारदैः ।
तपस्स्वाध्यायनिरतैः सेविते परमर्षिभिः ॥ १९९ ॥

हृदयेभ्यः समाहृत्य हृदयं संयमादिभिः ।
आराधयामि विश्वेशं वासुदेवं जगद्गुरुम् ॥ २०० ॥

अन्यमानीय तद्वाचा तं ध्यायन् मनसा पुनः ।
कालेनाराधनं कुर्वन् भजामि परमेश्वरम् ॥ २०१ ॥

त्वमप्याराधय क्षिप्रं चातुर्व्यूहमधोऽक्षजम् ।
मया ते कथितं शास्त्रं सावधानेन किं श्रुतम् ॥ २०२ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ २०३ ॥

तन्त्राणां चैव रत्नानि पञ्चाहुः परमर्षयः ।
पाद्मं सनत्कुमारं च तथा परमसंहिता ॥ २०४ ॥

पद्मोद्भवं च माहेन्द्रं कण्वतन्त्रामृतानि च ।
तदा प्रभृति ये शिष्यास्ततोऽहं हिमवत्तटे ॥ २०५ ॥

1. विधिभिः $M_2$

आराध्याहं चतुर्बाहुं नियतः पुरुषोत्तमम् ।
भवन्तोऽपि यतात्मानः भक्तिमन्तो जनार्दने ॥ २०६ ॥

केन वा कथितं शास्त्रं ऋषयः कल्मषापहम् ।
इमां महोपनिषदं श्रद्दधानः शृणोति यः ॥ २०७ ॥

स याति शाश्वतं स्थानं दुष्प्रापमकृतात्मभिः ।
येन मां प्रथयामास यथा पद्मगुरोर्गुरुः ॥ २०८ ॥

तेनेदं क्रियते पुण्यामतनोत्पद्मसंहिताम् ।
ऋषयस्तं भवन्तोऽपि भजन्तु पुरुषोत्तमम् ॥ २०९ ॥

प्रदास्यति स युष्मभ्यमपवर्गं तपोधनाः ।
इत्यध्यायास्त्रयस्त्रिंशच्चर्यापादः प्रकीर्तितः ॥ २१० ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पाद्मे तन्त्रे
चर्यापादे समाराधनाङ्ग मन्त्रोद्धारो
नाम त्रयस्त्रिंशोऽध्यायः ॥

चर्यापादः समाप्तः



## अग्निकार्यविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | १४ | मार्कण्डेय सं | अ | १६ |
| अनिरुद्ध सं | अ | १८ | विश्व सं | अ | ३ |
| कपिञ्जल सं | अ | १६ | विष्णुतत्त्व सं | अ | २७ |
| जयाख्या सं | प | १५ | विष्णुतन्त्रं | अ | २० |
| परम सं | अ | २० | विष्णु सं | अ | ८ |
| पाद्म - चर्या सं | अ | ४ | सनन्त सं | अ | ४ |
| पारमेश्वर सं | अ | ७ | हयशीर्ष सं सौरकाण्ड | अ | ३० |
| पुरुषोत्तम सं | अ | ३१ | | | |

## अङ्कुरार्पणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | १३ | वसिष्ठ सं | अ | १८ |
| कपिञ्जल सं | अ | २१ | विश्व सं | अ | १७ |
| पुरुषोत्तम सं | अ | १३ | विष्णुतत्त्व सं | अ | १५ |
| मार्कण्डेय सं | अ | १३ | विष्णुतन्त्रम् | अ | ११ |

## जीर्णोद्धारविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | १३ | विष्णुतन्त्रम् | अ | ४९ |
| कपिञ्जल सं | अ | २६ | विष्णु सं | अ | २४ |
| नारदीय सं | अ | १७ | विष्वक्सेन सं | अ | ३६ |
| पाद्म (चर्या) सं | अ | १७ | हयशीर्ष सं सङ्कर्षणकाण्ड | अ | ३५ |
| विश्वामित्र सं | अ | २३ | लिङ्गकाण्ड | अ | १७ |

## ध्वजारोहणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | २० | पारमेश्वर सं | अ | १६ |
| ईश्वर सं | अ | १० | पुरुषोत्तम सं | अ | २३ |
| कपिञ्जल सं | अ | २२ | विष्णुतत्व सं | अ | १७ |
| नारदीय सं | अ | १८ | हयशीर्ष सं लिङ्गकाण्ड | अ | २० |
| परमागमचूडामणि | अ | ३६ | सौरकाण्ड | अ | ४१ |
| पाद्म (चर्यापाद) | अ | १० | | | |

## पवित्रारोपणविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | ९ | पुरुषोत्तम सं | अ | २६ |
| अनिरुद्ध सं | अ | २४ | पौष्कर सं | अ | ३० |
| ईश्वर सं | अ | १४ | भार्गव तन्त्र | अ | २१ |
| कपिञ्जल सं | अ | ३२ | मार्कण्डेय सं | अ | २३ |
| जयाख्या सं | प | २१ | विश्व सं | अ | ७ |
| नारदीय सं | अ | २३ | विश्वामित्र सं | अ | २४ |
| परमागमचूडामणि | अ | ३४ | सात्वत सं | अ | १४ |
| पाद्म (चर्यापाद) | अ | १४ | हयशीर्ष सं सौरकाण्ड | अ | ४२ |
| पारमेश्वर सं | अ | १२ | | | |

## प्रायच्छित्तविधिः

| | | | | | |
|---|---|---|---|---|---|
| अनिरुद्ध सं | अ | ३० | मार्कण्डेय सं | अ | २६, ३२ |
| ईश्वर सं | अ | १९ | वसिष्ट सं | अ | १३ |
| कपिञ्जल सं | अ | ३१ | विष्णुरहस्य सं | अ | ३५ |
| जयाख्या सं | प | २५ | विष्णु सं | अ | २५ |
| नारदीय सं | अ | २५ | विष्वक्सेन सं | अ | ३९ |
| पाद्म (चर्या) | अ | १९ | शेष सं | अ | ३१ |
| पारमेश्वर सं | अ | १९ | श्रीप्रश्न सं | अ | ५१ |
| पुरुषोत्तम सं | अ | ३० | सनत्कुमार-ऋषिरात्रं | अ | ८ |
| भार्गवतन्त्र | अ | २२ | | | |



## महोत्सवविधिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य सं | अ | ६ | भार्गव तन्त्र | अ | ११ |
| अनिरुद्ध सं | अ | २१, २३ | मार्कण्डेय सं | अ | २१, २२ |
| ईश्वर सं | अ | १०, ११ | वसिष्ट सं | अ | १२ |
| कपिञ्जल सं | अ | २३ | विश्व सं | अ | ५ |
| ज्ञानामृतसारम् प्रथम रात्रम् | अ | १०, ११ | विश्वामित्र सं | अ | १७, १८ |
| नारदीय सं | अ | १९ | विष्णु सं | अ | २० |
| परमागम चूडामणि | अ | ३५ | विष्वक्सेन सं | अ | २७ |
| पाद्म (चर्यापाद) | अ | ११ | श्रीप्रश्न सं | अ | ३१ |
| पारमेश्वर सं | अ | १७ | सनत् कुमार (शिवरात्रम्) | अ | ९ |
| पुरुषोत्तम सं | अ | २४ | हयशीर्ष सं [सङ्कर्षणकाण्डम्] | अ | ३६ |

## पञ्चप्रकारार्चना

| | | | | | |
|---|---|---|---|---|---|
| ज्ञानामृतसार सं चतुर्थो रात्रः | अ | १० | पराशर सं | अ | ४ |
| नारदीय सं (अभिगमन उपादान योग, स्वाध्याय and इज्या) | अ | ३० | पाद्म सं (चर्या) | अ | १३ |
| | | | भार्गव तन्त्रं | अ | २५ |
| | | | लक्ष्मी तन्त्रं | अ | २८ |
| | | | श्रीप्रश्न सं | अ | १७ |

## अध्वषट्कनिरुपणम्

| | | | | | |
|---|---|---|---|---|---|
| पाद्म [चर्या] | अ | ७ | श्रीप्रश्न सं | अ | २४, २६ |
| लक्ष्मीतन्त्रं | अ | २२ | | | |

## पाद्मे चर्यापादे षडध्वा निरुपणम्

श्रीप्रश्ने च २४ तमेऽध्याये, २६ तमेऽध्यये च निर्दिष्टाः षड् अध्वविशेषाः

तत्वाध्वा—पञ्चविंशति तत्वानि ।

भुवनाध्वा—(१) सत्यलोकः (२) तपोलोकः (३) जनोलोकः (४) महोलोकः (५) स्वर्गलोकः (६) भुवर्लोकः (७) अन्तरिक्षलोकः ।

पादाध्वा—(१) अतलं (२) वितलं (३) नितलं (४) रसातलं (५) सुतलं (६) तलातलं (७) पातालम् ।

कालाध्वा—चतुर्दश मनवः, कृतादि चतुर्युगानि, संवत्सर, परिवत्सर, इरावत्सर, इद्वत्सराः, दक्षिणायनोत्तरायणे, वसन्तादि षड् ऋतवः, मार्गशीर्षादि षण्मासाः, शुक्लकृष्णपक्षौ, रजनी, दिवसः, सन्ध्या, यामः, मुहूर्तः, नाडी, क्षणः, काष्टा, लवः, त्रुटिः ।

वर्णाध्वा—(१) ब्राह्मणः (२) क्षत्रियः, (३) वैश्यः (४) शूद्रः ।

मन्त्राध्वा—(१) उद्गीथः (२) अष्टार्णः (३) द्वादशमनुः (४) षडर्णः ।

पाद्मे अ. ७. चक्राब्जमण्डले षडध्वार्चनम् । कर्णिकायां मन्त्राध्वानमर्चयेत् । तत्वाध्वानं केसरेषु । वर्णाध्वानं दलेषु च । पदाध्वानं नाभिभागे । कालाध्वानं अरेषु च । भुवनाध्वानं नेमिभागे अर्चयेत् ।

### भूतशुद्धिः

| | | | | | |
|---|---|---|---|---|---|
| अगस्त्य संहिता | अ | ११ | शेष संहिता | अ | १२ |
| पाद्म (चर्यापादः) | अ | ३ | विहगेन्द्र सं | अ | १२ |
| बृहत्ब्रह्म ४ पाद | अ | १ | हयशीर्ष (आ. खा) | अ | ६ |
| लक्ष्मीतन्त्र | अ | ३५, ५४ | | | |



### भूतशुद्धिः [ पाद्मे चर्यापादे तृतीयोध्यायः । ]

| सं. | पञ्च भूतानि | | पञ्च कर्मेन्द्रियाणि | | पञ्च ज्ञानेन्द्रियाणि | | पञ्च तन्मात्राणि | | पञ्चमन आदयः | | पञ्चवर्णाः | पञ्चमण्डलं | पञ्चगुणाः | पञ्च स्थानानि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 1 | पृथिवी | क | उपस्थः | च | घ्राणः | ट | गन्धः | त | मनः | प | पीतः | चतुरश्रम् | शब्द, स्पर्श रूप रसः गन्धः | पादादि जान्वन्तम् |
| 2 | आपः | ख | पायुः | छ | जिह्वा | ठ | रसः | थ | अहंकारः | फ | श्वेतः | अर्धचन्द्राकारम् | शब्द, स्पर्श रूप रसः | जान्वादि गुह्यान्तम् |
| 3 | तेजः | ग | पादः | ज | अक्षिः | ड | रूपम् | द | बुद्धिः | ब | रक्तः | ॠयश्रम् | शब्द, स्पर्श रूपाणि | गुह्यादि नाभ्यन्तम् |
| 4 | वायुः | घ | पाणिः | झ | त्वक् | ढ | स्पर्शः | ध | प्रकृतिः | भ | धूम्रः | वृत्तम् | शब्दस्पर्शौ | नाभ्यादि घ्राणान्तम् |
| 5 | आकाशः | ङ | वाक् | ञ | श्रोत्रम् | ण | शब्दः | न | जीवः | म | नीलोत्पलदल -वर्णः | नीरुपमम् | शब्दः | नासादि मूर्धान्तम् |

मानस यागः, बाह्य यागः

| | | | |
|---|---|---|---|
| अगस्त्य सं | अ २६ | मार्कण्डेय सं | अ ३० |
| अहिर्बुध्न्य सं | अ २८ | लक्ष्मीतन्त्रं | अ ३५, ३६ |
| ईश्वर सं | अ २ | विश्वामित्र सं | अ १० |
| जयाख्या सं | प १२, १३ | विष्णु सं | अ ६ |
| पाद्म (चर्यापादः) | अ ३ | सात्वत सं | अ २ |
| पारमेश्वर सं | अ ५, ६ | | |

# मानसयागे योगपीठम्

1. आधारशक्तिः
2. कूर्मकालाग्निः
3. अनन्तः
4. धरणिः
5. क्षीरसमुद्रम्
6. पद्मम्
7. योगासनम्
8. कालचक्रम्
9. अव्यक्तपद्मम्
10. जीवः

आग्नेयादिदिक्षु स्थानदेवताः (7) (1) धर्मः, (2) ज्ञानम्, (3) वैराग्यं (4) ऐश्वर्यम्। प्रागादिदिक्षु—(5) अधर्मः, (6) अज्ञानम्, (7) अवैराग्यम्, (8) अनैश्वर्यम्, (9) ऋग्वेदः, (10) यजुर्वेदः, (11) सामवेदः, (12) अथर्वणवेदः, (13) कृतयुगम्, (14) त्रेतायुगम्, (15) द्वापरयुगम्, (16) कलियुगम्।



# बाह्ययाग योगपीठम् (पाद्मे चर्यापादे अ 3. श्लो. 106-142)

बिम्बेन सहितं पीठं योगपीठमुदाहृतम्।
अनुसन्धानयोगे तु योगपीठं प्रकल्पयेत्॥

पीठोत्तुङ्गे 12 अंशाः :—

पश्चिमे पीठपार्श्वदेवताः —

1. दुर्गा, 2. विघ्नेशः, 3. नारदः, 4. आत्मनः गुरुः।

उत्तरे पीठपार्श्वदेवताः—

1. सनत्कुमारः, 2. सनकः, 3. सनन्दनः।

दक्षिणे—

1. ब्रह्मा, 2. विष्णुः, 3. ईश्वरः।

योगासन कमलदलेषु देवताः —

1. श्रीवत्सः, 2. वनमाला, 3. माया, 4. वैष्णवी, 5. विमला, 6. शक्तिः, 7. उत्कर्षिणी, 8. प्रज्ञा, 9. सत्या, 10. ईशाना, 11. अनुकम्पा, 12. पितामहि।

| प्रथमावरणे देवताः नाम | दिक् | द्वितीयावरणे देवता नाम | तृतीयावरणे देवतानां नाम |
|---|---|---|---|
| 1. व्याप्तिः | .... पूर्वा | 1. शंखधरः | 1. इन्द्रः |
| 2. कान्तिः | .... आग्नेयी | 2. चक्रधरः | 2. अग्निः |
| 3. तृप्तिः | .... दक्षिणा | 3. मुसलधरः | 3. यमः |
| 4. श्रद्धा | .... नैऋति | 4 खड्गधरः | 4. निऋतिः |
| 5. विद्या | .... पश्चिमा | 5. गदाधरः | 5. वरुणः |
| 6. जया | .... वायव्या | 6. शार्ङ्गधरः | 6. वायुः |
| 7. क्षमा | .... उत्तरा | 7. पद्मधरः | 7. सोमः |
| 8. शान्ति | .... ईशाना | 8. वज्रधरः | 8. ईशानः |

## पाद्मसंहितायां तदितरासु च संहितासु निर्दिष्टाः दीक्षाविधिः

| संहिता | अध्यायः | संहिता | अध्यायः |
|---|---|---|---|
| 1. अगस्त्य | 17 | 12. पुरुषोत्तम | 22 |
| 2. अनिरुद्ध | 4 | 13. लक्ष्मीतन्त्रं | 41 |
| 3. अहिर्बुध्न्य | 20 | 14. वसिष्ठ | 9 |
| 4. ईश्वर | 21 | 15. विश्वामित्र | 9 |
| 5. जयाख्या | (पटल) 16 | 16. विष्णुतन्त्रं | 7 |
| 6. नारदीय | अ 7, 9 | 17. विष्णु संहिता | 10 |
| 7. पञ्चप्रश्न | (पटल) 7 | 18. शाण्डिल्य संहिता | 8, 10 |
| 8. परम | अ 8 | 19. श्रीप्रश्न | 16 |
| 9. परमागम चूडामणिः | अ. 28, 29 | 20. सनन्द | (पटल) 5 |
| 10. पराशर | अ 6 | 21. सात्वत | 19 |
| 11. पाद्म (चर्यापादः) | अ 2 | 22. कपिञ्जल | अ 2 |
| | | 23. पौष्कर संहिता | अ 2 |

N. B. — The स्वार्थ and परार्थदीक्षा are mentioned in almost all the Samhitas, but in Iswara Samhita we find names like वैभवदीक्षा, मण्डलदीक्षा, एकानेकदीक्षा, अपरदीक्षा as well as नित्यदीक्षा, व्यूहदीक्षा, ब्रह्मदीक्षा, and परमन्त्रदीक्षा are mentioned. [449—464]

### दीक्षामण्डपे द्वारध्वजदेवता [ पाद्मसंहिता–क्रियापादः– अ. 27 चर्यापादः– अ. 2 ]

| क्र.सं. | दिक् | वेदः | शाखादेवताः | तोरणनाम | ध्वजवर्णः | द्वारपालाः | कुम्भदेवताः | वृक्षविशेषः | कुम्भे प्रेक्षणीय-रत्नानि |
|---|---|---|---|---|---|---|---|---|---|
| 1 | पूर्वा | ऋग्वेदः | इन्द्रः | सुशोभनं | रक्तः | कुमुदः कुमुदाक्षश्च | पूर्णः पुष्करः | अश्वत्थः | पद्मरागं प्रवालं |
| 2 | दक्षिणा | यजुर्वेदः | यमः | सुभद्रम् | पीतः | पुण्डरीकाक्षः वामनः | आनन्दः नन्दनः | उदुम्बरः | वज्रं वैडूर्यं |
| 3 | पश्चिमा | सामवेदः | सोमः वरुणश्च | सुबद्धं | नीलः | शङ्खुकर्णः सर्वनेत्रः | वीरसेनः सुषेणः | न्यग्रोधः | पुष्यरागं नीलं मरकत |
| 4 | उत्तरा | अथर्ववेदः | सोमः | सुहोत्रं | शुक्लः | सुमुखः सुप्रतिष्टः | सम्भवः प्रभवः | प्लक्षः | मुक्ता स्फटिकं |



चक्राब्जमण्डलम्

| | | | | | |
|---|---|---|---|---|---|
| 1. | अनिरुद्ध सं | अ 4, 7 | 9. | पौष्कर सं | अ 8 |
| 2. | कपिञ्जल सं | अ 2 | 10. | लक्ष्मीतन्त्र | अ 51 |
| 3. | जयाख्य सं | प 16 | 11. | विष्णु संहिता | अ 10, 11 |
| 4. | नारदीय | अ 7, 8, 9, 10 | 12. | विहगेन्द्र सं | अ 9 |
| 5. | परम सं | अ 8, 7 | 13. | शेष संहिता | अ 9 |
| 6. | पराशर सं | अ 6 | 14. | सात्वत संहिता | अ 19 |
| 7. | पाद्म (चर्यापादः) | अ 2 | 15. | श्रीप्रश्न सं | अ 19 |
| 8. | पुरुषोत्तम सं | अ 22 | | | |



# Chakrabja Mandala अध्यायः सप्तमः

Directions are given in the Samhitas as for drawing this Mandala on a dais. For drawing, 2 directions are given one from East to West and the other from North to South. 17 lines are drawn in White Colour from East to West leaving a space of 3″ between the lines. The Same number of lines are made from North to South with the same interval of 3″—thus making together 256 Squares, each square being 3″. On each side there will be 16 Squares. The 36 Squares formed in the central portion are wiped off and in that space 5 Concentric circles are made. The inner most circle is called karṇika. The No. 2 circle is sub-divided into (1) Kesaravali (2) Dalabhūmi and (3) Nābhi Mandala. The 3rd and the 4th circles are called arakshetras and the 5th is named as Bahirnemi bhūmi. The single line of Squares 28 in number, next to the circle, is called Bahirāsana. 2 rows of squares lying outside the Square forming Bahirāsana are called Vīthikā. The 4 Squares in the centre of the four sides are rubbed off and marked as door ways or Dwāra Sthāna. And the 4 Squares in all the 4 Corners are marked as Sankha Sthānas. Close to the Dwāra Sthānās on each side of it, a space, consisting of 3 Squares is marked as Ardha Śōbhās. Next to that, is the Śōbhā consisting of 4 Squares three on the inner row and one on the outer row. Between the Sōbhās and the Śamkhās, 3 squares go to make the upaśōbhā. Thus there will be altogether 8 Śōbhās 8 ardha-Śōbhās and 8 upaśōbhās. The Space between the Concentric Circles round the Central Space and the Central one, is worked up into a lotus with 8 petals. In the Central Circle, 8 or 12 white dots are made to represent the Seeds. Where the dots are eight in number, the Presiding deity is Nārāyana, and if the dots are 12, the deity is Vāsudēva. The whole inner circle is filled with green powder, and the Seeds are made on it with white powder. The boundary line is to be

drawn with light red or black powder. The space just outside, limited by the circumference called Kesarāvali is intended to draw the 96 Kesarās all around. Each Kesara should be drawn in 3 colours white, green and red tips. The boundary line is drawn in dark-green. The Space Called Dala bhūmi is intended to contain the 12 petals or the 8 petals, the tips of the petals reaching the end of Arakshetra (the 4th Main circle and the 5th in the order). The inner most row of petals 12 or 8 is to reach the limit of the circumference of the 3rd Main circle. Then alternating with these, 12 or 8 petals are drawn again, reaching the limit of the 4th circle. The lower part of the petals are made in white, ends in red and the line in white.

The Nabhi-rekha or the boundary line of the 2nd main circle is to be black, green and red lines between Dalam and upadalams. The tipes of the upadalams are to be black and the line in red colour. The line bounding the Space called Nemibhū, is marked off with black powder and the Space is to be covered with white powder. The 28 squares forming the Bahirasana, are filled with yellow powder. The Space called Vīthikā is sprinkled with white powder on which green creepers with leaves and flowers are drawn in different colours.

The East Dwara or gateway is filed with white powder, South with red colour West with yellow powder and North with black powder. All the Ardha Śōbhās Which are 8 in number are filled with green or black powder. The Śōbhās which are also 8 in number are to be filled with red powder and the upasobhas are filled with yellow powder. In the four corners where there are 4 squares each, both black and yellow colours are used alternately. And on the squares on



the top in the inner side is coloured in black, and white Sankhas are drawn At the Eastern entrance a Garuda picture is drawn with black nose and golden coloured body. At the South entrance, a cakra with Dwādaśāra or 12 spokes is made in red colour. At the Western entrance, the picture of a Gadhā is drawn with any colour available. And at the entrance on the North, a white Samkha in drawn. All these entrance pictures should be drawn on pials a little away from the cakrābja-Mandala.

The Aniruddha Samhita gives a clear idea about the colouring of the Various parts.

कर्णिका पीतवर्णं अन्तरालं सितप्रभम् ।
केसरं पीतवर्णं पद्मं वै पाण्डरारुणम् ।
नाभिनेमिद्वयं पीतं अरक्षेत्रं तु रक्तकम् ।
पद्मपत्रसमाकारं कृष्णवर्णेन शोभितम् ।
केसरं क्षेत्रमखिलं पाण्डुरक्तेन पूरितम् ।
पाण्डुरक्तेन तत्पत्रं बहिः कोणं तु पीततम् ।
बहिश्च मातुलुङ्गाभं पीतकुङ्कुमसन्निभम् ।
तद्बहिः पत्रसंघं तु पीतरक्तेन मिश्रितम् ।
पत्रान्तरालं श्यामं च ।

[अनिरुद्ध संहिता पञ्चमोऽध्यायः]

## श्रीपाञ्चसंहितायां तदितरासु, ईश्वर-परमेश्वर-श्रीप्रश्न-विश्वामित्राख्य संहितासु निर्दिष्टाः रागविशेषाः

1. कामदः
2. केदारः
3. कौलवः
4. कौलेयकः (कौलीयः)
5. कौशिकः
6. गान्धारः (कान्तारः)
7. गौडः
8. गौलिः
9. घण्टा
10. चोलपाणिः
11. तकेशि
12. दक्षरागः (तर्करागः)
13. देशाक्षि
14. दैशिकी
15. नट्टभाषिकम्
16. नाटः
17. पञ्चमः (पश्चिमः)
18. पूर्णचन्द्रः
19. भूपालम्
20. मङ्गलम्
21. मध्यमावती
22. मालती
23. मालवी
24. मेघरागः
25. मोहनम्
26. वरालिका
27. शालपाणी (चोलपाणि)
28. श्रीकामदः
29. श्रीरागः
30. हंसध्वनिः

## पूर्वोक्त संहितासु निर्दिष्टाः तालविशेषाः

1. अनन्ततालः
2. अट्टतालः
3. कर्करीतालः
4. गरुडतालः
5. जयतालः
6. झंपतालः
7. जिङ्गिणीतालः
8. त्रिपुटतालः
9. ढक्करीतालः
10. ध्रुवतालः
11. बलितालः
12. ब्रह्मतालः



13. भृङ्गिणीतालः
14. भद्रकतालः
15. भद्रतालः
16. मङ्गलतालः
17. मत्ततालः
18. मध्यमतालः
19. मल्लतालः
20. लयतालः
21. लाङ्गलीतालः
22. शृङ्गिणीतालः
23. समतालः

## श्रीपाञ्च संहितायां तदितरसंहितासु च निर्दिष्टाः वाद्यविशेषाः ।

[पाञ्च-विश्वामित्र-नारद-विष्णु-विष्णुतन्त्र वसिष्ठ-हयशीर्ष-मार्कण्डेय-विष्वक्सेन-ईश्वर पारमेश्वर-अनिरुद्धसंहिताः]

1. आनकम
2. कांस्यम्
3. काहलम्
4. घण्टा
5. चिह्नम्
6. झल्लरी
7. झल्ली
8. ढक्का
9. ढक्करी
10. डमरुकम्
11. डुड्डुकम्
12. तिमिलम्
13. तूर्यम्
14. दुन्दुभि
15. नाग
16. निस्साणम्
17. पटहम्
18. पणवम्
19. बृहद्भेरी
20. भेरी
21. मड्डुकम्
22. मर्दलम्
23. मल्लम
24. मृदङ्गम्
25. मुरजम्
26. वरूथम्
27. वीणा
28. वेणु, वंशम्
29. शङ्खम्
30. शृङ्गम्
31. हस्तघण्टा
32. ह्रस्वमर्दलम्
33. ह्रस्वपटहम्

## श्रीपाद्मसंहितायां (अ. 5) निर्दिष्टाः नृत्तविशेषाः

1. अलङ्कारम्
2. अवकुञ्चितम्
3. अवभासम्
4. अश्मरी
5. अपवेष्टितम्
6. आवेष्टितम्
7. आलीढम्
8. आसुरी
9. उल्लङ्घि
10. कर्करी
11. कर्तरी
12. कटिबन्धनम्
13. करणम्
14. कान्तारकुट्टिमम्
15. कुञ्चितम्
16. कुञ्चितार्धेन्दु
17. कुट्टिमम्
18. खेटकम्
19. चारी
20. तार्क्ष्यपक्षम्
21. देशिमण्डलम्
22. निकुट्टिमम्
23. निर्धूतम्
24. पताका
25. परीवृत्तम्
26. पारिभद्रम्
27. पृष्ठकुट्टिमम्
28. प्रकुट्टिमम्
29. प्रचारी
30. भद्रमाली
31. मङ्गलम्
32. मार्गचारी
33. वामजानुः
34. वासवेश्वरम्
35. विकलासः
36. विगलितम्
37. विलासम्
38. विषमपदम्
39. विषमसूची
40. विष्णुकान्तम्
41. समपदम्
42. सर्वतोभद्रम्
43. सर्वमङ्गलम्
44. सूची
45. सौम्यम्
46. संवर्तम्
47. स्वस्तिकम्



## श्री पाद्मसंहितायां तदितर संहितासु च निर्दिष्टानां भगवदाराधनादिकर्मसु उपयुक्तानां विविध-मुद्राणां संख्यः – अध्यायक्रमश्च

| | [अ] | [मद्रा संख्या] |
|---|---|---|
| 1. अगस्त्य सं | 18 | 17 |
| 2. ईश्वर सं | 24 | 35 |
| 3. कपिञ्जल सं | 27 | 27 |
| 4. जयाख्या सं | 8 | 53 |
| 5. नारदीयं सं | 6 | 50 |
| 6. परम सं | 14 | 19 |
| 7. पाद्म (चर्या) सं | 22 | 53 |
| 8. मार्कण्डेय सं | 31 | 36 |
| 9. लक्ष्मी तन्त्र सं | 34 | 41 |
| 10. विश्वामित्र सं | 13 | 67 |
| 11. विष्णु सं | 7 | 35 |
| 12. विष्णुतिलक सं | 4 | 12 |
| 13. विष्वक्सेन सं | 19 | 4 |
| 14. शेष संहिता | 14 | 5 |
| 15. श्रीप्रश्न संहिता | 54 | 65 |
| 16. सनत्कुमार संहिता ऋषि रात्र | 2 | 81 |
| 17. सात्वत संहिता | 22 | 4 |

## पाद्मसंहितायां निर्दिष्टानां मुद्राणां नामानि

1. हृदय मुद्रा
2. शीर्ष मुद्रा
3. शिखा मुद्रा
4. वर्म मुद्रा
5. अस्त्र मुद्रा
6. नेत्र मुद्रा
7. अग्निप्राकार मुद्रा
8. योग मुद्रा
9. योगसम्पुट मुद्रा
10. कुम्भ मुद्रा
11. संहार मुद्रा
12. सृष्टि मुद्रा
13. तत्व मुद्रा
14. ज्ञान मुद्रा
15. न्यास मुद्रा
16. जप मुद्रा
17. ब्रह्म मुद्रा
18. विष्णु मुद्रा
19. रुद्र मुद्रा
20. अभिवादन मुद्रा

21. विघ्नराज मुद्रा
22. भागवती मुद्रा
23. वराह मुद्रा
24. दहन मुद्रा
25. आप्यायन मुद्रा
26. सुरभि मुद्रा
27. आवाहन मुद्रा
28. प्रणाम मुद्रा
29. पद्म मुद्रा, कमल मुद्रा
30. शङ्ख मुद्रा
31. चक्र मुद्रा
32. गदा मुद्रा
33. चाप मुद्रा
34. मुसल मुद्रा
35. खड्ग मुद्रा
36. वनमाला मुद्रा
37. अञ्जलि मुद्रा
38. गरुड मुद्रा
39. विष्वक्सेन मुद्रा
40. अनन्त मुद्रा
41. मुष्टि मुद्रा
42. बलि मुद्रा
43. वस्त्र मुद्रा
44. ज्ञान मुद्रा
45. गन्ध मुद्रा
46. पुष्प मुद्रा
47. यज्ञोपवीत मुद्रा
48. आकल्ला मुद्रा
49. धूप मुद्रा
50. दीप मुद्रा
51. प्रतिमा मुद्रा
52. स्वागत मुद्रा
53. प्रर्थना मुद्रा
54. दान मुद्रा
55. ग्रास मुद्रा
56. होम मुद्रा



# मुद्रा



1. हृदय मुद्रा



2. शीर्ष मुद्रा



3. शिखा मुद्रा



4. कवच मुद्रा



5. अस्त्र मुद्रा



6. नेत्र मुद्रा



7. अग्निप्राकार मुद्रा



8. योग मुद्रा





9. योगसम्पुट मुद्रा



10. कुम्भ मुद्रा



11. संहार मुद्रा



12. सृष्टि मुद्रा



13. तत्व मुद्रा
14. ज्ञान मुद्रा



15. न्यास मुद्रा



16 ब्रह्म मुद्रा



17. विष्णु मुद्रा





18. रुद्र मुद्रा



19. भागवत मुद्रा



20. बराह मुद्रा



21. दाहन मुद्रा



22. आप्यायन:मुद्रा



23. सुरभि मुद्रा



24. आवाहन मुद्रा



25. प्रणाम मुद्रा





26. पद्म मुद्रा

27. कमल मुद्रा



28. शङ्ख मुद्रा



29. चक्र मुद्रा



30. गदा मुद्रा



31. चाप मुद्रा



32. मुसल मुद्रा



33. खड्ग मुद्रा



34. वनमाला मुद्रा





33. अञ्जलि मुद्रा



34. गरुड मुद्रा



35. विष्वक्सेन मुद्रा



36. अनन्त मुद्रा



37. बलि मुद्रा
38. मुष्टि मुद्रा



39. स्नान मुद्रा



40. गन्ध मुद्रा



41. पुष्प मुद्रा





42. यज्ञोपवीत मुद्रा



43. आकल्प मुद्रा



44. धूप मुद्रा



45. दीप मुद्रा



46. प्रतिमा मुद्रा



47. स्वागत मुद्रा
48. प्रर्थना मुद्रा



49. यान मुद्रा



50. ग्रास मुद्रा





51. होम मुद्रा



52. वासुदेव मुद्रा



53. सङ्कर्षण मुद्रा



54. प्रद्युम्न मुद्रा



55. अनिरुद्ध मुद्रा



56. सत्य मुद्रा



57. लक्ष्मी मुद्रा



58. कीर्ति मुद्रा





59. माया मुद्रा



60. जय विजय मुद्रा



61. चण्ड प्रचण्ड मुद्रा



62. गङ्गा यमुना मुद्रा



63. शङ्खनिधि पद्मनिधि मुद्रा



64. किरीट मुद्रा



65. श्रीवत्स मुद्रा



66. कौस्तुभ मुद्रा





67. पाश मुद्रा



68. अङ्कुश मुद्रा



69. वरदाभय मुद्रा



70. मत्स्य मुद्रा



71. कूर्म मुद्रा



72. नृसिंह मुद्रा



73. वामन मुद्रा



74. राम मुद्रा





75. कृष्ण मुद्रा



76. बुद्ध मुद्रा



77. कल्कि मुद्रा



78. क्षीराब्धि मुद्रा



79. कूर्मकालग्नि मुद्रा



80. आहुति मुद्रा



81. सन्निधि मुद्रा



## श्रीपाद्मसंहितायां (32) द्वात्रिंशत् - तमेऽध्याये वर्णितानि

## चतुर्दशकुण्डानि - तत्प्रयोजनानि च

| | कुण्डानां नामानि | प्रयोजनम् |
|---|---|---|
| 1. | त्रिकोण-कुण्डम् | मारणे-निधिप्राप्तये च |
| 2. | चतुष्कोण | सर्वाभ्युदयाय |
| 3. | पञ्चकोण | यक्षकन्यावशीकरणे |
| 4. | षडश्र | स्तम्भने |
| 5. | सप्ताश्र | मोहने |
| 6. | अष्टाश्र | मारणे |
| 7. | नवकोणक | विद्वेषणे |
| 8. | दशाश्र | वस्वादि पितॄणां तोषणे |
| 9. | एकादशाश्र | ब्रह्मादि देवतायत्तसाधने |
| 10. | द्वादशाश्र | हरिदर्शनार्थे (वैकुण्टे पुरुषदर्शने) |
| 11. | योनि | कन्याप्तये |
| 12. | पद्म | पौष्टिके |
| 13. | वृत्त | शान्त्यर्थे |
| 14. | चाप | उच्चाटने-शत्रुजये च |

[अनिरुद्धसंहितायां, पाद्मे, श्रीप्रश्ने च चतुर्दशकुण्डानि]

## पाद्मेतन्त्रे तदितरासु च संहितासु निर्दिष्टानि कुण्डानि

| | | कुण्डसंख्या | अध्यायः | | | कुण्डसंख्या | अध्यायः |
|---|---|---|---|---|---|---|---|
| 1. | अगस्त्य सं | | 14 | 10. | मार्कण्डेय सं | | 16 |
| 2. | अनिरुद्ध सं | 14 | 8 | 11. | विश्व सं | | 3 |
| 3. | ईश्वर सं | 5 | 25 | 12. | विष्णुतिलक | | 7 |
| 4. | कपिञ्जल सं | 1 | 16 | 13. | विष्णु सं | 3 | 8 |
| 5. | जयाख्य सं | 2 | 15 | 14. | पुरुषोत्तम सं | 2 | 11 |
| 6. | परम सं | | 20 | 15. | भार्गव सं | 4 | 5 |
| 7. | पाद्म सं (क्रिया) | 4 | 25 | 16. | श्रीप्रश्न सं | 14 | 18 |
| | (चर्यापाद) | 14 | 32 | 17. | सनन्त सं | | 4 |
| 8. | पारमेश्वर सं | 1 | 7 | 18. | सात्वत सं | 5 | 11 |
| 9. | पौष्कर सं | 2 | 29 | 19. | हयशीर्ष सं (सौरकाण्ड) | | 30 |

Note.—In kriya Pada of Padma 4 types of Kundas are mentioned to be made in the four main quarters—*Padma* in East, *chapa* in South, *Vrtta* in West, and *yoni* in the North. But in Carya Pada ten more are added to these four, making a total of fourteen, and also the various purposes for which they are to be used. Jayakhya mentions only two types of Kundas, but it specifies the different quarters for the attainment of different fruits. The kunda in the *North-East* is for the obtainment of worldly gains—in the *East* for aerial movements; *South-East* for the destruction of the enemies; *South* for the propitiatory rites; *South-West* for destruction of enemies; *West* for the removal of untimely death, removal of all obstacles and calamities, and also for Victory; *North-West* for the obtainment of treasures and wealth; and *North* for gaining health, wealth and prosperity.



## स्नपनविधिः

| | संहिता नामानि | | अध्यायः |
|---|---|---|---|
| 1. | अनिरुद्ध संहिता | | 19 |
| 2. | ईश्वर संहिता | | 15 |
| 3. | कपिञ्जल संहिता | | 13 |
| 4. | नारदीय संहिता | | 20 |
| 5. | पञ्चप्रश्न संहिता | पटल | 8 |
| 6. | परम संहिता | | 21 |
| 7. | पाद्म संहिता (चर्या) | 8, | 9 |
| 8. | पारमेश्वर संहिता | | 14 |
| 9. | पुरुषोत्तम संहिता | | 29 |
| 10. | भार्गवतन्त्रं | | 20 |
| 11. | विश्वमित्र संहिता | 19, | 20 |
| 12. | विष्णुतत्त्व संहिता | | 38 |
| 13. | विष्णुतन्त्रं | 51, 52, | 53 |
| 14. | विष्णु संहिता | | 26 |
| 15. | विष्वक्सेन संहिता | | 22 |
| 16. | मार्कण्डेय संहिता | | 28 |
| 17. | श्रीप्रश्न संहिता | | 27 |
| 18 | सनत्कुमार संहिता (शिवरात्र) | | 8 |
| 19. | हयशीर्ष संहिता (प्रतिष्ठा काण्ड) | | 34 |
| 20. | हयशीर्ष संहिता (आदिकाण्ड) | | 36 |
| | (सौरकाण्ड) | | 37 |

# श्रीपाञ्चरात्रे पाद्मसंहितायां स्नपनविधिः

(चर्यापादे अष्टमोऽध्यायः)

## त्रैविध्यम् स्नपनविधिः

### (1) उत्तमोत्तमस्नपनविधिः

मध्ये ब्रह्मपदे 81 कलशाः। तत्परितः दिव्यपदे अष्टदिक्षु प्रतिदिशं 49 कलशाः। ब्रह्मपदे स्थितेषु 81 कलशेषु, द्रव्यकलशाः सप्तदश (17); दिव्यपदे अष्टासु दिक्षु प्रतिदिशं वर्तमानेषु 49 कलशेषु एकैकः द्रव्यकलशः। एवं द्रव्यकलशाः (17 + 8) 25; शुद्धोदक कलशाः 448 आहत्य कलशाः (448 + 25) **473**। एतदुत्तमोत्तमम्।

पूर्वोक्त 25 द्रव्यकलशैः सह, शुद्धोदक कलशेषु अर्धहीने सति (224 + 25) **249** कलशाः उत्तममध्यमम्। शुद्धोदककलशान् विहाय, केवलं **25** द्रव्यकलशस्थापने उत्तमाधमम्।

### (2) मध्यमोत्तमस्नपनविधिः

मध्ये ब्रह्मपदे 81 कलशाः; तत्परितः चतसृषु दिक्षु प्रत्येकं 49 कलशाः एषु ब्रह्मपदे 17 द्रव्यकलशाः। चतसृषु दिक्षु 4 द्रव्यकलशाः। शुद्धोदककलशाः 256। आहत्य (256 + 17 + 4) **277** कलशाः। इदं मध्यमोत्तमस्नपनं।

शुद्धोदक कलशेषु अर्धहीने सति (128 + 21) **149** कलशाः। इदं मध्यममध्यमम्।

शुद्धोदक कलशान् विहाय केवल **21** द्रव्यकलश स्थापने मध्यमाधमम्।

### (3) अधमोत्तमम्

मध्ये ब्रह्मपदे 81 कलशाः। अत्र 17 द्रव्यकलशाः। अन्ये 64 शुद्धोदककलशाः। (64 + 17) = **81** कलशाः इदं अधमोत्तमम्।

चतुष्षष्टि शुद्धोदकेषु अर्धहीने (32 + 17) **49** कलशाः अधममध्यमम्।

सर्वत्र शुद्धोदककलश हीने, केवलं **17** द्रव्यकलशस्थापने अधमाधमम्।



### (1) पञ्चकलशस्नपनविधिः

पञ्चोपनिषदा पञ्चगव्यस्नपनं




| | पञ्चरत्नानि | पञ्चामृतद्रव्याणि | पञ्चगव्यानि | पञ्चलोहं |
|---|---|---|---|---|
| 1. | प्रवालः | दधि | दधि | रजतं |
| 2. | मुक्ता | पयः | क्षीरं | ताम्रं |
| 3 | वज्रं | मधु | गोमूत्रं | कांस्यं |
| 4. | वैडूर्यं | गुडं, फलं वा | शकृत् | अयः |
| 5. | मणिः | आज्यं | आज्यं | स्वर्णं |

| | स्नपनमन्त्राणि | आवहनदेवताः |
|---|---|---|
| 1. | दधिक्राविष्णो | विष्णुः |
| 2. | आप्यायस्वेति | मधुसूदनः |
| 3. | विष्णुगायत्री | त्रिविक्रमः |
| 4. | गन्धद्वारां | वामनः |
| 5. | घृतस्नातेति | वासुदेवः |

## (2) नवकलशस्नपनविधिः

| | | |
|---|---|---|
| 7 | 4 | 8 |
| 3 | 1 | 5 |
| 6 | 2 | 9 |

| | द्रव्याणि | स्नपनमन्त्राः | आवाहनदेवताः |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 2. | पाद्यं | नारायणायविद्महे | विष्णुः |
| 3. | अर्घ्यं | तद्विष्णोः | मधुसूदनः |
| 4. | आचमनं | न ते विष्णो | त्रिविक्रमः |
| 5. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 6. | दधि | दधिक्राविष्णो | श्रीधरः |
| 7. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 8. | मधु | मधुवाता | पद्मनाभः |
| 9. | फलानि | याःफलिनी | दामोदरः |



## (3) द्वादशकलशस्नपनविधिः

<table>
<tr><td colspan="2">10</td><td colspan="2">7</td><td colspan="2">11</td></tr>
<tr><td colspan="2" rowspan="2">6</td><td>2</td><td>3</td><td colspan="2" rowspan="2">8</td></tr>
<tr><td>1</td><td>4</td></tr>
<tr><td colspan="2">9</td><td colspan="2">5</td><td colspan="2">12</td></tr>
</table>

| | द्रव्याणि | स्नापनमन्त्राः | आवाहन देवताः |
|---|---|---|---|
| 1, | रत्नोदकं | त्रातारमिन्द्र | केशवः |
| 2. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 3. | सर्वगन्धं | गन्धद्वारां | माधवः |
| 4. | आज्यं | घृतस्नाता | वासुदेवः |
| 5. | पाद्य | विष्णुगायत्री | विष्णुः |
| 6. | दधि | दधिक्राविष्णो | श्रीधरः |
| 7. | अर्घ्यं | तद्विष्णोः | मधुसूदनः |
| 8. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 9. | आचमनं | न ते विष्णुः | त्रिविक्रमः |
| 10. | मधु | मधुवाता | पद्मनाभः |
| 11. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 12, | फलोदकं | याःफलिनी | सत्यः |

## (4) षोडशकलशस्नपनविधिः

| | | | | |
|---|---|---|---|---|
| 14 | | 9 | 10 | | 15 |
| 8 | | 2 | 3 | | 11 |
| 7 | | 1 | 4 | | 12 |
| 13 | | 6 | 5 | | 16 |

| | द्रव्याणि | देवताः | स्नपनमन्त्राः | | |
|---|---|---|---|---|---|
| 1. | रत्नोदकं | पुरुषः | चन्द्रमामनसो | + | वायुरजायत |
| 2. | लोहतोयं | सत्यः | नाभ्या आसीत् | + | अकल्पयन् |
| 3. | गन्धोदकं | अच्युतः | सप्तास्यासन् | + | पुरुषंपशुं |
| 4. | आज्यं | अनन्तः | यज्ञेनयज्ञं | + | सन्ति देवाः |
| 5. | पाद्यं | केशवः | सहस्रशीर्षा | + | दशाङ्गुलं |
| 6. | अर्घ्यं | नारायणः | पुरुष एवेदं | + | अतिरोहति |
| 7. | आचमनं | माधवः | एतावानस्य | + | अमृतं दिवि |
| 8. | पञ्चगव्यं | गोविन्दः | त्रिपादूर्ध्वं | + | शने अभि |
| 9. | अमृतोदकं | विष्णुः | तस्माद्विराडजायत | + | अथोपुर |
| 10. | मार्जनोदकं | मधुसूदनः | यत्पुरुषेण हविषा | + | शरद्धविः |
| 11. | कषायं | त्रिविक्रमः | तं यज्ञं बर्हिषि | + | ऋषयश्चये |
| 12. | कुशोदकं | वामनः | तस्माद्यज्ञात् सर्वहुतः | + | ग्राम्याश्चये |
| 13. | दधि | श्रीधरः | तस्माद्यज्ञात् | + | अजायत |
| 14. | क्षीरं | हृषीकेशः | तस्मादश्वा अजायन्त | + | अजावयः |
| 15. | मधु | पद्मनाभः | यत्पुरुषं व्यदधुः | + | पादावुच्येते |
| 16. | यवोदकं | दामोदरः | ब्राह्मणोस्य मुख | + | शूद्रो अजायत |



## (5) पञ्चविंशतिकलशस्नपनविधिः

| | | | | | | |
|---|---|---|---|---|---|---|
| 23 | | 17 | 16 | 18 | | 24 |
| 14 | | 7 | 4 | 8 | | 20 |
| 13 | | 3 | 1 | 5 | | 19 |
| 15 | | 6 | 2 | 9 | | 21 |
| 22 | | 11 | 10 | 12 | | 25 |

| | द्रव्याणि | स्नपनमन्त्राः | आवाहनदेवताः |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 2. | उष्णोदकं | तद्विष्णोरिति | पुरुषः |
| 3. | फलोदकं | याःफलिनी | सत्यः |
| 4. | मार्जनोदकं | शंनोदेवीरिति | अच्युतः |
| 5. | अक्षतोदकं | सावित्री | अनन्तः |
| 6. | रत्नोदकं | त्राताऽमिन्द्र इति | केशवः |
| 7. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 8. | गन्धोदकं | गन्धद्वारा | माधवः |
| 9. | यवोदकं | शतधारा | गोविन्दः |
| 10. | पाद्यं | विष्णुगायत्री | विष्णुः |
| 13. | अर्घ्यं | तद्विष्णोरिति | मधुसूदनः |
| 16. | आचमनं | न ते विष्णुरिति | त्रिविक्रमः |
| 19. | पञ्चगव्यं | विष्णोकर्माणि | वामनः |
| 22. | दधि | दधिक्राविण्णो | श्रीधरः |
| 23. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 24. | मधु | मधुवाता ऋतायते | पद्मनाभः |
| 25. | कषायं | ओषध्य इति | दामोदरः |

11, 12, 14, 15, 17, 18, 20, 21 एते शुद्धोदककलशाः, नारायणोदेवता अष्टाक्षरीमन्त्रः। पूर्वोक्त सप्तदशकलशाः द्रव्यकलशाः।

## (6) एकोनपञ्चाशत्कलशाः

| | |
|---|---|
| 39 | 40 |
| 38 | 41 |

| | | |
|---|---|---|
| 27 | 22 | 23 |
| 26 | 25 | 24 |

| | |
|---|---|
| 43 | 44 |
| 42 | 45 |

| | |
|---|---|
| 17 | 18 |
| 16 | 19 |
| 21 | 20 |

| | | |
|---|---|---|
| 7 | 4 | 8 |
| 3 | 1 | 5 |
| 6 | 2 | 9 |

| | |
|---|---|
| 32 | 33 |
| 31 | 28 |
| 30 | 29 |

| | |
|---|---|
| 35 | 36 |
| 34 | 37 |

| | | |
|---|---|---|
| 12 | 13 | 14 |
| 11 | 10 | 15 |

| | |
|---|---|
| 47 | 48 |
| 46 | 49 |

| | द्रव्याणि | स्नपनमन्त्राः | आवाहनदेवताः |
|---|---|---|---|
| 1. | घृतम् | घृतस्नातेति | वासुदेवः |
| 2. | उष्णोदकं | तद्विष्णोरिति | पुरुषः |
| 3. | फलोदकं | याः फलिनीरिति | सत्यः |
| 4. | मार्जनोदकं | शंनोदेवीरिति | अच्युतः |
| 5. | अक्षतोदकं | सावित्री | अनन्तः |
| 6. | रत्नोदकं | त्रातारमिन्द्र | केशवः |
| 7. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 8. | गन्धोदकं | गन्धद्वारा | माधवः |
| 9. | यवोदकं | शतधारा | गोविन्दः |
| 10. | पाद्यं | विष्णुगायत्री | विष्णुः |
| 16. | अर्घ्यं | तद्विष्णोरिति | मधुसूदनः |
| 22. | आचमनीयं | न ते विष्णुरिति | त्रिविक्रमः |
| 28. | पञ्चगव्यं | विष्णोःकर्माणि | वामनः |
| 34. | दधि | दधिक्राविण्णो | श्रीधरः |
| 38. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 42. | मधु | मधुवाता ऋतायते | पद्मनाभः |
| 46. | कषायाम्बु | ओषध्य इति | दामोदरः |

उपरिनिर्दिष्टाः सप्तदश कलशाः द्रव्यकलशाः । इतरे द्वात्रिंशत् शुद्धोदक कलशाः [49 — 17 = 32] तेषां नारायणो देवता अष्टाक्षरी मन्त्रः ।



## (7) एकोत्तराशीतिकलशस्नपनविधिः

| | | |
|---|---|---|
| 61 | 58 | 62 |
| 57 | 55 | 59 |
| 60 | 56 | 63 |

| | | |
|---|---|---|
| 34 | 31 | 35 |
| 30 | 28 | 32 |
| 33 | 29 | 36 |

| | | |
|---|---|---|
| 70 | 67 | 71 |
| 66 | 64 | 68 |
| 69 | 65 | 72 |

| | | |
|---|---|---|
| 25 | 22 | 26 |
| 21 | 19 | 23 |
| 24 | 20 | 27 |

| | | |
|---|---|---|
| 7 | 4 | 8 |
| 3 | 1 | 5 |
| 6 | 2 | 9 |

| | | |
|---|---|---|
| 43 | 40 | 44 |
| 39 | 37 | 41 |
| 42 | 38 | 45 |

| | | |
|---|---|---|
| 52 | 49 | 53 |
| 48 | 46 | 50 |
| 51 | 47 | 54 |

| | | |
|---|---|---|
| 16 | 13 | 17 |
| 12 | 10 | 14 |
| 15 | 11 | 18 |

| | | |
|---|---|---|
| 79 | 76 | 80 |
| 75 | 73 | 77 |
| 78 | 74 | 81 |

| | द्रव्याणि | स्नपनमन्त्राः | आवाहनदेवताः |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 2. | उष्णोदकं | तद्विष्णोरिति | पुरुषः |
| 3. | फलोदकं | याःफलिनीरिति | सत्यः |
| 4. | मार्जनोदकं | शंनोदेवीरिति | अच्युतः |
| 5. | अक्षतोदकं | सावित्री | अनन्तः |
| 6. | रत्नोदकं | त्रातारमिन्द्र इति | केशवः |
| 7. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 8. | गन्धोदकं | गन्धद्वारेति | माधवः |
| 9. | यवोदकं | शतधारेति | गोविन्दः |
| 10. | पाद्यं | विष्णुगायत्री | विष्णुः |
| 19. | अर्घ्यं | तद्विष्णोरिति | मधुसूदनः |
| 28. | आचमनं | न ते विष्णुरिति | त्रिविक्रमः |
| 37. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 46. | दधि | दधिक्राविण्णोरिति | श्रीधरः |
| 55. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 64. | मधु | मधुवाता ऋतायते | पद्मनाभः |
| 73. | कषायाम्बु | ओषध्य इति | दामोदरः |

द्रव्यकलशाः सप्तदश एव । इतरे 64 कलशाः शुद्धोदकाः । नारायणोदेवता—अष्टाक्षरीमन्त्रश्च ।

| फलोदके कलशे | मार्जनोदके कलशे | अक्षतोदके कलशे | रत्नोदक कलशे | लोहतोय कलशे |
|---|---|---|---|---|
| कदली | रजनी | नीवार | माणिक्यं | सुवर्णं |
| दाडिम | सूर्यवर्तिनी | वेणु | पद्मरागं | रजतं |
| चूत | सहदेवी | शाली | नीलं | ताम्रं |
| आमलक | शिरीषं | प्रियङ्गु | वज्रं | सीसं |
| बिल्व | सदाभद्रं | यव | वैडूर्यं | त्रपु |
| नालिकेर | कुशाग्राणि | कङ्कु | पुष्यरागं | कास्यं |
| फनस | | षाष्टिक | प्रवालं | अयः |
| मातुलुङ्ग | (एते मुष्टिमात्र- | गोधूमानि | मौक्तिकं | |
| (एतेषां फलानां खण्डानि) | परिमितानि) | (मुष्टिमात्राणि) | मरकतं | (निष्कमात्रं) |

| गन्धोदक कलशे | यवोदक कलशे | पाद्य कलशे | अर्घ्य कलशे | आचमन कलशे |
|---|---|---|---|---|
| चन्दनं | यवाः | तुलसी | सिद्धार्थः | तक्कोलं |
| कुष्टं | यवव्रीहि | पद्मं | अक्षतं | चम्पकमुकुलं |
| कुङ्कुमं | यववेणु | दुर्वा | कुशाग्रं | कर्पूरं |
| मांसि | | अक्षत | फलानि | जातिपत्रं |
| अगरु | | श्यामाकं | यवाः | एला |
| उशीरं | | विष्णुपर्णी | तिलं | लवङ्गत्वक् |
| ह्रीबेरं | | बिल्वपत्रं | पुष्पाणि | चन्दनं |
| मुरा | | (एतानि मुष्टि- | (मुष्टिमात्रं) | पुष्पाणि |
| गिरिसम्भवं | (कुडुबमानं) | मात्रं) | (चन्दनं | (पलार्ध- |
| (एकपलमितम्) | | (चन्दनं पलमेकं) | त्रिनिष्कं) | परिमाणं) |



## अष्टोत्तरशतकलशस्नपनम्

| | | |
|---|---|---|
| 88 | 85 | 89 |
| 84 | 82 | 86 |
| 87 | 83 | 90 |

| | | |
|---|---|---|
| 61 | 58 | 62 |
| 57 | 55 | 59 |
| 60 | 56 | 63 |

| | | |
|---|---|---|
| 97 | 94 | 98 |
| 93 | 91 | 95 |
| 96 | 92 | 99 |

| | |
|---|---|
| 26 | 27 |
| 25 | 28 |

| | |
|---|---|
| 14 | 15 |
| 13 | 16 |

| | |
|---|---|
| 30 | 31 |
| 29 | 32 |

| | | |
|---|---|---|
| 52 | 49 | 53 |
| 48 | 46 | 50 |
| 51 | 47 | 54 |

| | |
|---|---|
| 10 | 11 |
| 9 | 12 |

| | |
|---|---|
| 2 | 3 |
| 1 | 4 |

| | |
|---|---|
| 18 | 19 |
| 17 | 20 |

| | | |
|---|---|---|
| 70 | 67 | 71 |
| 66 | 64 | 68 |
| 69 | 65 | 72 |

| | |
|---|---|
| 22 | 23 |
| 21 | 24 |

| | |
|---|---|
| 6 | 7 |
| 5 | 8 |

| | |
|---|---|
| 34 | 35 |
| 33 | 36 |

| | | |
|---|---|---|
| 79 | 76 | 80 |
| 75 | 73 | 77 |
| 78 | 74 | 81 |

| | | |
|---|---|---|
| 43 | 40 | 44 |
| 39 | 37 | 41 |
| 42 | 38 | 45 |

| | | |
|---|---|---|
| 106 | 103 | 107 |
| 102 | 100 | 104 |
| 105 | 101 | 108 |

## अष्टोत्तरशतकलशस्नपनम्

| | द्रव्याणि | स्नपन मन्त्राणि | आवाहन देवताः |
|---|---|---|---|
| 1. | घृतं | घृतस्नातेति | वासुदेवः |
| 5. | उष्णोदकं | तद्विष्णोरिति | पुरुषः |
| 9. | फलोदकं | या·फलिनीरिति | सत्यः |
| 13. | मार्जनोदकं | शं नो देवीरिति | अच्युतः |
| 17. | अक्षताम्बु | सावित्री | अनन्तः |
| 21. | रत्नोदकं | त्रातारमिन्द्र | केशवः |
| 25. | लोहतोयं | अष्टाक्षरी | नारायणः |
| 29. | गन्धाम्बु | गन्धद्वारा | माधवः |
| 33. | यवोदकं | शतधारा | गोविन्दः |
| 37. | पाद्यं | नारायणाय विद्महे | विष्णुः |
| 46. | अर्घ्यं | तद्विष्णोः | मधुसूदनः |
| 55. | आचमनं | न ते विष्णुरिति | त्रिविक्रमः |
| 64. | पञ्चगव्यं | विष्णोः कर्माणि | वामनः |
| 73. | दधि | दधिक्राविष्णो | श्रीधरः |
| 82. | क्षीरं | आप्यायस्व | हृषीकेशः |
| 91. | मधु | मधुवातेति | पद्मनाभः |
| 100. | कषायाम्बु | औषध्य इति | दामोदरः |

इतर एकोत्तर नवति शुद्धोदककलशानां देवता नारायणः अष्टाक्षरी मन्त्रः ।





1. चतुरश्रम् (सर्वाभ्युदये)



2. पञ्चाश्रम् (यक्षकन्यावशीकरणे)



3. षडश्रम् (स्तम्भने)



4. सप्ताश्रम् (मोहने)



5. अष्टाश्रम् (मारणे)



6. नवाश्रम् (विद्वेषे)



7. दशाश्रम्
(वस्वादि पितृतोषणे)



8. एकादशाश्रम्
(ब्रह्मादि देवतायत्तसाधने)





9. द्वादशाश्रम् (हरिदर्शनार्थे)



10. पद्मम् (पौष्टिके)



11. योनिः (कन्याप्तये)



12. त्रिकोणम्
(निधिप्राप्तये, मारणे च)



13. चापम् (उच्चाटने, शत्रुजये च)



14. वृत्तम् (शान्त्यर्थे)




15. मानसयागे योगपीठम्




16. बाह्ययागे योगपीठम्